श्रीश्यामाचरणसंस्कृतग्रन्थावलिः

ग्रन्थाङ्क २

# वादिविनोदः

महामहोपाध्यायमैथिलसन्मिश्रभवनाथात्मजमहामहोपाध्याय-
सन्मिश्रशङ्करकृतः

तद्वंशसन्तानभूतेन महामहोपाध्यायेन श्रीगङ्गानाथशर्मणा
सम्पादितः ।

'इण्डियन् प्रेस नाम्नि' यन्त्रालये प्रयागे मुद्रितः

विक्रमाब्द १९७२

१९१५

मूल्यं रूप्यकमेकम् ।

# FOREWORD.

Shortly after the annexation of the Panjab, Babu Śyâmâ Charana Basu went to, and settled in, Lahore; and after serving a couple of years as Headmaster of the American Mission School there, entered Government Service. When the Educational Department was established in the Panjab, he was selected to fill the important post of Head Clerk. It was in that capacity that he had to organise that department, and worked hard for the spread of Education in that province. He zealously promoted the cause of Female Education to which Sir Robert Montgomery, on the eve of his retirement from the office of Lieutenant-Governor of the Panjab, bore testimony as follows:—

"Baboo Śyâmâ Charan of the Educational Department has always zealously supported the cause of Female Education. In testimony of which I give him this. I trust he will rise still higher in his own department. This certificate has been unsolicited by him.

*January 9th, 1865.* (Sd.) R. Montgomery."

Sir Donald McLeod, who succeeded Sir Robert Montgomery, was a renowned Oriental Scholar. He wanted to orientalise Education in the Panjab and wrote a letter to that effect to the Director of Public Instruction. It was due to Babu Syâmâ Charan's influence, that the Panjab was saved that calamity. The Lieutenant-Governor's letter was, however, at his suggestion, forwarded to the *Anjuman-i-Panjab*, a literary Society that was, through his and Dr. Leitner's exertions, brought into existence. It was at a meeting of this Society, that he suggested the formation of an institution which took the shape of the Panjab University.

On his death, which occurred in August 1867, at the early age of forty, the *Indian Public Opinion*, which was, at that time, conducted by Sir Lepel Griffin and Dr. Leitner, paid a tribute to his memory as follows:—

"We deeply regret to hear of the death of Babu Śyâmâ Charan Bose, one of the most enlightened and respectable members of the excellent Bengali Colony, which we have in our midst at Lahore. The deceased gentleman took considerable interest in all matters affecting the welfare of his adoptive country and together with other Bengalis threw himself actively into all movements which some time ago reflected credit on this province. He was a Vedantist by persuasion, a most amiable man and an accomplished English scholar. As Head Clerk of the Educational Department, much of the credit assigned to its chief deservedly belongs to the well-known native gentleman whose loss, we are sure, is sincerely felt in the community to which he belonged."

Rai Bahadur Sris Chandra Basu, District and Sessions Judge, U. P., and Major B. D. Basu, I.M.S. (Retd.), have started the present Series of Sanskrit texts, and inscribed the same to the memory of their father. The publication has been entrusted to the Pâṇini Office.

Manager, Panini Office.

# विज्ञापनम् ।

---

पुरा पंचनदेषु इंग्लंडाधीश्वरेण विजितेषु तत्र प्रतिष्ठिते च तदुदारशासने, प्रजानामुपचिकीर्षया प्रधाननगरे लवपुरे शिक्षाविस्ताराय राजकीयो शिक्षाविभाग आस्थापितः । महती च तस्य धूर्महाधुरंधरे गुणशालिनि श्रीश्यामाचरणवसुमहोदये निचिक्षिपे गुणपक्षपातिभीराजपुरुषैः । तेन च महाभागेन शिक्षाविभागं सर्व्वथैव संवर्द्धयता पंचनदेषु विश्वविद्यालयस्थापनस्य प्रस्तावः समुत्थापितः तस्मिंश्च प्रदेशे देवभाषासमुन्नति-स्त्रीशिक्षाविस्तार-भारतीयधर्म्मप्रवृद्धि-तत्परः सफलप्रयासश्च, स्वयमपि वेदान्ततत्त्वनिष्णात-निर्म्मलहृदयः बहूनुपाकरोत् । मनस्विनश्च तस्य पितृचरणानुरागिणोस्तद्गौरवानुप्राणितयोः पुत्रयोः ज्यायान् वाग्मीशोऽपि श्रीमान्-श्रीशचंद्रः बहुभाषाभिज्ञः शास्त्रपारंगतः स्वगुणग्रामार्ज्जितरायबहादुरोपाधिः अधुना बदायूँस्थप्रादेशिकन्यायासनमलंकरोति परमवैदान्तिकः। कनीयाँश्च आई-एम्-एस-पदभूषितः संलब्धमेजरोपाधिकः समाप्तराजकार्यकालः सानुवादहिन्दूशास्त्रग्रन्थसम्पादको ज्ञानप्रांशुः श्रीमान् वामनदासः । स चाधुना महता प्रयत्नेनामुद्राङ्कितानि दुर्लभप्रायाणि हस्तलिखितानि गीर्वाणवाणीपुस्तकानि संगृहीत्य **श्रीश्यामाचरण-संस्कृत-ग्रंथावलि**-नाम्ना मुद्रापयितुं प्रकाशयितुं च समारब्धवान् ।

तस्याः श्रीश्यामाचरण-संस्कृतग्रंथावले—

एयं द्वितीयो ग्रन्थः—

इति

व्यवस्थापकः

पाणिनिकार्यालयः ।

# उपोद्घातः

अत्र मुद्रितस्य ग्रन्थस्य द्वे पुस्तके मया समुपलब्धे। एकम्प्राचीनं तालपत्रस्थं मैथिलश्रोत्रियकुलोत्पन्ननैयायिकश्रीमणीश्वरशर्म्मणां सकाशादन्यच्च मैथिलश्रोत्रिय-तार्किक-श्रीनीलाम्बरशर्म्मणां सङ्ग्रहात्। यद्यपि द्वयमप्येतच्छुद्धप्रायं तथापि यत्र कुत्रचित् लेखकप्रमादात् प्राचीनपुस्तकस्य च केषुचित् स्थलेषु कीटभक्षितत्वात् सम्यक्तया समीचीनं पाठं निर्धारयितुमशक्त एवाभवम्। एतया दुर्घटनया हतोत्साहोऽप्यहम् ग्रन्थस्योपादेयतया तत्प्रकाशने प्रवृत्तोऽभूवम्।

खंडनखंडखाद्यस्य टीकानिर्माणानन्तरमयं शङ्करमिश्रेण रचित इति यत्रकुत्रचिद्युक्त्युद्भावनप्रकाराच्चतुर्थे चोल्लासे प्रश्नपराघातप्रणालीप्रदर्शनाच्चावगम्यते। उद्देश्यमप्यस्य ग्रन्थस्य खंडनोद्देश्यसदृशमेव।

> शब्दार्थनिर्वचनखंडनया नयन्तः
> सर्वत्र निर्वचनभावमखर्वगर्वान्।
> धीरा यथोक्तमपि कीरवदेतदुक्त्वा
> लोकेषु दिग्विजयकौतुकमातनुध्वम्॥

इति खंडनकारस्योद्देश्यम्। तथा च

> कथातः प्रश्नतः प्रश्नज्ञानात्प्रश्नपराहतेः।
> प्रश्नानुत्तरतः क्वापि पराहङ्कारघातनम्॥

इति च वादिविनोदस्योद्देश्यम्। आद्येषु त्रिषूल्लासेषु नानादुरूहदार्शनिकविषयविवेचनपराः कथाप्रकारा दर्शिताः। प्रसङ्गेन च नानाविषयेष्वास्तिकनास्तिकदर्शनमतभेदा अपि सुगमतया ऽपूर्वरूपेण सूचिताः। चतुर्थोल्लासे प्रतिज्ञानुसारेणोद्भावितं प्रश्नं पराहत्यैव विजयलाभः प्रदर्शितः। एवं पंचमे चोल्लासे प्रश्नस्योत्तरमदत्वैव यथा प्रतिष्ठा लभ्येत तथा सूचितम्।

अस्य ग्रन्थस्य रचयिता प्रसिद्धपांडित्यः श्रीमान् शंकरमिश्रः। अद्याप्यस्य महात्मनः साक्षाद्वंशजा दशमस्थानीया वर्तन्ते। संवत्सरस्य च षोड़शशतकस्यान्त्ये भागेऽयं मिथिलामहीमंडलं मंडयामासेति रसार्णवनामकग्रन्थाच्छङ्करमिश्ररचितान्निश्चीयते। एतद्ग्रन्थेऽयं श्लोकः समुपलभ्यते—

सभ्याश्चेत्प्रतियन्ति कामपि कथामावेदयामो वयं
वीरश्रीपुरुषोत्तमक्षितिपते तत्रावधानङ्कुरु ।
त्वत्प्रत्यर्थिमहीभुजाम्मृगदृशो वक्षोजकुम्भद्वया-
वष्टम्भादपि सन्तरीतुमधुना वाञ्छन्ति वारान्निधिम् ॥ इति

श्रीपुरुषोत्तमः गरुडनारायणापरनामकः मिथिलाराज्यं १५८५ संवत्सरादनन्तरं शशासेति महामहोपाध्यायश्रीपरमेश्वरशर्मणाम्मतम् । विहारप्रान्तान्तर्गतमिथिलादेशावयवदर्भङ्गानगराद्योजनद्वयं पूर्वतः स्थिते सरिसवाख्ये ग्रामेऽस्य वास आसीदिति सुप्रसिद्धमेव मैथिलानाम् । अनेनैव स्थापिता स्वनिवासाद्दक्षिणतः श्रीसिद्धेश्वरीदेव्यद्यापि तद्ग्रामदेवतात्वेन सम्पूज्यते । तेनैव खानित एको जलाशयोऽपि तन्निवासात्पूर्वभागे वरीवर्ति । एतस्य जलाशयस्य चतुर्दिक्स्थितोच्चभूमिः शङ्करमिश्रनिवासस्थानमिति नाम्नाऽधुनाऽपि प्रसिद्धा । अस्य जलाशयस्य पश्चिमे भागे तस्य निवासः प्राच्याञ्च बहुसंख्यकानां तदन्तेवासिनान्निवासो विद्यालयश्चासीत् । अस्मिन्नेव विद्यालयस्थाने एका संस्कृतपाठशालैका चाङ्गलपाठशालाऽधुना स्थापिता भूतपूर्वमिथिलेशमहाराजलक्ष्मीश्वरसिंहानां ज्येष्ठया धर्म्मपत्न्या ।

मिथिलायामुच्चब्राह्मणकुलेषु प्रसिद्धमेकं 'सिंहासमय' नाम्ना कुलम् । तस्यादिपुरुषो हलायुधमिश्रः । हलायुधमिश्रस्य वृद्धातिवृद्धप्रपौत्रः सुरेश्वरमिश्रः सोदरपुरनामकं ग्रामं समुपार्जितवान् । ततःपरं सोदरपुरनाम्नैवैतत्कुलं प्रसिद्धिमगात् । सुरेश्वरमिश्रस्य प्रपौत्रो भवनाथमिश्रो दूबेमिश्रनाम्नापि प्रसिद्धः । कदापि कमपि किमपि नायं ययाचे । अतः अयाची इत्यस्योपाधिः । अयं भवनाथमिश्रो मीमांसान्यायव्याकरणशास्त्रेषु प्रसिद्धपांडित्य आसीत् । यद्यपि दुर्दैववशादधुना एक एव ग्रन्थो व्याकरणविषयकः प्रयोगपल्लवनामकः समुपलभ्यते तथाऽप्यस्य नानादर्शनशास्त्रेषु वैदुष्यन्तस्य पुत्रस्य समुल्लेखादेव ज्ञायते । तथाहि—

याभ्यां वैशेषिके तंत्रे सम्यग्व्युत्पादितोऽस्म्यहम् ।
कणादभवनाथाभ्यां ताभ्यां मम नमःसदा ॥ इति

भवनाथसूक्तिगुम्फनमिह खंडनखाद्यटीकायाम् ।
श्रीशंकरेण विदुषा विदुषामानन्दवर्धनं क्रियते ॥ इति

स्वभ्रातुर्जयनाथस्य व्याख्यामाख्यातवान् यतः ।
मत्पिता भवनाथोऽयं तामिहालिखमुज्ज्वलम् ॥ इति च

खंडनखंडखाद्यटीकादिषूपलभ्यन्ते । भवनाथमिश्रो यदा पुत्रपौत्रसमन्वितो वृद्धो बभूव तदा तस्य पुत्रः शङ्करमिश्रः पितृसमीहितजिज्ञासुरेतत्पद्यार्द्धं गृहभित्तौ लिलेख ।

अधीतमध्यापितमर्जितं यशो
न शोचनीयं किमपीह भूतले ॥ इति

एतदुत्तरार्द्धमेवं भवनाथमिश्रः पर्य्यपूरयत् ।

अतः परं श्रीभवनाथशर्म्मणो
मनो मनोहारिणि जाह्नवीतटे ॥

ततः परं कृतप्रस्थानो गंगातीरे कानिचिदहान्युषित्वा भवनाथमिश्रः परमशिव-सायुज्यमगमत् ।

श्रीशङ्करमिश्रसम्बन्धिन्यो बह्व्यः कथाः प्रथिता मैथिलेषु । अस्य जन्मकाले तद्ग्रामस्थचर्म्मकाराणां गृहेषु भेर्यः स्वयमेव शब्दायमानाः कस्यापि महात्मनः सम्भाव्यमानं जन्म सूचयाम्बभूवुः । तच्छ्रुत्वा चर्म्मकारो निजां पत्नीमासन्नप्रसव-वेदनाया भवनाथमिश्रपत्न्याः साहाय्यकरणार्थं प्रेषयामास । गृहस्वामिनः परमसात्त्विक-ब्राह्मणवृत्तित्वाद् गृहं सर्वथा निर्धनमसीदतो बालकजननानन्तरं माता ऽयं यत्किंचित्प्रथमं समुपार्जयिष्यति तत्तवैव भविष्यतीति चर्मकारपत्न्यै प्रतिशुश्राव । बाल्यावस्थायामेव बालकोऽकुण्ठितप्रतिभ आसीत् । एकस्मिन्दिने तद्देशीयो राजा तद्ग्रामयायिना मार्गेण गच्छन् रात्रौ तस्मिन्नेव ग्राम आवसथं चकार । बाल्यावस्थासुलभकौतूहलेन शङ्करमिश्रः पंचवर्षदेशीयो राजानं द्रष्टुं जगाम । दर्शनीयं बालकं दृष्ट्वा किमपि पद्यं पठेति राजा समादिदेश । निजनिर्म्मितमन्यनिर्म्मितं वा पठामीति बालकः पप्रच्छ । किं त्वमपि पद्यं रचयितुं शक्नोषीति पृष्टो बालक औत्तरयत् —

बालोऽहं जगदानन्द न मे बाला सरस्वती ।
अपूर्णे पंचमे वर्षे वर्णयामि जगत्त्रयम् ॥ इति

एतच्छ्रुत्वा सम्मुग्धो राजा स्वकीयमन्यदीयं च पद्यं पठेति समादिदेश । वेदमंत्र-वर्जमन्यस्य कस्यापि पद्यस्यात्मपद्यसाहचर्य्यमसहमानो बालकः पपाठ —

चलितश्चकितश्छन्नः प्रयाणे तव भूपते ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ इति

एतच्छ्रुत्वा प्रसन्नो राजा यावद्धिरण्यं त्वं स्वयं नेतुं शक्नोषि तावत्सर्वं मम कोषाद् गृहाणेति जगाद । बालकः सुवर्णमादाय गृहं जगाम । सुवर्णभारा-क्रान्तं सुतमायान्तं दृष्ट्वा माता सहसोत्थाय बालकमकथयत् । बाह्यांगन एव तावत्तिष्ठ । सुवर्णराशिं गृहे माऽऽनय। एतत्तव प्रथमसमुपार्जनं तव जन्मकाले मम साहाय्यकर्यै प्रतिश्रुतमस्ति इति । अनन्तरं चर्म्मकारिणीमाहूय सर्वं सुवर्णं तस्यै ददौ । चर्म्मकारिण्यपि पुण्यशीला समस्तेन तेन धनेनैकं जलाशयं खानितवती ।

अयं जलाशयोऽद्यत्वेऽपि श्रीसिद्धेश्वरीमन्दिरादुत्तरतो वर्तमानश्चर्मकारिण्यास्तडाग इति प्रसिद्धः। बालकेनानीतं धनं दृष्ट्वा ऽयाचनव्रती भवनाथमिश्रः परकीयद्रव्यवन्त एते गृहा मम निवासोचिता नैवेति निश्चित्य ततः परमन्यत्र गत्वा तस्थौ।

श्रीमान् शङ्करमिश्रः स्वपितुरेव नानाशास्त्राण्यधीत्यानुपमपाण्डित्यमवाप। समस्तं च निजं समयं बहुसंख्यकविद्यार्थिनामध्यापनेनैव यापितवान्। एतच्छात्राणामेतावती संख्याऽऽसीद्यदेकस्यामेव रात्रौ समग्रं हरिवंशपुस्तकं तैर्लिखितम्। एतत्पुस्तकमद्यापि वर्तते यस्यान्त एतद्वृत्तसूचकान्यक्षराणि लिखितानि सन्ति।

अनेन निर्मिता ग्रन्था यथा—

(१) वैशेषिकसूत्रोपस्कारः (मुद्रितः)

(२) कणादरहस्यं (वाराणस्यां मुद्रियते)

(३) वादिविनोदः (अत्रैव मुद्रितः)

(४) खण्डनखण्डखाद्यटीका (मुद्रिता)

(५) कुसुमाञ्जलिटीका आमोदनाम्नी

(६) आत्मतत्त्वविवेकटीका

(७) भेदरत्नम्

खण्डनखण्डखाद्यखण्डनपरो ग्रन्थः

(अत्रत्यः प्रतिज्ञाश्लोको यथा—

भेदरत्नपरित्राणे तार्किका एव यामिकाः।

अतो वेदान्तिनः स्तेनान् निरस्यत्येष शङ्करः॥ इति)

(९) रसार्णवः—निजनिर्मितसुभाषितसंग्रहः।

(१०) अनुमानमयूखः।

(११) गौरीप्रहसनम् (मुद्रितम्)

(स्वपितुराज्ञया तेन निर्मितं बाल्यावस्थायां तेनैव शिक्षितपद्यं नान्दीश्लोकं कृत्वा रचितम्)

महताऽऽयासेन संशोधितेऽप्यस्मिन्ग्रन्थे पुस्तकयोर्विकलाङ्गतया बहुषु स्थलेषु स्खलितानि सन्त्येव तदर्थं विदुषां सहृदयानां क्षमां प्रार्थयते

प्रयागे।

वैशाखशुक्लाष्टम्याम्

विद्वज्जनानुचरो

गङ्गानाथः

श्रीः

# अथ वादिविनोदः

महामहोपाध्यायसन्मिश्रश्रीशङ्करकृतः ।

---

जयति रतिविलासे सागसः शङ्करस्य
स्मरनिगडनिबन्धः[1] काञ्चनः शैलपुत्र्याः ।
गरलकवलकालीभूतभूतेशकण्ठ—
स्थलजलधरविद्युद्विभ्रमा बाहुवल्ली ॥१॥
उपकर्तुं विजिगीषूनपकर्तुमहंगतान् विदुषः ।
वादिविनोदः क्रियते शङ्करकृतिना विविच्य तन्त्राणि ॥२॥

---

(१) कथातः (२) प्रश्नतः (३) प्रश्नज्ञानात् (४) प्रश्नपराहतेः।
(५) प्रश्नानुत्तरतः क्वापि पराहङ्कारशातनम् *॥३॥

---

कथातः पराहङ्कारशातनन्तावत्। तत्रादौ कथास्वरूपनिरूपणम्। तत्र नानाप्रवक्तृका[2] साधनदूषणविषया वाक्यसन्दृब्धि[3]र्न कथा, यत्र मिलितैर्बहुभिर्विचारः क्रियते तत्रातिव्याप्तेः; साधनदूषणानुवादे चातिव्याप्तेः; दूषणस्यापि साधनतया तदभिधानानर्थ-

---

१ 'प्रसरनिगडबन्धः'। २ 'कृ'। ३ 'भीचि'। 'न्दिग्धिः'।

* एत एव पञ्च प्रकारा यथाक्रममत्र ग्रन्थे पञ्चसूल्लासेषु निरूपिताः।

क्यप्रसंगाच्च, वादिसाधनानन्तरमेव प्रतिवादिनोऽप्रतिभया कथापर्यवसानेऽव्याप्तेः साधनवचनस्य दूषणवचनस्य चैकस्य नानाप्रवक्तृकत्वाभावादसम्भवाच्च ॥ नापि कथाशक्तिलिङ्गवद्वाक्यत्वम् कथात्वम्, कथयैव कथानिरूपणे आत्माश्रयात् ॥ न च जातिविशेष एव कथात्वम्, पूर्व (पूर्व) वर्णानुभवाहितसंस्कारसध्रीचीनचरमवर्णाभिव्यङ्ग्यं वाक्यार्थाभिव्यङ्ग्यं वा । जातेः प्रत्येकवर्णवृत्तित्वे प्रतिवर्णं कथाव्यवहारापत्तेः । एकवर्णवृत्तित्वे वर्णान्तरबहिर्भावेन कथाव्यवहारापत्तेः ॥ किन्तु वादिप्रतिवाद्यन्याभिधाना· वृत्तिस्थापनावादिसाधनाभिधानप्रतिवादिदूषणाभिधानवृत्तिवाक्यत्वाधिकरणनिष्पादनोद्देशप्रवृत्तवादिप्रतिवाद्यन्यतरसाधनदूषणाभिधानान्यतरत्वम् कथात्वम् ॥

कथा च वादजल्पवितण्डाभेदात् त्रिविधा । ननु तत्त्वबुभुत्सुरप्येकः स्थापनामेव करोति अन्यस्तादृश एव दूषणमात्रम्प्रयुंक्ते तत्र वितण्डा तावत्कथान्तरम्, इति सानातनिमतमुपादेयम् । न वा 'वादवितण्डाविजिगीषुतत्त्वमात्रनिर्णीतीषु कथा चतुर्थी,' इति-रत्नकोषकारमतमुपादेयम् । न वा 'अत्रैकैव कथा, वादादयो न प्रकारभेदाः सम्भवन्तीति' कस्यचिन्मतमुपादेयम् । तत्त्वबुभुत्सुना स्वपक्षस्यापि[1] साधनीयत्वात् एकस्यैकदा बुभुत्साविजिगीषयोरभावात्, वादादीनां व्यापारफलभेदेन भेदस्य प्रामाणिकत्वात् । न च जयतत्त्वनिर्णयाभ्यां फलान्तरमपि कथायाः सम्भवति यदर्थं वादवितण्डा पृथक्[2] स्यात् । अनुत्पन्नतत्त्वनिर्णयस्योत्पादनम् उत्पन्नस्य पालनम् पालितस्याभ्यासः परव्युत्पादनञ्च इति कथात्रयपर्यवसन्नमेव फलम् । किञ्च कथायामधिकारिसमावेशादपि त्रित्वमेव । ते हि तत्त्वनिर्णयार्थिनो विजयार्थिनः सर्वजनीनानुभवसिद्धान्तानपलापिनः[3] श्रवणादिपटवोऽकलहकारकाः कथौपयिकव्यापारफला विसंवादनसमर्था अत्यन्तावहिता दूषणदृश्वानः वादकथाधिकारिणस्तु प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका अनाक्षेपका युक्तिसिद्धप्रत्येतारः तत्त्वबुभुत्सवश्च । एतादृशाश्चैतादृशैरेव वक्तुमर्हन्ति, तथैव फलसिद्धेः । न हि युयुत्सुरिरंसू सम्भूयार्थं साधयतः । उक्ताधिकारिविपरीतास्त्वनधिकारिण एव ॥

तदेवं कथात्रयनियमे सिद्धे तत्त्वबुभुत्सुकथा वादः । स ह्येवम्प्रवर्तते । प्रतिपन्नतत्त्वेन गुरुणा सह तत्त्वबुभुत्सोः शिष्यस्य बुभुत्सावतोः शिष्ययोरेव वानुविधेयबुभुत्सामनुरुध्य वा, 'शब्दोऽनित्य' इत्येकेनाभिहिते[4], 'शब्दो नित्य' इत्यपरो ब्रूयात् । इयमेव विप्रतिपत्तिरित्यभिधीयते । यद्वा 'शब्दो नित्यो ऽनित्यो वा, शब्दो नित्यो न वा, शब्दत्वन्नित्यवृत्ति न वा, अनित्यत्वं शब्दवृत्ति न वा, अनित्यत्वं शब्दत्वसमानाधिकरणन्न

१ स्थापनीयत्वात् । २ पृथक्कथा । ३ सिद्धानपलापिनः । ४ एकेन वादिना ।

वा, शब्दत्वमनित्यत्वसमानाधिकरणन्न वा’ इति यस्यां कस्यांचिद्विप्रतिपत्तौ मध्यस्थकृतायां शब्दानित्यत्वसिद्धिपर्यवसायिनं कञ्चित् प्रयोगं कुर्यात्। न त्वर्थान्तरत्वशंकया विप्रतिपत्तिसामानाधिकरण्येनैव प्रयोगः। पक्षधर्मताबललभ्ये ऽर्थे ऽर्थान्तराभावात्। न ह्युक्तप्रकारिकासु विप्रतिपत्तिषु शब्दानित्यत्वन्न पर्यवसन्नम्, येन ‘शब्दोऽनित्य’ इति प्रतिज्ञाफलन्न निर्वहेत, उद्देश्यसिद्धिविरोधिसंशयस्यैवानुमानाङ्गत्वात्, पक्षविशेष्यकस्यातन्त्रत्वात्। तथा च ‘शब्दोऽनित्यः कृतकत्वात्, यद्यत्कृतकन्तदनित्यम्, यथा घटः, अनित्यत्वव्याप्यकृतकत्ववांश्चायम्, तस्मादनित्यः’ इति प्रयुज्य संक्षेपतो विस्तरतो वा कण्टकानुद्धरेत्। संक्षेपतो यथा—नायं हेतुराभासो, नायं दुष्टो, नात्र हेतौ हेत्वाभासावकाशो, नात्रासाधकत्वलिङ्गम् किञ्चिदपि, नात्र [1]व्यभिचारपञ्चकम् तल्लक्षणरहितत्वात्,—इत्याद्यन्यतमः। विस्तरतो यथा—कृतकत्वन्न व्यभिचारि साध्या[2]भावासामानाधिकरण्यात्, अत एव न विरुद्धत्वम्, नाप्यसिद्धम् व्याप्तिपक्षधर्मताभ्याम् प्रमितत्वात्, न सत्प्रतिपक्षितम् अनुपस्थितविरोधिसाधनत्वात्, व बाधितविषयम् प्रमित साध्याभाववदगामित्वात्। ततोऽपि विस्तरो यथा नायमसाधारणः सपक्षविपक्षोभयनिष्ठाभावप्रतियोगित्वात्, न साधारणः विपक्षास्पर्शित्वात्, नानुपसंहारी पक्षादन्यत्र घटादौ साध्यवत्युपसंहृतत्वात्, न विरुद्धः साध्यानधिकरणानधिकरणत्वात्, नाश्रयासिद्धः सन्दिग्धसाध्यधर्मिणि गतत्वात्, न व्याप्यत्वासिद्धः निरूढव्याप्तिकत्वात्, न स्वरूपासिद्धः साध्यधर्मिणि प्रमितत्वात्, न प्रकरणसमः अनुपस्थिततुल्यबलविरोधित्वात्, न बाधितविषयः प्रमितसाध्याभाववदगामित्वात्[3]। एवं दृष्टान्तकण्टका अपि साध्यसाधनविकलत्वादयो यथास्फूर्ति निरसनीयाः। समयबन्धादेव कण्टकोद्धार इत्येके।

एवं कण्टकोद्धारानन्तरं विरते वादिनि प्रतिवादी दूषणीयांशमात्रमनूद्य दूष[4]णम्प्रयुञ्ज्यात्। अनुवादपूर्वको दूषणप्रयोगो यथा कृतकत्वादिकं हेतुरुक्तम्; तत्र ‘कृतकत्वमसाधकम् असिद्धत्वात्’ इति। न चात्र पञ्चावयवापेक्षा, व्याप्त्यादेरुभयसिद्धतया तदुपदर्शकावयवानर्थक्यात् पक्षधर्मतामात्रोपदर्शकस्यैव तावतैव सिद्धत्वात्। दूषणस्यासाधकतालिङ्गत्वमुपदर्शनीयम्। तच्च व्याप्तिपक्षधर्मतावैशिष्ट्यम्। न चैवम् “उभयसिद्धतया कृतकत्वानित्यत्वयोर्व्याप्त्युपदर्शनमपि न कर्तव्यम्” इति वाच्यम्, हेत्वाभासानामसाधकताव्याप्यत्वे विप्रतिपन्नम्प्रति पञ्चावयवप्रयोगः कर्तव्य एव, तुल्यन्यायात्। समयबन्धाधीनं पक्षधर्मतामात्रोपदर्शनं इत्यत्रापि पञ्चावयवप्रयोग एवेति केचित्। कथासम्प्रदायविरोधान्न पञ्चावयवप्रयोग इत्यन्ये। असाधकत्वञ्च स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वम्। तथा चासिद्धत्वादि ज्ञानदशावर्तीदं पक्षे साध्यप्रत्य-

---

१ नात्रासाधारणत्वादि। २ साध्याभावसमानाधिकरणत्वाभावात्। ३ वृत्तित्वात्। ४ प्रयुञ्जीत।

याजनकम् असिद्धत्वादिति प्रयोज्यम् । अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वं वा असाधकत्वम् । तथा चेदमिदानीमनुमितिप्रतिबन्धकतावच्छेदकरूपवत् अनैकान्तिकत्वासम्मतवदिति प्रयोज्यम् । "अनुमितिप्रतिबन्धकतावच्छेदकरूपत्त्वमनैकान्तिकत्वादिकमेव, इति तेनैव तत्साधने साध्याविशेष[1]" इति चेत्, न, उपाधिविशेषावच्छेदकस्यानुमेयत्वात्। तोयत्वेन पिपासोपशमनसामर्थ्यं यथा पर्यवसन्नम् तोयत्वमेवानुमीयते, न पिपासोपशमनसामर्थ्यन्तोयत्वादन्यत् । केचित्तु,—'अनैकान्तिकबाधितविरुद्धेषु व्याप्यत्वरहितत्वं, व्याप्यत्वासिद्धे चानैकान्तिकत्वं स्वरूपासिद्धसत्प्रतिपक्षासाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमेवासाधकत्वमनुमेयम्'—इत्याहुः । वस्तुतस्तु असाधकत्वोक्त्यैव तत्साधनीयम्; तच्चोभाभ्यामपि वादिभ्यामनतिप्रसक्तमवश्यमङ्गीकार्यमिति न विकल्पावकाशः। इदमनैकान्तिकज्ञानमेतत् साध्यवत्तयैतत्पुरुषस्यैतत्पक्षकानुमितिप्रतिबन्धकम्, एतदनैकान्तिकज्ञानत्वादेतदन्यज्ञानवदित्यादिप्रकारेणासाधकत्वमनुपादेयम्[2], एतत्साध्यकैतत्पक्षकानुमितेरप्रसिद्धत्वात्; लिङ्गभ्रमेण कदाचित्तत्प्रसिद्धावपि एतत्कालीनैतत्पुरुषाधिकरणतया ऽप्रसिद्धेः ।

स्थापनादूषणानन्तरं प्रतिवादी "शब्दो नानित्यो नित्य एव, आकाशमात्रधर्मत्वात्, यो य आकाशमात्रधर्मः स नित्य एव, यथा तदेकत्वम्" इति—स्वपक्षे स्थापनां कुर्यात् । मीमांसकस्यान्वयव्यतिरेकयोर्द्वयोरपि दर्शनीयतया एवकारान्तर्भावेन प्रयोज्यम्—'यो य आकाशमात्रधर्मः स नित्यो यथा परममहत्त्वम्, यो न नित्यः स नाकाशमात्रधर्मः यथा घट" इति वा । तन्मते उदाहरणान्तावयवमेव प्रयुज्य प्रतिवादिनि विरते वादी स्वपक्षदोषमुद्धरेत्। तथा हि "शब्दे कृतकत्वं नासिद्धम्, यत इदानीमुत्पन्नो गकार इत्यनुभूयते, उत्पन्नत्वमेव च कृतकत्वम्"। यद्वा "मार्दङ्गिकेन कृतः शब्दः, पाणिकेन कृतः शब्दः, इति कृतकत्वानुभवात् । यच्च त्वया हेतूकृतम् आकाशमात्रधर्मत्वादिति तदसाधकम् सोपाधित्वात् ।

एवं स्वपक्षदोषोद्धारपरपक्षदोषोद्भावनानन्तरं विरते वादिनि पुनः प्रतिवादी चतुर्थकक्षायां स्वपक्षदोषमुद्धृत्य परपक्षदोषं द्रढयति। परपक्षदूषणं वा द्रढयित्वा स्वपक्षदोषमुद्धरेत्। द्वयोरपि निर्वाहनीयत्वेन प्रधानतया नात्र पौर्वापर्यनियमः। स्फुरणमेव प्रयोजकम् प्रथमोपक्रान्तपरपक्षदूषणस्थिरीकरणं प्रथमतो यद्युचितं तदा स्वपक्षानुरागेण तद्दोषासहिष्णुतया तदुद्धार एव प्रथमतः कथन्नोचित इति विनिगमक[3]स्यान्यस्याभावात् स्फुरणमेव नियामकमिति। तथा चैवं चतुर्थी कक्षा प्रवर्तते। "आकाशमात्र[4]धर्मत्वादित्यत्र यत्सोपाधिकत्व-

---

१ विशेषता । २ साधकता साधकत्वम् । ३ विनिगमकम् । ४ वृत्ति ।

मुक्तम्, तद्योग्यस्योपाधेर्योग्यानुपलब्ध्या निरस्तम्। अयोग्योपाधिनिरासप्रकारस्तु द्वयोरपि पक्षयोः समानः। अन्यथा स्वव्याघातकतया त्वदुक्ता[1]साधकत्वानुमानमपि न प्रवर्तेत। कृतकत्वञ्च मार्दङ्गिकेन कृतः शब्द इत्यादिप्रतीतिबलात् यत् समर्थितन्तदनुपपन्नम्, प्रतीतेरभिव्यक्तिविषयकत्वे नान्यथासिद्धत्वात्' इति।

अत्र पुनः स्थापनावादी पञ्चमीं कक्षामारभते—"आकाशमात्रवृत्तित्वे हेतौ अजन्यत्वस्योपाधेरुपलम्भात् न योग्यानुपलब्ध्या तद्व्युदासः। कृतकत्वं च नाभिव्यक्तत्वम्, प्रतीतेरुल्लिखितप्रकारान्यथाकरणस्य बाधकाधीनत्वात्, अन्यथाऽतिप्रसङ्गात्। बाधकञ्च प्रकृते नास्त्येवेति"।

ततः प्रतिवादिनः षष्ठी कक्षा। "आकाशमात्रवृत्तित्वे मदुपन्यस्ते हेतौ नाजन्यत्वमुपाधिः, पूर्वसाधनव्यतिरेकतया उपाधेराभासत्वात्। प्रकृते च[2] स्वीयहेतौ 'मार्दङ्गिकेन कृतः शब्द' इति प्रतीतावुल्लिखितकृतकत्वप्रकारे बाधकाभाव इति यदुक्तम्, तत्र स एवायं गकार इति पूर्वापरगकाराभेदग्राहि प्रत्यभिज्ञैव बाधिकेति कृतकत्वं स्वरूपासिद्धमिति"

सप्तमी कक्षा[3] स्थापनावादिनः। उपाधौ पूर्वसाधनव्यतिरेकत्वमेव नाभासत्वप्रयोजकं किन्नाम दूषकताबीजविरहः? तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। तच्चेदिहानुपहतम् तदाऽऽकाशमात्रवृत्तित्वस्य त्वद्धेतोः सोपाधित्वं ध्रुवम्। मद्धेतौ कृतकत्वे यत् प्रत्यभिज्ञानम् बाधकमुक्तम् तत्सोऽयं घट इत्यादौ प्रत्यभिज्ञाने सत्यपि कृतकत्वं दृष्टमिति न बाधकम्' इति।

अष्टमी कक्षा प्रतिवादिनः। यथा पक्षेतरत्वस्यानुमानमात्रोच्छेदकतया नोपाधित्वम्, तथा सत्प्रतिपक्षोच्छेदकतया पूर्वसाधनव्यतिरेकः[4] साध्याव्यापकत्वान्नोपाधिः। यच्च प्रत्यभिज्ञाने सत्यपि कृतकत्वं दृष्टम्, अतः प्रत्यभिज्ञानं कृतकत्वे बाधकं न भवतीति यत्त्वयोक्तम् तन्न, घटादौ विनाशकारणसान्निध्यम् स्वोत्पत्त्यनन्तरक्षण एव नावश्यकमतः कृतकोऽपि घटादिरविनाशदशायां प्रत्यभिज्ञायते। शब्दस्य तत्स्वोत्पत्त्यनन्तरक्षण एव विनाशकारणसान्निध्यध्रौव्यम्[5] त्वदभ्युपगतम्, तत्तिरस्कृत्यापि चेत् प्रतिभिज्ञानं तदा तद्बलात् स्थैर्ये सिद्धे 'तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यति' इति न्यायात् कृतकत्वम् बाधकन्न भवतीत्युच्यते इति।

---

१ त्वदुक्तसा। २ कृतकत्वे च त्वदीयहेतौ। ३ सप्तमकक्षायाम्पुनः स्थापनावादी ब्रूयात्। ४ व्यतिरेकस्यापि नोपाधित्वम्। ५ सामग्रीध्रौव्यम्।

नवमकक्षायां स्थापनावादी ब्रूयात्। यत्तावदुक्तम् 'पूर्वसाधनव्यतिरेकस्य सकलप्रतिपक्षोच्छेदकतया नोपाधित्वम्' तदनुपपन्नम्। यत्र स्थापनानुमानं व्यभिचारि तत्र सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकः साध्याव्यापकत्वान्नोपाधिः। यथा 'शब्दोऽनित्यो गुणत्वात्' इति स्थापनायां सत्प्रतिपक्षे 'शब्दो नित्यो व्योमैकगुणत्वात्'—इत्यत्र गुणत्वस्य जलपरमाणुरूपादौ साध्याव्यापकत्वात् अनुपाधित्वम्, अतस्तत्रैव सत्प्रतिपक्षताऽक्षता। प्रकृते तु न तथेति स्यादेव पूर्वसाधनव्यतिरेकोपाधिरजन्यत्वम्। यच्चोक्तम्, 'विनाशसामग्रीसान्निध्येऽपि जायमानम्प्रत्यभिज्ञानं कृतकत्वबाधकमिति तन्न, न केवलम्प्रत्यभिज्ञानं कृतकत्वबाधकं किन्तु न्यायोपष्टम्भेन' इति—तत्राभिधीयतामयं न्यायः—'प्रत्यभिज्ञानमुपष्टम्भि' इति।

पुनः प्रतिवादी दशमीं कक्षामवतारयेत्। 'व्यभिचारिणि स्थापनानुमाने सत्प्रति पक्षावसर' इति यदुक्तम् तदनुपपन्नम्, सत्प्रतिपक्षोपस्थितिदशायामेव पूर्वसाधनव्यतिरेकोपाधिस्फुरणाद्धीनमबलत्वेनाप्रतिबन्धकत्वम्, तदनन्तरं व्यभिचारस्फुरणे व्यभिचारेणैव दूषिते स्थापना हेतौ[1] किं सत्प्रतिपक्षेणेति कस्यामपि दशायां न सत्प्रतिपक्षावसरः। कृतकत्वबाधकप्रत्यभिज्ञानोपष्टम्भकश्चायमेव न्यायो यदुक्तम्—'शब्दो न विनाशी, विनाशकत्वाभिमतसन्निधाने सत्यपि अविनाशित्वात्; यद्यत् विनाशकत्वाभिमतसन्निधाने सत्यप्यविनाशि तदविनाशि, यथाहि द्वित्वत्रित्वादि'—तस्य विनाशकोऽपेक्षाबुद्धिविनाशस्तवाभिमतस्तत्सन्निधानेऽपि प्रत्यभिज्ञाबलात् अग्रिमकाले द्वित्वादिविशिष्टप्रतीतिदर्शनात् तदविनाशः सिद्ध इति तम् प्रतिसाध्यस्यैव दोषत्वम्, तस्यां दशायां दोषान्तरस्यास्फुरणात्। नहि सत्तामात्रेण दोषाः, किन्तर्हि ज्ञायमानास्तथासति कदाचिदेव प्रकृते प्रत्यभिज्ञानं कृतकत्वबाधकम्, एतन्न्यायोपष्टम्भादिति।

अत्रैव स्थापनावादिन एकादशी कक्षा— न हि सत्प्रतिपक्षोत्थापनानन्तरमेव पूर्वसाधनव्यतिरेकत्वस्योपाधित्वस्फुरणध्रौव्यम् येनोत्थितमात्र एव सत्प्रतिपक्षो हीनबलः स्यात्। पश्चावयवस्य पूर्वसाधनव्यतिरेकस्य साध्यव्यापकत्वसाधनाव्यापकत्वस्फुरणम्[2]। तदातत्प्रतिबन्धकतया दोषत्वसिद्धेरपि न सत्प्रतिपक्षावसरः। यत्र न्यायोऽभिधीयते तत्र विनाशकत्वाभिमतसन्निधावपि अविनाशित्व[3] हेतुः स्वरूपा सिद्ध इति न न्यायो येन प्रत्यभिज्ञानमुपष्टम्भीयात् इति॥

अथ प्रतिवादिनो द्वादशी कक्षा—पूर्वसाधनव्यतिरेकप्रयुक्तमनुपाधित्वमजन्यत्वस्य माऽस्तु, किन्तर्हि, साधनव्यापकत्वादेव नासावुपाधिः आकाशमात्रवृत्तित्वस्य साधन-

---

१ हेतोः। २ त्वास्फुरणम्। ३ 'त्वम्' पा०।

स्याजन्यत्वं व्यापकमेव गृहीतम् तद्गतपरममहत्त्वादाविति । या च विनाशकत्वाभिमतसन्निधानेऽपि अविनाशित्वादितिहेतोः स्वरूपासिद्धिरुक्ता भवता, सा भवेद्यदि तत्काले शब्दस्य विनाशो भवेत्; न त्वेवम् । किन्तर्हि प्रत्यभिज्ञानेनाविनाशित्वस्यैव तत्कालावच्छेदेन ग्रहात् । प्रत्यभिज्ञा हि सर्वकालाविनाशित्वेऽकुण्ठा सती न्यायोपष्टम्भमपेक्षते । न तु तत्कालाविनाशित्वग्रहे[1]ऽपीति । अत्र पूर्वसाधनव्यतिरेकत्वे नोपाधिविधूननम् प्रतिवादिना न शङ्कितमिति तस्य न दोषः, केनचित्प्रकारेण उपाधिविधूननमात्रस्य तन्निर्वाह्यत्वात् इति ।

अत्र स्थापनावादिनस्त्रयोदशी कक्षा—प्रतिभिज्ञानबलात् तत्कालाविनाशित्वम् यतः श्रुतपूर्वो गकारो नाऽस्तीति प्रतीतिबलात् तत्कालविनाशित्वमिति विरोधिप्रत्ययकवलिता प्रत्यभिज्ञा कृतकत्वबाधिका न भवति, अन्यथासिद्धिशंकाकलङ्कितत्वादजन्यत्वस्योपाधेः पक्षे शब्दएव साधनाव्यापकत्वात् । न हि पक्षीकृतस्य शब्दस्याजन्यत्वं सिद्धम् येन साधनव्यापकता स्यात् इति ।

अत्र प्रतिवादिनश्चतुर्दशी कक्षा—प्रत्यभिज्ञानस्य प्रामाण्ये कृतकत्वहेतौ मदुद्भावितस्वरूपासिद्धिनिर्वाहात् । उत्पादविनाशप्रत्ययप्रामाण्ये त्वदुद्भाविताजन्यत्वोपाधेः साधनाव्यापकतया स्थिरीकरणमतः प्रतीत्योरेव बलाबलमुचितम् । तत्र चैत्रेणाहमनुवाकमध्यापतितः स एवायं गकारः सैवेयं गाथेत्याद्यनेकप्रत्ययभ्रमत्वकल्पनमनुचितमित्युत्पादविनाशप्रत्ययस्य दुर्बलत्वकल्पनमुचितमिति ।

अत्र स्थापनावादिनः पञ्चदशी कक्षा-उत्पादविनाशप्रत्ययविलक्षणप्रत्ययविशेषदर्शने सत्यपि जायमानं प्रत्यभिज्ञानं तज्जात्यभेदविषतयाऽप्युपपद्यते । यथा तानेव शालीनुपभुक्तवानहम् तानेव तित्तिरीनिति उत्पादविनाशप्रत्ययस्त्वन्यथाऽनुपपद्यमानो बलीयान् इति ।

अत्र प्रतिवादिनः षोडशी कक्षा—प्रत्यभिज्ञाया जात्यभेदविषयतया समर्थने व्यक्त्यभेदे तस्याः कूटसाक्षितया न तद्बलात् स्थैर्यसिद्धिः, क्षणिकत्वेऽपि प्रत्यभिज्ञोपपत्तेः; नात्मनोऽनादिनिधनत्वमिति साधु तवास्तिक्यम्, उत्पादविनाशप्रत्ययस्त्वभिव्यक्त्यनभिव्यक्तिभ्यामन्यथासिद्ध इति ॥

अत्र स्थापनावादिनः सप्तदशी कक्षा—उत्पादविनाशप्रत्ययस्याभिव्यक्त्यनभिव्यक्तिभ्यमन्यथासिद्धौ घटपटाद्युत्पादविनाशप्रत्ययस्यापि सैव गतिः स्यादिति सत्कार्यवादावलम्बनम् । प्रत्यभिज्ञायास्तु व्यक्तिभेदग्राहिणि प्रत्यक्षे सति यत्रोत्पादस्तत्रैव[2] जातिविषयत्वम् न तु सर्वत्रेति विशेषः । तथा च स्वोत्पत्त्यव्यवहितोत्तरक्षण एव घटो नष्ट इति प्रत्यक्षस्याभावात् । स एवायं घटइति व्यक्त्यभेदात् साऽपि निराबाधैव

१ तत्कालावसि । २ क ।

प्रत्यभिज्ञेति न क्षणिकतासिद्धिरिति। शब्दो नित्य एवेत्युपसंहारे प्रत्यभिज्ञामात्रमनूद्यम्, येन सभ्यानामनेककक्षाकुलितमतीनां झटिति पक्षनिर्णयो भवेदिति।

एवं स्फूर्तिमतोर्वादिनोर्न कक्षानियमः, इति वादकथा दिनद्वयेऽप्यनुवर्तते। यत्र द्वावपि वादिनौ सुज्ञौ कक्षायां तु यावता वादिवचनबाधो भवति तावदेव वक्तव्यम् न तु स्फूर्तिमताभ्यधिकम्। अन्यथाऽनेकाभिधाने सबलनमसमाधेयं स्यादित्यवधेयम्॥

---

अथ कानि निग्रहस्थानानि वादे पतन्ति, कानि न पतन्ति, कानि पतितान्यप्युद्भाव्यानि, कान्युद्भाव्यान्यपि कथावसानिकानि—इति चिन्त्यते॥

अत्र प्रतिज्ञाहानिः प्रतिज्ञासंन्यासो निरर्थकमविज्ञातार्थोऽर्थान्तरमपार्थकञ्चेति षटंक न पतत्येव। स्वाशक्तिनिगूहनार्थमेषाम्प्रयोगः। वादे च स्वाशक्तिनिग्रहेन तत्त्वप्रतिपत्तिव्याघातप्रसंगः। यद्यपि प्रतिज्ञाहानिर्न पतति हानेर्बुद्धिपूर्वकत्वात्, तथाप्यनुक्तत्वभ्रमाद्धानिः संन्यासो वा वाचकत्वभ्रमान्निरर्थकत्वमुपयुक्तत्वभ्रमादर्थान्तरत्वम्, स्फुटार्थत्वभ्रमादविज्ञातार्थम्, पूर्वापरान्वयभ्रमादपार्थकत्वं क्वचिद्वादे सम्भवत्यपि, तथाऽपि स्वाशक्तिनिगूहनार्थं न सम्भवतीति। कथासम्प्रदायतात्पर्यम् किञ्चित् सम्भवदप्यनुद्भाव्यम्, यथा प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा विक्षेपो मतानुज्ञापर्यनुयोज्योपेक्षणमिति सप्तकम्। यद्यपि साधनविशेषाधीनसाध्यविशेषसिद्धये प्रतिज्ञान्तरहेत्वन्तरे अवश्योद्भाव्ये, तथाऽपि न यत्र विशेषसाधनमभिमतम् तत्परोऽयमिति कथासम्प्रदायः॥ ननु—'मतानुज्ञा प्रसङ्गाभासस्तदनुद्भावने तत्त्वधीव्याघात इति तदप्युद्भाव्यम्, इति—चेत्, न, मतानुज्ञायाः प्रसङ्गाभासानात्मकत्वस्य वक्ष्यमाणत्वात्॥ ननु—'तत्त्वबुभुत्सुकथायां स्वकौपीनविवरणमनुचितम्, अतः पर्यनुयोज्योपेक्षणोद्भावनमस्तीति' चेन्न, तस्य मध्यस्थोद्भाव्यत्वेन सामयिकत्वात्। किञ्चिन्निग्रहस्थानमुद्भावनीयमात्रम् नतु तदुद्भावनेनैव कथाविच्छेदः। यथा विरोधो न्यूनमधिकं पुनरुक्तमयथार्थमननुभाषणमपसिद्धान्त इति सप्तकम्, एतेषामकथावसानिकानामपि कथञ्चित्तत्त्वसामग्रीविरोधफलत्वात्।

तद्यथा, विरोध्रस्य माता बन्ध्येत्यादेरयोग्यतारूपतया तत्त्वव्याघातकत्वम् न्यूनस्याकांक्षितासत्तिनिरूप्यतयाऽधिकस्य पुनरुक्तस्य च नाकांक्षितासत्तिरूपतया तदभिधानप्रयोजनानुसरणव्यग्रः प्रतिपत्ता नतत्त्वम् प्रतिपत्तुमर्हतीत्युद्भाव्यता। अयथार्थेऽननुभाषणे चार्थाप्रतिन्धानमेवोद्भाव्यता। अपसिद्धान्ते स्वीकृतस्य प्रमाणविरोध इति तत्त्वधीव्याघातकत्वात् उद्भाव्यता। ननु—'न्यूनस्थले यत्र हेत्ववयवेनैव न्यूनता तत्र तत्त्वनिर्णायकत्वाभावात् तत्त्वविघात इत्यवश्यं कथावसानम् इति कथमुद्भावनमात्रम्—इति चेत्, सत्यम्, हेत्ववयवहीनतायां कथापर्यवसानमेव, अन्यावयवहीनताया उद्भावनमात्रमेव। नन्वधिकहेत्वा-

व्यभिधानस्य शाब्दधीहेतुत्वम्[1] चेन्नास्ति, तदा तदुद्भावनमनुचितमेव, शाब्दधीविच्छेदकत्वे तु कथावसानिकत्वमेवेति चेत्, न, हेत्ववयवस्य व्याप्तिपक्षधर्मतासाचिव्यचिन्ताव्यग्रस्य प्रतिपत्तुरेकोऽपि हेतुस्तत्त्वनिर्णयाय न पर्याप्तइत्यधिकमुद्भव्यान्यतरहेत्वादेः शातनं कारयित्वा कथा प्रवर्तनीयेतितदुद्भावनस्यावश्यकत्वात्। हेत्वाभासनिरनुयोज्यानुयोगयोरेव कथावसानिकत्वम्। तद्यथा-व्यभिचाराद्यनुद्भावानव्यभिचारादिमताहेतुना तत्त्वनिर्णयोनभवेत्, हेत्वन्तरोपादाने च कथान्तरमेतदिति पूर्वकथापर्यवसानमावश्यकम्। एवमव्यभिचारादावेव व्यभिचाराद्युद्भावनम् निरनुयोज्यानुयोगस्तस्यानुद्भावने तत्त्वनिर्णायकोऽपि हेतुस्त्यक्त एव भवेदिति तत्त्वनिर्णयो न स्यादेवेत्यावश्यकम् तदुद्भावनम्। ननु—'तत्रोद्भावितस्य व्यभिचारादेरनिर्वाहे निरनुयोज्यानुयोगोऽपि दूषणान्तराभिधाने सैव कथा प्रवर्तताम्—इति चेत्, न स्थापनावादिप्रथमोक्तसाधनदूषणवादिप्रथमोक्तदूषणयोरेव विचारः कथा। तथा च तदुभयान्यतरानिर्वाहे तत्कथाविच्छेद एव, साधनान्तरोपादाने च कथान्तरमेवेति भवति हेत्वाभासनिरनुयोज्यानुयोगयोः कथावसानिकत्वम्। ननु—'हेत्वाभासातिरिक्तनिग्रहाणामस्थाने यत्रोद्भावनं तत्र निरनुयोज्यानुयोगस्य न कथावसानिकत्वमुचितम्, अस्थाने निग्रहान्तरोद्भावनेऽपि प्रकृतसाधनस्यानुपप्लवात्' इति—चेत्, न, हेत्वाभासानामेव स्थाने यत्रोद्भावनम् तत्रैव निरनुयोज्यानुयोगस्य कथावसानिकत्वात्, अन्यत्रोद्भावनस्याप्यनावश्यकत्वात्, ननु—"असाधारणानैकान्तिकसत्प्रतिपक्षयोर्दशाविशेषे दोषतया तदुद्भावनेऽपिकथं कथाविच्छेदः, क्रमेण विशेषग्रहदशायां तस्यैव हेतोस्तत्त्वनिर्णायकत्व सम्भवात्"—सत्यम्, असाधारणसत्प्रतिपक्षयोस्तत्रैव कथावसानिकत्वम् यत्र स्थापनाहेतौविपक्षबाधकाभावो हीनबलत्वम् वा तदुद्भावनानुपदमेववाऽवतरति; नतु सर्वत्र, तत्कालम् ताभ्यां प्रतिबन्धेऽपि कालान्तरे विशेषस्फुरणे तस्या एव कथाया अनुवृत्तिसम्भवात्। अन्यथा तस्यापि कथावसानिकत्वम्भवेत्। व्यभिचारादौ तु तत्कालं व्यभिचारप्रमायां व्यभिचारानुद्धारे[2] वा कथाविरामात्। न हि पर्वतोऽयं धूमवान् वह्निमत्त्वादित्यादावयोगोलकादावुद्भावितस्य व्यभिचारस्य निरनुयोज्यानुयोगोद्भावनेऽभावो न प्रमीयते येन कथाविच्छेदो न स्यात्। तदयं संक्षेपः—यस्य हेत्वाभासस्य सत्त्वमुद्भावनानन्तरमेव प्रमीयते तदुद्भावनं कथावसानिकम्; यस्योद्भावितस्य निरनुयोज्यानुयोगोद्भावनादभावः प्रमीयते तद्धेत्वाभासस्थल एव निरनुयोज्यानुयोगस्य कथावसानिकत्वम्, अन्यत्र तु यावदुद्भावितहेत्वाभाससमर्थनम् यावदेवंविधहेत्वाभासाभावसमर्थनम् कथानुवृत्तिः। वाद्युपन्यस्तप्राथमिकसाधनवाद्युपन्यस्तप्राथमिकदूषणान्यतरसमर्थनमेव वादस्य सीमा। तच्च तत्कालं कालान्तरे वेति न कश्चिद्विशेषः। किञ्च प्रतिवाद्यस्फुरितस्य वादिसाधनदूषणस्य वादिना स्वयमुद्भावनं[3] वादे, अन्यथा तत्त्वनिर्णयप्रतिघात एव। एवं[4] वाद्यु-

१ शा०। २ 'व्यभिचारोद्धारे'। ३ 'वनीयत्वं'। ४ 'वाद्युपन्यस्तस्य प्रतिवाद्युपन्यस्तदूषणोद्धारस्य प्रतिवादिना स्वयमुद्भावनम्'।

पन्यस्तस्य दूषणस्ययोद्धारी वादिना स्वयमप्युद्भावनीयः अन्यथा तत्त्वनिर्णयविघात एवेति ॥ ननु—'हेत्वाभासान्तरेण दुष्टम् साधनम् प्रतिवादिना दूषणान्तरेण दूष्यते, वादिना निरनुयोज्यानुयोग उद्भाव्यते, तत्र कथावसानं सम्भवति, न तु तत्त्वनिर्णयः, साधनस्य दुष्टत्वात्' इति चेत्, सत्यम्। कथायां फलावसानिकत्वनियमो वादे विशिष्य । यद्येवं, तदा अनिग्रहस्थाने वाद इत्यत्र किम्मूलम्। हेत्वाभासपञ्चकहेत्ववयवन्यूननिरनुयोज्यानुयोगबलवत्प्रमाणविरोधोपजीव्यापसिद्धान्तानां कथावसानिकत्वाभिप्रायेण इति कथासम्प्रदायः।[1]सामयिकोऽयन्नियमइत्यन्ये। कथावसानिकनिग्रहोपलक्षणमात्रमेतदित्यपरे। लक्षणन्तु तत्त्वबुभुत्साजन्यकथात्वं वादत्वम् । तत्त्वनिर्णयमात्रोद्देशप्रवृत्तकथात्वन्तुनलक्षणम्, उभयोद्देश्यत्वाभावे मात्रपदव्यवच्छेद्याभावात्, भ्रान्तस्योद्देश्यत्वसम्भवेऽपि तदनुरोधेन कथाव्युत्पादनस्य शास्त्रेऽभावात्। वादे च स्थेयानुविधेययोर्नावश्यमपेक्षा। स्थेयो[1] हि मध्यस्थो वीतरागः। तस्य च कथाविशेषविषयमर्यादाव्यवस्थापनकथकोक्तसंकलनकथकगुणदोषविवेचनभग्नवादिप्रबोधननिष्पन्नकथाफलख्यापनानि व्यापाराः। ते च तत्त्वबुभुत्सुतया वीतरागाभ्यां[2] वादिभ्यामेव सम्पादनीया इति किम्मध्यस्थेन । अनुविधेयोऽपि राजादिः। तस्य लाभपूजाख्यातिसम्पादनं व्यापारः। तस्य वादिनोस्तत्त्वबुभुत्सुतयाऽनपे[3]क्षितत्वात् किमनुविधेयेनापि। दैवादागतानान्तु स्थेयानान्न परिवर्जनम्। संवादे[4] प्रामादिककथाभासशंकापनयोपयोग उन्नेयः[5]।

अथ जल्पः। तत्र च समयबन्धः प्रयत्नेनकर्तव्यः निरूप्यनियमो वादिप्रतिवादिनियमः सभ्यानुविधेयसंवरणम्[6] निग्रहस्थानसमस्यासमस्योद्भावनप्रतिपादनम्[7] कथापर्यवसानसंवेदनावधानम् । लिपिकरव्यवहारेषु लेखकोऽपि कश्चिदुभयसम्मतः करणीयः । कथकौ च विद्यातः सम्भावितसाम्यौ न तु विदितन्यूनाधिकभावौ, विशेषविज्ञानप्रयोजनायाः कथायाश्चानर्थक्यप्रसङ्गात्। सदस्यास्तु वादिप्रतिवादिसम्मताः सिद्धान्तद्वयरहस्यवेदिनो रागद्वेषरहिताः पराभिहितग्रहणधारणप्रतिपादनपटीयांसो विषमसंख्यकाः[8] स्वीकार्याः। तेन बहूनां संवादेन निर्णयः स्यात्। सभापतिरपि वादिप्रतिवादिनोः सदस्यानाञ्च सम्मतो रागद्वेषादिरहितो निग्रहानुग्रहसमर्थः करणीयः। दृष्टान्तप्रयोगे कण्टकोद्धारे ऽसाधकतानुमानप्रयोगे[9] च वीप्सायां सर्वनामानुभाषणे[10] चोपनयनिगमनयोर्यथातथेति निर्देशे सिद्धासाधनोपाध्यप्रयोजकानां स्वशब्देन द्वारीभूतहेत्वाभासपदेन चोद्भावने ऽनेकनिग्रहसंकरे किञ्चिदभिधाने सकलाभिधाने वा—यत्र यत्र मताभेदस्तत्रतत्र[11] विशिष्य

---

१ 'क्षेपो'। २ 'वादिव्यापारस्तत्स'। ३ 'ऽनपेक्षतया'। ४ 'संवादेन' । ५ 'सन्नेया,' 'मन्नेया'। ६ 'संभ्यानुलभ्यार्थविधेय'। ७ निग्रहसामस्योसामस्यो'। ८ 'ख्याकाः'। ६ 'असाधकत्वसाधनप्रयोगे'। १० 'अर्थभाषणे। । ११ 'मतभेदः'।

समयबन्धः करणीयः। अन्यथा कथापर्यवसानन्न स्यात्। सदस्यानामपि मतभेदाश्रयणे[1]नान्योन्यकलहापत्तेः॥

जल्पप्रवृत्तिक्रमस्त्वेवम्। पूर्ववद्विप्रतिपत्तौ[2] 'शब्दोऽनित्यः कृतकत्वात् यद्यत्कृतकन्तदनित्यम्, यथा घटः। अनित्यत्वव्याप्यकृतकत्ववांश्चायम्। तस्मादनित्योऽयम्'' इति प्रयुञ्जान एव वादिनि प्रतिवादी उच्यमानग्राह्यान्यप्राप्तकालार्थान्तरापार्थकनिरर्थकानि चत्वारि निग्रहस्थानानि निरूपयेत्। तल्लाभे तदुद्भाव्य कृतकृत्यो नानुवदेन्न स्वपक्षे स्थापनम्प्रयुञ्जीत, न वा हेत्वाभासलाभे तदुद्भावयेत्, शरसन्धानसमये मूर्छितम्प्रति प्रतिघातान्तरानवकाशात्। अन्यथा स्वयमेव पर्यनुयोज्योपेक्षणन्निग्रहमासादयेत्। अत्र स्थापनावादिनो विरामोऽपि नापेक्षणीयः। किन्तु प्रयुञ्जान एव निग्राह्यः। यद्यपि[3] न्यूनाधिकपुनरुक्तापसिद्धान्ता अपि उच्यमानग्राह्या एव, तथाऽपि पूरणादिना तत्प्रतीकारशंकया झटिति नोद्भाव्याः, किन्तु प्रतिवादिनः। प्रयोगोपसंहारोऽपेक्षणीयः; अन्यथा तत्प्रतीकारे प्रतिवाद्येव निरनुयोज्यानुयोगेन निगृहीतः स्यात्। तत्र न्यूने पूरणम्प्रतीकारोऽधिके विकल्पः पुनरुक्ते प्रयोजनवत्त्वप्रतिपादनम्, अपसिद्धान्ते शेषे 'न',—आदिप्रयोजनमिति, प्रथमकक्षायामनुग्राह्यं विक्षेपमात्रं, तच्च तदैवोद्भाव्यम्, प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तराज्ञानाप्रतिभामतानुज्ञापर्यनुयोज्योपेक्षणाननुभाषणनिरनुयोज्यानुयोगानामेकादशनिग्रह स्थानानां प्रथमकक्षायामसम्भव एव। अविज्ञातार्थसम्भवेऽपि परिषत्प्रतिवादिभिरभिधानापेक्षया तत्काल एवोद्भाव्यता। तथा चानुक्तग्राह्योच्यमानग्राह्योक्तग्राह्याणां निग्रहस्थानानामलाभे कण्टकोद्धारपर्यन्तम् कृत्वा निवृत्ते स्थापनावादिनि प्रतिवादी दूष्यांशमनूद्य हेत्वाभासेन स्थापनां दूषयित्वा स्वपक्षे साधनम् ब्रूयात्, कण्टकोद्धारं च कुर्यात्। अत्रापि स्थापनावादिना ऽनुक्तग्राह्याणामप्रतिभाननुभाषणाज्ञानविक्षेपाणां चतुर्णां निरूपणम्, तदलाभे[4] तूच्यमानग्राह्याणामप्राप्तकालार्थान्तरापार्थकनिरर्थकानाञ्चतुर्णां निरूपणम्। तदलाभेऽप्युक्तग्राह्यप्रतिज्ञाविरोधापातप्रतिकरणीयत्वशंकानुद्भावितन्यूनाधिकपुनरुक्तापसिद्धान्तनिरनुयोज्यानुयोगानुयोज्योपेक्षणमतानुज्ञानामष्टानां[5] निरूपणम्; प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञासंन्यासहेत्वन्तराणां द्वितीयकक्षायामप्यसम्भव एव। तदेतेषामलाभे परापादितं स्वपक्षदोषमुद्धृत्य परसाधने दूष्यांशमनूद्य हेत्वाभासमात्रमुद्भाव्यम्[6]। 'ननु—द्वितीयवादिनो द्वितीयकक्षायां कथमयं क्रमः। यावत्[7] स्वपक्षसाधनानन्तरमेव किन्न परपक्षं दूषयेत्'

१ 'मतभेदानाश्रयणेन' इत्युभयपुस्तकस्थः पाठः। किन्तु मतभेदस्य अनाश्रयणे नैवान्योन्यकलहापत्तिसम्भव इति 'मतभेदाश्रयणेन' इत्येव पाठः समीचीनः प्रतिभाति। २ 'त्तो'। ३ 'यद्यप्यन्यूना' इतिपाठ उभयपुस्तकस्थस्तथापि 'यद्यपि न्यूना' इत्यादिपाठ एवापेक्षितः। अतस्तथैव निवेशः। ४ 'ऽनु'। ५ 'नुयोग मध्यस्थोद्भावित'। ६ 'मुद्भावयेत्'। ७ 'यावता'।

इति चेत्, न। परसाधनदूषणं विना सति परिपन्थिनि स्वपक्षस्थापनाया अनवसरपराहतत्वात् । 'ननु तावताऽपि परपक्षदूषणमात्रमभिधत्ताम् स्वपक्षसाधनाभिधानमप्यस्य[1] कुतः' इति चेत्, न। जल्पे हि स्वपक्षस्थापनापरपक्षदूषणगोचर[2]-शक्तिद्वयनिरूपणम् कथकयोः। अत एवायं वितण्डातो भिद्यते। तथा च दूषितपरपक्षोऽपि न विजयो उद्देश्यविशिष्टानिर्वाहात्, श्लाघ्यस्तु स्यादात्मानमरक्षन्परघातीव वीरः 'ननु भवत्वेवम्। तथाऽपि स्थापनावादिना प्रथमं स्वपक्षदोषोद्धारः तदनन्तरं परपक्षदूषणं कर्तव्यमित्यत्र किं विनिगमकम्' इति चेत्, न। प्रथमोपस्थितत्वात् स्वपक्षरक्षणस्याभ्यर्हितत्वात् स्वदोषानुद्धारेऽत्यन्तापकर्षप्रसङ्गात् प्रथमंस्वदोषोद्धारस्य साम्प्रदायिकत्वात्। 'ननु स्वपक्षदोषोद्धारेण कृतकृत्यः स्थापनावादी परपक्षमपि कथं दूषयतीति' चेत् , न। यतः परपक्षमदूषयन् रक्षितस्वपक्षोऽपि न विजयी, उद्देश्यविशिष्टानिर्वाहात्, श्लाघ्यस्तु स्यात्, वञ्चितपरप्रहार इव तमप्रहरमाणः। 'ननु उक्तोच्यमानग्राह्यनिग्रहलाभे तदुद्भावनेऽपि कथन्नस्वपक्षदोषोद्धारपरपक्षदूषणे कुर्यात्' इति चेत्, न। शरसन्धानकाल एव यो मूर्छितः तत्प्रयुक्तबाणवारणस्य तस्मै च प्रहरणान्तरस्य विफलत्वात् । एवञ्चाग्रिमाग्रिमकक्षास्वपि निग्रहस्थानानां लाभे सति स्वपक्षदोषोद्धारपरपक्षदोषयोरप्रसंगः। इहेदन्निग्रहस्थानमित्युद्भाव्यैव वादी विरमेदिति उभयपक्षसाधनवती[3] विजिगीषुकथा जल्प इति लक्षणम् ॥

अथजल्पकक्षावृद्धिक्रमः। वायुः प्रत्यक्षो नवेति विप्रतिपत्तौ, समयबन्धे च, मीमांसकस्थापना—"वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाधिकरणत्वात्, यद्यत् प्रत्यक्षस्पर्शाधिकरणम् तत्तत्प्रत्यक्षमेव, यथा घटः। नायं हेतुराभासः, तल्लक्षणायेगित्वात्" ॥ अत्र नैयायिकः प्रतिवादी। स चैवं द्वितीयकक्षामवतारयेत्। प्रत्यक्षस्पर्शाधिकरणत्वम् प्रत्यक्षत्वासाधकम्, प्रत्यक्षत्वव्यभिचारित्वात्। वायुरप्रत्यक्षः, नीरूपबहिर्द्रव्यत्वात्, यद्यन्नीरूपबहिर्द्रव्यम् तदप्रत्यक्षम्, यथाऽऽकाशः; अप्रत्यक्षत्वव्याप्यनीरूपबहिर्द्रव्यत्ववांश्चायम्, तस्मादप्रत्यक्षः। नायं हेतुराभासः, तल्लक्षणायेगित्वात् इति ॥ अत्र मीमांसकस्य तृतीयकक्षा। प्रत्यक्षस्पर्शाधिकरणत्वस्य मदीयहेतोरसाधकत्वसाधनाय यत् प्रत्यक्षत्वव्यभिचारित्वमुक्तम् तदसाधकत्वासाधकम्, स्वरूपासिद्धत्वात् । यच्च नीरूपबहिर्द्रव्यत्वम् त्वदीयो हेतुः तद्वायोरप्रत्यक्षत्वासाधकम्, निःस्पर्शत्वेनोपाधिना सोपाधित्वात् ॥ अथ नैयायिकस्य चतुर्थी कक्षा। प्रत्यक्षस्पर्शाश्रयत्वे[4] त्वदीयहेतौ प्रत्यक्षत्वव्यभिचारित्वन्न स्वरूपासिद्धम्। तथाहि प्रत्यक्षस्पर्शाश्रयत्वम्[5] प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्यत्वाव्यभिचारित्वे सति बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्त्वव्यभिचारित्वात्, यद्यद् बहिर्द्रव्यत्वाव्यभिचारित्वेसति बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्त्वव्यभिचारि तत्

१ मस्य'। २ 'गौरव'। ३ 'तो'। ४ 'प्रत्यचस्पर्शाश्रयत्वं'। ५ 'स्पर्शाधिकरणम्'।

प्रत्यक्षत्वव्यभिचारि, यथा स्पर्शवत्त्वम् । यश्च नीरूपबहिर्द्रव्यत्वे मदीयहेतौ निःस्पर्शत्वमुपाधिरुपन्यस्तः स परमाणौ साध्याव्यापक इत्यनुपाधिः । शेषानुमानानामसाधकतानुमानप्रपञ्चतया न पञ्चावयवत्वादिनियमः । किंतु व्याप्तिपक्षधर्मतामात्रस्वरूपदर्शनीयमिति न न्यूनता" ॥ अथ मीमांसकस्य पञ्चमी कक्षा । प्रत्यक्षस्पर्शाश्रयत्वस्य सद्धेतोः साध्यस्य[1] व्यभिचारित्वसाधनाय बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्त्वव्यभिचारित्वम् यद्धेतुकृतम्, तत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकतायां[2] उद्भूतरूपवत्त्वस्य विपक्षबाधकम् नास्तीति विशेषणासिद्धिः । यच्च मदुपन्यस्तनिःस्पर्शत्वोपाधेः परमाणौ साध्याव्यापकत्वमुक्तम्, तदयुक्तम्, केवलसाध्याव्यापकत्वेऽपि साधनधर्मावच्छिन्नसाध्य[3]व्यापकत्वे नोपाधेः[4] सम्भवात्" ॥ अथ नैयायिकस्य षष्ठी कक्षा । बहिर्द्रव्यप्रत्यक्षो[5]द्भूतरूपवत्त्वयोर्व्याप्यव्यापकभावे[6] विपक्षबाधकाभावेन यद्विशेषणासिद्धत्वमुक्तम्, तन्मन्दम् ; यत् उद्भूतरूपवति महति द्रव्ये प्रत्यक्षत्वदर्शनेन तदभाववति चादर्शनेन पक्षं विहायान्वयव्यतिरेकबलेन कारणत्वसिद्धावुद्भूतरूपवत्त्वं विनाऽपि बहिर्द्रव्यप्रत्यक्षत्वशङ्कायाम कारणककार्योत्पत्तिरेव विपक्षबाधकस्तर्कः । यश्च नीरूपबहिर्द्रव्यत्वावच्छिन्नाप्रत्यक्षत्वसाध्यव्यापको निःस्पर्शत्वमुपाधिस्तत्रापि नित्यद्रव्यत्वमुपाधिरिति ॥ इतः परं निग्रहपातं विना जल्पे प्रायः कक्षा न वर्धत एवेति नोच्यते ॥

अथ वितण्डा । अन्यतरपक्षस्थापनाहीना विजिगीषुकथा वितण्डा । न चेदमसाधकम् व्यभिचारित्वादितिदूषणोद्भावनद्वितीयसाधन[7]प्रवेशावश्यम्भाव इति नान्यतरपक्षस्थापनाहीनत्वम् इति वाच्यम् । कथाहेतुविप्रतिपत्तिविषयकोटिसाधकप्रयोगस्यैव स्थापनापदवाच्यत्वात्, दूषणोद्भावनस्य च अतादृशत्वात् । ननु—एकपक्षमात्रसाधकतायां कथम्पुरुषशक्तिनिरूपणम् । न हि साधनमात्रं दूषणमात्रं वा शक्तिनिरूपकमन्यथा-जल्पेऽप्युभयाभिधानप्रयासानर्थक्यप्रसंगात्—इति चेत्, न । जल्पे स्व[8]पक्षप्रत्यवेक्षायां परपक्षप्रतिघाते च प्रत्येकं शक्तिनिरूपणम्, अत्र त्वेकस्य स्वपक्षप्रत्यवेक्षामात्रे ऽपरस्य परपक्षप्रतीघातमात्रे शक्तिनिरूपणमित्यतो विशेषात्, कृतविचक्षत्रियद्वन्द्वयुद्धवत् दशरथदशाननतनयतम[9]स्विनीयुद्धवच्चेति । ननु—वितण्डायां सत्प्रतिपक्षप्रयोगे द्वितीयपक्षस्थापनाऽऽवश्यकी—इति चेत्, न । स्थापनायाः स्थापने[10] तदनभिधानात् । किञ्च शब्दो नित्यः कृतकत्वात् इति स्थापनायां कृतकत्वमसाधकम् । नित्यत्वव्याप्यव्योमैकगुणत्व-

१ साध्यव्यभिचारित्व' । २ 'याः' । ३ 'ध्या' । ४ 'धित्वसम्भवात्' । ५ 'त्वोद्भू' । ६ 'कभावेऽपि बाधकाभेन' । ७ 'साध्य' । ८ 'स्वप्रत्यत्तेच्छायां' । ९ 'तपस्विनी' । १० 'स्थापनास्थाने' ।

लक्षणप्रतिधर्मप्रतिहतत्वादित्यनेनैव प्रकारेण प्रतिपक्षोद्भावने कुत्र स्थापनात्वम्[1]। कथाहेतुविप्रतिपत्तिविषयकोटिसाधकप्रयोगस्यैव स्थापनात्वमित्युक्तत्वात्। अन्यथा सत्प्रतिपक्ष प्रयोगानन्तरं पुनरसाधकत्वानुमानापत्तिः। जल्पेऽपि सत्प्रतिपक्षस्यैवमेवोद्भावनम्। अन्यथा प्रथमं तत्र सत्प्रतिपक्षप्रयोगस्तदनन्तरमसाधकतानुमानम्[2]नन्तरं स्वपक्षस्थापने प्रतिवादी कष्टान्दशामासादयेत्। यद्वा जल्पे 'इदमसाधकमुच्यमानप्रतिधर्मप्रतिहतत्वात्' इति दूषणमुद्भाव्य सत्प्रतिपक्षप्रयोगमेव स्वपक्षस्थापनां कुर्यात्। ननु—यत्र मया शब्दानित्यत्वं साधनीयम्, परपक्षो दूषणीयः, त्वया चान्विताभिधानं साधनीयं, परपक्षो दूष्य इति समयबन्धेन कथा, तत्र न तावदियं वितण्डा, उभयपक्षस्थापनावत्त्वात्। नापि जल्पः, परस्परविरुद्धपक्षपरिग्रहाभावात्—इति चेत्, न। तस्या वितण्डाद्वयशरीरत्वात्। वितण्डाप्रवृत्तिरपि प्रतिपक्षस्थाप[3]नाभागं विहाय जल्पप्रवृत्ति[4]वद् द्रष्टव्या।

कक्षाप्रवृत्तिस्त्वेवम्। क्षितिः सकर्तृका न वा, इति विप्रतिपत्तौ, क्षितिः सकर्तृका कार्यत्वात्, यद्यत् कार्यम् तत्तत् सकर्तृकम्, यथा घटः; सकर्तृकत्वव्याप्यकार्यत्ववती चेयम्, तस्मात्सकर्तृका। नायं हेतुराभासः तल्लक्षणायोगात्॥ अत्र मीमांसकोऽन्यो नैयायिको वा वैतण्डिको द्वितीयकक्षायाम्—कार्यत्वम् न सकर्तृ[5]कत्वसाधकम्, अङ्कुरादौ साध्याभाववति गतत्वात्, अङ्कुरेऽनैकान्तिकत्वात्, अङ्कुरे साध्याभावसमानाधिकरणत्वात्,—इत्यन्यतमम् प्रयुञ्जीत। ननु—अङ्कुरे सन्दिग्धानैकान्तिकत्वात् इति, वादिनोरनिश्चितत्वेन तत्र सन्देहाभावात्, तत्कालसन्दिग्धस्य विशेषणस्य स्वरूपासिद्धत्वात्। नच तत्कालविप्रतिपत्तिविषयतया तत्र सन्देहः, क्षितिमात्रस्यविप्रतिपत्तिविषयत्वात्, अङ्कुरस्यापि विप्रतिपत्तिविषयत्वे प्रतिज्ञायान्तत्परीहारेऽर्थान्तरत्वापत्तेः, तदपरिहारे पक्षे ऽनैकान्तिकोद्भा[6]वनानवकाशात्। एवं सन्दिग्[7]धासन्दिग्धयोरपि सन्देहभागमपहाय प्रयोक्तव्यम्। तर्हि सन्दिग्धानैकान्तिकं न दोषः, किन्त्वनैकान्तिकमेव,—इति चेत्, सत्यम्। परार्थानुमाने तथैव, स्वार्थानुमाने तु तस्यादोषत्वात्। यद्वा, अङ्कुरे ऽनैकान्तिकोद्भावनानन्तरं यदि वादी कथञ्चित् साध्यसन्देहमापादयति हेतुसदसत्त्वसन्देहं वा, तदा तथाऽपि प्रकृतसन्दिग्धानैकान्तिकं दोषः स्यादिति वक्तव्यम्। न चानैकान्तिकोद्भावनानन्तरं सन्दिग्धानैकान्तिकोद्भावने भवद्[8]षणानन्तरं निग्रहस्थानम् प्रतिज्ञाहा-

१ 'स्थपना'। २ 'तासाधनम'। ३ 'भंगं'। ४ 'जल्पे प्रवृत्तिरत्र'। ५ त्वे'। ६ 'वनं न स्यात्' ७ 'सन्दिग्धोपाधिसन्दिग्धासिद्धयोरपि' ८ 'हेत्वन्तरवद्दूषणान्तरात्।

निश्च[1]"—इति वाच्यम् । सन्दिग्धानैकान्तिकस्योद्भावने[2]ऽप्यनैकान्तिकस्यापरिहारात्; उक्तयुक्त्या प्रकारान्तरेण सन्दिग्धानैकान्तिकस्योद्भावयितुमशक्यत्वात् ॥ अनैकान्तिकत्वाभिधानानन्तरं विरते प्रतिवादिनि तृतीयकक्षा वादिनः । नायं हेतुरङ्कुरादौ सन्दिग्धानैकान्तिको यावता तत्रापि साध्यस्य विद्यमानत्वात् ॥ अत्र चतुर्थकक्षा वैतण्डिकस्य । अङ्कुरे सकर्तृकत्वं कार्यत्वेनैव वा साधनीयम् हेत्वन्तरेण वा । उभयथाऽपि क्षितावनैकान्तिकत्वप्रसङ्गः ॥ पञ्चमी कक्षा वादिनः । क्षितौ कार्यत्वेन हेतुना सकर्तृकत्वं सिध्यतु, तुल्यन्यायतयाऽङ्कुरसकर्तृकत्वमादायापि सिध्यतीति नानैकान्तिकता ॥ षष्ठी कक्षा वैतण्डिकस्य । अनैकान्तिकेऽपद्दते ऽङ्कुरसाधारण्योक्तहेतोः सिद्धत्र्यसिद्धिः; तत्सिद्धौ चानैकान्तिकताभङ्ग इत्यन्योन्याश्रयात् कथन्नानैकान्तिकत्वम्॥ सप्तमी कक्षा वादिनः । यदैव सन्दिग्धानैकान्तिकोद्भावनाय त्वयाऽङ्कुर उपस्थापनीयःतदैव तमादायापि समूहालम्बनरूपैवानुमितिरिति नान्योन्याश्रय इति नानैकान्तिकता ॥ अष्टमी कक्षा वैतण्डिकस्य। तत्किं हेतुसन्देहसाध्यसदसत्त्वसन्देहोऽपि न स्यात् । न्यायतौल्यात् ॥ नवमी कक्षा वादिनः । हेतुसदसत्त्वसन्देहे साध्याभावनिश्चयेत्येव सन्दिग्धानैकान्तिकत्वम् । अन्यथा पक्षे तदापत्त्याऽनुमानमात्रोच्छेदः ॥ दशमी कक्षा वैतण्डिकस्य । पक्षे साध्यसन्देहस्यानुमानाङ्गतया तद्द्वारा साध्याभावसामानाधिकरण्यशङ्काऽपि हेतोर्नानुमितिप्रतिकूला । नह्यनुकूलमेव प्रतिकूलम् । अङ्कुरादिस्तु पक्षादन्यः, तत्र साध्यसन्देहस्य नानुमानाङ्गत्वम् । अतस्तदुचितं सन्दिग्धानैकान्तिकन्दूषणं स्यादेव ॥ एकादशी कक्षा वादिनः । अङ्कुरस्य पक्षादन्यत्वमित्येवानुपपन्नम्, सन्दिग्धसाध्यवत्तया तस्यापि पक्षत्वात् । न हि प्रतिज्ञाविषयत्वम्पक्षत्वम्, तथा स्वार्थानुमानोच्छेदप्रसङ्गः, तत्र प्रतिज्ञाया अभावात् ॥ द्वादशी कक्षा वैतण्डिकस्य । एवन्तर्हि क्व सन्दिग्धानैकान्तिकदोषत्वम् भवेत् । यद्यदेव प्रतिवादिनोद्भाव्यमात्रानैकान्तिकमिति तमादायैव समूहालम्बनानुमितिसम्भवात् ॥ त्रयोदशी कक्षा वादिनः । भवत्येव यत्राविनाभावावधारणमिति ॥ चतुर्दशी कक्षा वैतण्डिकस्य । सन्दिग्धानैकान्तिकोपदर्शनेऽविनाभावभङ्गस्यावश्यकत्वात्, तदभङ्गेऽनैकान्तिकस्य दोषत्वम् इति ॥ पञ्चदशी कक्षा वादिनः । सन्दिग्धानैकान्तिकत्वमवस्कन्द्याद्याह्यनुकूलतर्केणाविनाभावावधारणसम्भवात् ॥ षोडशी कक्षा वैतण्डिकस्य । अनैकान्तिके सत्यपि चेदनुकूलतर्काभावादविनाभावनिश्चयः, तदा नानैकान्तिकत्वन्दूषणम्; किन्तु व्याप्यत्वासिद्धिरेव । अतो व्याप्तौ सत्यामनैकान्तिकस्थलमप्यादाय साध्यसिद्धिः, तदभावेऽनुमितिप्रतिबन्ध इति सर्वथाऽनैकान्तिकस्याकिञ्चित्करत्वात् ॥ सप्तदशी कक्षा वादिनः ।

---

१ 'निवद्दूषणहानिर्वो' । २' द्भावनस्यापहारात्' ।

स्फुटं व्यभिचारस्थले ऽनुकूलतर्कावतारप्रतिबन्धादविनाभावस्य निश्चय इति व्याप्यत्वासिद्धिरेव दूषणमुपजीव्यतया त्वनैकान्तिकत्वस्य हेत्वाभासत्वव्यवसितेः । सन्दिग्धानैकान्तिकस्थले तु नानुकूलतर्कावतारप्रतिबन्धः सन्देहस्य तर्कप्रवृत्तिं प्रत्यप्रतिबन्धकत्वात् तर्कानवतारदशायामनैकान्तिकसन्देहस्य व्याप्तिग्रहप्रतिबन्धकतया तद्दोषत्वाभिधानात् ॥ अष्टादशी कक्षा वैतण्डिकस्य । तर्ह्यङ्कुरे सन्दिग्धानैकान्तिकस्य दोषत्वमायातम् ॥ ऊनविंशतितमी कक्षा वादिनः । घटादावन्वयव्यतिरेकाभ्यामनन्यथासिद्धाभ्यां कर्तुः कार्यमात्रम्प्रति कारणत्वेऽवधृते अकारणककार्योत्पत्तिरेवानुकूलस्तर्क इति ॥

अत्र सुज्ञयोर्न[1] कथाविरामः झटिति, न वा निग्रहादिपरिप्लव इति दिङ्मात्रं दर्शितम् । एवं हेत्वाभासान्तरेऽपि कक्षावृद्धिः । क्वचिदपिकक्षावृद्धिः क्वचिदपि गत्वा निग्रहलाभे कथापर्यवसानम् । यद्युद्भावितनिग्रहे विप्रतिपत्तिवदुद्भावितहेत्वाभासस्य दोषत्वे वा तदा मध्यस्थवचनानुसरणमिति[2] कथासम्प्रदायः ॥

अथोद्भावनसौकर्याय[3] संक्षेपतः हेत्वाभासच्छलजातिनिग्रहस्थानानां नाममात्रकीर्तनम् । तत्र हेत्वाभासत्वं अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् । ज्ञायमानं सत् यदनुमितिप्रतिबन्धकम् तत्त्वं वा । यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वन्तत्त्वंवा । ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च । सव्यभिचारोऽपि त्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । तत्रविपक्षवृत्तित्वं साधारणत्वम् । तन्मात्रस्यैव दूषकत्वात् । विरुद्धस्यापि नियमांशाज्ञानदशायां[4] साधारणत्वमेव । अन्यथा तस्य हेत्वाभासान्तरतापत्तेः । इदमसाधकममुकविपक्षवृत्तित्वात् इत्यस्योद्भावनप्रकारः । अमुकेनानैकान्तिकत्वादिति सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः । तत्र विपक्षव्यावृत्तत्वांशस्यादूषकत्वेऽपि सर्वसपक्षव्यावृत्तत्वस्य दूषकत्वमेव । उद्भावनीयमपि तावन्मात्रमेव । अन्यथा व्यर्थविशेषणतापत्तेः । सपक्षत्वन्तु निश्चितसाध्यवत्त्वमात्रम् । न तु पक्षादन्यत्वे सतीत्यपि । तेन शब्दो नित्यः शब्दत्वादितिसद्धेतोः पक्षस्य कथञ्चित्साध्यवत्ताज्ञानदशायां तस्मादव्यावृत्तत्वे सपक्षविपक्षव्यावृत्तत्वान्नातिव्याप्तिः[5] ॥ अनुपसंहार्यस्तु न केवलान्वयिधर्मावच्छिन्नपक्षकः । केवलान्वयिसाध्यकस्य तस्यापि सद्धेतुत्वात् तत्रातिव्याप्तिः । यथा 'सर्वमभिधेयम् प्रमेयत्वात्' इति । किन्तु व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेतुत्वाभिमतोऽनुपसंहारी । स चान्वयेन व्यतिरेकेण वा ॥ साध्याभावव्याप्यत्वम् विरुद्धत्वम्; साध्यासमानाधिकरणत्वे सति साधिकरणत्वं वा । पूर्वलक्षणेऽसाधकतानुमितौ नियमांशवैयर्थ्यमिति[6]" चेत्, न । 'इदमसाधकं विरुद्धत्वात्' इत्यत्र

---

१ 'सुज्ञयोर्न कथाविवरणमाहुरिति'। २ 'दिक्'। ३ 'शौर्याय'। ४ 'सा'। ५ 'सपत्ते'। ६ 'स'।

वैयर्थ्योद्भावनस्याशक्यत्वात् । न हि विरुद्धत्वमेव वाप्रसिद्धम् । येन तद्विवरणेऽर्थगत्या वैयर्थ्यं भवेत् । लक्षणपर्यालोचनया हेतौ वैयर्थ्यापादने सर्वमनुमानमाकुलं स्यात् । तथाहि कृतकत्वादिति प्रागभावप्रतियोगित्वादिति व्याख्येयम् । तदपि प्रतियोग्यन्यूनानतिरिक्तकालीनावधिकसामयिकयावत्परत्वाश्रयसमानकालीनकदाचित्काभावप्रतियोगित्वादिति व्याख्येयम्[१] ।[२] तत्र कदाचित्काभावप्रतियोगित्वादित्यस्यैव सामर्थ्ये व्यर्थविशेषणत्वं-स्यादेव । तथा च विरुद्धत्वेनैवासाधकताव्याप्यत्वमिति वैयर्थ्यम् । यद्वा साध्याभावव्यापकाभावप्रतियोगित्वम् वृत्तिमतः साध्यवदवृत्तित्वम् साध्यवदवृत्तित्वानधिकरणधर्मत्वंवा विरुद्धत्वम् । न च वा; निश्चितानन्वयत्वेन विरुद्धत्वमपार्थकम् निग्रहस्थानम् प्रतिज्ञाविरोधो अपा र्थकत्वे हि विरोधप्रतिसन्धानमावश्यकम् इत्युपजी व्यत्वादयमेव दोषः । व्याप्तिमप्रतिसन्धाय विरोधप्रतिसन्धाने प्रतिज्ञाहेतुविरोधो निग्रहस्थानं, तत्प्रतिसन्धाने तु हेत्वाभासतेति विशेषात् साध्यव्यापकाभावव्याप्यत्वात् [३]साध्यविरुद्धोपलम्भाच्च । विरोधिसाधने त्रिविधप्रतियोग्युपलम्भात् साध्यव्यापकाभावोपलम्भात् साध्यव्यापकविरुद्धोपलम्भाच्च । निषेधसाधनेऽपि त्रिविधः । बाधाश्रयासिद्धिस्वरूपासिद्ध्यसाधारणानैकान्तिकसाहचर्यमस्य काचित्कम् व्याप्यत्वासिद्धिसाङ्कर्यम्, सर्वत्रपृथक्त्वञ्चोपजीव्यत्वादिति दिक् ।

प्रकृतसाध्यहेत्वोः किन्तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसमम् इत्याचार्याः । विरोधिधर्मद्वयविषयसंशयानुमितिजनकत्वं प्रकरणसमत्वमिति रत्नकोषकृतः । एकधर्मनिष्ठतद्व्याप्यत्वप्रकारकविषयत्वपक्षधर्मताप्रकारकविषयत्वप्रतियोगिज्ञानसमानदेशसमानकालीनत्वे सत्यैकधर्म[४]निष्ठतदभावव्याप्यत्वप्रकारकविषयताद्वयप्रतियोगि[५]साधनत्वम्प्रकरणसमत्वमिति मणिकण्ठमिश्राः । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या विरुद्धकार्यैकलिङ्गत्वं तदिति चिन्तामणिकृतः । विरोधिबोधकान्यतमगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वंवा तत् । केवलान्वयिन्यपि-'शब्दोऽभिधेयः प्रमेयत्वात्' इति प्रयुक्ते अभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगिघटत्वव्यापकान्यत्वात् पटवत्; यद्वा घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटनिष्ठसदातनाभावत्वात् अभिधेयत्वान्योन्याभाववदिति कथञ्चित् प्रयोसम्भवात् । केवलान्वयित्वग्रहकाले द्वयन्निवर्तते । अतएव दशाविशेषदोषोऽयम् ।

साध्यव्याप्यत्वप्रकारकप्रमाव्यतिरेकेपक्षधर्मताप्रकारकप्रमाव्यतिरेकान्यतरत्वमसिद्धत्वम् । अन्यतरत्वन्तदन्यान्यत्वम् । अतो यत्रैकमात्रव्यतिरेकस्तत्र नाव्याप्तिः । व्याप्तिपक्ष धर्मताभ्यामप्र· मितोऽसिद्धः । स चायंव्याप्यप्रमायां पक्षधर्मताप्रमायां उभयाप्रमायां चानुगत इत्येके । तन्मतेऽज्ञा[६]यमाना ऽप्यसिद्धिर्हेत्वाभासः । आश्रयासिद्धि व्याप्यत्वासिद्धि-

---

१ not in B २ 'तत्र' । ३ 'साध्याभावव्याप्यत्वात्' । ४ धर्म । ५ 'ज्ञानत्व' ६ 'ज्ञाय'

स्वरूपासिद्धयः प्रत्येकमेव हेत्वाभासाः। प्रत्येकज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात्। न च विभागव्याघातः असिद्धत्वेनैकेन रूपेण त्रयाणामुपसंग्रहस्य महर्षिणा कृतत्वात् इति चिन्तामणिकृतः। तत्राश्रयासिद्धिराश्रयस्वरूपासिद्ध्या तद्विशेषणासिद्ध्या वा। यथा गगनकमलं सुरभि कमलत्वात्। द्वितीयासिद्धिसाधनस्थले सन्देहस्य सिसाधयिषायास्तदुभययोग्यताया वा पक्षविशेषणस्य विरहात्। स्वरूपासिद्धिः साधनस्वरूपविरहात्। यथा गगनमनित्यं कृतकत्वात्, गगनमनित्यं क्रियावत्त्वे सति निःस्पर्शत्वात् मनोवत्। व्याप्यत्वासिद्धिरपि व्याप्तिविरहात्। तत्रासमर्थविशेषणासमर्थविशेष्यासमर्थोभयसन्दिग्धासमर्थविशेषणसन्दिग्धासमर्थविशेष्यसन्दिग्धासमर्थोभयभेदादनेकप्रकारिका। उपाधितत्सन्देहाद्वा[1] प्रयोजकादीनामप्यनिबन्धनान्नैवानुप्रवेशः। व्यभिचारविरोधयोरपि द्वारं व्याप्यत्वासिद्धेरुपजीव्यत्वाच्च पृथगुद्भावनम्। तल्लिङ्गातिरिक्तप्रमाणेन पक्षे साध्याभावप्रमाबाधः। विरोधिस्थले क्वचित् साध्याभावप्रमा तेनैव लिङ्गेनेति न तत्रातिव्याप्तिः। साध्याभाववत्तया निश्चितपक्षकत्वम् प्रमितसाध्याभाववद्धामित्वम् प्रमिताभावप्रतियोगिसाधकत्वं वा असाधकता[2]लिङ्गम्। यद्वा बाधितत्वम्। तथाहीदमसाधकम् बाधितत्वात्, साध्याभाववत्तया निश्चितपक्षकत्वात्, इति प्रयोज्यम्।

बाधश्च स्वरूपसन्नेवानुमितिप्रतिबन्धको न तु ज्ञातो, विरोधिज्ञानस्य स्वरूपसत एव प्रतिबन्धकत्वकल्पनात्। नेदं रजतमितिज्ञाने सति रजतमिदमिति ज्ञानानुदयात्। शङ्खशुक्त्यनुमानानन्तरमपि पत्पीतिमज्ञानम् तत्रानुमानन्न प्रत्यक्षविरोधि किन्तु साक्षात्कारएव दर्शनबलेन, तथैव विरोधकल्पनात्। न चैवंसति साधारण एवायन्दोषः इति न हेत्वाभासः। स्वार्थानुमाने तथैव परार्थानुमाने बाधितविषयत्वस्य हेतुगतत्वेनोपसंहारादसाधारण्यमेव। बाधवत् सिद्धसाधनस्य हेत्वाभासान्तरत्वमनाशङ्कनीयम्। सिद्धेः सिद्ध्यन्तरम्प्रति स्वरूपतो प्रतिबन्धकत्वाद्बाधावधारणदर्शनात्। तेनास्य पक्षताविघटनमेव द्वारम्, न तु स्वातन्त्र्यम्। बाधे पक्षधर्मताविघटने सत्यपि स्वातन्त्र्येण सामर्थ्यादुपजीव्यत्वाच्च। स्वातन्त्र्यम् प्रमितसाध्याभाववत्पक्षकत्वम् पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति विवक्षितविवेकेन साध्याभावप्रमैव दोषः। सा च प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् प्रमात्वज्ञानंविनाऽधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्चेति मणिकृतः। गन्धप्रागभावावच्छिन्ना पृथिवी गन्धवती पृथिवीत्वात् इत्यसंकीर्णबाधस्थलम्। साध्यात्यन्ताभावसामानाधिकरण्यस्यव्यभिचारित्वे प्रकृते तदभावात् इत्यपि तएव।

सचायम् बाधो दशविधः। धर्मिग्राहकप्रमाणबाधितम्। घटो व्यापकः सत्त्वादिति प्रत्यक्षेण, परमाणवः सावयवाः मूर्तत्वादित्यनुमानेन,[3] मेरुः पाषाणमयः पर्वतत्वा-

---

१ 'उपाधिसन्देहाद्वा'। २ 'गामकता'। ३ B adds शब्दोऽश्रावणः गुणत्वादित्यनुमानेन।

दिति तत्सुवर्णमयत्वबोधकागमेन । साध्यप्रतियोगिग्राहकबाधितम्[1] । यथा वह्निरनुष्णः कृतकत्वादिति प्रत्यक्षेण, शब्दोऽश्रावणः गुणत्वादित्यनुमानेन, गवयत्वन्न गवयपदप्रवृत्तिनिमित्तम् जातित्वादित्युपमानेन । साध्यग्रह[2]बाधितम् यथा शुचि नरशिरः प्राण्यङ्गत्वादित्यागमेन । हेतुग्रहबाधितम् जलानिलावुष्णौ पृथिवीतेजोविपरीतस्पर्शत्वात् तेजोवदिति प्रत्यक्षेण, मनो विभु ज्ञानासमवाय्याधारत्वात् इत्यनुमानेन' 'राजसूयं ब्राह्मणकर्तव्यम् स्वर्गसाधनत्वात्' इति राजसूयकर्तव्यताबोधकागमेन ।

एते च हेत्वाभासाः, निग्रहस्थानं हेत्वाभासाश्च यथोक्ता इति सूत्रात् । अत्र चकारोऽनुक्तसमुच्चयार्थः । तेन विरोधादिनिग्रहस्थानोत्तीर्णस्य साधनप्रयोगस्य चतुर्धा दुष्टत्वम् सम्भवति । हेतुतो यथाऽनैकान्तिकादि । दृष्टान्ततो यथा साध्यविकलसाधनविकलाश्रयविकलोभयविकलाः तर्कतो यथा आत्माश्रयान्योन्याश्रयचक्रकानवस्थाः । तदितरानिष्टप्रसंगभेदात्; उक्तितो यथा अनुपदर्शितान्वयविपरीतोपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितव्यतिरेकाः संगृह्यन्ते । एतेषां च यथायथं हेत्वाभासेऽनन्तर्भूय निग्रहस्थानत्वमित्याचार्याः । स्वातन्त्र्येणैव दूषकत्वममीषामित्यन्ये ॥ तत्र साध्यविकलो यथा—'पर्वतो धूमवान् वह्निमत्त्वात् अयोगोलकवत् । साधनविकलो यथा—पर्वतो वह्निमान् धूमवत्त्वादयोगोलकवत् । आश्रयविकलो यथा—शशशृङ्गवदिति । उभयविकलस्त्वत्रैव यथा जलह्रदवदिति । अनुपदर्शितान्वयो यथा—पर्वतो वह्निमान् धूमवत्त्वात् महानसवदिति । अनुपदर्शितव्यतिरेको यथा—पृथिवी इतरभिन्ना पृथिवीत्वाज्जलवत् । विपरीतोपदर्शितान्वयो यथा—पर्वतो वह्निमान् धूमवत्त्वात्, यो यो वह्निमान् स धूमवान् इति । विपरीतोपदर्शितव्यतिरेको यथा—पृथिवी इतरभिन्ना पृथिवीत्वात्, यन्न पृथिवी तन्नेतरभिन्नं यथा जलम् ।

तर्कत्वन्तु ज्ञानत्वावान्तरजातिविशेष एव तर्कयामीत्यनुगतमतिसाक्षिकः । व्याप्यारोपत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयव्यापकारोपवत्त्वमेव वा तर्कत्वम् । तत्र व्यापकारोपभागस्तर्क्यतेऽनेनेति करणव्युत्पत्त्या तर्को व्यापकारोपभागो भावव्युत्पन्नस्तर्कणमितितर्कः । सम्भावनात्मकन्तु ज्ञानं न तर्कः, किन्तर्हि हीनकोटिकः संशय एव । व्याघातोऽपि न तर्कविशेषः किन्तु विरोधनिग्रहस्थानान्तर्भूतः । आत्माश्रयादयोऽप्यनिष्टप्रसङ्गान्तर्भूता एव, न तु तर्कस्य पञ्चविधत्वमिति केचित् । तत्र स्वाव्यवहितापेक्षणमात्माश्रयः, स्वस्य स्वापेक्षणमिति यावत् । तदयमुत्पत्तौ स्थितौ ज्ञप्तौ च प्रवर्तते । यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटाद्यकालवृत्तिर्न स्यात्; अथवा यद्ययं घट एतद्घटजनकः स्यात् एतद्घटपूर्वकालवृत्तिः स्यात् । उत्पत्तौ स्थितौ च यदीदं रूपमेतद्रूपाधिकरणं स्यात् तदेतद्घटः स्यात् द्रव्यं वा स्यात् गुणो न स्यादिति । ज्ञप्तौ च

---

१ ग्राहक । २ ग्राहक ।

घटे तज्ज्ञानं यदि घटे तज्ज्ञानजनकं स्यात् तदा घटे तज्ज्ञानोत्पत्तिकालोत्पत्तिकं[1]न स्यादिति। एवमन्योन्याश्रयेऽपि स्वापेक्षापेक्षित्वम्। तच्चैवमापद्यते। यद्ययं दण्ड एत-[2]द्दण्डजन्यःस्यात् तदा नैतदुत्पत्तिकालवृत्तिः स्यात्। यद्वा यद्ययं घट एतद्घटजनकजन्यः स्यात् एतद्घटजनकपूर्वकालपूर्ववर्ती स्यात्। एवं स्थितिज्ञप्त्योरप्येतदपादानमूह्यम्। स्वापेक्षापेक्षापेक्षित्वं व्यवस्थितान्तरितस्वापेक्षित्वं वा चक्रकम्। तच्चैवं प्रवर्तते—यद्ययं घट एतद्घटजन्यजन्यः स्यात् एतद्घटोत्पत्तिकालवृत्तिर्न स्यात्; एवं यद्येतद्घट एतद्घट-जनकजनकजनकः स्यात् एतद्घटजनकजनकवर्ती स्यादित्यादि। अनवस्थापादनमग्रे वक्ष्यते। आत्माश्रयान्योन्याश्रयचक्रकानवस्थाव्याघातप्रतिबन्दिभेदात् केचित् षट्तर्कानाचक्षते। अविनिगमकादिकम् वक्ष्यते॥

अथ छलम्। स दूषणापरिस्फूर्तौ विजिगीषयाऽस्य प्रयोगो बुद्धिपूर्वकः। क्वचित्तात्पर्यभ्रमादस्य पातः। प्रथमकक्षायामिदन्न सम्भवति। द्वितीयकक्षास्वस्य सम्भवः। तृतीयकक्षासूद्भावनम्। परतात्पर्यविषये शब्दतात्पर्यसञ्चारेण दूषणवचनं छलमिति सामान्यलक्षणम्। वादिनाऽन्यथाभिप्रायपूर्वकम् वाद्यन्तरेण दूषणाभिधानं वा कल्पितदूष्य-दूषणं छलमित्याचार्याः। तत् त्रिविधम्—वाक्छलम्, सामान्यच्छलम्, उपचारच्छलञ्च। तत्र मुख्यार्थतात्पर्येण प्रयुक्ते मुख्यार्थसञ्चारेणाभिधानम् वाक्छलम्। तदपि त्रिविधम्-धर्मिपदसञ्चारात धर्मपदसञ्चारात् उभयपदसञ्चाराच्च। तदपि प्रतिज्ञाहेतुदृष्टान्त भेदान्नवविधम्। तत्र प्रतिज्ञायां धर्मिपदसञ्चाराद्यथा—'भूभृदयम् समरप्रियो महाबलत्वादिति प्रयुक्ते', भूभृति पर्वते समरप्रियता बाधितेति महाबलत्वादिति हेतुः स्वरूपासिद्ध इति। धर्मपदसञ्चाराद्यथा, 'ब्राह्मणोऽयमक्षर रहितो महाकुलत्वात्' इत्यत्राक्षरादिराहित्यमिन्द्रियराहित्यमस्य बाधितम् इति। उभयपदसञ्चाराद्यथा—'भूभृदयं सैन्धववान्' इति राजाभिप्रायेण प्रयुक्ते पर्वते लवणमस्त्येवेति सिद्धसाधनम्। अथवा अजा गर्भवतीत्यत्र छागी अन्तर्वत्नीत्यर्थः, अजायाः प्रकृतेः गर्भोऽभ्यन्तरमसिद्धम् गर्भस्य मूर्तधर्मत्वात् इति॥ हेतौ यथा-नेपालादागतोऽयं नरः कम्बलवत्त्वादिति अत्र विशेषणपदे नूतनपरे संख्यासञ्चारात् स्वरूपासिद्ध्यभिधानम्। गजोऽयम्महाद्विजत्वात् इति विशेष्यपदे दन्तपरे, नायम् महान् ब्राह्मण इति स्वरूपासिद्धिरिति। एवं गजोऽयं गुरुद्विजत्वात् इत्यत्रोभयपदसञ्चारान्नायमध्यापको द्विज इत्यसिद्धिः इति॥ दृष्टान्ते च—साध्यविकलसाधनविकलोभयविकलत्वोद्भावनात् त्रैविध्यम्। तारकाः अस्मदादिद्वारा सदा गगनेचरत्वात् पतङ्गवत्, सूर्यपरं पतङ्गपदम् शलभे सञ्चार्य साध्यवैकल्योद्भावनम्। घटो द्रव्यं सावयवत्वात् अम्बरवदिति वस्त्रपरे अम्बरपदे गगनसञ्चारेण साधनवैकल्योद्भावनम्। अयम्पशुर्विषाणित्वात् गोवदिति वाण्यां सञ्चार्योभयवैकल्योद्भावनम्। यद्यप्युभयवैकल्येपि प्रत्येकवैकल्यम्

1 Not in A 2 दण्डान्य।

तथाऽप्यत्यन्ताशक्तिसूचकतया पृथगुपादानम्। एवन्दूषणादावपि चिन्तनीयम्। यथाऽन्यथासिद्धो नसिद्धोनासिद्धः कथमपि सिद्धत्वादित्यादि। एवं नञादावत्यन्ताभावपरेऽन्योन्याभावसञ्चारेणान्योन्याभावात्यन्ताभावसञ्चारेणोह्यम्। आनन्त्यमेवास्य, दिगुपदर्शनमात्रमेतदिति॥ ननु 'वक्तुरेवायमपराधो यतो विशेषपदमन्तरेणसामान्यपदोपादानम्' इति चेत्, न, सङ्केतस्यैव ताद्रूप्यात्, प्रकरसमभिव्याहारादिबलेन सामान्यशब्दस्यापि विशेषणपरत्वौचित्यात्॥ विवक्षितवाक्यार्थे तात्पर्यार्थसञ्चाराद् दूषणभिधानं सामान्यच्छलम्। तच्च पदवाक्यतात्पर्यसञ्चाराद्द्विविधमपि प्रत्येकं षड्विधम्। तद्यथा। सम्भवे नियमतात्पर्यसञ्चारः—अयं सम्भावितविद्यः ब्राह्मणत्वादित्युक्ते, ब्राह्मणत्वं न विद्यावत्त्वनियतम् व्रात्ये व्यभिचारात्। नियमे सम्भवः 'यो धूमवान् स वह्निमानित्युक्ते, सम्भवति धूमवति वह्निर्न त्वेतावता धूमाद्वह्निसिद्धिरपि। उद्देश्यविधेयत्वसञ्चारः—शब्दोऽनित्य इति शब्दमुद्दिश्यानित्यत्वे विधेये न हि योऽनित्यः स सर्वः शब्दः, घटादेरनित्यस्यापि अशब्दत्वादित्यंशबाधः। विधेये उद्देश्यत्त्वसञ्चारो यथा—अनित्यं कार्यमनित्यत्वादित्युक्ते कार्यत्वं यद्विधेयम् तत्रोद्देश्यत्वसञ्चारात् साध्याविशिष्टत्वाभिधानम्। विशेषणे विशेष्यत्वसञ्चाराद्यथा—'द्विजशतम्भोजितम्' इत्यचेतनायाः शतसंख्याया भोजित्वासम्भव इति। विशेषणान्तरे विशेषणान्तरसञ्चारो यथा—'शतं द्विजातयो भोजिताः' इति। 'सनकादयो भोजिताः न द्विजातय' इत्यत्र विशेष्ये विशेषणान्तरसञ्चारादपि सप्तमी विधा सम्भवति, तथाऽपि विशेषणे विशेष्यसञ्चारस्याकृतिगणत्वेन तत्संग्रहः॥ उपचारावृत्त्या प्रयुक्ते मुख्यतात्पर्यकतया[1] दूषणमुचारच्छलम्। 'मञ्चाः क्रोशन्तीत्युक्ते मञ्चस्याचेतनस्य क्रोशनकर्तृत्वमनुपपन्नमिति। 'कथायां लक्षणयाकथम्प्रयोग' इति चेत्, न, लौकिकलक्षणाया मुख्यतुल्यत्वात्। अस्यापि प्रतिहेतुदृष्टान्ताश्रयतया नवविधाः। तत्र प्रतिज्ञायाम् यथाऽयम्माणवकः सिंहइत्यत्र माणवके सिंहत्वम् बाधितम् इति। एवमयम्पुरुषव्याघ्रो राजशार्दूल इत्यादौ द्रष्टव्यम्[2]। हेतौ यथा—अयं देशो घोषवासयोग्यः गंगात्वादित्यत्र मुख्यमर्थमादायविरुद्धत्वोद्भावनम्। एवमन्यदप्यूह्यम्। दृष्टान्ते--यथा 'अयम्पुरुषः क्रोशनकर्ता भीतत्वात् मञ्चवत्' इत्यत्र साध्यसाधनोभयवैकल्यम् मुख्यमर्थमादाय। एवम् 'अयंदेशो घोषवासयोग्यो विस्तीर्णत्वात् गङ्गावत्' इत्यत्र मुख्यमर्थमादाय साध्यवैकल्योद्भावनम्। एवम् 'अयन्देशो महान् घोषवासाधिकरणत्वात् गङ्गावत्' इति साधनवैकल्योद्भावनम्॥ तदेतेषु छलप्रभेदेषु प्रत्युत्तरमेवमूहनीयम्; नव कम्बलत्वादितिनूतनकम्बलत्वम् विवक्षितम्, नतु नवसंख्यायोगिकम्बलत्वमित्यसिद्ध्युद्भावने निरनुयोज्यानुयोगन्ते निग्रहस्थानमिति दूषणेष्वप्येवं छलमूहनीयमिति॥

---

१ तात्पर्यकल्पनया। २ अयंदेशाद्यवकाशादिः गंगात्वादित्यत्र मुख्यमर्थमादायानैकान्तिकत्वोद्भावनम्।

अथ जातिः । व्याप्तिमपुरस्कृत्यासाधकत्वसाधनाभिप्रायेण प्रयुक्तमुत्तरं[2] जातिः, साधकताप्रयोजकरूपेण[1] परासाधकतासाधनं वा । न तु सिद्धदूषणासमर्थमुत्तरं जातिः । असिद्धस्यापि दूषणासमर्थस्य जातित्वात् । यदि घटसाधर्म्यात् कृतकत्वादनित्यः शब्द इति, नित्यसाधर्म्यात् विभुत्वान्नित्यः किन्न स्यादिति प्रत्यवस्थानसम्भवात् ॥ तत्र प्रथमं साध्यस्य[3] समा । सा चैवम्प्रवर्तते—। शब्दोऽनित्यः कृतकत्वाद्घटवदिति स्थापनायां यदि घटसाधर्म्यात् कृतकत्वादयमनित्यो, हन्त ! आकाशसाधर्म्यात् प्रमेयत्वात् नित्यएव किन्न स्यादिति । इयञ्च सद्विषया, स्थापनायाः सम्यक्त्वात् । अथासद्विषया—शब्दो नित्यः श्रावणत्वात् शब्दत्ववदित्यत्रासमीचीनायां स्थापनायां अनित्यसाधर्म्यात् अनित्य एव किन्न स्यात् इति । असदुक्तिका तृतीया । नित्यः शब्दः श्रावणत्वादिति प्रयुक्ते श्रावणत्वान्नित्यत्वसाधर्म्याद्यदि नित्यः तदा कृतकत्वादनित्यसाधर्म्यादनित्य एव किन्न स्यादिति । उक्तिमात्रमत्र दूष्यम्, न तु साधनमपि । यद्यप्यसदुक्तिकायामसद्विषयत्वध्रौव्यम् तथाऽप्युक्तदोषादपिजातिः सम्भवतीति प्रदर्शनार्थम् प्रकारत्रयाभिधानमकरोत् । अस्याःसद्दूषणास्फुरणम् प्रौढ़िवादो वाऽवसरः । विपक्षान्वयिधर्मवत्त्वप्रदर्शनमात्रं कारणम् । हेतुर्दूष्यः सत्प्रतिपक्षत्वमारोप्यम् तद्भ्रान्तिः फलम् ॥ एवं वैधर्म्येण स्थापनायां साधर्म्येण प्रत्यवस्थानम् साधर्म्यसमैव । यथा अनित्यः शब्दः कृतकत्वात् यत् नित्यन्तन्न कृतकम् यथा गगनम्' इति, प्रयुक्ते नित्यवैधर्म्यात् कृतकत्वात् यथाऽनित्यत्वं तथानित्यसाधर्म्यात् प्रमेयत्वान्नित्यमेव किन्न स्यात् । न चेदेवमनित्योऽपि न स्यात्, अविशेषात् । तथा च साधर्म्यवैधर्म्यान्यतरोपसंहारे अपुरस्कृतनियमेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमेति लक्षणम् । एवं साधर्म्यवैधर्म्यान्यतरोपसंहारे अपुरस्कृतनियमेन धर्म्येण प्रत्यवस्थानं वैधर्म्यसमा । यथा 'शब्दोऽनित्यः कृतकत्वात् घटवत्' इति प्रयुक्ते, यथाऽनित्यसाधर्म्यादनित्यः तथाऽ[4]नित्यवैधर्म्यात् श्रावणत्वान्नित्य एव किन्नस्यात् अनित्यवैधर्म्याविशेषात् । एवम् वैधर्म्येण स्थापनायां वैधर्म्येण प्रत्यवस्थानमूहनीयम् । एते च जाती प्रमाणान्तरेणापि सत्प्रतिपक्षदेशनया प्रवर्तेते । तद्यथा । 'शुक्लोऽयं शंखत्वात् इतरशंखवत्' इति प्रयुक्ते, 'नायं शुक्लः प्रत्यक्षतः पीतस्यैवोपलब्धेः, न चेत् प्रत्यक्षम् बाधकम् तदा अनुमानमपि न साधकम् अविशेषात् । एवं 'नरास्थि शुचि प्राण्यङ्गत्वात्' इति प्रयुक्ते प्रत्यवतिष्ठते—यद्यनुमानाच्छुचि तदाऽऽगमादशुच्येव किन्न स्यात्, अविशेषात् । एवम् 'इयं व्यक्तिर्न गवयपदवाच्या व्यक्तित्वात् गोव्यक्तिवत्' इति प्रयुक्ते प्रत्यवतिष्ठते—'यद्यनुमानान्न गवयपदवाच्यता तदोपमनाद्गवयपदवाच्यतैव किन्न स्यात्, अविशेषात् । समबलत्वाभिधानात् सर्वत्र सत्प्रतिपक्षत्वमेवारोप्यम् । तदनयोर्जात्योः सर्वजातिसाधारणम् दुष्टत्वंमूलम् व्याघातः । असाधारणन्तु

१ स्वासाधकप्रयोगरूपिणः । २ ऽसम्बद्धमुत्तरं । ३ साधर्म्यसमा । ४ नित्यसाधर्म्यात् श्रावणत्वात् नित्य एव किन्न स्यात् । अनित्यवैधर्म्यान्नचेत् नित्यस्तदा नित्यसाधर्म्यादनित्योऽपि न स्यात् अविशेषात् ।

युक्ताङ्गहीनत्वम् युक्तस्याङ्गस्य व्याप्तेर्हानात्। अयुक्ताङ्गाधिक्यन्तु साधर्म्यवैधर्म्ययोरयुक्तयोरेवाङ्गत्वोपगमात् ॥ साध्यसाधनान्यतरसहचारमात्रेण पक्षेऽविद्यमानधर्मासञ्जनमुत्कर्षसमः। पक्षेऽसतो धर्मस्य पक्षवृत्तिधर्मसहचरितस्य सहचारमात्रपुरस्कारेण पक्षे आपादनं वा। एवञ्च प्रवर्तते—यदि कृतकत्वादनित्यसाधर्म्यादनित्यः शब्दस्तदा तत एव रूपवत्त्वसाधर्म्याद्रूपवानपि स्यात्। न चेद्रूपवत्त्वं तदाऽनित्यत्वमपि न स्यादविशेषात्। एवं क्षित्यादि सकर्तृकम् कार्यत्वादिति प्रयुक्ते, कार्यत्वं शरीरकर्तृकत्वसहचरितमिति; क्षितावपि शरीरी कर्ता स्यात्; न चेच्छरीरी कर्ता तदा कर्ताऽपि न सिद्ध्येदविशेषात्। एवं यथा कृतकत्वादनित्यः तथा कृतकत्वादेव क्रियावानपि शब्दः किन्न स्यात्। घटो वा कृतको न श्रौत्र एवं शब्दोऽप्यश्रौत्रः स्यात्। तथाच विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुरिति, सदसद्विषयत्वाद्विधेयम्। असदुक्तिकर्त्वेह न सम्भवति। उत्कर्षेण प्रत्यवस्थानस्यासदुत्तरनियमात्। दृष्टान्ते घटादौ रूपादिनाऽऽपाद्येन कृतकत्वस्य हेतोः सहोपलम्भ एवास्योत्थानबीजम्। हेतुर्दूष्यः, प्रतिकूलतर्कप्रतिघातो विशेषविरोधोवाऽऽरोप्यः। वादिनि मध्यस्थे वा भ्रान्तिः फलम्। व्याघातापादनेन व्याप्यपुरस्कारेण युक्ताङ्गहान्या वा जातिरियमुद्धर्तव्या। सम्बन्धमात्रपुरस्कृतव्यापकस्य धर्मस्य व्यावृत्त्या साध्यदृष्टान्तयोः सिषाधयिषितसाधनाभिमतधर्माभिमतान्यतराभावप्रसञ्जनमपकर्षसमा। सहचरितमात्रधर्मव्यावृत्तिनिबन्धनया सहचरितयत्किंचिद्धर्मव्यावृत्त्या वाऽनिष्टप्रसञ्जनमपकर्षसमेत्यन्ये। एक धर्मनिवृत्त्या साध्यसिषाधयिषितहेत्वोरन्यतरस्यापकर्षणमपकर्षसमेत्याचार्याः। सा चैवम्प्रवर्तते—शब्दोऽनित्यः कृतकत्वात् इत्युक्ते घटः कृतको नामूर्त इति शब्दोऽपि नामूर्तः स्यात्। एवं दृष्टान्तेऽप्यपकर्षो यथा—शब्दः कृतको नीरूपः इति घटोऽपि नीरूपः स्यात्। एवं कृतकेऽपि शब्दे यथा रूपवत्त्वन्नास्ति तथा कृतकेऽपिघटेऽनित्यत्वम्मा भूत्, तथा साध्यविकलो दृष्टान्तः। एवं शब्दोऽनित्यः कृतकत्वात् इत्युक्ते, शब्दः कृतकोऽपि नीरूपो दृष्टः, न च घटस्तथा, तत्साधनविकलो दृष्टान्तः॥ एवमीश्वरानुमाने—कर्तृत्वव्यापकशरीरव्यावृत्त्या कर्तृत्वव्यावृत्त्यापादनम्, तदस्याव्यापकानुपलब्धिर्द्वारा हेतुर्दूष्यः। तत्रापि साध्यापकर्षे पक्षे बाधः साधनापकर्षे स्वरूपासिद्धिः। एवं दृष्टान्ते साध्यसाधनापकर्षे दृष्टान्त एव दूष्यः स्वव्याघातकत्वात्। व्याप्त्यपुरस्काराच्चेयमुद्धर्तव्या। दृष्टान्तवृत्तिसाध्यानुकूलधर्मवत्तया गमकत्वमित्यभिमानेन दृष्टान्तान्तरव्यापनीयत्वापादानं वर्ण्यसमा यत्किञ्चिद्धर्मसाम्येन सपक्षत्वापादनंवा। सा चैवम्प्रवर्तते—साध्यसिद्ध्यौपयिकसमस्तविशेषणवद्धेतुमत्तया घटो दृष्टान्तः स्यात्, नत्वन्यथा सिद्ध्यसिद्ध्यौपयिकानि हेतुविशेषणानि, असिद्धार्थत्वं संशयसमानविषयत्वंप्रवृत्तसाध्यज्ञापनशक्तित्वम्, व्याप्तिग्राहकमानविरहः स्वरूपविशेषश्चेति पञ्चतयी। यदि घटोऽप्यसिद्धार्थहेतुमान् तदा साध्यवत्तया व्यापनीयः

---

१ सामान्य। २ विद्य। ३ कपसमः। ४सतो।

स्यात्। नहि साध्यविकलो दृष्टान्तो नाम। अथ न तथाऽपि पक्षविवक्षितहेतुमत्तया ख्यापनीयः स्यान्नहि साधनविकलो दृष्टान्तः, वर्णत्वं ख्यापनीयम् सपक्षे पक्षत्वासञ्जनमिति यावत्। एवं संशयसमानविषयत्वादिचतुष्टयेऽप्युदाहार्यम्। दृष्टान्तो दूष्यः, तद्भ्रान्तिः फलम्॥ किञ्चिद्धर्मेण पक्षस्य सपक्षत्वापादनमवर्ण्यसमा। दृष्टान्तमात्रवृत्तिसिद्ध्यनुगुणधर्मयोगायोगान्यतरेण साध्यस्य ख्यापनीयत्वप्रतिपादनं वा। सा चैवम्प्रवर्तते—शब्दोऽनित्यः कृतकत्वात् इति प्रयुक्ते, यादृशो हेतुर्दृष्टान्ते तादृश एव पक्षे वक्तव्यः। तथा दृष्टान्तोऽनुवर्ण्यते, नानित्यत्वलक्षणसाध्यवत्तया इदानीं ख्याप्यते। तथा शब्दोऽपि न वर्ण्यः स्यान्न पक्षत्वेन निर्देश्यः स्यादिति यावत्। दृष्टान्ते च हेतोः सिद्धार्थत्वमसन्दिग्धविषयत्वम् अप्रवृत्तसाध्यख्यापनशक्तित्वं साध्यासाधकप्रमाणान्तरवत्ता स्वरूपविशेषश्चेति पञ्च विशेषणानि। एतादृशपञ्चविशेषणसम्पन्नहेतुमान् यदि शब्दः तदा कथम्पक्षत्वेन वर्ण्यते। एवमपि चेत् पक्षत्वेन वर्णनीयः तदा तादृशो हेतुस्तत्र नास्तीति स्वरूपासिद्धिः। एवमाश्रयासिद्धिव्याप्यत्वासिद्धी दर्शनीये। तदाभासा चेयम् हेतुर्दूष्यः स्वव्याघातत्वादुद्धरणीयः॥ साध्यसम्बन्धिदृष्टान्तसम्बन्धिधर्मव्यभिचारबलेन हेतोर्व्यभिचारापादनम् विकल्पसमा। किञ्चिद्धर्मव्यभिचारमूलकप्रकृतसाध्यव्यभिचारापादनं वा। तत्र हेतोर्धर्मान्तरम्प्रति धर्मान्तरस्य[1] साध्यधर्मम्प्रति वा व्यभिचारदर्शनमस्या मूलम्। एवञ्च[2] प्रवर्तते—शब्दोऽनित्यः कृतकत्वात् इति प्रयुक्ते। कृतकं किञ्चिद्रूपवत् किञ्चिन्नीरूपम्, तथा कृतकमपि किञ्चिन्नित्यं किञ्चिदनित्यं स्यात्। द्वितीयाऽत्रैव प्रयोगे यथा—प्रमेयत्वे समानेऽपि किञ्चिन्नित्यं किञ्चिदनित्यम् तथा काचित्कत्वे समानेऽपि किञ्चिन्नित्यं किञ्चिदनित्यमिति व्यभिचारः। तृतीया—पूर्ववत्प्रयोगे यथा द्रव्यत्वेसमानेऽपि किञ्चिदुष्णं किञ्चिदनुष्णम्, तथा कृतकत्वे समानेऽपि किञ्चिन्नित्यं किञ्चिदनित्यम् भवेदिति व्यभिचारः। एवं धर्मान्तरस्य हेतुम्प्रति, साध्यधर्मस्य साध्यधर्मान्तरम्प्रति पक्षे दृष्टान्ते वा व्यभिचारदर्शनादस्याःप्रपञ्च ऊहनीयः। अत्र च हेतुर्दूष्यः व्यभिचार आरोप्यस्तद्भ्रान्तिः फलम्, स्वव्याघातत्वरहितमुद्धारप्रकारः॥ सिद्धान्तानान्तप्रयोगे[3] साध्यत्वापादनं साध्यसमा। एतत्प्रमासाध्ये चैतत्प्रमाणाङ्गत्वमित्यभिमानेन तदनुरूपदूषणोद्भावनं वा। सा चैवम्प्रवर्तते—पक्षे[4] हेतुदृष्टान्तधर्माणां तत्स्थापनानुमानान्तर्भूतानामपि यदि नैतत्प्रयोगसाध्यता तदा तेषां सिषाधयिषितसाध्यकत्वमपि न स्यात् अविशेषात्। अथ सिषाधयिषितसाधकत्वमभिमतम् तर्हि पक्षादिसाधकत्वमभ्युपगम्यताम्, तुल्ययोगक्षेमत्वात्। विपक्षादीनामानान्तरसिद्धत्वलिङ्गस्याप्रयोजकत्वप्रसङ्गात्। तथा च स्थापनाप्रयोगे पक्षादिसिद्धिस्तत्सिद्धौ स्थापनाप्रयोग इत्यन्योन्याश्रयः। पक्षासिद्धावाश्रयासिद्धिः हेत्वसिद्धिः, हेत्वसिद्धौ स्वरूपासिद्धिः, व्याप्त्यसिद्धौ व्याप्यत्वासिद्धिः,

१ साध्यधर्मान्तरं। २ व्याप्यव्यभि। ३ सिद्धानां। ४ न च पक्षा।

दृष्टान्तासिद्धो च व्याप्यत्वासिद्धिरेवेत्यादिकमूह्यम् । तदेवारोप्यम् , तदाभासाचेयम् । स्वव्याघातकत्वमुद्धारप्रकारः ॥ आत्माश्रयान्योन्याश्रयचक्रकादिसकलदेशनाभासेयमिति केचित् । कारकज्ञापकहेतुभेदेन व्याप्तिसमा द्विविधा । एकमप्राप्तिसमाऽपि युगपद्ग्राहिनो चैते जाती परस्परापेक्षित्वात् । तत्र साध्यव्याप्ति[1]मात्रबलेन विशेषापादनात् साधकदोषाभिधानम् प्राप्तिसमा साध्याप्राप्तिबलेनातिप्रसङ्गात् साधनदोषाभिधानमप्राप्तिसमा । एवञ्च प्रवर्तते—शब्दोऽनित्यः कृतकत्वादिति प्रयुक्ते लिङ्गज्ञानस्य कार्यमनुमितिज्ञानम्; तच्च कार्येण नाप्राप्तम् जनकमतिप्रसङ्गात् । तेन प्राप्तं [2]वाच्यम्, सच्च प्राप्यते नासदिति कारणवदिति कार्यस्यापि सत्त्वाविशेषात् कार्यकारणभावः नहि सदेव जन्यते । एवन्तन्तवोऽपि पटम्प्राप्य जनयेयुरिति न कार्यकारणभावः । किञ्चातिप्रसङ्गभयेन कारणस्य कार्येण प्राप्तिर्वाच्या; तथा सति गङ्गा सागरम्प्राप्ता न सागरभिन्ना, तथा कारणमपि कार्यादभिन्नम् भवेत् । एवम्प्राप्तो घटः प्रतिबध्यते[3] भूतत्वेनाप्राप्त इति तत्र सत्प्रतिषेधानुपपत्तिरिति अनेकप्रकारिका व्याप्तिसमा । अप्राप्तिसमा चैवम्प्रवर्तते—कारणं ज्ञापकंवा न प्राप्तं वाच्यम् अविशेषात्, कार्यकारणभावज्ञाप्यज्ञापकभावभङ्गप्रसङ्गात् । तथा चाप्राप्यजनकत्वम् ज्ञापकत्वम्[4] वाच्यम्; तच्च न सम्भवत्यतिप्रसङ्गात् । नह्यप्राप्तोऽग्निर्दहति प्रदीपो वा ज्ञापयतीति उभयोरपि हेतुर्दूष्यः । प्रतिकूलतर्कपराघातदेशनाभासे [5]चेत् स उत्तरं स्वव्याघातकत्वमेव । अनवस्थाभासप्रसङ्गः समाप्तिसमा । सा चैवम्प्रवर्तते—यत् कारकं यच्च ज्ञापकम् तदुभयमपि कारकज्ञापकाधीनमेवन्तत्कारकमपि तत्कारकाधीनम् तज्ज्ञापकन्तज्ज्ञापकाधीनम्; एवं दृष्टान्तेऽपि दृष्टान्तो वाच्यः; दृष्टान्तस्य चेन्न दृष्टान्तापेक्षा, तदा दार्ष्टान्तिकेऽपि न दृष्टान्तापेक्षा तज्ज्ञानेऽपि[6] तज्ज्ञानमित्यसिद्धन्न साधकम् । सिद्धिस्तत्कालीनसाधकाधीनैवेत्यभिमानो जातिवादिनः । कृतिज्ञार्थान्वयिनि चेयं जातिः । अस्यामेव जातौ खाण्डनिकानां निर्बन्धः । तथाहि घटसत्तां व्यवहरता प्रामाणिकेन तत्प्रमाणसद्भावो वाच्यः । तेन विना तत्सत्त्वे वैपरीत्यमेव किन्न स्यात् । ततश्च प्रमाणसत्ताऽपि न प्रमाणं विनाऽपिस्वीकार्या, [7]सर्वप्रमाणनिवृत्ते वस्तुसत्तानिवृत्तिनियतत्वादित्यादि स्वव्याघातकत्वमुत्तरम् । अत्र दृष्टान्तप्रदर्शनमात्रेणापुरस्कृतहेत्वङ्गमात्रस्य प्रत्यवस्थानम्प्रतिदृष्टान्तसमा । सा चैवम्प्रवर्तते-शब्दोऽनित्यः कृतकत्वादिति प्रयुक्ते घटदृष्टान्तेन चेदनित्यत्वम् तदाऽऽकाशदृष्टान्तबलेन नित्यत्वमेव किन्नस्यात् । हेतुरप्रधानं दृष्टान्तमात्रं सिद्ध्यौपयिकमित्यभिमानो जातिवादिनः । समबलत्वाभिप्रायेणा[8]भिधाने सत्प्रतिपक्षदेशनाभासा, अधिकबलत्वाभिप्रायेणाभिधाने बाधदेशनाभासा[9] चेयं

१ Not in B । २ 'कार्यकारणभावाभावः' । ३ 'विध्येत' । ४ Not in B । ५ 'वेम' इति द्वितीयपुस्तके पाठः । 'भासे चैतदुत्तरं' इति समीचीनः प्रतिभाति । ६ 'न' । ७ 'सर्वप्रमाणनिवृत्ते-स्तत्सत्तानिवृत्तिं' । ८ 'समबलत्वाभिमानेन' । ९ 'स्व' ।

हेतुर्दूष्यः । स्वव्याघातकत्वं स्फुटम् । असदवस्थायां तदवृत्तित्वेन[1] तदङ्गवैकल्योद्भावनमनुत्पत्तिसमा । सा च धर्मिसाध्यहेतुदृष्टान्ततत्सञ्ज्ञानानुत्पत्तिविकल्पेन पञ्चधा प्रवर्तते । तत्राद्यायाः प्रवृत्तिस्वरूपं यथा । शब्दोऽनित्यः उत्पत्तिधर्मकत्वात् इत्युक्ते शब्दस्य धर्मिणोऽनुत्पत्तिदशायां उत्पत्तिधर्मकत्वस्य हेतोराश्रयभागासिद्धेः, हेतुः उत्पन्नानुत्पन्नसाधारण्येन शब्दस्य पक्षीकरणात् इत्यभिमानो जातिवादिनः । द्वितीया यथा—इदं गुरु पतनवत्त्वात्—इत्युक्ते पतनोत्पत्तेः पूर्वमपतनधर्मिणः पार्थिवत्वव्याघात इति व्यभिचारदेशना । पतस्य कथमपतनं धर्म इति व्याघातपुरस्सरं स्वरूपासिद्धत्वम् ॥ तृतीया यथा—इदं गन्धवत् पृथिवीत्वात्[2]—इत्युक्ते प्रथमक्षणे गन्धाभावात् पार्थिवत्वव्याघात इति व्यभिचारदेशना ॥ चतुर्थी यथा—आत्मा द्रव्यं गुणवत्त्वात्—इत्युक्ते प्रथमक्षणे निर्गुणो घटो न द्रव्यं इति व्याघातमुखेन साध्यवैकल्याभिधानम् । पञ्चमी यथा—वायुर्द्रव्यं स्पर्शवत्त्वात्—इत्युक्ते, अज्ञातस्य वायोर्द्रव्यत्वम् विवक्षितम् न च तत्रायं हेतुरुपपद्यते, तच्च भागासिद्धिः । एवम्पञ्चानां ध्वंसावस्थायामापाद्यम्[3] ।

केचित्तु विशेषान्तरविशिष्टविशेषान्तराभावसञ्जनमुखेन प्रत्यवस्थानमुत्पत्तिसमेत्याहुः । तद्यथा-पर्वतो वह्निमान् धूमवत्त्वात्—इति प्रयुक्ते पर्वतत्वविशिष्टे धर्मिणि धूमवत्त्वमसिद्धम् विशेषणांशे तदवृत्ते रित्यादि । अपरे तु—उत्पद्यमानप्राक्काले तत्सम्बन्धाभावात् कारणत्वाभिमतस्याकारणत्वापादनमनुत्पत्तिसमेत्याहुः । तद्यथा—नहि कारणमात्रात् घटः किन्तु घटकारणात्, तथा चानुत्पन्नो घटो न स्वकारणविशेषणमिति विशिष्टकारणाभावात् घटानुत्पत्तिरिति[4] ।

संशयसामग्र्येकदेशमात्रात् संशयापादनम् संशयसमा । सा चैवम्प्रवर्तते—शब्दोऽनित्यः कृतकत्वादित्युक्ते, यथा कृतकत्वं निर्णयकारणमस्तीति निर्णयः स्यात् तथा संशयकारणमप्यस्तीति संशयेनापि भवितव्यम् । सत्यपि वा संशयकारणे संशयानुत्पत्तौ निर्णयकारणे सत्यपि निर्णयो न स्यात् अविशेषात् । न च निर्णयकाभावे संशयः संशयकाभावे निर्णय इति अस्यापि वक्तुं सुकरत्वात्, इति तत्र संशयकारणमेव द्वारम्, हेतुर्दूष्यः । कृतिज्ञप्तिसाधारणी चेयम्, विशेषणासिद्धिरारोप्या संशयाभावं विना कृतकत्वस्य निर्णायकत्वादित्यभिमानात् ।

यत्किञ्चिद्धर्ममात्रेणबाधाभिधानम्[5] प्रकरणसमा प्रमोपयिकरूपवत्तयाऽभ्युपगतोत्कर्षेण बाधाऽभिधानमित्यन्ये[6] । अपुरस्कृताधिकबलेन बाधाभिधाने सेत्यपरे । सैवम्प्रवर्तते—शब्दोऽनित्यः कृतकत्वादिति प्रयुक्ते, श्रावणत्वान्नित्य एव शब्दः सिद्ध इति भावः । न चेत् श्रावणत्वं बाधकम् 'कृतकत्वमपि न साधकमविशेषात्; प्रत्यक्षादिभिरपि

---

१ 'तद्वृत्तित्वेन'। २ पार्थिवत्वात् । ३ एवम्पंचान्तं ध्वंसावस्थामापाद्यम् । ४ उत्पत्तेः । ५ मात्रेणाभिधानं । ६ बाभिधानम् ।

बाध उदाहर्तव्यः। यथाऽत्रैव प्रयोगे प्रत्यभिज्ञानान्नित्य एव शब्दः सिद्धः—इति चाधिकबलपुरस्कारेणोक्तिर्दुष्टा, उत्तरम् व्याघातकत्वम्॥

कालत्रयेऽपि साधनानुपपत्त्या हेतोरसाधनत्वापादनमहेतुसमा; हेतुत्वाभिमतस्य सम्बन्धमात्रेण हेतुत्वविरोधापादनमहेतुसमेत्यन्ये; कृतिज्ञप्तिसाधारणी चेयम्। एवम्प्रवर्तते—कार्यकारणयोर्ज्ञाप्यज्ञापकयोर्वा सहभावेऽविशेषादकारणत्वमज्ञापकत्वम्वा, पूर्वापरभावेऽपि साध्यसाधनोपहितरूपत्वात्, साध्यसाधनयोरेकतराभावेन कार्यकारणभावो ज्ञाप्यज्ञापकभावो वेति अन्योन्यपदस्यान्योन्यगर्भत्वात्। न च प्राप्त्यप्राप्तिसमसांकर्यम्, तत्र स्वरूपसतः सन्निकर्षविप्रकर्षचिन्ता इह तु कालतात्पर्यद्वारिके इयं शब्दद्वारिका, ते द्विविकल्पोपक्रमे इयं निर्विकल्पोपक्रमा, तत्र सहकारशक्तिर्दुष्या इह स्वरूपशक्तिः; ते विशेषणासिद्धिदेशनाभासे इयम्प्रतिकूलतर्कदेशनाभासा। उत्तरं स्वव्याघातकत्वम्।

अर्थापत्त्याभासात् प्रत्यवस्थानमर्थापत्तिसमा। सा चैवम्प्रवर्तते। शब्दोऽनित्यः कृतकत्वात् घटवदित्युक्ते अर्थादापाद्यते[1] नित्यसाधर्म्यान्नित्य इति प्रतिरोधः। अनुमानादनित्य इत्युक्ते अर्थादापन्नः प्रत्यक्षान्नित्य इति बाधः। कृतकत्वं साधकमित्युक्ते अर्थादापद्यते नान्यत् साधकमिति। इत्यादिक्रमेण सर्वदोषदेशनाभासेयम्। अनुक्ताक्षेपो द्वारम् हेतुर्दूष्यः। असिद्धबाधाद्यन्यतमदारोप्यम्[2]। स्वव्याघातकत्वमुत्तरम्।

यत्किञ्चिद्धर्मदर्शनाद्यत्रकचिदविशेषादापादनमविशेषसमा। सा चैवम्प्रवर्तते। यदि कृतकत्वलक्षण[3]धर्मोपपत्तेः शब्दघटयोरनित्यत्वलक्षणाविशेषो हेतुरतः सत्त्वलक्षणधर्मोपपत्तेस्त्रैलोक्याविशेषः; अन्यथा त्वदपेक्षितोऽप्यविशेषो न स्यात्। तथा च पक्षसाध्यहेतुदृष्टान्ताविशेषेणाश्रयासिद्धिः साध्याविशेषादयो दोषा यथायथमापाद्याः। एवम्प्रमेयत्वेनाविशेषे[4] त्रैलोक्यावैलक्षण्यम्। नवानां द्रव्यत्वेनाविशेषे रूपवत्त्वमूर्तत्वादिभिरविशेषापादनमिति बहुप्रकारिकेयमूहनीया[5]। नचोत्कर्षसमाप्रभेदः[6]। तत्र विशिष्य किञ्चिद्धर्मोत्कर्षात् इह तु सामान्यत इति विशेषात्। स्वव्याघातकत्वमुत्तरम्।

किञ्चिद्धर्मबलेन स्वपक्षसाधनोपपादनात्प्रत्यवस्थानमुपपत्तिसमा, परपक्षसाधनबलेन स्वपक्षसाधनोपपादनम् दूषणाभिधानंवा। सा चैवम्प्रवर्तते। शब्दोऽनित्यः कृतकत्वादित्युक्ते यद्यनित्यत्वपक्षे प्रमाणमस्तीत्यनित्यः तदा नित्यत्वपक्षेऽपि किञ्चित् प्रमाणम्भविष्यति मदुक्तत्वात् त्वत्पक्षमत्पक्षान्यतरत्वात् विप्रतिपत्तिविषयत्वाद्धेत्यादि

---

१ "पद्यते शब्दो न 'नित्यविशेषविधेः शेषनिषेधपरत्वात् तथा च साध्यविकलो दृष्टान्तः। अनित्यसाधर्म्यादनित्य इत्युक्तेऽर्थादापद्यते नित्यसाधर्म्यान्नित्य इति प्रतिरोधः'। २ न्यतमद्यदा। ३'लक्षणैकधर्मं'। ४ 'शेपात्'। ५ 'केत्यूहनीया'। ६ 'नवेत्युभयत्र पाठः। परन्तु न चेति पाठः समीचीनः प्रतिभाति।

बृहस्पतिमतानुशिष्टमन्यपदमप्यनुसन्धेयम्[१]। यदस्याः सामान्यतः स्वपक्षप्रमाणसम्भावना द्वारं, हेतुदूष्यः, बाधसत्प्रतिपक्षावारोप्यौ, तदाभासा चेयम्। आधुनिकास्त्वेनामाकृतिगणत्वेनोपदिशन्ति, अन्यथानुपलभ्यमानोपाधिशंकाग्रस्तत्वादित्यादीनां भिन्नजातित्वापत्तिः । विपक्षबाधकशून्यमहाविद्यानुमानानामप्यत्रैवान्तर्निवेशः[२]। तथा च त्रयोविंशतिजात्यन्यत्वमेवोपपत्तिसमत्वमिति । स्वव्याघातकत्वमुत्तरम् ।

प्रयोजकावधारणदूषणेन प्रत्यवस्थानमुपलब्धिसमा । अश्रूयमाणावधारणविकल्पमुखेन प्रत्यवस्थानं वाऽसौ । सा चैवम्प्रवर्तते । पर्वतो वह्निमान् धूमवत्वादिति प्रयुक्ते, किम्पर्वत एव वह्निमानथ पर्वतो वह्निमानेव ? नाद्यः, महानसादीनामपि तथात्वात् । न द्वितीयः, वह्निं विनाऽपि कदाचित्पर्वतोपलब्धेः । एवम् धूमत्वादित्युक्ते, धूमसम्बन्धः पर्वतेऽन्ययोगव्यवच्छेदेनानन्ययोगव्यवच्छेदेन वा ? नाद्यः, धूमादन्येषाम् वृक्षादीनां तत्रोपलब्धेः । न द्वितीयः, निर्धूमस्यापि कदाचित् पर्वतस्योपलब्धेः । एवन्तत्र तत्रावधारणमुखेन प्रत्यवस्थानन्द्रष्टव्यम् । 'साध्यनिर्देशः प्रतिज्ञा' इतिलक्षणप्रागेवास्या एव जातेरवतारणात् प्रतिज्ञैव साध्यनिर्देशः साध्यनिर्देशएव वा प्रतिज्ञा इत्यादि स्वव्याघातकत्वमुत्तरम् ।

आत्मनि तदतद्रूपताविकल्पनात् प्रत्यवस्थानमनुपलब्धिसमा । इयं च विषयिधर्मतदितरधर्मभेदात् द्विरूपा । विषयिधर्मोपलब्ध्यनुपलब्धी इच्छानिच्छे द्वेषाद्वेषौ कृत्यकृती शक्त्यशक्ती उत्पत्त्यनुत्पत्ती व्यवहृत्यव्यवहृती—इत्यादयः । भावाभावाभ्यामियं द्विमुखी । उपलक्षणानुगमाभ्यामियं द्विनाम्नी, अनुपलब्धिसमा विषयिधर्मसमा चेति । एवञ्च प्रवर्तते । भूतलं घटवत् तद्वत्तयोपलब्धेरित्युक्ते । उपलब्धिरुपलब्धिरूपेण स्वात्मनि वर्तते न वा ? आद्ये इयमप्युपलब्धा स्यात् विषयवत्; न तूपलब्धिरिति स्वरूपासिद्धिः । अन्त्ये स्वात्मनि स्वरूपेणावृत्तेः नासावुपलब्धिरिति । एवम् पर्वतो वह्निमान् धूमवत्त्वात् इत्युक्ते पर्वतः स्वात्मनि स्वरूपेण वर्तते न वा? आद्ये आत्माश्रयः, अन्त्ये नासौ पर्वतः; नहि स्वात्मन्यपर्वतः पर्वतो, विरोधात् । एवं साध्यहेतुदृष्टान्तेषु तदतद्विकल्पनात् प्रत्यवस्थानमूहनीयम् । तदस्याः स्वात्मनि तदतद्रूपत्वानुपपत्तिर्मूलम्, प्रयोगमात्रं दूष्यम्, प्रतिकूलतर्क आरोप्यः, स्वव्याघातकत्वमुत्तरम् ।

वाद्युक्तप्रयोजनसामान्यमात्रेण विपक्षाभिमतस्य साध्यवत्त्वप्रसज्जनमनित्यसमा । केवलान्वयिनि विपक्षाभावेऽपि विपक्षारोपादियम् प्रवर्तते । शब्दोऽनित्यः कृतकत्वात्घटवत् इत्युक्ते यदि घटसाधर्म्यात्[३] कृतकत्वादनित्यः तदा घटसाधर्म्यादेव प्रमेयत्वात् त्रैलोक्य-

---

१ 'शिष्टमिदमनुसन्धेयम्' । २ 'र्भावः' । ३ 'यद्यनित्य' ।

मनित्यं स्यात्। तथा यद्याकाशवैधर्म्यादनित्यः शब्दः त्रैलोक्यन्तर्हि नित्यं स्यात्। एवं यदि महानससाधर्म्यात् पर्वतोऽग्निमान् तदा तत्साधर्म्यात् प्रमेयत्वात् त्रैलोक्यमग्निमद्भवेत् इत्यादि अविशेषसमा त्वविशेषापादनरूपेयं साधर्म्य[1]मात्रापादनरूपेति ततो भेदः। एवं साधर्म्यसमा[2]भेदो ऽप्युक्तोदाहरणानुसारेणानुसन्धेयः। स्वव्याघातकत्वमुत्तरम्।

प्रकृतविवक्षितधर्मस्य यत्किञ्चिद्विरुद्धरूपविकल्पद्वारा धर्मिणि तद्वैशिष्ट्यखण्डनेन प्रत्यवस्थानं नित्यसमा। इयञ्च द्विनाम्नी–नित्यसमा उपरञ्जकसमा चेति, उपरञ्जकधर्मखण्डनद्वारकत्वात्। एवम्प्रवर्तते। शब्दोऽनित्यः कृतकत्वादिति प्रयुक्ते ऽनित्यधर्मयोगात्तावदनित्यःशब्दो भवेत्; तत्राप्यनित्यत्वमनित्यन्नित्यं वा? आद्ये ऽनित्यत्वलक्षणधर्मविनाशात् नित्यः शब्दः प्राप्तः। अन्त्ये धर्मस्य नित्यत्वे धर्मिणः शब्दस्यापि नित्यत्वम्भवेत्। नहि धर्मिनिरपेक्षा धर्मस्थितिरिति, इयन्नित्यभिन्नाभिन्नकार्याकार्याश्रिताश्रितसत्यासत्यसदसत्स्थिरास्थिरैकानेकानुवृत्ताननुवृत्तविशेषणाविशेषणसापेक्षानपेक्षक्रमाक्रमवाच्यावाच्यपरोक्षापरोक्षवर्तमानावर्तमानहेयाहेयसहितासहितविरुद्धाविरुद्धज्ञाताज्ञातेष्टानिष्टद्विष्टाद्विष्टकृताकृतशक्ताशक्तोत्पन्नानुत्पन्नव्यवहिताव्यवहिताद्युपरञ्जकधर्मेषु घटाघटसन्दिग्धासन्दिग्धादिषुच[3] विकल्पोपक्रमेण वर्तमानानेकप्रकारिका। स्वव्याघातकत्वमुत्तरम्।

वाद्युक्तदोषमाशङ्क्य तत्परिहाराय स्वोत्प्रे[4]क्षितप्रमाणदूषणेन वाद्युक्तसाधनासा[5]मर्थ्यप्रसञ्जनम् कार्यसमा। पक्षहेतुदृष्टान्तेषु यस्यकस्यचिदङ्गस्यसिद्धिमुद्भाव्य तत्साधकतया किञ्चित् स्वयमुत्प्रेक्ष्य तद् दूषयित्वा वाद्युक्तसाधनासाधकत्वोपवर्णनं कार्यसमेति पर्यवसितोऽर्थः। सा चैवम्प्रवर्तते। शब्दोऽनित्यः कार्यत्वात् इत्युक्ते शब्दे कार्यत्वमसिद्धम्। अतः तत्सिद्धये प्रयत्नानन्तरीयकत्वम् त्वया वाच्यम्। तदप्यसिद्धमेव। नहि प्रयत्नानन्तरं शब्दस्योत्पत्तिर्दृश्यते येन तदधीनकार्यत्वसिद्धिः स्यात्। एवम् पर्वतोऽग्निमान् धूमत्वादित्युक्ते, धूमवत्त्वमसिद्धम्; तत्सिद्धये चार्द्रेन्धनवत्त्वं वक्तव्यम्। न च पर्वते आर्द्रेन्धनवत्ताऽप्युपलभ्यते इति। एवम्पर्वतो वह्निमानित्युक्ते पर्वत एव नास्तीत्याश्रयासिद्धिः। पर्वतसिद्ध्यर्थं त्वया प्रत्यक्षमुपदर्शनीयम्। तदपि प्रायेण भ्रान्तमिति पर्वतासिद्धिरेव दोषः। कीर्ति[6]नुसयेऽप्यनुगमात् कार्यसामान्येनापि साधने सम्बन्धिभेदोक्तिर्दोषः कार्यसमो मतः इत्याह। तेन तन्मते शब्दोऽनित्यः कृतकत्वात् घटवत् इति प्रयुक्ते, कृतकत्वं घटादौ रूपादिसहचरितं शब्दे तु तदन्यादृशमिति न तस्य गमकत्वमिति। एतस्याश्चोप[7]कर्षसमप्रपञ्चत्वमेव।

---

१ 'साध्यधर्म'। २ 'साधर्म्यादि'। ३ 'सन्दिग्धविकल्पोपक्रमेण'। ४ 'पे'। ५ 'साम्य'। ६ 'कीर्ति'। एतत् कस्यचित् प्राचीनग्रन्थस्य नामेति प्रतिभाति। किन्तु पाठ उभयत्रापि भ्रष्ट एवोपलभ्यते। ७ एत स्याप्रकर्षसमाप्रपञ्चत्वमेव।

शिवादित्यमिश्रास्तु 'शब्दोऽनित्यः प्रयत्नानन्तरदर्शनात्' इति प्रयुक्ते, प्रयत्नानन्तरदर्शनाद्यथाऽनित्यत्वं साध्यते तथाऽभिव्यक्तिरपि किन्न साध्यते इति कार्यसममाहुः॥

बहूनां सम्मतः पन्था जातीनामेष दर्शितः।
एकदेशिमतेनासां प्रपञ्चो नोपवर्णितः॥

## अथ निग्रहस्थानानि।

अखण्डिताहङ्कारिणं[1] पराहङ्कारशातनमिह पराजयः। स एव निग्रहः। स एतेषु प्रतिज्ञाहान्यादिषु वसतीति निग्रहस्य पराजयस्य स्थानमुन्नायकमिति यावत्। अत एव कथाबाह्यानाममीषां न निग्रहस्थानत्वम्। कथान्तर्भूतानामप्यपस्मारोन्मादद्दशापन्नानां झटिति संवरणेन तिरोहितावसराणां[2] पुरःस्फूर्तिकानधिकृतोद्भावितानां च न निग्रहस्थानत्वम्, असुज्ञत्वलिङ्गत्वयोगात्। केचित्तु कथकोद्देश्यकथाफलप्रयोजककथाहेतुयथार्थज्ञानाभावलिङ्गत्वम् निग्रहस्थानत्वमित्यप्रतिपत्तिर्विप्रतिपत्तिश्च निग्रहस्थानमिति सूत्रानुसारादाहुः॥ तानि च प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासा निग्रहस्थानानि।

तत्र स्वीकृतोक्तपरित्यागः प्रतिज्ञाहानिः। सञ्चारणावसरे कथायां विशेषोक्तस्वीकृतत्यागः प्रतिज्ञाहानिरित्येके। प्रतिज्ञापदमुपलक्षणम्। तेन पक्षसाध्यहेतुदृष्टान्ततद्विशेषणत्यागादियंपञ्चधा। यथा—अनित्ये वाङ्मनसे अत्र भागासिद्ध्यभिधानानन्तरं; अस्तु तर्हि वागेवानित्येति पक्षहानिः। शब्दोऽनित्य ऐन्द्रियकत्वात् इत्युक्ते सामान्येनानैकान्तिकत्वेन प्रत्युक्ते, अस्तु तर्हि नित्य एव शब्दः, इति साध्यहानिः। अत्रैव प्रयोगे तथैव दूषिते—अस्तु तर्हि कृतकत्वं हेतुरिति हेतुहानिः। अनित्यः शब्दः प्रत्यक्षगुणत्वाद् घटवदित्युक्ते साधनवैकल्येन प्रत्युक्ते तदीयं रूपमस्तूदाहरणमिति दृष्टान्तहानिः। एवं लक्षणानुसारेण हान्यंतरमूहनीयम्॥ इयं च तृतीयादिकक्षापातिनी चतुर्थादिकक्षोद्भाव्या जल्पवितण्डायाः कथापर्यवसाने हेतुः वादासम्भवनीया सम्भवेपेक्षणीयासत्वान्न पर्यनुयोज्योपेक्षणसहचारिणी, उद्भाविताच विजयहेतुः। उक्तन्निर्वाहयेन्नतु परित्यजेदिति रहस्यम्॥

परोक्तदूषणोद्धाराय पूर्वानुक्तविशेषणवतः पूर्वोक्तसाधनीयांशस्य प्रतिपादनम्प्रतिज्ञान्तरम्। तदेतत्पक्षतद्विशेषणसाध्यतद्विशेषणोक्तिभेदाच्चतुर्विधम्। क्रमेणोदाहरणम्। वर्णा अनित्याः श्रावणत्वादित्युक्ते; ध्वनिभिरनैकान्तिक इति[3] प्रत्युक्ते सन्तु ध्वनय एव वर्णा अनित्या

---

१ ङ्कारेण। २ 'तिरोहितावसुराणां' इत्येकस्मिन् 'तिरोहितवसुराणाम्' इति चान्यस्मिन् पुस्तके पाठः। ३ 'कमिति'।

इति । तथा च पक्षे व्यभिचारो न भवतीति पूर्वपक्षिणो[1] हृदयम् । शब्दोऽनित्यः कार्यत्वादित्युक्ते, ध्वनिभागे सिद्धसाधनमिति च प्रत्युक्ते; वर्णात्मकः शब्दोऽनित्यः इति पक्षविशेषणात् सिद्धसाधनपरिहारः । अग्निमदिदं सुरभिमलिनधूमवत्त्वादित्यसमर्थविशेषणतया प्रत्युक्ते कृष्णागरुप्रभववह्निमदिदमिति साध्यान्तरोक्तिं, विवादाध्यासितं बुद्धिमत्पूर्वकमित्यत्र सिद्धसाधनोद्भावनान्तरं उपादानाद्यभिज्ञपूर्वकमिति साध्यविशेषणत्वोक्तौ सिद्धसाधनपरिहारः । दूषणान्तरपरिहारार्थमपीदम्प्रवर्तते । अवान्तरभेदानन्त्यसमस्य प्रतिज्ञाहानिवदस्यापि परिकरशुद्धिः तत्र त्याग इह पूरणमिति विशेषः । कक्षान्तरेण विशेषयेदिति रहस्यम् ॥

एकत्र[2] वाक्ये तदंशयोरवान्तरवाक्ययोः पदयोर्वा मिथोव्याघातः प्रतिज्ञाविरोधः । प्रतिज्ञापदस्योक्तमात्रोपलक्षकत्वात् । एकवक्तृकर्तृ[3]कवाक्यविषयत्वात् नापसिद्धान्तसङ्करः । विपरीतव्याप्त्युपदर्शनाभावान्न विरुद्धहेत्वाभाससङ्करः । स एष पञ्चविधः । साध्यधर्मनिषेधात् यथा नास्त्यात्मेति । धर्मनिषेधाद्वा, यथा ईश्वरो न कर्ता । धर्मविधेर्वा, यथाऽतीतमस्तीति । धर्मिविधेर्वा, यथा परमाणवः सावयवा इति । स्वरूपतो वा, यथा कारणव्यापारात् प्रागपि सत् कार्यमित्यादिबहुप्रकारोऽयम् । परमतप्रतिषेधदुर्बले यद्वा दृष्टान्ताभासतरलतया वा प्रमादाद्वा सभाक्षोभाद्वाऽस्य सम्भवः । प्रथमकक्षापाती उत्तरकक्षायुद्भाव्यो वादेऽपि, 'अन्यथा' तत्त्वप्रतिपत्तिव्याघातान्मिथो व्याहतम् न वदेदिति रहस्यम् ।

उक्तापलापः प्रतिज्ञासंन्यासः । परदूषणानन्तरमस्फुरणदशायां कश्चिदुक्तम् त्यजेदेव कश्चिद्विशेषयेदेव कश्चिदपलपेदेव—त्रिधाप्रत्यवस्थानसम्भवः । तेन कतमो[4]ऽपि वस्तुत्यागे नवनिर्वृ[5]त्तमिच्छेत् स्वीयतया विशे[6]षणतया विशेषणेन वा अपलापेन वेति नालौकिकोऽयम्प्रकारः । नन्वपलापवत् कपोलवादित्वाद्यपि व्युत्पाद्यम् भवेदिति चेत्, न, चौरवदेव तेनाप्रतीकारात् । सोऽयञ्चतुः प्रकारः । कएवमाहेति वा, परपक्षोऽयम्मयोक्त इति वा, स्वोक्ते त्वयैवोक्तमिति वा, परोक्तम्मयोक्तमिति वा । वादासम्भवोऽयम्; अनु[7]यादेति तद्बलम् । दूषणोपारूढम् नापलपेदिति रहस्यम् ॥

अविशिष्टसाधनभागम[8]नभिधाय पुनर्विशेषवत्तद्वचनम् हेत्वन्तरम् । तदिदं हेतुविशेषणादुदाहरणांशविशेषणादुपनयविशेषणात् दूषणविशेषणादिति चतुर्विधम् । तत्र प्रथमम्—शब्दोऽनित्यः प्रत्यक्षत्वादित्युक्ते सामान्येऽनैकान्तिकत्वादिति प्रत्युक्ते, सामान्यवत्त्वे सति प्रत्यक्षत्वादित्यस्तु हेतुरिति । द्वितीयम्—यद्यत् प्रत्यक्षम् तदनित्यमित्युक्ते सामान्यवत्त्वे

---

१ 'स्थापनावादिना' । २ 'एकवाक्य' । ३ 'कर्तृक' । ४ 'वस्तोऽपि' । ५ 'निवृत्ति' ६ 'विशेषयेदपलपेदेवेति' । ७ 'वादासम्भवो वादोज्ज्वलदूषणया रूढं नापलपेदिति' । ८ 'मपहाय' ।

सतीति पूरणात् । तृतीयम्—अनित्यत्वव्याप्यप्रत्यक्षत्वजातिवानयम् इत्युक्त्वा[1] जातिमत्प्रत्यक्षत्ववांश्चायं इति विशेषणात् । चतुर्थन्तु हेतौ प्रयुक्ते, इदमसाधकम् सपक्षासत्त्वादित्युत्तरतया च परिहृते, विपक्षवृत्तित्वे सतीति विशेषणात् । अन्यत् प्रतिज्ञान्तरवदेव ॥

प्रकृतं साधनं दूषणं वोपक्रम्य तदनङ्गाभिधानमर्थान्तरम् । तच्च स्वमतपरमतोभयसमयानुमतभेदाच्चतुर्विधम् । यथा शब्दोऽनित्यः कार्यत्वात् गुणश्च स चाकाशस्य; तदेव चोपाधिवशात् श्रोत्रमित्यादि नैयायिकस्य स्वमते प्रकृतानुपयुक्तभाषणादर्थान्तरम् । अत्रैव परमते द्रव्यं शब्दः संयोगग्राह्योऽभिव्यक्तिधर्मेत्यादि तथैवोपक्रम्यानुमानगम्यस्यानित्यत्वमनुमानञ्च प्रमाणमित्यादि, तथैवोपक्रम्य कृतकत्वादिति हेतुः। सहि हिनोतेः प्रयोग इत्यादि झटित्यसमञ्जसबुद्ध्या समाधानमप्रतिसन्धानस्य विरोधितयाऽस्योक्तिसम्भवः । उच्यमानग्राह्यञ्चैतत् सकलकक्षापाति । क्वचिन्न्यूनादिसङ्करेऽप्येतदेवोद्भाव्यमुद्भटदोषत्वात् । तत्र च न्यूनाद्यपेक्षायामपि न पर्यनुयोज्योपेक्षणम् निग्रहः । प्रकृतोपयुक्तमेवाभिधातव्यमिति रहस्यम् ॥

अवाचकपदप्रयोगो निरर्थकम् । उक्तिसम्भवस्त्वस्य क्वचित् प्रमादात्, लिङ्गवचनविभक्तिविपर्यासादौ कृत्तद्धिताख्यातविपर्यासादौ वाचकत्वाभिमानात् । क्वचिदभ्यासात्, यथा संस्कृतमुपक्रम्यापभ्रंशादौ । विकल्पिते विशेषोक्तिर्वा अर्थपरताशब्दपरताप्रकारव्युदासेन स्वरूपपरतायां, यथा वाङ्मात्रमेतदिति[2], लिङ्गविपर्यासः शब्दमनित्यमिति । वचनविपर्यासः अनित्यः शब्दा इति । विभक्तिविपर्यासः, शब्दाः नित्य इत्यादि स्वयमूहनीयम्[3] । समानसमयैरेव पदैर्वक्तव्यमिति रहस्यम् ॥

परिषत्प्रतिवादिभ्यान्निरभिहितमपि दुर्बोधमविज्ञातार्थम् । तच्च क्वचित्स्वशास्त्रासाधारणपरिभाषया । यथा 'पञ्चस्कन्धाः' 'द्वादशायतनानि' 'चतुर्धार्थसमत्वमित्यादि' बाह्यानाम्; समित्[4]कपालपुरोडाशादि मीमांसकानाम्; शमितयोगमनपेक्षितरूढ़िकम्; यथा कश्यपतनयाधृतिहेतुरूपम्, त्रिनयनतनययानसमाननामधेयवान् तत्केतुमत्त्वाद्रसनीयवदिति । समासप्रकाराद्यभावादापादितसन्देहम् । यथा श्वेतो धावतीत्यादि परिषदनवबोधस्यावतारः । अनवधानमन्दप्रसिद्धविपरीतबोधशङ्काव्युदासार्थमनभिधानत्रयापेक्षा । निरूढ़ैरुभयप्रसिद्धार्थैः पदैर्वक्तव्यमिति रहस्यम् ॥

यत्काले[5] यत्रैकवाक्यताप्रयोजकरूपाभावस्तदकाले तदपार्थकम् । तत् द्विधा—पदापार्थकम् वाक्यापार्थकञ्च । तदपि प्रत्येकं त्रिधा—अनाकांक्षिततयाऽयोग्यतयाऽनासत्त्या च । आद्यं मुख्यम्, सदैवान्वयबोधाभावात् कुण्डमजाजिनम् पललपिण्डम् गौरश्व इत्यादि । द्वितीयम्, अग्निरनुष्ण इत्यादि । तृतीयम्, गच्छति पयसाऽश्वेन मुक्तानगरं[6]

१ 'सपक्षसत्वा' । २ 'वाङ्मनसे' । ३ 'स्वरूपमूहनीयम्' । ४ 'सस्व' 'समुपक' । ५ 'तत्काले' । ६ 'तद्धानगवागवं' ।

चैत्र इत्यादि । वाक्यापार्थकम् दश दाड़िमानि, षडपूपा इत्याद्यनाकाङ्क्षातः । अग्निरयं वृद्धस्तेन सिञ्चेत्ययोग्यतातः । देवदत्तेन गिरिर्भुक्तम् अग्निमानित्याद्यनासत्तितः । क्वचित्तदन्वितशेषानन्वयम्, यथा वायूक्ते सम्भविनः प्रकारान् विकल्प्य दूषयित्वाऽनन्वितमेवेदं वाक्यमिति सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियग्राह्यत्वादित्यपार्थकमेव । सामान्यवत्त्वे सतीत्यस्य पञ्चम्यन्तहेत्वनन्वयात् इति । केचित्तत्र सामान्यवत्वे सतीति सप्तमीतः सामान्यवत्त्वस्यास्मदादिबहिरिन्द्रियग्राह्यत्वसामानाधिकरण्यस्योपस्थितौ[1] विशिष्टहेतुत्वान्वयात् । एवंविधानां प्रामाणिकप्रयोगाणां दर्शनात् सप्तम्यास्तथैव व्युत्पत्तेस्तथैवानुभवाच्च । व्योमकमलं सुरभि पद्मत्वात् इत्यपार्थकमेवाश्रयासिद्धिसङ्कीर्णमिति ॥

कथाप्रयोजकीभूतसमयविषयाभिधानक्रमव्युत्क्रमावप्राप्तकालम्[2] । आकांक्षितक्रमविपर्यासो वा, उद्देश्यप्रतीतिक्रमविपर्यासो वा । तदिदं चतुर्विधम् । पादपदानां सावयवावयवांशविपर्यासभेदात् । तत्र स्थापनाकण्टकोद्धाराभ्यामेकः पादः । तद्विपर्यासेन कथापादांशविपर्यासः । प्रतिवादिनश्च परपक्षदूषणस्वपक्षस्थापनाभ्यां द्वौ पादौ यदि स्वपक्षस्थापनां कृत्वा परपक्षोपालम्भं करोति, तदा कथापादविपर्यासः । कृतकत्वात् शब्दोऽनित्य इति अवयवविपर्यासः । अनित्यः शब्द इत्यवयवांशविपर्यासः ॥

हीनमन्यतमेनावयवेन न्यूनम् । तच्च स्वसिद्धान्तनिर्णीतप्रयोगावयवपरिमाणन्यूनाभिधानम् । पञ्चावयवं नैयायिकस्या, त्र्यवयवम् मीमांसकस्य, द्व्यवयवम् सौगतस्य न्यायवाक्यम् । तदमी स्वाभ्युपेतप्रयोगन्यूनमभिदधाना निगृह्यन्ते । एवम्मात्रावर्णानुस्वारहीनमपि न्यूनमेव । कथापादहीनम् पादांशहीनम् न्यायावयवहीनम् अवयवावयवहीनञ्च । न चैवमपसिद्धान्तः स्यात् सिद्धान्तातिक्रमादिति वाच्यम्; नहि स्वीकृत्यान्यथाकरणमपसिद्धान्तः, किन्तु स्वीकृत्यास्वीकारः; अन्यथा सर्वनिग्रहस्थानानां तथात्वापत्तिः । क्वचित् सांकर्येऽप्यदोषः । यथा च वस्तु यथा वा सिद्धान्तः तथा वाच्यमिति नियमो वा दृष्टं चेति तत्रैवास्य पातो, न च जल्पवितण्डयोरपि । तत्रापसिद्धान्त एवास्यान्तःपातः । न चैवं तथासिद्धमेव कथामित्यपेक्षायां सिद्धान्तव्युत्पादने वादान्तरसंक्रान्तिः[3] स्यात् । अन्यतरसिद्धहेत्वभिधाने यथा न तत्काल एव तत्साध्यता तथा प्रकृतेऽपीत्यदोषात् । स्वसिद्धान्तवक्तव्यत्वाभ्युपगतकथाभागानभिधानं न्यूनमिति वा लक्षणम् ।

हेतूदाहरणादिकमधिकं यथासूत्रमेवाधिकम् इति प्राञ्चः । अपुनरुक्तकृतकर्तव्यताभिधानमधिकमिति लक्षणम् । तेन हेत्वधिकोदाहरणसंग्रहः ॥ अन्वितत्वेनापार्थकादुपयुक्तत्वेनार्थान्तरादस्या भेदः । तत्र हेत्वधिकं यथा, पर्वतोऽग्निमान् धूमवत्त्वादालोकवत्त्वाच्च महानसवदिति दृष्टान्ताधिकम्, तथैव प्रयुक्ते महानसवत् गोष्ठवच्चेति । एवन्दूषणाधि-

---

१ 'स्यौपपत्तौ' । २ 'प्रयोजकक्रम' । ३ 'वादोष्वातरसं' ॥

कम्। यदि साधनान्तरदृष्टान्तान्तरादौ परिषज्जिज्ञासा; यदि वा यथास्फूर्ति वक्तव्यमिति समयबन्धस्तदा नायन्दोषः। तदिदन्द्वेधा, सामान्यतो विशेषतश्चेति । तत्र स्वशब्देन विशेषतः आदिशब्देन सामान्यतो यथा धूमवत्त्वादि हेत्वधिकम् महानसादिवदित्युदाहरणाधिकम्। अदूष्यांशानुभाषणमप्यधिकमित्यन्ये[1] । सौगतस्य प्रतिज्ञाहेतुनिगमान्यतमावयवप्रयोगात्, मीमांसकस्य निगमनोपनयनान्यतमप्रयोगात्, नैयायिकस्य हेत्वाभासासाधकतानुमानप्रयोगे, उदाहरणादिप्रयोगादाधिक्यं द्रष्टव्यम् ।

शब्दार्थयोः पुनर्वचनम् पुनरुक्तमन्यत्रानुवादात् । प्रतिपादितस्य तत्प्रतिपादनम्[2] पुनरुक्तमिति लक्षणम् । तच्च शब्दपुनरुक्तमर्थपुनरुक्तमर्थापन्नपुनरुक्तभेदात् त्रिविधम्। तत्र शब्दपुनरुक्तं यथा—शब्दोऽनित्योऽनित्यः। अर्थपुनरुक्तम्—शब्दोऽनित्यो निरोधधर्मकः। अर्थापन्नपुनरुक्तमनेकप्रकारम् । तद्यथा पूर्वपदाक्षिप्तोक्तिः, यथा अग्निनोष्णेन युक्तः पर्वतः। उत्तर[3]पदाक्षिप्तोक्तिः उष्णेनाग्निना युक्तः। एवम् वाक्येपि विध्याक्षिप्तनिषेधो यथा—बहिरस्ति चैत्र इत्युक्त्या गेहे नास्तीति निषेध आक्षिप्तः। पूर्वविध्युक्तिर्यथा जीवन् गृहे नास्तीत्युक्त्वा बहिरस्तीति।

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् । उचितार्थानुवादसहितदूषणाभिधानव्यतिरेकोऽननुभाषणम् । असांकर्यमस्य वादिनोक्तस्य परिषदाऽवबुद्धस्य पुनर्वादिना परिषदा वाऽनूद्यस्तस्य योग्यस्वस्थेनावबोधमनाविष्कुर्वता कथामनविच्छिन्दता यत्र प्रत्युच्चारणम् न क्रियते तत्रैव द्रष्टव्यम्। अनुवादयोग्यकाले तद्विरोधी व्यापारो ऽननुभाषणमित्येके । स्वस्थेनानुवादकाले ऽननुवादोऽननुभाषणमित्येके। तदेतत्पञ्चधा—तदित्यादिसर्वनाम्ना वा विपरीतानुवादेन[4] वा एकदेशानुवादेन वा केवलदूषणोक्त्या वा स्तम्भेन वा। यत्रानेकम्प्रकृतं तत्रैव सर्वनाम्नाऽनुवादो दूषणम्। बहूनाम्प्रकृतत्वेन विशिष्य दूष्यानुपस्थानात्। 'स्तम्भस्थलेऽज्ञानाप्रतिभयोरन्यतरोद्भावनमुचितम्' इति न वाच्यम्, अज्ञानाप्रतिभयोरनिश्चितत्वात्। अननुभाषणस्य च शब्दाभावरूपतया योग्यानुपलब्धिनिश्चितत्वात्। न स्तम्भएवाज्ञानप्रतिभयोरुन्नायकः, स्फुरदुत्तरस्यापि वचनकुण्ठतया सभाक्षोभेन वा ऽननुभाषणोपपत्तेः, निश्चितानिश्चितयोर्निश्चितस्यैवोद्भाव्यत्वात्, अनिश्चितोद्भावनस्यातिप्रसञ्जकत्वात्।

अविज्ञातञ्चाज्ञानं, कथायाम्प्रकृतविषये स्वाज्ञानाविष्करणमज्ञानम् । स्वीयविपर्ययाविष्करणमज्ञानमित्येके । सभ्येन वादिनाऽनूद्य उत्तरदानान्तरमबोधाविष्करणमज्ञानमित्येके। आविष्करणम् न जानामि किमनेनोक्तमित्यादि, भ्रान्तोऽहमस्मिन् विषये, विपरीतम्मे एतज्ज्ञानमित्यादि वा। अत एवाननुभाषणाद्भेदः।

---

१ 'भाषणेऽप्यधिकमिति केचित्' । २ 'तत्प्रतिनिदानाधिकप्रतिपादकं' । ३ 'अन्तर' । ४ 'अनुवादेन' ।

उत्तराप्रतिपत्तिरप्रतिभा तदुत्तरावसरे तद्विपरीतो व्यापारो ऽप्रतिभेति लक्षणम् । स[1]च व्यापारः स्वसूचके नृकेशसमाचरश्लोकः पाञ्चराजवार्तावतरणादिरूपालोकप्रसिद्ध एव । यद्वा ऽप्रतिपन्नापदेनो[2]न्नायकः कथकव्यापारो लक्ष्यते । तेन तदुन्नायकः कथकव्यापारो ऽप्रतिभेति लक्षणम् । अनुवादानन्तरमेव तदवसर इति नात्राननुभाषणम् नाप्यज्ञानम् तस्य तदा सन्दिग्धत्वात्, न विक्षेपः व्याजेन कथा[3]या अविच्छेदात् नार्थान्तरम् प्रसक्तानुप्रसक्तेरभावात् । अनुभाषणानन्तरमवहितायां परिषदि वादिनि चोत्तरं श्रोतुकामे प्रतिवादी उत्तरमददानः सर्वथाऽप्रतिभया निगृह्यते । अनधिकृतोद्भाविताऽपीयम् निग्रहाय अ[4]सत्स्थापनायां पर्यनुयोज्येपेक्षणसहचारिणीति प्राञ्चः । नव्यास्तु—सत्साधनेऽपि तया यत्र बहूनि साधनान्यभिहितानि इति समुपस्थितौ प्रवृत्तायां कथायां साधनानन्तरसम्भवेऽप्येकतरसाधनप्रयोगः । अस्यामुद्भावितायां पर्यनुयोज्योपेक्षणम्, अनुद्भावितायामपि निग्रहस्थानत्वात् यथायथं स्मितस्वेदादिना व्यञ्जितत्वात् कथाविरामे वचनान्तरातिरोहितत्वाच्च इत्याचार्यदेशीयाः । निग्रहस्थानानन्तरवदवश्योद्भाव्यत्वमित्येके । स्वीयसन्देहाविष्करणमप्रतिभेति मणिकण्ठः ।

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः । उभयानुमत्या प्रवर्तितायाङ्कथायां व्याजेन कथाविच्छेदो विक्षेप इतिलक्षणम् । आवश्यकप्राणिधर्मातिरिक्तव्यासङ्गेन वा कथाविच्छेदो विक्षेपः । अतथाजनयतस्तथाज्ञापको व्यापारो व्याजः । विक्षेपश्च विक्षेपणम् प्रकृतकालान्तरं नयनम् । तेन कथादेशादपसरतोऽपि विक्षेपो लभ्यते । तत्राभिधानाभावेऽपि तथा चे[5]ष्टाया एव व्याजत्वात् । तथाऽद्य मया न वक्तव्यम् किञ्चिन्मे करणीयमस्ति, श्वः परश्वो वा वदिष्यामि, अद्य मया रसालया भुक्तं प्रतिश्यायः कण्ठम् बाधते इत्यादि व्याजान्तरेणाशक्तिरुन्नीयते—इति लोकसिद्धोऽयमर्थःताम्बूलभक्षणोद्गिरणप्रस्रावाद्यावश्यकधर्मास्तु न व्याजाः; सर्वप्राणिसाधारणास्तेनशक्त्यसूचकत्वात् । कथोपक्रममारभ्य तदवसानपर्यन्तमस्यावसरः । अनूद्य दूषणानन्तरं सभ्यानां निष्ठुरत्वमात्मनो वा हृदयकम्पनमाकल्य कथादेशापसरतो विक्षेपस्य निग्रहस्थानानन्तरसांकर्यम् । अन्यत्र सांकर्येऽप्युपजीव्यत्वादशक्तिविशेषासूचकत्वात् । इति स्फुटप्रतीतिकत्वाचास्यैवोद्भाव्यता । अवश्योद्भाव्यञ्चैतत् ।

स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा । कथायां स्वाभ्युपगमस्य दुष्टत्वस्वीकारो वा मतानुज्ञा । स्वपक्षे दोषमनुद्धृत्य परस्य दोषापादनम्मतानुज्ञा इत्येके । नचात्राप्राप्तकालत्वम्, दूषणानन्तरं स्वपक्षदोषोद्धार इति समयं कृत्वा कथाप्रवृत्तौ तदभावात् ।

---

१ 'सच व्यापारः स्वसूचके नृकेशसमाचरणश्लोकः पाठराजवार्तावतरणा' (?) । २ 'यदि' । ३ 'कथाविच्छेदात्' । ४ 'असद्व्यापनायां' । ५ 'र' । ६ 'तथावस्थाया ।

यत्र[1] सन्दिग्धमुग्धावस्थायां सत्प्रतिपक्षइत्यनध्यवसायाद्वदति तत्रास्यान्यलङ्कारः । नहि तत्र हेत्वाभासो नाप्यप्रतिभादि । अनिष्टभ्रमेण इष्टापादनम् मतानुज्ञा इत्यन्ये । असङ्कीर्णता त्वेतन्मते यत्र प्रथमकक्षायां स्थापनानुकूलतयाऽनिष्टभ्रमेणेष्टमापादयति तत्रैव सा । अपरे तु—प्रसङ्गाभासमात्रं मतानुज्ञा । तेनात्माश्रयान्योन्याश्रयचक्रकानवस्थाभासानां शिथिलमूलविपर्ययापर्यवसितेष्टापादनमिथोविरुद्धानाञ्च मतानुज्ञात्वम् । न हि तेषामन्यत्रान्तर्भाव—इत्याहुः । दूषणबुद्ध्याऽसत्प्रसंगो मतानुज्ञेति मणिकण्ठः । उदाहरणम्—'भवान् चौरः पुरुषत्वात्' इत्युक्ते, उत्तरवाद्याह—भवाँश्चौरस्तत एव । अत्र हि परोक्तन्दोष मनुद्धृत्याभ्युपगम्य च परस्येदं प्रसञ्जयति; अनभ्युपगमे तु कथम्पुरुषत्वं हेतुम्प्रयुञ्जीत । अत्र मतानुज्ञाकल्पेषु कथञ्चित् पक्षमादाय उद्भावनमेतावतैव वादिनः कृतकृत्यत्वात् इति ।

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । निग्रहाणामुद्भावनावसरेऽपि तदनुद्भावनम् पर्यनुयोज्योपेक्षणम् इति लक्षणम् । विजातीयनिग्रहस्थानप्राप्ताविदमिष्यते, पर्यनुयोज्योपेक्षणस्यादोषत्वात् । नहि पर्यनुयोज्योपेक्षणं वाद्युद्भाव्यम्, येन तदुपेक्षमाणा निगृह्यन्ते । स्वसम्पाद्यमसम्पादयतो[2] निग्रहः । पर्यनुयोज्योपेक्षणस्य वादिनोद्भाव्यत्वे स्वकौपीनविवरणापत्तेः । उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणमिति मणिकण्ठः । वादे वादिनैव तदुद्भाव्यम्, अन्यत्र मध्यस्थेन । ननु सदुत्तरम् वदन् प्रौढिवादितया यदि क्षुद्रस्फुरिमुपेक्षितवान् किमेतावतैव निग्रहमर्हति । अर्हत्येव, प्रतिज्ञासंन्यासादीनामवश्योद्भाव्यत्वात् । अन्यथा पूर्वोपात्तं दुष्टं त्यजन् निह्नुवानो वा यद्यपेक्ष्यते[3] कथमपि कथाविच्छेदो न स्यात् । अनेकनिग्रहपाते यद्येकतममुद्भाव्यान्यदुपेक्षेत तदा पर्यनुयोज्योपेक्षणन्न भवति, एकोद्भावनस्यैवोचितत्वात् । अन्यथा दूषणाधिक्येनायमेव निगृह्येत, मृतमारणस्यानुचितत्वात् । यत्र समस्तदोषोद्भावननियमः तत्र किञ्चिदनुद्भावने भवत्येव पर्यनुयोज्योपेक्षणम् । प्राप्तन्निग्रहन्नोपेक्षेतेति रहस्यम् ॥

अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः, अतन्निग्रहस्थाने निग्रहस्थानोद्भावनं वा, अतन्निग्रहस्थानोद्भावनावसरे तन्निग्रहोद्भावनं वा, अनुयोगानर्हानुयोगो वा, भ्रमान्निग्रहस्थानोद्भावनंवा—निरनुयोज्यानुयोग इति लक्षणम् । तदेतत्प्रदानं द्वेधा । अनिग्रहस्थाने[4] एव निग्रहोद्भावनात्, अन्यनिग्रहोद्भावनाद्वा[5] । ततश्चतुर्विधः, छलं जातिः आभासो वा अनवसरग्रहणञ्च । छलजाती उक्ते; ते समस्ते एव निरनुयोज्यानुयोगप्रभेदौ । आभासस्तत्र भ्रमेण हेत्वाभासानामनुयोगः यथाऽनैकान्तिके विरुद्धत्वम्, विरोधे व्यभिचारः बाधेऽसिद्धत्वम्, असिद्धौ बाधितत्वम्, अहेत्वाभासे वा हेत्वाभासो-

१ 'तत्र सम्पूर्णमुक्त्वा दुष्टोऽमत्पक्ष इत्यनध्यवसायात्' । २ 'असम्पाद्यमसम्पादयतो' । ३ 'यद्यप्यपेक्ष्यते' । ४ 'अनिग्रहे' । ५ 'निग्रहस्थानो' ।

पन्यासः । निग्रहे तु अनेककल्पस्फुरणेऽनिष्टत्यागेन प्रतिज्ञाहानिः । प्रकरणापन्नविशेषणाविष्करणे प्रतिज्ञान्तरम् । तत्र प्रयोगाप्रयोगमात्रेण विरोधः । आरोपिताभ्युपगमेन संन्यासः । स्वयमगृहीतस्य विशेषणस्य पुनरुत्कीर्तनं हेत्वन्तरम् । वाचक एवावाचकत्वाभिमानेन निरर्थकम् । स्वावबोधेन किञ्चित् परिषदवबोधेनाविज्ञातार्थत्वम् । अन्वितेऽपि स्वयमनन्वितत्वेन ज्ञानेऽपार्थकम् । अनवधानाद्विपर्ययेणाप्राप्तकालम् । व्यासङ्गादश्रवणे न्यूनम् । अन्यहेत्वादियोजनेनाधिकम् । श्रुतिसाध्यमात्रेण पुनरुक्तम् । अप्रसिद्धपदानुवादेऽननुभाषणम् । जानन्नपि स्वावष्टम्भमात्रेणाज्ञानम् । उत्तरं वदतोऽपि स्वेदादिदर्शनेनाप्रतिभा । आवश्यकप्राणिधर्मेण विक्षेपः । सिद्धसाधने मतानुज्ञा । स्वदोषोद्भावनेन पर्यनुयोज्योपेक्षणम् । अच्छलजात्योश्छलजात्युद्भावनबलेन निरनुयोज्यानुयोगः । अभ्यस्तशास्त्रातिक्रमेणापसिद्धान्तः । एवमतज्जातौ तज्जा तितरच्छले तच्छलम्—इत्याद्यूह्यम् । अनवसरग्रहणन्तु यथोक्तावसरमप्राप्यातिक्रम्य वा ग्रहणम् । यथा त्यक्ष्यसि चेत् प्रतिज्ञाहानिः, विशेषयिष्यसि चेत् हेत्वन्तरम् । अयन्तावदनेन दोषेण दुष्ट एव हेतुरदुष्टो वा, तथाऽपि पूर्वस्तावत् त्वया त्यक्त इति हेत्वाहानिरित्याद्युक्तग्राह्ये ऽनवसरः । एवमुच्यमानग्राह्ये ऽप्यूह्यम् । आपन्नमेव निग्रहमुद्भावयेदिति रहस्यम् ।

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः । परिगृहीतसिद्धान्तविरुद्धाभ्युपगमोपसिद्धान्त इति लक्षणार्थः । सिद्धान्तपरिग्रहश्च तत्तच्छास्त्राध्ययनाद्वा, कथाकाले 'नैयायिकोऽहं' 'वैशेषिकोऽहम्' इति समयबन्धविशेषाद्वा, 'शब्दानित्यत्वनित्यत्वयोः किन्त्वया साधनीयम्' इति नैयायिकमीमांसकप्रतिनियतपक्षपरिग्रहाद्वा, प्रौढ़िवादाच्छब्दस्तावत् द्रव्यमेवास्तु तथैव साधनीयमित्यवष्टम्भाद्वा, त्वम् मीमांसामाश्रित्य वदेत्यनुविधेयनियोगाद्वा विरोधनिग्रहस्थानाद्यसांकर्यमस्याकरे द्रष्टव्यम् ॥

हेत्वाभासाश्च यथोक्ताः । हेत्वाभासानां स्वरूपमुपदर्शितम् । च शब्देन साध्यविकलसाधनविकलोभयविकलाश्रयविकलानुपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितान्वयविपरीतोपदर्शितव्यतिरेकलक्षणदृष्टान्ताभासा आत्माश्रयान्योन्याश्रयचक्रकानवस्था विनिगमकोत्सर्गकल्पनालाघवकल्पनागौरवानौचित्यार्थान्तराप्रयोजकप्रतिकूलतर्कपराघातादीनां यथायथं हेत्वाभासान्तर्गतानामपि स्वस्वशब्देनैवोद्भाव्यत्वम् समुच्चिनोति । एते दोषाःस्वशब्देनैवोद्भाव्याः न तु हेत्वाभासतयेति चकारार्थ इत्युदयनाचार्याः ॥ एते स्वतन्त्रा एव दोषाश्चशब्द समुच्चिताः निग्रहस्थानत्वेन बोद्धव्या इत्यन्ये ।

तत्रात्माश्रयाद्युक्तम् अविनिगमादयस्तर्कप्रतिरूपका इत्यन्ये । तर्का एवेत्यपरे । युक्तञ्चैतत् , अन्यत्रान्तर्भावयितुमशक्यत्वात् । लाघवादीनां तत्र तर्कत्वेन व्यपदे-

१ Not in B. । २ 'अन्योक्त' । ३ 'तथा' । ४ 'तत्र तत्र तर्कत्वेन व्यपदेश इति चेन्न विकल्पेनान्वयगमनायोग्ये तदेकदेशनियमनिर्धारणसामर्थ्यमविनिगमः' ।

शाब्दैति । तत्र विकल्पेनान्वयगमनायोग्यतदेकान्वयनियमनिर्धारणाशक्यत्वमविनिगमः । सत्प्रतिपक्षहेत्वोरिव निर्धारयितुमशक्यान्वययोः परस्परप्रति क्षेप एव पर्यवसानात् । स चायम् प्रमाणं विशेषयितुमुद्यतस्य दोषः । नहि धूमेन वह्नौ प्रमीयमाणे तार्णत्वपार्णत्वविनिगमना युक्ता । तथा च यद्ययं तार्ण एव पार्ण एव वा कथं न स्यादनेन प्रकारेणोपसंह्रियमाणोऽविनिगमकस्तर्कच्छायामवगाहते, इति तार्णत्वपार्णत्वयोरन्यन्निर्णायकप्रमाणं नास्तीत्यनेन प्रकारेण प्रमाणाभावमात्रपर्यवसन्न एवायन्दोषः इति मतभेदनिगर्भः ॥ अविनिगमकस्य दोषत्वे व्यक्तविनिगमोनुमानमात्रे दोषः स्यादिति चेत्, न, वह्निमत्त्वमात्र एव तत्रानुमानप्रामाण्याभ्युपगमात् । बाहुल्यदृष्टमपेक्षा बाहुल्यदृष्टतया दुर्बलस्यानुयोगार्हतौत्सर्गः । स चायम्प्रमाणसहकारी तर्कविशेषएव । यथौत्सर्गिकं ज्ञानस्य प्रामाण्यमिति; यथा वा औत्सर्गिकेनार्थपरत्वम् शब्दानां क्वचिदित्यादिभिः पदैरपोद्यते । एनमेव तर्कमालम्ब्याहुः ।

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते । [ श्लोकवार्तिक २ । ५३ ] ॥

स्वभावोपाधिकत्वमुत्सर्ग इत्यपरे । संशयस्यैका बलवती कोटिरुत्सर्ग इत्यप्याहुः । सुगमासुगमस्य दुर्बलत्वं गौरवम् । एतच्च प्रमाणपरिपन्थिदृष्टमजातीयापेक्षयाऽदृष्टजातीयस्याशक्यप्रतीतिकत्वात् 'दृष्टे स्वल्पादौ सम्भवति । तद्विपरीतापरिच्छेदो गौरवमित्यन्ये । इदं गुर्वी इति ज्ञानं तद्विषयो वा गौरवम्, यथा क्षित्यादिकं सकर्तृकम् कार्यत्वादित्यादौ प्रतिकार्यम् नानाकर्तृस्वीकारे । ननु 'नानाकर्त्तॄणां दुर्बलत्वं नानाकर्तृपरिच्छेदो वा नानाकर्तृज्ञानं वा नानाकर्तार एव वा गौरवमिति मतभेदेनोक्तम् । तत्र च सर्वत्र नानाकर्तृसिद्धनान्तरीयकत्वमिति विपरीतापत्तिः' इति चेत्, न, आरोपरूपनानाकर्तृकज्ञाननिबन्धनप्रवृत्तिकत्वाद् गौरवस्य गौरव्यतिरेक एव लाघवम् । तच्च प्रमाणानुकूलमिदं लघ्विति ज्ञानात्मकं नेदं गुर्विति ज्ञानात्मकं वा एतज्ज्ञानविषये वा लाघवमधिकापरिच्छेदकत्वमुद्भाव्यम् । प्रमाणानां गौरवमल्पपरिच्छेदकं वा भाव्यं कृतिलाघवमिति वस्तुगतिः । प्रामाणिकव्यवहार्यत्वमसमाधेयजातीयत्वमनौचित्यम् ॥ एतद्भेदा एव प्रश्नवैजात्यादयः । अवस्तुनि विधिनिषेधयोः किमिच्छसीत्यादि वैजात्यम्; घटपटादिकञ्च प्रकृतिवैजात्यम्, सन्ध्याव न्दनादिपरित्यागो व्यवहारवैजात्यम् कौपीनादिपरित्यागश्चेति । एतदेवाश्रित्य मूकवावदूकयो१ः कतरः प्रामाणिक इति । यथा लौकिकानां भाषणम्—पिशाचानुरूपो बलिरिति । तथा मग्नश्चेन्नागलोकं पश्यति; नह्यप्रतीते देवदत्तादौ किं गौरः कृष्णो वेति वैजात्यम् विना प्रश्नं इत्यादिशास्त्रे तत्र तत्राभिधानमिति ॥

---

१. 'मानाश्वन्नाग' ।

# अथ स्थापनाप्रकारः ।

तत्रेश्वरे—क्षितिः सकर्तृका कार्यत्वात्, यद्यत्कार्यन्तत्तत् सकर्तृकं यथा घटः, सकर्तृकत्वव्याप्यकार्यत्ववतीयम्, तस्मात् सकर्तृका । यद्वा 'अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्याकृतिसमवेतानि जन्यानि तत्तददृष्टप्रागभावव्याप्यप्रागभावप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि समवेतत्वे सति प्रागभावप्रतियोगित्वात्, यद्यत् समवेतत्वे सति प्रागभावप्रतियोगि तत्तत् अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम्, यथा घटः । अदृष्टप्रागभावव्याप्यप्रागभावप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वव्याप्यसमवेतत्वसमानाधिकरण[1]प्रागभावप्रतियोगिवन्ति चैतानि; तस्माददृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि' । वादिमध्यस्थयोः सुज्ञत्वे एतादृशी स्थापना कर्तव्या । तयोरसुज्ञत्वे तु पूर्वैव । अन्यथाऽविज्ञातार्थनिग्रहापत्तिः ।

यद्वा आत्मत्वं नित्यविशेषगुणवद्वृत्तिविशेषगुणसमानाधिकरणम्, गन्धवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववत् । यद्वा आत्मत्वं दुःखत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावसमानाधिकरणम् जातित्वात् घटवत् । संसारिमात्रसमवेतजातौ मानाभावान्न व्यभिचारः ।

यद्वा आकाशं दुःखानधिकरणाविशेषगुणाधिकरणविभुभिन्नम् मेयत्वात् घटवत् । एवं दुःखानधिकरण[2]द्वेषानधिकरणभावनानधिकरण इत्यादि विशेषगुणपूरणादियमेव प्रतिज्ञा बहुप्रकारा ।

यद्वा सुखत्वम् ज्ञानसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं विषयिभिन्नविशेषगुणवृत्ति[3]गुणत्वव्याप्यजातित्वात् रूपत्ववत् । एवं दुःखसुखधर्माधर्मत्वभावनात्वप्रक्षेपेण पक्षकरणेबहुप्रकारा स्थापना बोध्या । तादृशास्फुरणे यत्किंचित् प्रयोक्तव्यमग्रे यदि प्रकारः स्यादेव । अत्राप्युदाहरणायुक्तरीत्योह्यम् ।

प्रामाण्ये तज्ज्ञानप्रामाण्यम् न तज्ज्ञानविषयः, तज्ज्ञानधर्मिकसंशयकोटित्वात्, यद्यत् तज्ज्ञानधर्मिकसंशयकोटित्ववत् न तत्तज्ज्ञानविषयः यथाऽप्रामाण्यम् तज्ज्ञानविषयत्वविरहव्याप्यतज्ज्ञानधर्मिकसंशयकोटित्ववच्चैतत् । तस्मान्न तज्ज्ञानविषयः। यद्वा घटोऽयमिति ज्ञानप्रामाण्यम् न स्वाश्रयग्राह्यम् स्वाश्रयोत्पत्त्यव्यवहितोत्तरक्षणावधिकतृतीयक्षणवर्तिसंशयविषयत्वात् । यद्यत् स्वाश्रयोत्पत्त्यव्यवहितोत्तरक्षणावधिकतृतीयक्षणवर्तिसंशयविषयो, न तत्स्वाश्रयग्राह्यम् यथा

---

१ 'कार्य' । २ 'सुखा' । ३ 'गुणत्वावान्तर' ।

प्रामाण्यम् । तथा चैतत् । तस्मात्तथा । यद्वा प्रामाण्यम् न यावज्ज्ञानग्राहकसामग्रीग्राह्यम् प्रमेयत्वात् वस्तुत्वात् धर्मत्वात् वा, घटवत् । यद्वा तज्ज्ञानप्रामाण्यम् न तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यम्, तज्ज्ञाननिरूपणाधीननिरूपणकत्वात् । यदेवन्तदेवम्, यथाऽप्रामाण्यम् । तथा चैतत् । तस्मात्तथा । यद्वा ज्ञानन्न स्वमात्रग्राहकम् प्रमेयत्वात्, यदेवन्तदेवम् यथाऽप्रामाण्यम् । यथा वा घटः तथाचैतत् । तस्मात्तथा । उत्पत्तिपरताऽस्तु अनित्यप्रमात्वम्, अनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम् अनित्यज्ञानत्वभिन्नकार्यमात्रवृत्तिधर्मत्वात्, यो योऽनित्य[1]ज्ञानाभिन्नकार्यवृत्तिधर्मः सोऽनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकः, यथाऽप्रमात्वम् । यद्वाऽनित्यप्रमात्वं कार्यतावच्छेदकम्, कार्यमात्रवृत्तिधर्मत्वात् यदेवन्तदेवम् यथा [2]प्रमात्वम् तथा चैतत् । तस्मात्तथा ॥ अन्धकारे तमस्त्वम् तेजोऽभाववृत्ति बाह्यालोकनिरपेक्षचक्षुर्वेद्यवृत्तिधर्मत्वात्, यो यो बाह्यालोक निरपेक्षचक्षुर्वेद्यवृत्तिधर्मः स तेजोऽभाववृत्तिः, यथा तेजोध्वंसत्वम् । तेजो बाह्यालोकसापेक्षचक्षुर्वेद्यमेवेति न तेजस्त्वादौ व्यभिचारः ।

सुवर्णे—सुवर्णं तैजसम् अत्यन्तानलसंयोगानुच्छिद्यमानद्रवत्वाधिकरणत्वात् । यन्न तैजसम् तन्नात्यन्तानलसंयोगानुच्छिद्यमानद्रवत्वाधिकरणम्, यथा घटः । तैजसत्वाभावव्यापकात्यन्तानलसंयोगानुच्छिद्यमानानित्यद्रवत्वाधिकरणञ्चैतत् । तस्मात्तथा ॥

वायौ—वायुर्नप्रत्यक्षः नीरूपबहिर्द्रव्यत्वात्, यन्नीरूपबहिर्द्रव्यम् तन्न प्रत्यक्षम्, यथाऽऽकाशम्, तथा चायन्तस्मान्न प्रत्यक्षः । यद्वा वायुर्नयोगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यसामान्यलक्षणाप्रत्यासत्त्यजन्यजन्यसाक्षात्कारविषयः नीरूपबहिर्द्रव्यत्वात्, यदेवन्तदेवम्, यथाऽऽकाशः । निर्विकल्पके—जागराद्यविशिष्टज्ञानम् अव्यवहितविशेषणज्ञानजन्यम् जन्यविशिष्टज्ञानत्वात्; यद्यज्जन्यविशिष्टज्ञानम् तदव्यवहितविशेषणज्ञानजन्यम्, यथा दण्डीति ज्ञानम्, अव्यवहितविशेषणज्ञानजन्यत्वव्याप्याविशिष्टज्ञानत्वाधिकरणञ्चैतत्, तस्मादव्यवहितविशेषणज्ञानजन्यम् । हेतौ विशिष्टपदम् निर्विकल्पकत्वासिद्धिपर्यन्तम् व्यभिचारावारकमपि येनविशेषणेन विनेत्याद्यनुसारेण सार्थकम् बोद्धव्यम् । अन्यथाऽनवस्थया व्याप्तिग्रहो न स्यात् ॥

महाप्रलये—कार्यद्रव्यत्वम् कार्यद्रव्यानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति कार्यद्रव्यवृत्तिधर्मत्वात्, यद्यत् कार्यद्रव्यवृत्तिधर्मं तत्तत् कार्यद्रव्यानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति, यथा शब्दत्वं, तथा चैतत्; तस्मात् तथा । यद्वा कार्यद्रव्यत्वम्, मूर्तभिन्नस्वाधिकरणानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तिधर्मत्वात्, यदे-

---

१ 'ज्ञानत्वकार्य' । २ 'घटत्वम् ।

न्तदेवम्, यथा शब्दत्वम्, तथा चायन्तस्मात् तथा । मूर्तभिन्नेति कपालादिना आरम्भकेणान्यथासिद्धिवारणाय । समवायिकारणातिरिक्तवृत्तिध्वंसप्रतियोगिवृत्तीत्यपि पक्षविशेषणमाकाशादावर्थान्तरवारणाय ददासि, तत्तु मन्दप्रयोजनम्, ध्वंसतत्त्वाभाव्यस्य सर्वसिद्धत्वात् । अनुमितौ झटिति तथा कालं विषयीकरोत्विति तु कथञ्चित्प्रयोजनं स्यात् ।

आवान्तरप्रलये—कार्यद्रव्यत्वम् कार्यद्रव्यप्रागभावसमानकालीनमूर्तभिन्नकार्यद्रव्यानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्यवृत्तित्वात्, यद्यत् कार्यवृत्ति तत्तत् कार्यद्रव्यप्रागभावसमानकालीनकार्यद्रव्यानधिकरणवृत्तिध्वंसप्रति योगिवृत्ति, यथा शब्दत्वम्, तथा चायन्तस्मात्तथा । चरमबुद्धित्वादिना न व्यभिचारः, चरमत्वस्य प्रलयसिद्धिं विनाऽप्रतीतेः । तत्सिद्धौ तु व्यभिचारः किं करिष्यति ? महाप्रलये सिद्धे चरमत्वसिद्धौ व्यभिचारो भविष्यतीति यदि तदा प्रागभावसमानकालीनकार्यवृत्तिधर्मत्वादिति हेतुःकर्तव्यः ।

मुक्तौ—चैत्रदुःखत्वं चैत्रदुःखप्रागभावानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति कार्यवृत्तिधर्मत्वात्, यो यः कार्यवृत्तिधर्मः स चैत्रदुःखप्रागभावानधिकरणध्वंसप्रतियोगिवृत्तिः यथा शब्दत्वम् ।

सर्वमुक्तौ—दुःखत्वम् स्वाधिकरणानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तिधर्मत्वात्, पतत्प्रदीपत्ववत् इति । अत्र मीमांसकानां लीलावतीकृतश्च सर्वमुक्तरनभ्युपगमः । समानाधिकरणदुःखप्रागभावासहवृत्तिर्दुःखध्वंसो मोक्षः । दुःखात्यन्ताभाव एव लोष्ठादिनिःसम्बन्धो[१] मोक्षः । सम्बन्धस्तस्य समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंस एव । तदत्यन्तविमोक्षोऽपवर्गइतिसूत्रस्य दुःखेनात्यन्तविमुक्तश्चरतीति श्रुतेश्चानुरोधा[२]दित्येके । दुःखप्रागभाव एव दुःखासहवृत्तिर्मुक्तिरिति प्राभाकरमते वल्लभाचार्यानुमतिः । प्रागभावस्यासाध्यत्वात् प्रायश्चित्तेन दुःखप्रागभावपरिपालनवत् । नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमतम् । जीवात्मनः परमात्मनिलयो मुक्तिरिति त्रिदण्डिनः । ब्रह्माद्वैतसाक्षात्कार इति शङ्कराचार्याः । कर्मणाम्भोगैकनाश्यत्वे विवादाध्यासितानि कर्माणि भोगैकनाश्यानि अचीर्णप्रायश्चित्ताकीर्तितकर्मत्वात्, यदेवन्तदेवम्, यथा सम्प्रतिपन्नं कर्म । प्रायश्चित्तपदेन कर्मनाशापारगमनस्याकृतप्रधानाङ्गापूर्वस्य चोपलक्षणम् इति न तयोर्व्यभिचारः । तदन्यत्वेन वा हेतुर्विशेषणीयः । नाभुक्तं क्षीयते कर्म इत्यादिस्मृतिस्तस्य तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते कैवल्येन श्रुतिश्चात्र मानम् । ज्ञानाग्निरित्यादिकार्यव्यूहेन भोगद्वारा कर्मनाशोपलक्षणम् । भस्मसात्पदस्य उभयथा लाक्षणिकत्वात् ।

---

१ 'लोष्ठादिनिष्ठ' । २ 'श्चार्थबोधा' ।

परलोके—अहं सुखदुःखोभयजनकमदीयदेहान्यदेहवान् शरीरित्वात्, यो यः शरीरी स सुखदुःखोभयजनकमदीयदेहान्यदेहवान्, यथा चैत्रः, सुखदुःखोभयजनकमदीयदेहान्य देहत्वव्याप्यशरीरत्ववांश्चाहम्, तस्मात्तथा ।

स्वर्गे—अहम् दुःखजनकमदीयदेहान्यदेहवान् शरीरित्वात्, चैत्रवत् ।

नरके—अहम् सुखजनकदेहान्यदेहवान् शरीरित्वात् चैत्रवत् ।

वृक्षादेस्सात्मकत्वे—वृक्षलतागुल्मादिकं सात्मकम् प्राणवत्त्वात्, यन्न सात्मकं तन्न प्राणवत्, यथा घटः, यथा वा मृतशरीरम् । प्राणवच्चैतत्, तस्मात् सात्मकम् । प्राणवत्त्वानुमाने—वृक्षादिकमाध्यात्मिकवायुवत् मूलनिषक्तानामपामन्तर्णयनवत्त्वात्; यन्नैवन्तन्नैवम् यथा घटः । स्वप्नजागरभेषजप्रयोगभग्नक्षतप्ररोहानुकूलोपगमप्रतिकूलोपगमादिकं चात्र प्रत्येकं हेतु कर्तव्यम् । नर्मदातीरसम्भूता इत्याद्यागमश्चात्र प्रमाणम् । धारावहने—अयं चैत्रः एतदीयघटोऽयमिति ज्ञानभिन्नैतदन्यूनानतिरिक्तविषयैतत्समानकालीनज्ञानवान् अनीश्वरात्मत्वात्; योऽनीश्वरात्मा स तदीयघटोऽयमिति भिन्नैतदन्यूनानतिरिक्तविषयैतत्समानकालीनज्ञानवान् मैत्रवत् । अनादौ संसारे—कदाचित् चैत्रमैत्रयोः समानविषयकज्ञानवत्त्वसम्भवात् न दृष्टान्तासिद्धिः । अर्थापत्त्यनतिरेके—परेषामर्थापत्तित्वेनाभिमतम् प्रमाणमनुमानभिन्नम्, अनुमानाविलक्षणफलत्वात्, तदविलक्षणव्यापारवत्त्वाद्वा । यद्यदनुमानविलक्षणफलवत् तदनुमानाभिन्नम्, यथाऽन्वयव्यतिरेक्यविलक्षणव्यापारवत्केवलान्वय्यनुमानाभिन्नम्; तथा चैतत् तस्मात् तथा । शब्दस्य पृथक्त्वे—शब्दो नानुमानम्, तद्विजातीयफलवत्त्वात् विजातीयव्यापारवत्त्वाद्वा, यदेवन्तदेवम्, यथा प्रत्यक्षम् । तथा चायन्तस्मात्तथा । एवम् सम्भवैतिह्यचेष्टालिपिप्रभृतीनामन्तर्भावः । उपमानस्य च बहिर्भावे एवमेव प्रयोक्तव्यम् । चक्षुस्तैजसत्वे—चक्षुस्तैजसम् तेजोविशेषगुणेषु रूपमात्रग्राहकत्वात्, यद्यद् रूपमात्रतेजोविशेषगुणग्राहकं तत्तत्तैजसम्, यथा प्रभा । तेजस्त्वव्याप्यरूपमात्रतेजोविशेषगुणग्राहकञ्चैतत् । तस्मात्तथा । घ्राणपार्थिवत्वे—घ्राणम् पार्थिवम् गुणेषु गन्धस्यैव ग्राहकत्वात्, यदेवन्तदेवम् विततचम्पाकभागवत् । एवम् रसनाप्यत्वे प्रयोक्तव्यम् । एवं त्वगिन्द्रियम् वायवीयम्, गुणेषु स्पर्शमात्रस्य ग्राहकत्वात् । अदृष्टे-देवदत्ताद्यशरीरं देवदत्तविशेषगुणप्रेरितभूतपूर्वकम् तद्भोगसाधनकार्यत्वात्, यदेवन्तदेवं यथा तन्निर्मितस्रक् । तथाचैतत्, तस्मात्तथा । शक्त्यभावे—वह्निर्न दाहानुकूलातीन्द्रियाद्दिष्टधर्मसमवायी महत्त्वसमानाधिकरणात्मप्रतियोगिकान्योन्याभावाधिकरणत्वात्, यद्यत् महत्त्वसमानाधिकरणात्मान्योन्याभावाधिकरणन्तन्नदाहानुकूलातीन्द्रियाद्दिष्टधर्मसमवायि, यथा घटः । दाहानुकूलाद्दिष्टधर्मसमवायित्वाभावव्याप्यमहत्त्वसमानाधिकरणात्मान्योन्याभावाधिकरणम् चायम्, तस्मात् न दाहानुकूलातीन्द्रियाद्दिष्टधर्मसमवायी । वह्निद्व्यणुके दाहानुकूलस्पर्शवति व्यभिचारवारणायायम् हेतौ विशेषणम्; अदृष्टवत्यात्मनि

व्यभिचारवारणाय द्वितीयम्। घटस्थैर्ये—घटो न स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगी; तत्क्षणवृत्तितया प्रमीयमाणत्वात्; यदाद्यक्षणवृत्तितया प्रमीयते न तत्तत्क्षणवृत्तिध्वंसप्रतियोगि; यथा घट एवाद्यक्षणवृत्तितया प्रमीयमाणो नाद्यक्षणवृत्तिध्वंसप्रतियोगी; प्रमीयते चायं स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तितया; तस्मान्न तत्क्षणवृत्तिध्वंसप्रतियोगी॥ मनोऽणुत्वे—अणुत्वं निःस्पर्शवृत्तिवृत्ति परमाणुत्वसाक्षाद्व्याप्यजातित्वात् या या परमाणुत्वसाक्षाद्व्याप्यजातिः सा निःस्पर्शवृत्तिवृत्तिः, यथा महत्त्वम्; निःस्पर्शवृत्तिवृत्तिपरमाणुत्वसाक्षाद्व्याप्यजातिश्चेयम्, तस्मात्तथा॥

कथञ्चिदपि स्थापनाया अस्फुरणे अहं स्थापनावादीति क्व प्रतिपन्नम्, यावता त्वमेव कथं स्थापनां न कुरुषे। यदि भवान् वैतण्डिकमतमाश्रित्य विवदिषति तदा ममापि तन्मतावलम्बनेनैव विवक्षेत्यादि वाक्पल्लवोल्लासनमेव शरणम्। यदि च स्थेयानुविधेयाभ्यामेव त्वं स्थापनावादीति व्यवस्थाप्यसे, स्थापनं झटिति न परिस्फुरति तदा सर्वसाधारणीयं स्थापना—शब्दोऽनित्यः ताद्रूप्येण प्रतीयमानत्वात्, यद्यदनित्यतया प्रतीयते तदनित्यम्, यथा घटः अनित्यत्वव्याप्यानित्यत्वप्रकारकप्रतीतिविषयश्चायम्[1], तस्मादनित्यः। अत्र हेत्वसिद्धौ परेणोद्भावितायां 'शब्दो ऽनित्यः' इति ज्ञानप्रामाण्यम् साधनीयम्। तथाहि शब्दोऽनित्य इति ज्ञानम्प्रमा अबाधितविषयत्वात्; यदेवन्तदेवम्, यथा घटोऽनित्य इति ज्ञानम्। अत्र विषयबाधव्यवस्थापनव्याकुलता परस्य महती स्यात्॥ यद्वा—'शब्दोऽनित्यत्वातिरिक्त एतद्धर्मातिरिक्तधर्मवान्, प्रमेयत्वात्, यद्यत् प्रमेयम् तत्तदनित्यत्वातिरिक्त एतद्धर्मातिरिक्तधर्मवत्, यथा घटः। अनित्यत्वातिरिक्त एतद्धर्मातिरिक्तधर्मवत्त्वव्याप्यप्रमेयत्वाश्रयश्चायम् तस्मात्तथेति महाविद्यादिशा प्रयोक्तव्यम्[2]। पक्षधर्मबलाच्चानित्यत्वसिद्धिः॥ पक्षधर्मताबललभ्ये साध्येऽर्थान्तरन्नास्तीत्युक्तमेव। अप्रयुक्तत्वादेशनाच प्रतिकर्तव्या निरुपधिसम्बन्धशालित्वात्। शब्दस्यानित्यत्वं विना तदुत्पादविनाशप्रत्ययो न स्यादित्यादि विपक्षबाधकम् प्रपञ्चनीयम्। यद्वा—अयम्पर्वतः एतत्पर्वततदितरावृत्तिवह्निमद्वृत्तिधर्मवान् प्रमेयत्वात्[3]। अयम्पर्वतः एतत्पर्वतातिरिक्तवह्निमदन्यः प्रमेयत्वादित्यादिवह्निमत्त्वसाधनवत् साध्यान्तरेऽप्यूहनीयम्। यत्र चात्यन्तमस्फुरणम् तत्र पक्षधर्म एव हेतुत्वेन प्रयोक्तव्यः। यथा—'शब्दोऽनित्यः शब्दत्वात्', 'क्षितिःसकर्तृका क्षितित्वात्', 'अयम्पर्वतो वह्निमानेतत्पर्वतत्वात्' 'वायुर्न प्रत्यक्षः वायुत्वात्' 'सुवर्णं तैजसं सुवर्णत्वात्'—इत्यादिव्यतिरेकव्याप्तिबलेन प्रयोक्तव्यम्।[4] असाधारणत्वदेशनायां विपक्ष- बाधकोपन्यासेन पक्षस्य सपक्षत्वं साध्यम्। नहि यत्किञ्चित्सपक्षव्यावृत्तिमात्रादसाधारण्यम्, अपि तु सकलसपक्षव्यावृत्त्या। प्रकृते च पक्षादेव सपक्षान्न हेतुव्यावृत्तिरिति कुतोऽसाधारण्यम्?

---

१—'प्रमाविषयताश्रयश्चायम्'। २—'अप्रयोजकत्वा'। ३—दन्योन्यः। ४—Not in B.

पक्षस्य सपक्षत्वे निश्चिते साध्यवत्त्वेन सिद्धसाधनमेवेति वाच्यम्, आपाततस्त्वद-निश्चयमाश्रित्यानुमानप्रवृत्तेः । व्याप्तिग्राहकतर्कादिना क्रमेण [1]त्वन्निश्चयादसाधारण्यनि-वृत्तेरित्यादि कण्ठडम्बरेणापि परो जेतव्यः । सर्वथा मौनमवधेयम् । भेदस्थापना भेदप्रकारो चास्माभिः प्रपञ्चिता ॥

इति महामहोपाध्याय-मैथिलस्थौदरपुरवंश-
वतंस-सन्मिश्र-श्रीभवनाथात्मज-महा-
महोपाध्यायसन्मिश्रश्रीशङ्कर-
कृते वादिविनोदे
प्रथम उल्लासः ॥

## अथ द्वितीय उल्लासः ।

प्रश्ने कृते तत्रोत्तरमजानतामप्यहङ्कारशातनम्—इति स्वयमुन्नीय प्रश्नविषया निगूढनिरुक्तयो निरूप्यन्ते । नित्यवृत्तिनित्यावृत्तिनित्यवृत्ति[2]साक्षाद्व्याप्यजातिर्द्रव्यत्वम् । तद्योगित्वं द्रव्यलक्षणम् । नित्यवृत्तिनित्यावृत्तीति गुणत्वव्यावर्तनाय, तस्य नित्यवृत्ति-नित्ये जलपरमाणुरूपादौ वृत्तेः । नित्यवृत्तीति कर्मत्वव्यावर्तनाय । साक्षादिति पृथिवीत्वादिव्यावृत्त्यै । नित्यवृत्तिनित्य[3]वृत्तिसत्तासाक्षाद्व्याप्यजातिर्गुणत्वम् । नित्य-वृत्तिनित्यवृत्तीति द्रव्यत्वकर्मत्वव्युदासाय । साक्षादिति रूपादिव्युदासाय ॥ नित्यावृत्ति-विभुवृत्त्यवृत्तिपृथिवीमात्रवृत्त्यवृत्तिजातिः कर्मत्वम् । नित्यावृत्तीति द्रव्यत्वगुणत्वादीनां, विभुवृत्त्यवृत्तीति सुखत्वशब्दत्वज्ञानत्वादीनां, पृथिवीमात्रवृत्त्यवृत्तीति गन्धत्वस्य,—व्युदासाय ॥ अनेकवृत्तित्वे सति समवायित्वानधिकरणत्वम् सामान्यत्वम् ॥ एकमात्र-समवेतत्वे सत्यसमवायित्वम् विशेषत्वम् ॥ स्वनिष्ठपदार्थविभाजकोपाधिमात्रा-वच्छिन्नव्यापकताप्रतियोगिव्याप्यताधिकरणद्वित्वानधिकरणत्वम् समवायत्वम् । समवाय-स्यैकत्वात् सम[4]वायत्वेनोपाधिना किमपि द्वित्वन्न व्याप्यते, न हि भवति द्वौ समवायाविति तात्पर्यम् ॥ [5]समवायित्वसमवेतसमवायत्वानधिकरणत्वमभावत्वम् । न चानधिकरणत्व-मित्यत्र नञर्थस्याभावत्वात् तेनैव तन्निरूपणमित्यात्माश्रयः, अभावस्य ज्ञातत्वात् । अन्यथा-लक्षणस्यैवात्रासिद्धत्वमापद्येत । तथा चोक्तम् टीकाकृता—"सर्वथाऽव्युत्पन्नम् प्रतिलक्ष-णप्रणयनानवकाशात्, अन्यथा लक्षणेऽपि लक्षणान्तरवचनेऽनवस्थापत्तेः । तेन लक्ष्यं लक्षणं

---

१ 'त्वदनि' । २ 'सत्ता' । ३ 'नित्यावृत्ति' । ४ 'समवायेन विभाजकोपाधिना' । ५ 'समवेतत्वेसति समवायित्वसमवायत्वा' ।

च विशकलितं जानन्तस्प्रत्येनस्य लक्ष्यस्येदं लक्षणमिति पक्षधर्मतामात्रप्रदर्शनार्थमेव लक्षणवचनम्—इति न कश्चिद्दोषः । न च 'लक्षणस्थन ञ पदार्थात्यन्ताभावेन लक्षणगमने स्थिरात्माश्रयः, अगमने चाव्याप्तिरिति वाच्यम्,' तस्य स्वरूपत एव स्वस्मिन् व्यवहारजनकत्वात्, प्रमेयत्वेप्रमेयवत्ववदगत्याऽऽत्माश्रयस्वीकाराद्वा । तदुक्तम् प्रमाणं शरणम् वृत्तौ न भिन्नाभिन्नतेयत इति ।

अथ विशेषलक्षणानि । गन्धसमानाधिकरणगन्धासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वम् पृथिवीत्वम् ॥ नित्यविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वंवा; नित्यानित्यवृत्तिनित्यरूपासहवृत्तिरूपसहवृत्तिजात्यधिकरणत्वंवा॥उष्णस्पर्शासमानाधिकरणनित्यरूपसमानाधिकरणजातिमत्त्वम् जलत्वम्। स्नेहसमानाधिकरणस्नेहासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वंवा ॥ रसवद्वृत्तिद्रवत्ववद्वृत्तिजात्यधिकरणत्वम् तेजस्त्वम्। नित्यरूपसमानाधिकरणत्वे सति नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजात्यधिकरणत्वंवा; गुरुत्वसमानाधिकरणात्यन्ताभावप्रतियोगिरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वंवा । रूपासमानाधिकरणस्पर्शसमानाधिकरणजातिमत्वं वायुत्वम् ॥ शब्दाश्रयत्वमाकाशत्वम् ; ज्ञानानधिकरणविशेषगुणाधिकरणकर्मानधिकरणद्रव्यत्वंवा; ज्ञानासमवायिकारणमूर्त्यसमानाधिकरणविशेषगुणत्वंवा । ज्ञानस्पर्शाधिकरणानधिकरणविशेषगुणवत्वंवा । द्रव्यत्वव्याप्यजात्यनधिकरणत्वे सति विशेषगुणवत्वंवा ॥ विशेषगुणासमानाधिकरणमहत्त्वसमानाधिकरणादिगन्यद्रव्यत्वम् कालत्वम् ॥ विशेषगुणासमानाधिकरणमहत्त्वसमानाधिकरणकालान्यद्रव्यत्वम् दिक्त्वम् ॥ ज्ञानात्यन्ताभावानधिकरणत्वम् आत्मत्वम् । (एवं यत्नादिप्रक्षेपादपि लक्षणम् । द्रव्यत्वव्याप्यजात्यधिकरणविभुत्वंवा; शब्दासमानाधिकरणविशेषगुणसमानाधिकरणविभुत्वंवा ॥ स्पर्शानधिकरणत्वे सति मूर्तत्वाधिकरणत्वम् मनस्त्वम्; विशेषगुणानधिकरणमूर्तत्वंवा[1] ॥

अथ गुणानाम् ॥ रसवद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणमात्रबहिरिन्द्रियजन्यनिर्विकल्पकविषयगुणत्वव्याप्यजातिमत्वं रूपत्वम्; स्पर्शावृत्तितेजस्त्वसमानाधिकरणविशेषगुणावृत्तिजातिमत्त्वम् वा ; तेजोवृत्तिवृत्तिवायुवृत्त्यवृत्तिविशेषगुणावृत्तिजातिमत्वं वा ॥ स्नेहवन्मात्रवृत्तिजात्यधिकरणेन्द्रियजन्यनिर्विकल्पकविषयगुणत्वव्याप्यजात्यधिकरणत्वं रसत्वम्; गन्धस्नेहाभयसमानाधिकरणसंयोगसमानाधिकरणद्रव्यत्वसक्षाद्व्याप्यजातिव्याप्यतावच्छेदकजातिमद्विशेषगुणवत्त्वम् वा ॥ तिक्तरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमदिन्द्रियजन्यनिर्विकल्पकविषयगुणत्वव्याप्यजातिमत्वं गन्धत्वम् स्नेहासमानाधिकरणरससमानाधिकरणजातिनिरूपितव्याप्यतावच्छेदकगुणत्वम् वागन्ध

---

१ 'विशेषगुणानधिकरणमात्राधिकरणसंयोगाधिकरणमूर्तत्वं' ।

त्वम्; अनित्यमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमन्मूर्तविशेषगुणत्वम् वा ॥ नीरूप-मूर्तबहिरिन्द्रियमात्रजन्यनिर्विकल्पकविषयजातिमत्त्वम् स्पर्शत्वम्; रूपासहवृत्तिमूर्तवि[1]-शेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वं वा ॥ एकवृत्तिवृत्त्य[2]नेकवृत्तिवृत्त्यवधिनिरूप्यावृत्ति-गुणत्वव्याप्यजातिमत्त्वंसंख्यात्वम्; एकमात्रवृत्त्यनेकवृत्तिवृत्तिपरिमाणासमवायिकारण-वृत्तिगुणत्वव्याप्यजातिमत्त्वम् वा ॥ एकमात्रवृत्तिकालवृत्तिवृत्तिगुणत्वसाक्षाद्व्याप्यजाति-मत्त्वम् परिमाणत्वम्; द्रव्यत्वावच्छिन्नव्याप्यताप्रतियोगिकव्यापकतावच्छेदकैकवृत्ति-मात्रवृत्तिगुणत्वव्याप्यजातिमत्त्वम् वा ॥ कर्मासमवायिकारणमात्रवृत्तिपरिमाणासमवायि-कारणावृत्तिकालगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् पृथक्त्वम् ॥ द्रव्यासमवायि-कारणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् संयोगत्वम्॥ शब्दासमवायिकारणवृत्तिद्रव्य[3]सम-वायिकारणावृत्त्यनेकवृत्तिवृत्तिजातिमत्त्वम् विभागत्वम् ॥ विभुसंयोगासमवायिकारणक-वृत्तिविभुवृत्त्यवृत्तिस्वाश्रयोत्पत्त्यव्यवहितानन्तरोत्पत्तिकावधिनिरूप्यमात्रवृत्तिजातिमत्त्व-म् कालिकपरत्वम् ॥ विभुसंयोगासमवायिकारणकवृत्तिमूर्तमात्रवृत्तिसमानाधिकरण-वृत्तिस्वाश्रयप्रागभावसमानकालीनावधिमात्रनिरूप्यजातिमत्त्वमपरत्वत्वं सामयिकम् ॥ विभुवृत्त्यवृत्तिविभुसंयोगासमवायिकारणकवृत्तिप्रमातृस्वाश्रयान्तराला[4]वधिनिरूप्यमात्रवृ-त्तिजातिमत्त्वम् दैशिकपरत्वम् ॥ दिक्संयोगासमवायिकारणकवृत्तिमूर्तवृत्तिमात्र-वृत्तिप्रमा[5]वृत्तिस्वाश्रयान्तरावधिनिरूप्यवृत्तिजातिमत्त्वम् दैशिकमपरत्वम् ॥ प्रत्यक्ष-मूर्तवृत्त्यप्रत्यक्षमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् गुरुत्वम् । प्रत्यक्षवृत्ति यद-प्रत्यक्षम् तन्मात्रवृत्तिर्या गुणत्वसाक्षाद्व्याप्यजातिस्तद्वत्त्वमित्यर्थः । मूर्तपदम् धर्मा-धर्मव्युदासाय । मात्रपदम् भावनास्थितिस्थापकयोर्व्यावर्तनाय । रसनानधिकरणान-धिकरणकावृत्त्यतीन्द्रियगुणत्वव्याप्यजातिमत्त्वं वा गुरुत्वम्॥ रूपानधिकरणाधिकरणावृत्ति-रसानधिकरणाधिकरणवृत्तिगुणत्वव्याप्यजातिमत्त्वम् द्रवत्वम् ॥ गन्धरसनानाधिकरण-गुणावृत्तिरससमानाधिकरणगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं स्नेहत्वम् ॥ नित्य-विभुविशेषगुणवृत्तियत्नसाक्षात्कारणावृत्ती[6]च्छाजनकवृत्तिजातिमत्त्वम् बुद्धित्वम् ॥ स्वाश्र-योत्पत्त्यव्यवहितोत्तरक्षणोत्पत्तिकसाक्षात्कारविषयताव्याप्यजातिमत्त्वे सति द्वेषाजनक-त्वम् सुखत्वम् ॥ स्वाश्रयोत्पत्त्यव्यवहितोत्तरक्षणोत्पत्तिकसाक्षात्कारविषयताव्याप्यजाति-मत्त्वे सति द्वेषजनकत्वम् दुःखत्वम् ॥ प्रयत्नसाक्षात्कारणगुणत्वम् इच्छात्वम् ॥ ईश्वरगुणावृत्तिदुःखजन्यमात्रवृत्तिजातिमत्त्वं द्वेषत्वम् ॥ इच्छाज्ञानावृत्तिनित्यात्म-विशेषगुणवृत्तिजातिमत्त्वम् प्रयत्नत्वम् ॥ अतीन्द्रियात्मविशेषगुणमात्रा[7]वृत्तिगुणत्व-साक्षाद्व्याप्यजातिमत्त्वे सति सुखजनकत्वम् धर्मत्वम् ॥ अतीन्द्रियात्मविशेषगुणमात्र-

---

१ Not in A. २ 'एक वृत्ति'। ३ 'द्रव्या'। ४ त्तरावधि'। ५ 'प्रमातृ'। ६ Not in B.

७ 'त्र'।

वृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वे सति दुःखजनकत्वमधर्मत्वम् ॥ मूर्तवृत्त्यवृत्तिगुणत्वव्याप्यजातिमदात्मविशेषगुणत्वम् भावनात्वम् ॥ ज्ञानासमानाधिकरणविभुविशेषगुणत्वं शब्दत्वम् । स्वनिष्ठगुणत्वसाक्षाद्व्याप्यजातिविजातीयविशेषगुणासमानाधिकरणविभुविशेष-[1]गुणासमानाधिकरणविशेषगुणत्वम् वा शब्दत्वम् ॥

अथ कर्मविशेषलक्षणानि ॥ स्वाश्रयविभागपूर्वकोर्ध्वदेशसंयोगजनककर्मत्वम् उत्क्षेपणत्वम् ॥ अभिघातजन्यत्वे सति अधःसंयोगजनककर्मत्वम् अवक्षेपणत्वम् ॥ अविनश्यद्द्रव्यायोन्यावयवाभिमुखसंयोगफलककर्मत्वमाकुञ्चनत्वम् ॥ अविनश्यद्द्रव्यान्योन्यावयवानभिमुखभूयोदेशाभिमुखसंयोगफलककर्मत्वम् प्रसारणत्वम् ॥ एतत्त्रयकर्मान्यकर्मत्वम् गमनत्वम् । अतएव भ्रमणरेचनादीनां गमनेऽन्तर्निवेशः ॥

इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज-
महामहोपाध्यायसन्मिश्रश्रीशङ्करकृते
वादिविनोदे द्वितीय उल्लासः ॥

---

## अथ तृतीय उल्लासः

वादिना प्रश्ने कृते झटिति प्रश्नविषयज्ञाने सति प्रष्टुरहङ्कारशातनम् इति प्रश्नविषयो विविच्यते ॥ ननु—'कस्य किं केन साधर्म्यम् किं वा वैधर्म्यम् ?' । उच्यते । सप्तपदार्थानाम् प्रमेयत्वम् । तच्चेश्वरप्रमासम्बन्धः । एवं ज्ञानत्वम् परम्परासम्बन्धस्तत् । एवं ज्ञेयत्वमपि । तथा वाच्यत्वम्;[2] वचनकर्मत्वम् । स च सङ्केतसम्बन्धः । सङ्केतश्च-'इदम्पदमस्य वाचकम्' एताहशीश्वरेच्छा । एतदेव च पदार्थत्वम् अभिधेयत्वञ्च । एवम् विशेषणत्वं विशेष्यत्वम्, धर्मत्वम् धर्मित्वम्, गुणत्वम् प्रधानत्वम्, पक्षत्वम्, दृष्टान्तत्वम्, सत्त्वम्, परत्वम्, भिन्नत्वम्, इतरत्वमित्यादि यावत् केवलान्वयि तावत् सप्तपदार्थसाधर्म्यम् । एते च धर्माः स्ववृत्तयः, तथैवानुभवात् । तदुक्तम्—"प्रमाणशरणम् वृत्तौ न भिन्नाभिन्नते यतः"—इति । नात्माश्रयो दोषोऽपि ॥ सताम्भावत्वम् । तच्च विधिमुखप्रत्ययवेद्यत्वम्, सत्तासम्बन्धित्वमिति यावत् । सत्तासम्बन्धश्च द्रव्यगुणकर्मणां समवायलक्षणः सामान्यविशेषयोरेकार्थसमवायलक्षणः समवायस्य सत्तायाः स्वरूपमेव । भवतीह समवायः सन् सत्ता सतीति प्रतीतिरिति । नित्यद्रव्याणि विहाय यस्यामेवाश्रितत्वम् तच्चाधारत्वम् समवाये ऽप्यस्ति ननु नित्यद्रव्येषु भवतीहरूपसमवायो नत्विहाकाशमिति ॥ द्रव्यगुणकर्मसामान्यविशेषाणाम् पञ्चानां समवायभिन्नभावत्वम् । सामान्यानां समवायित्वम्

---

१ Not in B. २ 'पदवाच्यत्वम्' ।

अनेकत्वञ्च अनेकवृत्तिपदार्थविभाजकोपाधिमत्त्वम्, स्वाश्रयान्योन्याभावसमानाधिकरणपदार्थविभाजकोपाधिमत्त्वं वा ॥ गुणकर्मसामान्यविशेषसमवायाभावानां[1] निर्गुणत्वं निष्क्रियत्वम् । तत्र निर्गुणत्वम् गुणत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्त्वम् । निष्क्रियत्वन्तु कर्मासमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम् ॥ समवायिकारणत्वशून्यत्वम्, द्रव्यत्वात्यन्ताभाववत्त्वम्, संयोगशून्यभावत्वम्—इत्याद्यूह्यम् ॥ द्रव्यगुणकर्मणां सत्तावत्त्वम् सत्ताव्याप्यजातिमत्त्वम् वैशेषिकपरिभाषार्थशब्दाभिधेयत्वम् । धर्मम् विहाया-धर्मकर्तृत्वम् अधर्मम् विहाय धर्म कर्तृत्वं च । गोत्वादीनां न धर्माधर्मकर्तृत्वम्; गाल्व्या-दित्यादौ जातेरवच्छेदकमात्रत्वात्, "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" "श्वेतं छागमालभेत"—इत्यादावश्वैत्यादीनां विशेषणत्वेन धर्मजनकत्वात् । यद्यपि सर्वद्रव्यगुणकर्मणां न धर्माधर्महेतुत्वम्, तथा ऽपि तदुभयजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वन्तत् ॥ कार्यत्वमनित्यत्वं च त्रयाणाम् ॥ सामान्यविशेषसमवायानां सत्ताशून्यतावत्त्वम् बुद्धिमात्रप्रमाणकत्वम् नित्यत्वम् अकार्यत्वम् अकारणत्वं ज्ञातृधर्मातिरिक्तकार्यजनकत्वञ्च । बुद्धिप्रमाणकत्वन्तु सामान्येऽनुगतबुद्धिर्विशेषव्यावृत्तबुद्धिः, समवाये चेहेतिबुद्धिः प्रमाणम् यथा न तथाऽन्यत्र ॥ विशेषातिरिक्तानामनित्यवृत्तित्वम्; तच्चानित्यवृत्तिपदार्थविभाजको-पाधिमत्त्वम् ॥ कर्मातिरिक्तानाम् नित्यवृत्तित्वम्[2]; तच्च नित्यवृत्तिपदार्थविभाजकोपाधिमत्त्वम् ॥ द्रव्यगुणकर्मसामान्यविशेषसमवायानां लौकिकप्रत्यक्षवृत्तिपदार्थविभाजकोपाधिमत्त्वं । गुणकर्मणोरसमवायिकारणवृत्तिपदार्थविभाजकोपाधिमत्त्वम् । नित्यद्रव्यसमवाययोरसमवेतभावत्वम् साधर्म्यमित्याद्यूह्यम् ॥

पृथिव्यादीनां नवानां द्रव्यत्वम् स्वसमवेतकार्यारम्भकत्वम् समवायिकारणत्वम् गुणवत्त्वम् स्वकारणाविनाश्यत्वम् स्वकार्याविनाश्यत्वम् एतदुभयं जातिमत्त्वे सति इति विशेष्यम् । अनित्यद्रव्याणि विहाय अन्त्यविशेषवत्त्वम् अनाश्रितत्वम् नित्यद्रव्यत्वं च नित्यद्रव्याणि विहाय अन्त्यविशेषशून्यद्रव्यत्वम् आश्रितद्रव्यत्वम् अनित्यद्रव्यत्वञ्च । पृथिव्युदकतेजःपवनात्ममनसां षण्णां द्रव्यत्वव्याप्यजातिमत्त्वम्; स्वाश्रयान्योन्याभावसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वम संस्कारवत्त्वञ्च । पृथिव्यप्तेजोवायुमनसां क्रियावत्त्वम् मूर्तत्वम् परत्वम् अपरत्वम् वेगवत्त्वम् । आकाशकालदिगात्मनां सर्वगतत्वम् परममहत्वम् सर्वसंयोगाश्रयत्वम् क्रियाशून्यद्रव्यत्वम् परत्वापरत्ववेगशून्यत्वं च । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । उपाधिर्भूतत्वम् न तु जातिः, मूर्तत्वेन सह परापरभावानुपपत्तेः । ननु—मूर्तत्वमेवोपाधिरस्तु, विनिगमनाविरहात् । बहिरिन्द्रियव्यवस्था । हेतुगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम् वा भूतत्वम्; इन्द्रियप्रकृतित्वमिन्द्रियोपादानवृत्तिद्रव्यविभाजकोपाधि-

१ 'अभाव' Not in B. २ 'नित्यवृत्तिवृत्ति' ।

मत्त्वम् । नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पनया चैतत् समाधेयम् । बहिरिन्द्रियवृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । बाह्यैकेन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वञ्च भूतानां साधर्म्यम् । पृथिव्यप्तेजोवायूनां द्रव्यारम्भकत्वम् । तच्च द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वम् स्पर्शत्वम् ; तच्च स्पर्शात्यन्ताभावशून्यत्वम् । अवान्तरागुत्वम् अवान्तरमहत्त्वम् स्थितिस्थापकवत्त्वम् शरीरारम्भकत्वम् इन्द्रियारम्भकत्वम् विषयारम्भकत्वञ्च । सर्वञ्चैतत् द्रव्यविभाजकोपाधिमत्तया विशेष्यमिति नाव्याप्तिः॥ पृथिव्यप्तेजसां त्रयाणां बहिरिन्द्रियप्रत्यक्षत्वम् रूपवत्त्वम् द्रवत्ववत्त्वम् च । एतदपि पूर्ववद्विशेष्यम्॥ पृथिव्युदकयोः गुरुत्ववत्त्वम् रसवत्त्वम् पतनवत्त्वम् अभास्वररूपवत्त्वञ्च । पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वम् ॥ क्षित्युदकात्मनां चतुर्दशगुणवत्त्वञ्च । संख्यामात्रेण चैतत्साधर्म्यम् । न तु य एवक्षितौ त एवोदकात्मनोरपि । आत्मा चात्र क्षेत्रज्ञः । आकाशात्मनोराशुतरविनाश्यविशेषगुणवत्त्वम् आव्याप्यवृत्तिविशेषगुणवत्त्वञ्च । दिक्कालयोः पञ्चगुणवत्त्वम् सर्वोत्पत्तिवन्निमित्तकारणत्वम् । सर्वपदञ्च दिक्कालसमवेतगुणान्योत्पत्तिपरम् । तत्र तयोः समवायिकारणत्वात् स्वरूपसतः समवायिकारणत्वमुपहितयोर्निमित्तकारणत्वम् । अतस्सर्वपदमसङ्कुचितमेव वा । सर्वोत्पत्तिमन्निमित्तत्वञ्च तयोरधिकरणतया तेनेश्वरादृष्टाद्यसंग्रहः । परत्वापरत्वानुमेयत्वञ्च ॥ क्षितितेजसोः नैमित्तिकद्रवत्ववत्त्वम् । तच्च नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । पृथिवीभिन्नद्रव्यत्वमष्टानाम् । एवं जलभिन्नत्वाद्यपि तथा । मनोविहायानन्तःकरणद्रव्यत्वम् ; अम्भोविहाय निःस्नेहत्वमक्लेदवत्त्वञ्च । तेजोविहाय अनुष्णत्वम् अदाहकत्वञ्च—इत्यादि ॥ जलज्योतिरनिलानां अपाकजस्पर्शवत्त्वम् । जलज्योतिषोरपाकजरूपवत्त्वम् । दिक्कालमनसां विशेषगुणशून्यत्वम् । वाय्वाकाशदिक्कालमनसामतीन्द्रियत्वम् । आत्ममनसोः शरीरावच्छेदेन वृत्तिलाभः । वाय्वादीनां नीरूपत्वम् । आकाशादीनां निःस्पर्शवत्त्वम् ; कालादीनां अभूतत्वमित्यादि ॥ ॥

अथ गुणानां साधर्म्यम् ॥ तत्र सर्वेषां गुणानां गुणत्वाभिसम्बन्धः, स च समवायः, द्रव्याश्रितत्वञ्च, तच्च पदार्थविभाजकजात्यवच्छिन्नद्रव्यनिष्ठात्यन्ताभावाप्रतियोगित्वम् ; निष्क्रियत्वम् अगुणवत्त्वम् इति द्वयम् पूर्वसाधर्म्यद्वयनिर्वाहकम् । रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगानां दशानां मूर्तगुणत्वम् । तच्च मूर्त्यसमानाधिकरणगुणवृत्तिगुणत्वव्याप्यजातिशून्यगुणत्वम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दानां दशानां अमूर्तगुणत्वम् । तच्च परममहत्त्वासमानाधिकरणगुणवृत्तिगुणत्वव्याप्यजातिशून्यगुणत्वम् । संख्यापरिमाणसंयोगविभागपृथक्त्वानां उभयगुणत्वम् ; तच्च कालवृत्ति[2]गुणत्वव्याप्यजातिमत्त्वम् । संयोगविभागद्वित्वपृथक्त्वादीनाम् अनेकाश्रि-

१ Not in B. । २ 'कालवृत्तिवृत्ति' ।

तत्वम् । तच्च स्वाश्रयप्रतियोगिकान्योन्याभाव[1]समानाधिकरणगुणत्वम्, नानैकत्वसमानाधिकरणगुणत्वं वा । रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वापरत्वापरत्वद्रवत्वगुरुत्वस्नेहसंस्कारबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मशब्दानामेकैकाश्रितत्वम् । तच्च स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिगुणत्वम् ॥ रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दानां षोड़शानां वैशेषिकगुणत्वम् । तच्च मनोगुणावृत्ति गुरुत्वनैमित्तिकद्रवत्वान्यगुणवृत्तिजातिमत्त्वम् । एतच्च यदि मनसि स्थितिस्थापकाङ्गीकारः; अन्यथा स्थितिस्थापकान्यत्वेनापि विशेष्यम् । संख्यापरिमाणपृथक्त्वासंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगानां दशानां सामान्यगुणत्वम्; तच्च विशेषगुणभिन्नगुणत्वम् । शब्दस्पर्शरूपरसगन्धानां बाह्यैकैकेन्द्रियग्राह्यत्वम् । तच्च बहिरिन्द्रियव्यवस्थापकगुणवृत्तिगुणत्वव्यापकजातिमत्त्वम् । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगानां दशानां द्वीन्द्रियग्राह्यत्वम् । अत्र वेगशब्दः स्वमपात्रपरः पूर्वत्र स्थितिस्थापकपरोऽपि । तच्च जन्यनीरसयावदिन्द्रियजन्यनिर्विकल्पकविषयगुणत्वव्याप्यजातिमत्त्वम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां षण्णामन्तःकरणग्राह्यत्वम् । तच्च मनोजन्यनिर्विकल्पकविषयात्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्वम्, प्रत्यक्षात्मविशेषगुणत्वव्याप्यजातिमत्वम् वा गुरुत्वधर्माधर्म[2]भावनानामतीन्द्रियत्त्वम्; तच्च योगजधर्माजन्यजन्यस्वविषयसविकल्पकाजन्यसामान्यलक्षणप्रत्यासत्त्यजन्यजन्य[3]साक्षात्काराविषयजातिमद्गुणत्वम् । भावनापदं स्थितिस्थापकमपि संगृह्णाति । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगानां कारणगुणपूर्वकत्वम् । तच्च पाकजावृत्तिस्वाश्रयसमवायिकारणनिष्ठसजातीयगुणासमवायिकारणैक[4]मात्रवृत्तिगुणत्वावान्तरजातियोगित्वम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दानाम् अकारणगुणपूर्वकत्वम् । तच्च विभुविशेषगुणत्वमेव । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरापरत्वपाकजानां संयोगजत्वम् । तच्च संयोगासमवायिकारणवृत्तितदितरासमवायिकारणावृत्तिजातियोगित्वम् । संयोगविभागवेगानां कर्मजत्वम् । तच्च कर्मासमवायिकारणकगुणमात्रवृत्तिजातिमत्त्वम् । वेगपदं स्थितिस्थापकमपि गृह्णाति ॥

ननु—"कानि कियंतीन्द्रियाणि, काः कति च प्रत्यासत्तयः ?" उच्यते । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षड़ीन्द्रियाणि ॥ तत्र घ्राणम् पार्थिवम्, रसनमाप्यम्, चक्षुस्तैजसम्, त्वगिन्द्रियम् वायवीयम्, श्रोत्रमनसी नित्ये; श्रोत्रान्तानि भौतिकानि, मनः सर्वविषयम्; सर्वाणि चातीन्द्रियाणि । स्मृत्यजनकज्ञानकारण मनस्संयोगाश्रयत्वम् शब्देतरोद्भतगुणानाश्रयत्वे सतिज्ञानकारणमनस्संयोगाश्रयत्वम् वा सर्व साधारणं लक्षणम् । वक्तञ्चरश्मितेजोन्तरमेन तु चक्षुः । संयोग संयुक्त समवाय संयुक्त समे वेतसमावायसंयुक्त-

१ 'भावा' । २ 'धर्माद्य' । ३ Not in B. । ४ Not in B. ।

समवेतसमवायविशेष्यविशेषणभावाः षडेव प्रत्यासत्तयः। तत्र संयोगो द्रव्यग्रहणे, संयुक्तसमवायो द्रव्यगतजातीनां कर्मगुणानाञ्च ग्रहणे, संयुक्तसमवेतसमवायो गुणकर्मगतजातीनां ग्रहणे, समवायः शब्दग्रहणे, समवेतसमवायः शब्दत्व-कत्वादिग्रहणे, विशेषणविशेष्यभावः समवायाभावयोर्ग्रहणे—प्रत्यासत्तिः। तत्र बहिर्द्रव्यम् उद्भूतरूपवन्महच्च द्वीन्द्रियग्राह्यम्। संख्यापरिमाणपृथक्त्वसंयोगविभागद्रवत्वपरत्वापरत्वकर्माणि योग्यद्रव्यवृत्तीनि[1] द्वीन्द्रियग्राह्याणि। गन्धरूपस्पर्शशब्दज्ञानसुखदुःखेच्छाप्रयत्नाः एकैकेन्द्रियग्राह्याः। गुणत्वसत्त्वे सर्वेन्द्रियग्राह्ये। द्रव्यत्वग्राहकश्च संयोगो मूलावयवावच्छेदेन त्र्यसरेणुमात्मानञ्च विहाय तयोः संयोगमात्रेण ग्रहात्। महावयविग्रहे[2] चतुर्विधः सन्निकर्षः। सर्वेन्द्रियेणार्थस्य इन्द्रियावयवेनार्थस्य इन्द्रियावयवेनार्थावयवानां इन्द्रियेणार्थावयवानाञ्च इति। महत्त्ववदनेकद्रव्यत्वमप्यवयविग्रहे[3] कारणमिति सम्प्रदायः। अनेकद्रव्यत्वम् महत्त्व एवोपक्षीणमिति चिन्तामणिकृतः। उद्भूतरूपवत्त्वञ्च विषयगतमालोकगतञ्च द्रव्यग्रहे सहकारि। उद्भवश्च रूपादिगतो जातिविशेषः, तदभावोऽनुद्भव इति सम्प्रदायः। द्वे अपि जाती इत्येके। अनुद्भवमात्रं जातिः, तदभाव एवोद्भव' इति चिन्तामणिकृतः। बाह्यालोकश्च विषयसंस्कारकः। स च चक्षुःसंयोगावच्छेदेन तदविरलदेशावच्छेदेन वा चालिनीन्यायेन विषये वर्तमानः। इन्द्रियाणि च मनस्संयुक्तानि स्वविषये प्रवर्तन्ते। मनश्च प्रतिशरीरमेकैकमस्पर्शम् मूर्तम् परमाणु, न तु विभु, यथा भाट्टानाम्, न वा प्रतिशरीरम्पञ्च, न वा जलौकाकारम्; तदवयवकल्पनायां प्रमाणाभावात्। दीर्घशष्कुलीभक्षणस्थले युगपत् पञ्च ज्ञानानि न जायन्ते, येन तदनुरोधादपीयं कल्पना स्यात्; यौगपद्यभ्रमस्तु कालसौक्ष्म्यात्॥

योगजधर्मः पृथगेव प्रत्यासत्तिरित्येके। योगिमनः सहकारी योगजो धर्मः। तेनासंसृष्टमपि तेन न गृह्यते-इत्यपरे। बहिरप्यसन्निकृष्टविषयमानसं ज्ञानम्। ज्ञानलक्षणा सामान्यलक्षणा प्रत्यासत्तिर्विशेषणतैव। तत्र ज्ञानलक्षणा संयुक्तसमवेतविशेषणता; परमाणुमहं जानामीत्याद्यनुव्यवसाये परमाण्वादिविषयकसाक्षात्कारजननात्। विशेषणता च बहुरूपा। तद्यथा। क्वचित्संयुक्तविशेषणता, यथा द्रव्येऽभावसमवाययोर्ग्रहः; क्वचित् संयुक्तसमवेतविशेषणता, यथा रक्तादौ पीतत्वाद्यभावग्रहः। क्वचित् संयुक्तसमवेतसमवेतविशेषणता, यथा रूपत्वादौ रसत्वाद्यभावग्रहः। क्वचित् समवेतविशेषणता, यथा ककारादौ गकारत्वाद्यभावग्रहः। क्वचित् समवेतसमवेतविशेषणता, यथा कत्वादौ गत्वाद्यभावग्रहः। क्वचित् शुद्धैव विशेषणता, यथा शब्दाद्यभावग्रहः। पुनरियं विशेषणता विशेषणनिरूप्यमाणा षोढैव। तद्यथा। संयुक्तविशेषणता

---

१ 'वृत्ति इति' इत्युभयत्र पाठः। 'वृत्तीनि' इति सम्यक्। २ 'महावपि'। ३ 'दात्म'।

संयुक्तसमवेतविशेषणता संयुक्तसमवेतसमवेत विशेषणता समवेतविशेषणता समवेतसमवेतविशेषणता विशेषणविशेषणता च सर्वत्र तत्तद्गताभावनिष्ठधर्मग्रहे मन्तव्या ।

अभावश्च योग्यप्रतियोगिकः प्रत्यक्ष इत्याचार्याः । योग्याधिकरणकोऽपीत्येके, सद्भ्यामभावो निरूप्यत इति वचनात् । इत्थञ्च संसर्गाभावे व्यवस्था । अन्योन्याभावस्त्वयोग्यप्रतियोगिकोऽपि, योग्यस्तम्भः पिशाचो न भवतीति प्रतीतिदर्शनात् । अभावग्रहे योग्यानुपलब्धिः सहकारिणी । सा च तत्तद्व्याप्यतदितरतदुपलम्भकसाकल्ये सत्यनुपलब्धिः । योग्यानुपलम्भोऽधिकरणप्रतियोगिसत्त्वे विरोधी, स योग्यानुपलम्भ इति कश्चित् । एकसंयोगिनाशे संयोगाभावप्रत्यक्षताऽन्यथा न स्यात् इति तेषामभिप्रायः । एवं सति क्वचिदनुपलब्धिः प्रतियोगिसत्त्वविरोधिनी क्वचिन्नेत्यवच्छेदकम् तत्तद्व्याप्येत्येव वक्तव्यमित्यावश्यकत्वात् सैव योग्यानुपलब्धिः तत्तद्व्याप्यैकसम्बन्धीतरेति पूरणीयम् ॥

तत्रेश्वरज्ञानमपहाय अर्थज्ञानत्वम् इन्द्रियजज्ञानत्वम् वा प्रत्यक्षविशेषलक्षणम् । साक्षात्कारविज्ञानम् प्रत्यक्षमितीश्वरज्ञानसाधारणं लक्षणम् । तत्र इन्द्रियजन्यत्वमस्मदादिज्ञाने साक्षात्त्वव्यवस्थापकम् । ईश्वर ज्ञाने तु साक्षात्त्वम् धर्मिग्राहकमानसिद्धम् ॥ ज्ञानाकरणकं ज्ञानम् इति खण्डनकारशङ्कितलक्षणे चिन्तामणिकृतः स्वरसः । प्रत्यभिज्ञा न संस्कारव्यापारकपूर्वानुभवकरणिकेति न तत्राव्याप्तिः । संस्कारात् स्मृतिः स्मृतेश्च प्रत्यभिज्ञानम्, अन्यथा संस्कारजन्यस्मृतित्वापत्तिरिति तेषां तात्पर्यम् । पूर्वानुभव एव संस्कारद्वारा प्रत्यभिज्ञाकरणमतस्तत्राव्याप्तिरेव, आन्तरालिकस्मृतिकल्पने प्रमाणाभावात् । न च स्मृतित्वापत्तिः प्रमाणम्, इन्द्रियासहकृतसंस्कारजन्यत्वस्य स्मृतित्वव्यवस्थापकत्वादिति सम्प्रदायः ॥

प्रत्यक्षम् द्विविधम्—निर्विकल्पकं सविकल्पकञ्च । तत्र निर्विकल्पकत्वम् निष्प्रकारकत्वम्, सप्रकारकज्ञानत्वम् सविकल्पकत्वम् । सविकल्पे संज्ञावैशिष्ट्यज्ञानमिति निबन्धकृतः । संज्ञाकरणन्तटस्थम् ; तेन घटोऽयमित्याद्युल्लेखो न तु वैशिष्ट्यमपि विकल्पगोचरः, सविकल्पे च यद्वैशिष्ट्यम् भासते तदव्यावृत्तिरित्याचार्याः । सविकल्प कानन्तरमतद्व्यावृत्तिभानमिति चिन्तामणौ । सविकल्पकञ्च प्रकारांशे निर्विकल्पकमेव, तत्र निष्प्रकारकत्वात्, विशेष्यांशे सप्रकारकत्वमपि चिन्तामणौ ; उभयांशे सप्रकारकत्वम्, जात्यंशे व्यक्तेःप्रकारत्वम् व्यक्त्यंशे च जातेः । तदुक्तम्—जातिजातिमन्तौ क्रियाक्रियावन्तौ गुणगुणिनौ च मिथःसम्बद्धावनुभूयेते—इति सम्प्रदायविदः । निर्विकल्पकम् प्रमाऽप्रमाबहिर्भूतमिति चिन्तामणौ । निर्विकल्पसविकल्पयोरपि प्रामाण्यमिति सम्प्रदायः । विशेषज्ञानम् विशेष्येन्द्रियसम्बन्धात् । तदुभयसंसर्गग्रहो भ्रमप्रमासाधारणविशिष्टज्ञानसाम-

---

१ 'प्येतर' । २ 'व्याप्यादौ' । ३ 'तदतद्धधा' ।

श्रीति सम्प्रदायः। विशेषणसन्निकर्षोऽपीति केचित् । अभावप्रत्यक्षे प्रतियोगित्वाभावत्वे विशेषणेऽनन्यगतिकतयाऽज्ञाते एव भासेते । अन्यच्च विशेषणं सर्वत्र ज्ञातमेव । अनुव्यवसायस्य च यावद्व्यवसायविषयविषयकत्वम् व्यवसायानन्तरम् ज्ञानत्वमिति निर्विकल्पकम् । ततस्तज्जातीयव्यवसायान्तरे ज्ञानत्ववैशिष्ट्यग्रहः, अथात्मनि ज्ञान-वैशिष्ट्यग्रह इत्याचार्याः ॥

ननु मतभेदेन केषां कति पदार्थाः ? कति वा केषाम् प्रमाणम् इति ? कस्य वा कःसिद्धान्तः ?

उच्यते—कणादगौतमीयाश्च सप्त पदार्थान् मन्यन्ते । ते च द्रव्यगुणकर्मसामा-न्यविशेषसमवायाभावाः ॥ द्रव्यगुणकर्मसामान्यानि चत्वार्येव पदार्था इति लौकाय-तिकाः[1] ॥ द्रव्यगुणकर्मसामान्यसंख्यासमवायसादृश्यशक्तयोऽष्टौ पदार्था इति प्राभा-कराः ॥ द्रव्याद्यष्टकक्रमोपकारसंस्काराश्च तम इत्येकादश पदार्थाः इति प्राभाकरैकदेशी चन्द्रः ॥ महार्णवकारस्तु औपादानिकेन[2] सह द्वादशपदार्थानाह ॥ प्रकृतिपुरुषौ द्वौ पदार्थौ, महत्तत्त्वादि[3] प्रकृतिपरिणाम इति सांख्याः ॥ कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्था इति पाशुपताः ॥ ब्रह्ममात्रम् पदार्थो, व्यवहारे धर्मिधर्मभावेन पञ्च पदार्था इति वेदान्तिनः ॥ मुरारिमिश्रा अप्येवमेव पृथिव्यप्तेजोवायवश्चत्वार एव प्रत्यक्षविषयाः पदार्था इति चार्वाकः ॥

पृथिव्यप्तेजोवाय्वाकाशात्ममनांसि नवैव द्रव्याणि—इति प्राभाकरकाणादगौत-मीयाः। शब्दोऽन्धकारश्च द्वयमिदं द्रव्यमेवेत्येकादश द्रव्याणीति भाट्टाः । पृथिव्यप्तेजो-वाय्वात्ममनोऽन्धकारशब्दा अष्टौ द्रव्याणि, नत्वाकाशकालदिशां द्रव्यत्वमिति, वेदान्तिनः ॥

चतुर्विंशति गुणाः इति काणादाः । एषु गुणेषु संख्याविभागपृथक्त्वद्वेषानपास्य वेग-मधिकमन्तर्भाव्य एकविंशति गुणा इति गुरुमततत्त्ववेदिनः । शब्दस्थाने नादं[4] प्रक्षिप्य चतुर्विंशति वैशेषिकोक्ता एव गुणा इति भाट्टाः । परत्वापरत्वपृथक्त्वधर्माधर्मवि-भागशब्दान् अपास्य तादात्म्यवृत्तिनादान् त्रिगुणानाक्षिप्य विंशतिगुणा इति वेदान्तिनः ॥

षोढ़ा प्रत्यासत्तिरिति काणादगौतमीयाः । संयोगः समवायः संयुक्तसमवायः सम्बन्धविशेषणता चेति चतुष्टयमिति प्राभाकराः । संयोगमात्रमिति भाट्टाः । द्वादशप्रत्या-सत्तय इति केचित् , योगजधर्मसंस्कारोत्प्रेक्षाज्ञानजातीनां षण्णामाधिक्याभिमानात्[5] ॥

अथ चार्वाकसिद्धान्तः । प्रमाणम्[6] प्रत्यक्षमात्रम् । अतो मेयमपि तदेव । पृथिव्य-

---

१ 'तातिकाः' । २ 'औपाधिकत्वेन' । ३ 'दीनि' । ४ 'नादं तद्गुणं' । ५ 'धानात्' । ६ 'मानं'

प्तेजोवायुरिति चत्वारि भूतानि तत्त्वम्, तदात्मको देहः। स एव चात्मा, गच्छाम्यहं स्थूलोऽहम् गौरोऽहमित्यादिप्रतीतिदर्शनात्। वयउद्भेदे कामोद्भेदवत् पूर्वजन्मसंस्कारं विनाऽपि स्तनपानादौ प्रवृत्तिः। कामार्थावेव पुरुषार्थौ। न परलोको, न कर्म, न धर्मफलम्। अनुमानादि न प्रमाणम्, सम्भावनामात्रेण वह्न्यादौ प्रवृत्तिः, संवादेन च प्रामाण्याभिमानः। 'अहंपश्यामि, अहंशृणोमि' इत्यादिप्रतीतिबलादिन्द्रियाण्येव चेतयन्ते। तानि च गोलकादिलक्षणान्येवेति चार्वाकैकदेशिनः॥

अथ बौद्धमतम्। पञ्चस्कन्धात्मकं जगत्। रूपस्कन्धो, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, ज्ञानस्कन्धः, इति पञ्च। तत्र घटादिभावेन यावान् विषयः स रूपस्कन्धः। सुखदुःखे वेदनास्कन्धः। विषयाणामेव घटादीनां नामानि संज्ञास्कन्धः। रागद्वेषमोहाः क्लेशाःसंस्कारस्कन्धः। विषयोपलम्भो ज्ञानस्कन्धः। गन्धरूपरसस्पर्शशब्दलक्षणविषयपञ्चात्मकमेव जगत् नत्वन्यत्। तत्र गन्धरूपरसस्पर्शशब्दसंघातः पृथिवी; रूपरसस्पर्शशब्दसंघातो जलम्; रूपस्पर्शशब्दसंघातस्तेजः; स्पर्शशब्दसंघातो वायुः। रूपादिपरमाणुपुञ्ज एवावयवी क्षणमात्रवृत्तिः। प्रमाणम् प्रत्यक्षमनुमानम् द्वयमेव। ज्ञानविषयो द्विविधः, ग्राह्याध्यवसायभेदात्।

"अर्थक्रियासमर्थार्थप्राप्तिरध्यवसायकः।
व्यवहाराविसंवादिमिथ्याज्ञानं च नः[1] स्मृतिः।
पररूपं स्वरूपेण यया संव्रियते धिया।
एकार्थप्रतिभासिन्या तामाहुः संवृतिं किल" इति।

ज्ञानञ्च विषयाभिन्नम्[2] सहोपलम्भनियमात्; सहोपलम्भनियमान्न विषया एव ज्ञानाद्भिन्ना। ब्रह्माद्वैतम् यथा वेदान्तिनां तथा ज्ञानाद्वैतं सौगतानाम्। तत्र वैभासिकसौत्रान्तिकयोगाचारमाध्यमिकाश्चत्वारः सौगतप्रभेदाः। तत्र निराकारं ज्ञानं स्वजनकायतविषयम्, ज्ञानविषयौ क्षणिकौ इति वैभासिकाः। साकारं विज्ञानमाकारसारूप्याच्च विषयो भिन्नः सिध्यति, वर्तमानश्च विषयो ज्ञाने आकारधारकः; ज्ञानविषयौ च क्षणिकौ इति सौत्रान्तिकाः। ज्ञानमात्रं क्षणस्थायि, बाह्यमलीकमेव इति योगाचाराः। न ज्ञानम् न च बाह्यम्, अत एव न मानमेयव्यवस्था, किन्तु शून्यमेव जगदिति माध्यमिकाः। दुःखं समुदायो मार्गो निरोधश्चतस्र इति चित्तावस्थाः। तत्र फलभूता उपादानस्कन्धाः दुःखहेतुभूताः, समुदायो नैरात्म्यं क्षणिकता, साक्षात्कारो मार्गः, चित्तस्य क्लेशशून्यता निरोधः। अनादिभ्रमपरम्परा सूक्ष्ममात्रया स्थिता वासना, अहमित्याकारं विज्ञानमात्मा, स चालयविज्ञानप्रवाहः। अन्यस्तु प्रवृत्तिज्ञानप्रवाह इत्येके। प्रवृत्तिविज्ञानान्तःपाति एवालयविज्ञानमात्मेत्येके। एकसन्तानान्तःपातादेव कार्यकारणभावात्,

१ 'न'। २ 'विषयाद्भिन्नम्'।

प्रतिसन्धानार्थं वासनाक्लेशशून्या चित्तसन्ततिर्मुक्तिरिति वैभासिकाः । चित्तनिरोधो मुक्तिरिति योगाचाराः । निर्विषया चित्तसन्ततिर्मुक्तिरिति सौत्रान्तिकाः । आलोचनमेव प्रमाणम्, स एवानुभवः । सविकल्पकन्तु न प्रमाणम् । परस्परार्थसम्बन्धात् प्रवर्तक-संवादाच्च तत्र प्रामाण्याभिमानः ॥

अथ पाखण्डमतम् । स एव सोमसिद्धान्तः, वामकरानुसरेणायमूह्यः[1] । स्वातन्त्र्यम् मोक्षः, पारतन्त्र्यम् बन्धः, सुरासुरतसेवनं मुक्तिरिति ।

अथ दिगम्बरमतम् । दिगम्बरा एवार्हताः, त्रयीसंवरणशून्यत्वाद्दिगम्बरा, जीवाजीवाश्रय संवरनिर्जरबन्धमोक्षात्मकाः सप्त पदार्थाः । तत्र ज्ञानात्मको जीवः । स च विहङ्गमप्रकृतिः । स एवात्मा भुक्तिमुक्त्यादिभाजनम् । देहेनावृतत्वात् सम्यक् न चेतयन्ते इन्द्रियाणि चित्राणि । तेन तद्धर्मेण कदाचित् पश्यत्यपि ; यथा गृहस्थितो दीपो बहिरप्रकाशकः कदाचित् गवाक्षेण दर्शयत्यपि । अज्ञानरूपं यज्जडन्तदजीवम् इत्यर्थः । आश्रयौ धर्माधर्मौ । संवरः समाधिः । निर्जरो व्रतनियमादिः । तच्च केशोलुञ्चनमस्नानमलपङ्कधारणम् मौनम् वीरासनं तिक्तभोजनमित्याद्यात्मकम्[2] । बन्धः संसारः, तदत्ययो मोक्षः । सच शरीरावरणोच्छेदः, तत्र सार्वज्ञम् ॥ दिगम्बरभेदा एव क्षपणकश्वेताम्बरार्हतनीलाम्बररक्ताम्बरचर्माम्बरवर्हाम्बरप्रभृतयः । सर्वेषाममीषामहिंसा परमो धर्मः सुरापानं निषिद्धम् । कीर्तिदिङ्नागभदन्तज्ञानश्रीप्रज्ञाकरादयः सौगतप्रभेदाः ॥

अथ भट्टसिद्धान्तः । द्रव्यगुणकर्मसामान्यकाश्चत्वारः पदार्थाः न विशेषः समवायो वा पदार्थान्तरम् । शब्दो द्रव्यं सर्वगतो नित्यश्च श्रोत्रग्राह्यः, नादस्तस्यासाधारणो धर्मः ।

तमो द्रव्यान्तरम् । तदुक्तम् ।

"तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यात् नवभ्यो भेत्तुमर्हति" इति ।

तच्चालोकाभावसहकृतचक्षुर्वेद्यम् । गोलकाधिष्ठानतामसेन्द्रियवेद्यम् वेति तदेकदेशी मण्डनः । आकाशं रूपवत् चक्षुर्वेद्यम् । मनो विभु । विभ्वोरात्ममनसोः रजस्संयोगः । शरीरम् पाञ्चभौतिकम् । कर्णशष्कुल्यवच्छिन्नो दिग्भागः श्रोत्रम्, नत्वाकाशम् । द्रव्येण सह जातिगुणकर्मणाम् भेदाभेदः । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः षट् प्रमाणानि । शब्दस्थले पदार्थानां करणत्वम्, पदानामवच्छेदकत्वमात्रम् । तेन—

"पश्यतः श्वेतमारूपम् ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः" ।

कविकाव्यवचनहेतु संसर्गज्ञानं पदार्थैरेव चिन्तावशोपस्थापितैः क्रियते ; परम्परा शाब्दान्वयबोधे पदानामुपयोगोऽपि । तदुक्तम्—

---

१ 'वागकारानुसारेण', 'चार्वाकमतानुसारेण' । २ 'तिष्ठद्भोजन' ।

" न विमुञ्चति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
यज्ज्वलन्ति हि काष्ठानि तत्किम्पाकं न कुर्वते " ॥

पदार्थो जातिः, आक्षेपाल्लक्षणया वा व्यक्तेर्लाभः । तिङर्थस्तु भावना । सैव चाभिधा । तदुक्तम्—

" तिङोऽभिधा, सैव च शब्दभावना, भाव्या च तस्याः पुरुषप्रवृत्तिः ।
" सम्बन्धबोधः करणन्तदीयं, प्ररोचना चाङ्गतयोपयुज्यते " ॥

द्वयी भावना । एका प्रवृत्तिलक्षणा अन्या च प्रवृत्तेर्लिङ्पदेन यदभिधानम् । तथा च लिङ्पदाभिधेया पुरुषप्रवृत्तिरेव । तथा च क्रतुप्रवृत्तिं यजेतेति लिङभिधत्ते, इत्यभिधेयाभिधेययोर्भावनाभाव्ययोर्यः सम्बन्धबोधः स प्रवृत्तिकारणम् । प्ररोचना स्तुतिः । सा च प्रवृत्तिप्रत्यङ्गं, स्तूयमानं श्रद्दधीत । तेन श्रद्धोत्पादनद्वारा वा स्तुतेरङ्गत्वम् । अपूर्वं कल्प्यम्, न तु वाच्यम् । तच्चायोग्यरूपतया फलपर्यन्तस्थायिनी यागादिक्रियैव । न तु तदतिरिक्तेऽपूर्वे प्रमाणमस्ति । यागादिक्रियाया आशुतरविनाशित्वम् प्रत्यक्षरूपतया । अतएव तदनन्तरं तस्या एव क्रियायाः क्वचिददृश्यमानतयाऽदृष्टापूर्वादिपदवाच्यत्वम् । मुक्तिस्तु नित्यनिरतिशयसुखाभिव्यक्तिः, 'आनन्दम् ब्रह्मणो रूपम्' इत्याद्यागमप्रामाण्यात् । वेदश्च न पौरुषेयः ; "होलाकाः कार्याः" इत्यादिव्यवहाराणां "अष्टका कर्तव्या" इत्यादिस्मृतीनां च अविगीतार्थानां मूलभूताः शाखाः प्रच्छन्नाः, न तूच्छिन्नाः, न वा नित्यानुमेयाः । प्रच्छन्नत्वं च सम्प्रति भारतखण्डेऽध्ययनाविषयत्वमित्यादि ॥

अथ गुरुमतम् । प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः प्रमाणानि । प्रत्यक्षम् मितिमातृमेयाङ्गविषयम् । एतदेव त्रिपुटीप्रत्यक्षम् । तथा चायं घट इति ज्ञानस्य घटमहंजानामीत्याकारः ज्ञानस्य स्वप्रकाशत्वात् । ज्ञानोपरक्तात्मभानसामग्री च ज्ञानसामग्र्येव । अनुमित्यादीनामपि प्रमात्रंशे प्रमित्यंशे च प्रत्यक्षत्वम् । मेयांशत्वे च परमनुमानत्वम् । साक्षाद्धीः प्रत्यक्षम् । प्रामाण्यमपि ज्ञानवित्तिवेद्यम् । तदेव च स्वतस्त्वम् । तच्च सर्वेषामेव ज्ञानानाम् । विशिष्टज्ञानञ्च विशेषणज्ञानजन्यम् ; विशिष्टवैशिष्ट्यज्ञानन्तु विशेषणतावच्छेदकप्रकारकज्ञानजन्यम्; अतएव न[1] निर्विकल्पकं ज्ञानान्तरं ॥ अनुमानन्तु व्याप्तिज्ञानपक्षधर्मताज्ञानाभ्याम् विशकलिताभ्याम् जन्यते, न तु तृतीयलिङ्ग परामर्शरूपम् । विशिष्टज्ञानप्रमाणसिद्धम् तज्जनकादेवानुमितिसम्भवात् । अतएव नोपनयोऽप्यवयवान्तरम् । व्याप्तिश्च सकृद्दर्शनगम्या उपाध्यभावस्याधिकरणलक्षणस्य सकृद्दर्शनेनैव ज्ञानात् । अनौपाधिकत्वमेव व्याप्तिः ; सा च धूमत्वेन प्रत्यक्षधूममात्रे गृह्यते, न तु सामान्यलक्षणया धूममात्रे, तस्या मानाभावात् । अनुमितिर्व्यापकतावच्छेदकप्रकारेण

१ 'अतएव निर्विकल्पकज्ञाना' ।

पक्षधर्मस्य भानात्, न तु व्याप्यत्वज्ञानात् ॥ शब्दो वेद एव स्वातन्त्र्येण प्रमाणम्, न तु लौकिकोऽपि, तस्य पौरुषेयत्वेन भ्रमा दिजन्यत्वशंकया ऽन्वयानुपस्थापकत्वात् । एतानि पदानि[1] स्मारितार्थसंसर्गज्ञानपूर्वाणि, आकांक्षादिमत्पदकदम्बकत्वात् गामभ्याजेति पदकदम्बवदित्यनुमानात् । एवं[2] ज्ञानावच्छेदकतया संसर्गे सिद्धेः पश्चात् सम्भृतसामग्रीकतया शब्दोऽनुवादकः । उपमानन्तु सन्निकृष्टसादृश्यज्ञानफलकं सादृश्यस्य पदार्थान्तरस्य प्रमाणान्तरावेद्यत्वादिति प्राञ्चः ; सन्निकृष्टप्रतियोगिकमसन्निकृष्टसादृश्यमुपमानगम्यमिति शाबरस्वामिनः । सा गौरेतत्सदृशीति ज्ञानस्य प्रत्यक्षाद्यसाध्यत्वात् सप्रतियोगिकपदार्थान्तरज्ञानानन्तरं तत्प्रतियोगिकपदार्थज्ञानमेवोपमानफलमिति तदेकदेशिनः । तेन वंशात् ह्रस्व इक्षुरिति ज्ञानानन्तरम् 'इक्षोर्वंशो दीर्घः' इत्यादिज्ञानमप्युपमानफलमेव ॥

ननु का व्याप्तिः ? कथं तद्ग्रहः ? क उपाधिः ? किमस्य दूषकताबीजम् ? के चोपाध्याभासाः ? कश्च न्यायः ? के तदवयवाः ? किमीश्वरे प्रमाणम् ? का च मुक्तिः ? किम्प्रमाणम् ?

उच्यते । यत्समानाधिकरणान्योन्याभावप्रतियोगि यन्न[3] भवति तेन समं तस्य सामानाधिकरण्यम् व्याप्तिः । तथा च यत्समानाधिकरणान्योन्याभावाप्रतियोगि यद्वत्कत्वम् पर्यवस्यति । नहि भवति यो धूमवान् स न वह्निमान्, अपि तु धूमवान् वह्निमान् एवेति । अन्योन्याभावगर्भा चेयम् व्याप्तिः । अस्या एव ज्ञानमनुमितिकरणम् । यद्वा प्रतियोगिव्यधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यम् व्याप्तिः । इदं संयोगि द्रव्यत्वादित्यत्र संयोगात्यन्ताभावसामानाधिकरण्यं द्रव्यत्वस्येत्यव्याप्तिः । अत उक्तम् प्रतियोगिव्यधिकरणेति; तच्चात्यन्ताभाव विशेषणम् । इदं संयोगि सत्त्वादित्यत्र कर्मणि संयोगाभावः प्रतियोगिव्यधिकरण एव अवच्छेदकभेदेन एकस्यात्यन्ताभावप्रतियोगिवैयधिकरण्यसामानाधिकरण्ययोः सम्भवात् वस्तुगत्या एकसंयोगाभावस्थले संयोगान्तरसत्त्वान्न तत्राव्याप्तिरिति विशेषणमनुपयुक्तमेव । अवच्छेदकावच्छिन्नेति सामान्याभावद्योतनाय । तेन[4] न किञ्चिद्विशेषाभावमादायासिद्धिः, यत्सम्बन्धितावच्छेदकावच्छिन्नं यस्य रूपं तस्य सा व्याप्तिः । यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य रूपमित्येके । साध्याभाववदवृत्तित्वमव्यभिचारः, अव्यभिचारित्वमेव च व्याप्तिः । अवृत्तिगगनादेर्व्याप्तिसत्वेऽपि पक्षधर्मताया असत्त्वात् न तल्लिङ्गतेति न्यायलोचनकृतः । यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं व्याप्तिलक्षणम् । स्वं साधनं व्यभिचारि येभ्यः ते स्वव्यभिचारिणः, साधनाव्यापका इति यावत्, तान् व्यभिचरितुं शीलं यस्य इति स्वव्यभिचारि-

---

१ 'लिङ्गपदानि' । २ 'यत्तु' । ३ 'यद्व' । ४ 'तेनकिञ्च' ।

व्यभिचारि, तेन यावत्साधनाव्यापकाव्याप्यसाध्यसामानाधिकरण्यमित्यर्थः । ध्वंसो ध्वंसप्रतियोगी जन्यत्वात् इत्यत्र भावत्वोपाधौ नैतदतिव्यापकं, यावत्साध्येनैव साधनव्यापकेन स्वव्याप्येन हेतोः सामानाधिकरण्यात्। अव्यभिचारित्वमनौपाधिकत्वम्॥ स्वाभाविकमविनाभूतत्वम् वा तल्लक्षणम्। तस्य तस्यामेव तात्पर्यम्। वह्निव्याप्यधूमवानयमिति परामर्शस्वरूपमिति सम्प्रदायः। धूमव्यापकवह्निमानयमित्याकार एव तृतीयलिङ्गपरामर्श इत्येके। पर्वते वह्निव्याप्यो धूमः इत्ययमपि परामर्श इत्यन्ये॥

व्याप्तिग्रहश्च व्यभिचारादर्शनसहचारदर्शनाभ्याम्। दर्शनस्याशुविनाशित्वेऽपि तज्जन्यसंस्कारसहकृतेनेन्द्रियेण सामान्यलक्षणप्रत्यासत्त्या सन्निकृष्टासन्निकृष्टयावद्धूमगता व्याप्तिर्गृह्यते। तथा हि बहुधा वह्निसाहित्येन धूमदर्शनानन्तरं क्वचिद्धूमे चक्षुस्सन्निकृष्टे तत्समवेतधूमत्वविशेषणीभूतानामतीतानागतसकलधूमव्यक्तीनामुपस्थितः सर्वो धूमो वह्निव्याप्य इत्येव व्याप्तिः सकलधूमगता परिगृह्यते। यद्वा प्रत्येकधूमनिष्ठा प्रत्येकवह्निनिरूपिता एव व्याप्तयो व्याप्तित्वेन भासन्ते। व्यभिचारशङ्का तर्कापनेया, तर्कमूलभूतव्याप्तावपीत्थमेव व्यभिचारशङ्कानिवृत्तिः, यावदाशङ्कंतर्कप्रवृत्तेः। केचित्तु स्वक्रियाव्याघातादिना शङ्कैव नोदेतीति नानवस्था। अनादिसिद्धव्याप्तिका एव केचित्तर्का इति न व्यभिचारशङ्का इत्येके। विषमञ्चानादिनाऽपि शङ्कानिवृत्तिरिति नानवस्थेत्यन्ये॥ मीमांसकास्तु सकृद्दर्शनगम्यां व्याप्तिम् मन्वते, अनौपाधिकत्वस्योपाध्यभावस्वरूपस्य धूममात्रग्रहादेव ग्रहात् अभावस्याधिकरणानतिरेकादिति तात्पर्यादिति दिक्॥

उपाधिस्तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकः। पर्यवसितत्वन्तु साधनधर्मावच्छिन्नत्वपक्षधर्मावच्छिन्नत्वान्यतरत्वम्। यदवच्छेदेन साध्यं प्रसिद्धम् तदवच्छिन्नं साध्यम् पर्यवसितमित्येके। पक्षीयतयाऽभ्युपेतधर्मसामानाधिकरण्यं पर्यवसितमित्यपरे। साधनव्यापकधर्मावच्छिन्नत्वं पर्यवसितत्वमित्यन्ये। यद्वा यद्व्यावृत्त्या यस्य साधनत्वस्य साध्यम् व्यावर्तते स तत्रोपाधिः। व्यावर्तते हि आर्द्रेन्धनव्यावृत्त्या वह्नेः साधनस्यायोगोलके साध्ये धूमः। यद्वा व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वम् स धर्मस्तत्रोपाधिरित्येके। साध्यसाधनसम्बन्धव्यापकत्वेसति साधनाव्यापकत्वमुपाधित्वम्। यदभावो व्यभिचारविरोधी स धर्म उपाधिरिति समव्याप्तोपाधिवादिनः। यस्य साधनाव्यापकत्वाभावो व्यभिचारविरोधीत्यर्थः। नहि विषमव्याप्तस्य प्रमेयत्वादेः साधनव्यापकत्वाभावो व्यभिचारं विरुणद्धि॥

"शब्दोऽनित्योगुणत्वादित्यत्र विषमव्याप्तस्य प्रमेयत्वादेः साधनाव्यापकत्वाभावे जलपरमाणुरूपादौ व्यभिचारसत्त्वात् समव्याप्तोपाध्यभावेऽपि प्रकृतेव्यभिचारोऽस्तीति न तदभावोऽपिन व्यभिचारविरोधी" इति चेन्न, अत्रान्तः साध्यतः साध्यमप्युपाधिः। भवति हि

१ यावदित्यारभ्य व्यापकमित्यन्तं वाक्यं द्वितीयपुस्तके नास्ति॥

साध्यम् साध्यस्य व्याप्यम् व्यापकम् च साधनाव्यापकञ्चेति । तथा चोक्तम् तद्धर्मन्तत्रा हिव्याप्तिः साधनत्वाभिमते चकास्त्युपाधिरसाचु च्यवते पक्षसाध्याविनाभावे मिथःसम्बन्ध शून्ययोः साध्याभावाविनाभावी उपाधिर्यंदत्यय' इति[1] ॥ स चायन्द्विविधः, निश्चितः सन्दिग्धश्च । तत्राद्यः साध्यव्यापकत्वसाधनाव्यापकत्वकोटिद्वयनिश्चयाधीनः । द्वितीयस्तु तदेकतरकोटिसन्देहादुभयकोटिसन्देहाद्वा, न च भविष्यति कश्चिदत्रोपाधिः इत्याकारः सकलानुमानोपप्लावकत्वात्, स्वव्याघातकत्वेन जात्युत्तरत्वाच्च । उदाहरणम् [2]अनुमानमयूखे द्रष्टव्यम् । दूषकत्वञ्चास्य स्वातन्त्र्येणेवेत्येके, स्वव्यतिरेकद्वारा सत्प्रतिपक्षतयेत्यपरे । व्यापकानुपलब्धिबाध इत्यपरे । व्यभिचारोन्नायकतयेति साम्प्रदायिकाः । व्याप्तिग्रहप्रतिबन्धकतया व्याप्यत्वासिद्धिमुखेनेतितु सारम् । व्यभिचारोन्नयनञ्च—वह्निमत्त्वम् धूमत्वव्यभिचारि धूमत्वव्यापकार्द्रेन्धनव्यभिचारित्वात्, यद्यद्व्यापकव्यभिचारि तत्तद्[3]व्याप्यव्यभिचारीति व्याप्त्यवधारणात् । वह्निमत्त्वं धूमत्वाव्याप्यम् तद्व्यापकार्द्रेन्धनाव्याप्यत्वात्, यद्धि यद्व्यापकाव्याप्यम् तत् तदव्याप्यम् । इत्यसिद्ध्युन्नयनप्रकारः। पक्षेतरत्वन्तुनोपाधिः साध्यव्यापकतासन्देहेन साध्यव्यापकव्यभिचारित्वस्य हेतोर्व्यभिचारानुन्नायकत्वात् सत्प्रतिपक्षतया चासाधारणत्वात्। सन्दिग्धोपाधिरपि न, स्वव्याघातकत्वात् । बाधोन्नीतपक्षेतरस्य तु साध्यव्यापकत्वनिश्चयेनोपाधित्वमेव ; यत्र न पक्षवृत्तिर्हेतुः, यथा "वह्निरनुष्णः कृतकत्वात्," इत्यादौ, अत्र हि बाधेनानुमाने दूषितेऽप्यवच्छेदकाभेदार्थमुपाधेरावश्यकत्वात् । नह्येकस्य कृतकत्वस्यावच्छेदकभेदं विनोष्णत्वाभ्यां सामानाधिरण्यं सम्भवति व्यभिचारेऽप्युपाधेरावश्यकतायामिदमेव मूलम्। तदुक्तम् 'उपाधिना चोपाधिरुन्नीयताम् अन्यथा वेति न कश्चिद्विशेष', इति पर्यवसितसाध्यव्यापकोपाधिस्थलेऽपि विशेषणाव्यभिचारिणि विशिष्टव्यभिचारः सिध्यन् विशेष्यव्यभिचारमादाय सिध्यतीति पक्षधर्मताबललभ्येऽर्थे [4]नार्थान्तरावकाशः । यद्वा मित्रातनयत्वम् [5]श्यामत्वव्यभिचारि, मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयव्यापकव्यभिचारित्वात् घटत्ववदिति केवलसाध्यव्यभिचार एव साध्यः । एतद्रहस्यञ्चानुमानमयूखेऽन्वेषणीयम् ॥

अथोपाध्याभासाः । असाधारणविपर्ययो यथाऽन्वयव्यतिरेकिणि साध्ये बाधा[6]नुन्नीतपक्षेतरः । भवति पर्वते पर्वतेत[7]रान्यत्वम् सकलसपक्षविपक्षव्यावृत्तत्वादसाधारणम् अतएव तद्व्यावृत्त्याऽपि साध्यं न व्यावर्तते इति तस्योपाध्याभासत्वम् । अप्रसिद्धसाध्यविपर्ययो यथा केवलान्वयिसाध्ये पक्षेतरादिरेव । यथा 'शब्दः प्रमेयो गुणत्वात्,'

---

१ अत्र पाठस्त्रुटित इवाभाति । अस्य ग्रन्थस्य द्वितीयपुस्तकेऽसत्त्वादपूरणीयेयंत्रुटिः ॥ २ 'अश्वमुखेऽन्वेष्टव्यंद्रष्टव्यम्' । ३ 'तत्तद्' । ४ 'लभ्योऽनुमान्तरत्वावकाशः । ५ 'नश्याम' । ६ बाधेनोन्नीतान्यपक्षेतरः । ७ 'तेषामन्यत्वं' ।

इत्यत्र शब्दाप्रमेयत्वसाधनायोपादीयमानः शब्देतरत्वादिः । बाधितसाध्यो यथा वह्निरुष्णस्तेजस्त्वात् इत्यादावकृतकत्वादि अत्रोष्णव्यतिरेकस्यानौष्ण्यस्य तेजसि बाधितत्वात् । पक्षव्यावर्तकविपर्ययो यथा, 'क्षित्यादि सकर्तृकम् कार्यत्वात्' इत्यत्र अणुव्यतिरिक्तम् । अणुव्यतिरिक्तत्वस्य हि व्यतिरेकः क्षित्याद्येकदेशद्व्यणुकमात्रगतत्वात् भागासिद्धः । पूर्वसाधनव्यतिरेको यथा क्षित्यादि सकर्तृकं कार्यत्वात् इति स्थापनायां 'क्षित्यादिकं न सकर्तृकम् अशरीरिकर्तृकत्वात्' इति प्रतिरोधे अकार्यत्वमुपाधिः । अत्र साध्यव्यापकताग्राहकमानाभावादिना आभासत्वम्, न तु स्वरूपत इत्यवधेयम् । पूर्वसाधनव्याप्यव्यतिरेको यथा तत्रैव अकर्तृकत्वानुमाने[१] ऽनित्यत्वादिः । पक्षविपक्षोभयान्यरान्यः प्रसिद्धानुमाने पर्वतजलह्रदान्यतरत्वम् । पक्षेतरसाध्याभावो,[२] यथा प्रसिद्धानुमान एव पर्वतेतराग्निमत्वम् । तुल्यजात्यादयो यथा तत्रैव पर्वतेतरेन्धनवत्त्वम् । आदिपदात् वह्निसामग्रीमत्वादिक[३]मूह्यम् ॥

हेतुश्च व्याप्तिविशिष्टः पक्षधर्मः । स च त्रिविधः । केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र केवलान्वयी द्विरूपः । सपक्षव्यापकः, यथा घटोऽभिधेयो मेयत्वात् इत्यादि । सपक्षैकदेशवृत्तिः, यथा घटोऽभिधेयो घटत्वात् इति । हेतोश्च केवलान्वयित्वमेतदेव यत्केवलान्वयिसाध्यत्वम् । तदुभयथाऽपि सम्भवति । केवलान्वयिनि साध्यसामानाधिकरण्यमात्रम्, अन्यत्र साध्यवदन्यावृत्तित्वम् । व्याप्तेरननुगमेऽपि पक्षधर्मतारूपानुगतकारणादेवानुमित्यनुगमः । व्याप्त्यननुगमकत्वं त्वनुमितिद्वयवैलक्षण्यमिष्टमेवेति वदन्ति । केवलान्वयित्वञ्च सर्वधर्मिगतत्वम् । तेनाकाशाद्यत्यन्ताभावाश्रयनाशजन्य[४]गुणनाशात्यन्ताभावादीनामपि केवलान्वयित्वमिति सम्प्रदायः । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति चिन्तामणौ । केवलान्वयिनश्च हेतोः पक्षसत्त्व[५]सपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वार्येव रूपाणि, न तु विपक्षासत्त्वमपि । विपक्षाभावेन तन्निरूपणाभावात् । केवलव्यतिरेकी तु यस्य व्यतिरेकसहचारमात्रम् प्रसिद्धम् नत्वन्वयसहचारोऽपि । तेन व्यतिरेकसहचारेणान्वयव्याप्तेरेव गृह्यते । [६]न चातिप्रसङ्गः, प्रतियोगिकाभावस्य नियामकत्वात् इत्येके । व्यतिरेकव्याप्तेरन्वयव्याप्तिव्याप्त्या न्याय्यत्वात् । तदुक्तम्—

नियम्यत्वनियन्तृ[७]त्वे यादृशी भावयोर्मते ।
त एव विपरीते तु विज्ञेये तदभावयोः । इत्यपरे

व्यतिरेकव्याप्तिरेवानुमापिकाऽत्रानुमितिवैलक्षण्यकल्पनाच्चनाननुगम इत्यन्ये । अतः

---

१ 'बाधकत्वानुमाने' । २ 'साध्याधारः' । ३ 'वह्निमत्त्वादिक' । ४ 'नाशाश्यगुण' । ५ 'पक्षसत्त्वाबाधित्वासत्प्रतिपक्षितत्वाभितत्वानि' । ६ 'न' इत्यारभ्य 'इत्येके' इत्यन्त पाठो द्वितीय पुस्तकेनास्ति । ७ 'नियोक्तृ' ।

साध्याप्रसिद्धिर्वैधर्म्यम् [1]व्यापितोपनयस्य च
अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम्

इत्यपास्तम्, अन्वयास्फुरणदशायां व्यतिरेकिणः सावकाशत्वात् । साध्यप्रसिद्धिस्तु सामान्यतोऽपि सम्भवति, प्रकारमात्रार्थम् व्यतिरेक्यवतारात् । अन्वयव्यतिरेकी स यत्रान्वयव्यतिरेकाभ्यामविनाभावनिश्चयः, यथा धूमादिः ॥

हेत्वाभासाश्च सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः प्रथमोल्लास एवोक्ताः ॥

ननु बाधः कथम्पृथक्, आश्रयासिद्धिव्यभिचारयोरेवान्तर्भावसम्भवः । उच्यते—उपजीव्यत्वात् बाधः पृथक्, पक्षे साध्याभावग्रहणमन्तरेण हेतोः साध्याभावसामानाधिकरण्याग्रहात्, पक्षे च साध्याभावप्रमैव बाधः—इति नाश्रयासिद्धावन्तर्भावः । बाधस्थले पक्षतयोः सत्त्वात् । सिषाधयिषाविरहसहकृतसाधकमानाभावो यत्र स पक्षः । तथा च यत्र साधकमानं सिसाधयिषा च तत्र पक्षत्वम् । यथाऽऽत्म[2]मननस्थले । यत्र साधकमानं नास्ति, किन्तु सिषाधयिषामात्रम्, तत्रापि पक्षता यथा प्रसिद्धानुमाने । यत्र न सिषाधयिषा न वा साधकमानम्, तत्रापि पक्षता, यथा घनगर्जितस्थले । बाधेऽपि साधकमानाभावाधीना पक्षताऽस्त्येवेति, न पक्षधर्मतासाङ्कर्यमित्येके । [3]उद्देश्यसाध्यवत्त्वनिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभावो यत्र स पक्ष इति जीवनाथमिश्राः । तन्मते च सम्प्रदायानुसारिणि बाधस्थले पक्षधर्मतासाङ्कर्येऽप्युपजीव्यत्वादेव पृथक् बाधः ॥ साध्यात्यन्ताभावसामानाधिकरण्यं सव्यभिचारः तेन गन्धप्रागभावावच्छिन्ना पृथिवी गन्धवती पृथिवीत्वात् इत्यत्र गन्धप्रागभावाच्छिन्नायां पृथिव्यां गन्धात्यन्ताभावविरहात् सामानाधिकरण्यघटितव्यभिचारा[4]भावादत्रैव[5] बाधः पृथक् इत्येके । साध्याभावसामानाधिकरण्यमात्रं व्यभिचारः । किञ्च गन्धप्रागभावच्छिन्नपृथिव्यां गन्धात्यन्ताभाव एव इति नायम् पन्था इति जीवनाथमिश्राः । [6]साध्याभावप्रसाधकप्रमा च स्वरूपसत्यैवानुमितिप्रतिबन्धिकेति सम्प्रदायः । प्रमाऽपि ज्ञातैवानुमितिप्रतिबन्धिका इति चिन्तामणौ । न्यायश्चानुमितिचरमकारणतृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम् । वह्निव्याप्यधूमवानयमित्याप्तवाक्यादाहत्य चरमपरामर्श एव [7]जायत इति न तत्रातिव्याप्तिः । इदमपि वाक्यन्न्यायएव कण्टकोद्धारस्य संक्षेपविस्ताराविव न्यायस्यापि तावित्येके ॥

ननु का शाब्दानुभवसामग्री ? उच्यते—(१) आकांक्षा तावत्, सा च श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभाव इत्युदयनाचार्याः । षडङ्गो वेदोऽध्येतव्य इत्यादिवेदवाक्ये

१ 'व्यर्थतोपनयस्य' । २ 'मननस्थले' । ३ 'उत्पाद्य' । ४ 'व्यभिचार' । ५ 'वं' ।
६ 'साध्याभावप्रमाबाधः प्रमा च स्वरूपसत्यव' । ७ 'जन्यते' ।

षडङ्गाध्ययनपूर्वकवेदाध्ययनङ्कर्तव्यमित्यवगम्यते, न अर्थज्ञानस्प्रति शाब्दज्ञानस्य कारणत्वेन व्याकरणशास्त्राध्ययनपूर्वकवेदाध्ययनं विहितमिति सांख्यतत्त्वविदः प्राचीना अपि। नवीनास्तु अभिधानापर्यवसानमाकांक्षा; तच्च येन विना यस्य न स्वार्थान्वयानुभावकत्वम् तदिति टीकाकृतः। (२) योग्यता च। सा चानन्वयनिश्चयविरह इत्येके। सजातीयान्वयदर्शनमित्यन्ये[1]। बाधकप्रमाणाभाव इत्यपरे। इतरपदार्थसंसर्गे ऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमा[2]विशेष्यत्वाभाव इति चिन्तामणिकृतः। (३) आसत्तिश्च। सा चाव्यवधानेनान्वयप्रतियोगिस्मृतिः।

ननु कथं व्युत्पत्तिः? कश्च नामार्थः आख्यातार्थो वा? कश्च समासार्थः?

उच्यते व्युत्पत्तिः खलु शक्तिग्रहः[3]। स च क्वचिद्व्यवहारात्, यथा घटमानयेति प्रयोजकवृद्धोदीरितशब्दश्रवणानन्तरं प्रयोज्यवृद्धस्य घटानयनव्यवहारमुपलभमानो बाल इयमस्य प्रवृत्तिः ज्ञानसाध्या प्रवृत्तित्वात्, अस्मत्प्रवृत्तिवदित्यनुमाय—यदस्य प्रवर्तकं ज्ञानं तदेतदुदीरितशब्दजन्यम्, कारणान्तरानुपपत्तौ सत्याम् एतदनन्तरभावित्वात् इति द्वितीयानुमानानन्तरम्—'घटमानय, घटेन जलमाहर, घटं पश्य' इत्यादिवाक्येषु घटपदस्य [4]कम्बुग्रीवादिवदनुप्रवृत्तिदर्शनादावापोद्वापाभ्याम् अयं खलु कम्बुग्रीवादिमानर्थो घटपदवाच्यइत्युच्यते॥ क्वचित् प्रसिद्धपदसामानाधिकरण्यात्। यथा 'प्रभिन्नकमलोदरे मधूनि, मधुकरः पिबति,' यथा वा 'इह सहकारतरौ मधुरम्पिको रौति,' इत्यादौ प्रभिन्नपदार्थकमलपदार्थमधुपदार्थेषु व्युत्पन्नस्यायं जन्तुविशेष इह मधु पिबन् दृश्यते, तथा च ज्ञातमयमेव[5] मधुकरपदार्थ इति शक्तिग्रहः। स चायमनुमानात्। यो यः प्रभिन्नकमलोदरमधुपानकर्ता स मधुकरपदार्थ इति व्याप्तेर्वाक्यादुपस्थितेः। यद्वा शाब्दव्यापार एवायम्। प्रभिन्नकमलोदरमधुपानकर्तृत्वोपलक्षणस्य शब्दादुपस्थितेः॥ क्वचिदुपमानात्—'यथा गौस्तथा गवयः,' 'यथा मुद्गस्तथा मुद्गपर्णी' 'यथा माषस्तथा माषपर्णी'—इत्यादावतिदेशवाक्यश्रवणानन्तरं वनं गतो नागरिको गोसदृशं मुद्गसदृशम् मासदृशम् वस्तूपलभ्य गवयपदवाच्यमिदम्मुद्गपर्णीपदवाच्यमिदम्माषशब्दवाच्यमिदमिति प्रत्येति। प्रमाणान्तरञ्चात्र न प्रभवतीत्युपमानमिह प्रमाणम्। पदार्थान्तरस्य सादृश्यस्य प्रमाणान्तरगम्यपरिच्छेदकमुपमानम् प्रमाणमिति शाबरमतम्। गवयगतं सादृश्यम् प्रत्यक्षमेवातो गवयसदृशी गौरितियसन्निकृष्टसादृश्यज्ञानमुपमानमिति नवीनमीमांसकमतम्। तदुभयमप्यनुपपन्नम्, सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य प्रतियोगिस्मरणसापेक्षचक्षुर्वेद्यतया तदर्थम् प्रमाणान्तरकल्पनानवकाशात्। असन्निकृष्ट-

---

१ 'सजातीये दर्शन'। २ 'भावप्रमा'। ३ 'शक्तिः साच'। ४ 'कम्बुग्रीवार्थाचरप्रवृत्तिदर्शनात्'। ५ 'तथा चन्दनमयमेव,' 'तथा स्नानमयमेव'।

सादृश्यज्ञानस्य प्रत्यक्षफलत्वात्। किञ्चिद्विशेष्यासन्निकर्षे ऽप्ययं स इति भ्रान्तविपरीतप्रत्यभिज्ञानवत् किञ्चिद्विशेष्यसन्निकर्षादपि प्रत्यक्षसम्भवात्। तदुक्तम्—'यावत्[1]प्रत्येतव्येन्द्रियसन्निकर्षः कारणम्'। सा गौरेतत्सदृशी, एतन्निष्ठसादृश्यप्रतियोगित्वात्, यत् यन्निष्ठसादृश्यप्रतियोगि तत्तेन सदृशम्, यथा भ्राता भगिनी, इत्यनुमानमत्र प्रमाणयन्ति। तस्मात् संज्ञासंज्ञिसम्बन्धपरिच्छेद एवोपमानफलम्, करण तु ज्ञायमानं गवयगतं गोसादृश्यमित्याचार्याः। गवय एव सादृश्यविशिष्टतया ज्ञायमानः करणमित्येके। सादृश्यज्ञानं करणमित्यपरे। शब्दांशे[2] सादृश्यज्ञानं करणम् प्रात्यक्षिकं[3] तद्व्यापार इत्यप्याहुः। एवं[4] धीकरभवं अतिदीर्घभावमित्यादिवैधर्म्योपमानादपि शक्तिग्रहोऽवसेयः। क्वचिच्च वाक्यादपि शक्तिग्रहः। यथा कम्बुग्रीवादिमानयमर्थो घटपदवाच्यः, यथा वा सास्नादिमानर्थो गोपदवाच्य इत्यादौ, यथा वा इन्द्रः सहस्राक्षः इत्यादौ। क्वचिदर्थवादात्। यथा यन्न दुःखेन सम्भिन्नन्न च ग्रस्तमनन्तरम् अभिलाषोपनीतञ्च तत्पदं स्वःपदास्पदमित्यादौ। क्वचिच्चवाक्यशेषात् शक्तिग्रहः। यथा यवमयश्चरुर्भवति, वाराही चोपानत्, वेतसे कटे प्राजापत्यं सञ्चिनोति—इत्यत्र यववाराहवेतसशब्दाः कंगुवायसजम्बूनां वाचका उत दीर्घशूकसूकरवञ्जुलानां इति म्लेच्छार्यव्यवहारवैचित्र्यदर्शनाद्विप्रतिपत्तौ मुख्यार्थानध्यवसायात् वेदप्रामाण्यसंशये 'वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशमालिनः,' 'वाराहं गावोऽनुधावन्ति' 'अप्सुजो वेतस'—इत्यादयो वाक्यशेषाः[6] कंगुवायसजम्बुषु म्लेच्छप्रसिद्धिमपोद्यार्य्यव्यवहारात् निःपरिपन्थिनः शक्तिं ग्राहयन्ति॥

पदानामपञ्चधा पदार्थेषु प्रवृत्तिः। क्वचिच्छ[7]ब्दग्राहिकतया, देवदत्तादिपदवत्। क्वचित्तटस्थोपलक्षणतया, आकाशादिशब्दवत् अत्र हि शब्दाश्रयत्वमुपलक्षणम् तच्च तटस्थम्, तटस्थत्वं चातत्पदानभिधेयत्वे सति तत्पदार्थावच्छेदकत्वम्, तेनाकाशादिपदात् निर्विकल्पकमेवेत्येके। संस्कारवशादयमर्थोऽपि शब्दाश्रयत्वम् भासते इत्यन्ये। शब्दाश्रयत्वमप्याकाशपदवाच्यमेवेत्यपरे। क्वचिदन्तर्भूतोपलक्षणे[8], पाचकादिपदवत्। क्वचित् सप्रवृत्तिनिमित्ता, गवादिपदवत्। प्रवृत्तिनिमित्तत्वन्तु शक्यवृत्तित्वे[9] स्वभिन्नशक्यानधिकरणत्वम्। क्वचित् निमित्तसंकोचनिकारो स्वर्गादिपदवत्। अत्र सुखत्वमेव प्रवृत्तिनिमित्तम् दुःखासम्भिन्नत्वादिना संकुचितम्॥

शक्तिश्च पदानां पदार्थमात्रेणान्विते, अन्वयांशेऽपि शक्तिकल्पने गौरवात्, तद्वृत्ति आकांक्षादिमत्पदकदम्बकमहिम्नैवोपस्थितेः। न चान्वये तात्पर्यम् वृत्तिं विना न निर्वहतीति

---

१ 'नहि यावत्'। २ 'शाब्द'। ३ 'त्वि'। ४ 'धिक्करम्भ्रमति दीर्घं दीर्घग्रीवमित्यादि'। ५ 'वैतत्सकवै प्रजापत्यं धिनोति' ६ 'अर्थवादाः' ७ 'क्वचिच्छब्द ग्राहकतया' ८ 'दन्तभूतेऽपि-लक्षणा' ९ 'शक्यत्वे शक्यवृत्तित्वे स्वभिन्नवाक्यानधिकरणत्वम्'।

अन्वयांशेऽपि वृत्तिकल्पनमिति वाच्यम्, पर्वते धूमोऽस्तीति वाक्ये वह्नौ तात्पर्यस्यानुमानेनैव निर्वाहात्। एवं—

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्'—

इत्यत्र[1] गमनस्य प्रियामरणहेतुत्वात् गमनं मया न कर्तव्यम् प्रियामरणहेतुत्वादित्यनुमानादेव निर्वाह्यते। न चान्वयांशे लक्षणेति वाच्यम्, शक्त्या साक्षाद्वा प्रमाणान्तरोत्थापनाद्वा तात्पर्यानिर्वाहे लक्षणाकल्पनात्। प्रकृते त्वाकांक्षाद्युपेतानि पदान्येव ज्ञायमानान्यन्वयमशक्यमपि बोधयन्तीति न लक्षणा।

पदज्ञानमन्वयबोधकम्। न तु ज्ञायमानः पदार्थः पदार्थज्ञानं वा, भट्टानामिव। तथा सति गौःकर्मत्वमानयनं कृतिरित्यत्र पदार्थज्ञानादन्वयबोधापत्तिः। न च यथा 'रामो राजा बभूवे' त्यादौ पदार्थज्ञानादन्वयधीस्तथा पदार्थज्ञानात् प्रकृतेऽपीति वाच्यम्। तत्रापि कविकाव्यस्थले मानस एव संसर्गानुभवो मनसश्चोत्प्रेक्षैव सहकारिणीति न बहिर्विषये तस्य स्वातन्त्र्येणोपस्थितिः, सा च निर्व्यापारा सहकारिणीति। एवञ्च न पञ्चमप्रमाणापत्तिः। श्वेतोऽश्वो धावतीति धीरपि लिङ्गजन्यैवेति न पदार्थः करणम्।

पदार्थश्च जातिरिति भाट्टाः। जातौ व्यक्तौ चोभयत्र शक्तिः जात्यंशे सा ज्ञातोपयुज्यते, व्यक्त्यंशे स्वरूपसतीति 'युक्त'शक्तिरिति प्राभाकाराः। व्यक्त्याकृती जातयः पदार्थ इति नैयायिकाः। एतच्च यत्राकृतिव्यङ्ग्या जातिस्तत्पदानामेव। आकाशादिपदानामाग्नेयादि पदानां च व्यक्तिमात्रवाचकत्वात्। व्यक्त्याकृतिजातिविशिष्टस्य पदार्थत्वे विशिष्टात् केवलस्यानन्यात्, यत्र गौर्नित्येति जातिमात्रपरताऽपि। गामानयेति व्यक्तिमात्रपरताऽपि। पिष्टमय्यो गावइत्याकृतिपरता च—तत्र लक्षणेति चिन्तमणौ। समुदाये प्रवृत्तं[2] पदं क्वचिदेकदेशेऽपि प्रयुज्यते। तथा च प्रत्येकपरत्वेऽपि शक्तिरेव न लक्षणेति सम्प्रदायः।

पङ्कजादिपदानामपि योगेन पङ्कजनिकर्तृत्वम् रूढ्या च पद्मत्वादिरर्थः इति नैयायिकाः। केवलात् योगादेव पङ्कजनिकर्तृत्वम् भासते, संस्कारात्तुपद्मत्वमिति पङ्कजनिकर्तृपद्ममिति विशिष्टबोधसम्भवात् कुमुदादिबोधप्रतिबन्धाच्च न रूढिरिति मीमांसकाः। तत्र खण्डशक्तिर्योगः समुदायशक्तिश्च रूढिः, खण्डशक्तिसमुदायशक्तिभ्यामेकार्थप्रतिपादनञ्चयोगरूढिः। धेनुपदमपि गोषु शक्तमेव। न तु गोत्वम् प्रयोगोपाधिर्वा न वा कर्मत्वमात्रम् पदार्थः गोत्वस्य ततो नियतोपस्थित्यभावप्रसङ्गात्। तथा च न तद्दृष्टान्तेन पद्मत्वस्य प्रयोगोपाधित्वम्। सर्वनामत्वमहमदेष्वपि बुद्धिस्थत्वम्बोध्यत्वोच्चारयितृत्वादीनि ज्ञातानि न प्रयोगोपाधिः, किन्त्वहन्त्वादिमात्रशक्ते[3]ऽप्यहमादिपदे शक्तिग्रहः[4]।

१ 'तव्द्वाह्यगमनं'। २ 'प्रयुक्त' ३ 'आत्म'। ४ 'शक्तिसहकारितया स्वरूप'।

सहकारितया स्वरूपसदेवोच्चारयितृत्वादि वा नियामकम्, स्वभावान्नियमतस्तस्यैव बोधनादिति स्वरूपसदेवोपाधित्वम् । पद्मत्वन्तु न तथा कुमुदसाधारणबोधदर्शनात् । न च कुमुदप्रतिपत्तिप्रतिबन्धार्थम् न रूढिकल्पनम् यावता कुमुदे पङ्कजपदस्यासाधुत्वादेव कुमुदप्रतीत्यभाव इति वाच्यम्; तत्र यद्यपि—साधुत्वन्न प्रतिपादकत्वम्, अपभ्रंशेऽपि गतत्वात्, नाप्यनादिप्रयोगविषयत्वम्, 'हेरयो हेलय' इति वदन्तोऽसुराः पराबभूवुरिति वेदे श्रवणादनिष्टशब्दे शब्दापभ्रंशे गतत्वादतिव्याप्तेः, चैत्रादिसंज्ञाशब्दव्यापनाच्च । न च गत्वकत्वादिजातिरेव साधुत्वम्, जातेर्निष्प्रतियोगिकत्वेन सर्वत्र सर्वशब्दानां साधुत्वापत्तेः । नापि यज्ञकर्मार्हत्वम् साधुत्वम्, साधुभिर्भाषितव्यमित्यादिना साधुत्वेनैव यज्ञविधानात् । नापि व्याकरणव्युत्पाद्यत्वम्, संज्ञाशब्दे तदभावात्—तथाऽपि यः शब्दो यत्रेश्वरेण संकेतितः स तत्र साधुरित्युच्यते । मीमांसकानां शब्दार्थयोः स्वाभाविकसम्बन्धवदस्माकमीश्वरसंकेतस्य नियामकत्वात् । यथा या काचिदोषधी नकुलदंष्ट्राग्रस्पृष्टा सा सर्पविषं हन्ति तथा प्रतिपादकत्वाविशेषेऽपि ईश्वरसंकेतिता एव शब्दाः धर्मोपयोगिनः । स्वभावात् तद्विषया एव साधुभिर्भाषितव्यम् इत्यादिविधयः । तथा च पङ्कजपदस्य पद्मे साधुत्वम् सङ्केतितत्वमेव । सैव रूढिरिति सिद्धम् नः समीहितम् । व्याकरणव्युत्पाद्यत्वं साधुत्वमिति चिन्तामणिकृतः । तच्च पङ्कजपदे यथा पद्मम् प्रति तथा कुमुदमपि प्रति कुमुदबोधबाधार्थमवश्यं रूढ़िकल्पनम् ।

अपभ्रंशानां न योगो न वा रूढिः; किन्तु साधुशब्दस्मारकतया ततोऽन्वयबोधः[1] । यद्वा गामानयेति प्रयोक्तव्ये गावीमानयेति प्रयोजकवृद्धेन करणापाटवात् प्रयुक्तम् प्रयोज्यवृद्धस्य च प्रकरणादिवशात् तत एवार्थप्रतीतिः । प्रवृत्तिश्चातः । तत्रापि तटस्थस्य बालस्य व्युत्पत्तिः । ततः शक्त्यारोपादपभ्रंशानां बोधकत्वम् ।

ननु लाक्षणिकपदादपि शक्त्यारोपादेवार्थोपस्थितौ किं लक्षणया—इति चेत्, न; गङ्गापदं न तीरे शक्तमिति जानतामपि ततस्तीरोपस्थितिदर्शनात् । लक्षणा चाशक्यस्यासहशस्यान्वयपरोपस्थितिः । यद्वा शक्यसम्बन्धादशक्यस्यान्वयपरोपस्थितिः । यद्वा शक्यसम्बन्ध एव लक्षणा; स सम्बन्धोऽविनाभावरूपः । 'यष्टीः प्रवेशय,' 'मञ्चाः क्रोशन्ति,' 'छत्रिणो यान्ति' इत्यादावपि यष्टिधर-मञ्चस्थपुरुष-च्छत्रिणाम्[2] गुणविशेषविशिष्टानामविनाभूतत्वात् । शक्यसम्बन्ध एवाविवक्षिताविनाभावरूपो लक्षणा इत्येके । शक्यसम्बन्धिनि तात्पर्यम् लक्षणेत्यन्ये । तात्पर्यं च तत्प्रतीतिमुद्दिश्योच्चरितत्वम् । अशक्ये तात्पर्यं लक्षणेत्यपरे । स्वार्थसंवादेन परमर्थम् बोधयिष्यतीति बहुभिरभिप्रायो लक्षणेत्यप्याहुः । यथा 'गङ्गायां घोष' इत्यत्र गङ्गापदस्य तीरे । तदुच्यते—

१ 'ततोऽर्थबोधः' । २ 'च्छत्रिण' 'पत्तृण' ।

"वाच्यस्यार्थस्य वाक्यार्थसम्बन्धानुपपत्तितः
तत्सम्बन्धबलप्राप्तस्यान्वयो लक्षणोच्यते" ।

सा च द्विविधा—जहत्स्वार्थाऽजहत्स्वार्था च । आद्या 'यष्टीः प्रवेशय' 'मञ्चाः क्रोशन्ती'त्यादौ; अपरा च 'छत्रिणो यान्ति' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ । साऽपि प्रत्येकं द्विरूपा, लौकिकी अलौकिकी च । तत्र लौकिकी लोकपरम्परागता निरूढलक्षणेत्याचक्षते । अलौकिकी चाधुनिकप्रयुक्ता, सा च प्रयोजनमपेक्षते । तदुच्यते—

"अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकम् प्रयोक्ष्यामहे" इति ।

लक्षणाबीजं तात्पर्यानुपपत्तिः, पदस्य वृत्तिं विना लक्ष्ये तात्पर्यानिर्वाहात्, न त्वन्वयानुपपत्तिः, 'यष्टीः प्रवेशय' इत्यादौ अजहत्स्वार्थलक्षणायां च पदशक्यस्यान्वययोग्यत्वेऽपि लक्षणासत्त्वात् । तात्पर्यानुपपत्तिस्तत्रापि । लक्ष्येऽपि तात्पर्यम् विना लक्षणानुदयात्—इति सम्प्रदायः । अन्वयानुपपत्तिरेव लक्षणाबीजम्, यष्टीः प्रवेशय, छत्रिणो यान्तीत्यादिजहदजहत्स्वार्थयोः प्रवेशनविशेषगमनायोग्यत्वमेव यष्टिच्छत्रिणोः—इति चिन्तामणिकृतः ।

गोपदादेः स्वपरत्वे लक्षणैव न शक्तिः, स्वार्थसम्बन्धेनैव स्वार्थोपस्थितिसम्भवात् । अन्ये तु 'पदानामौत्सर्गिकमर्थपरत्वम्; तथा गामुच्चारयतीत्यादौ तु वाच्याविवक्षायां पदेन शक्त्यैव स्वार्थाभिधानम्' इत्याहुः । जबगडदशमाहेत्यादिनिरर्थकस्थले शक्यसम्बन्धाभावान्न लक्षणा, न वा वृत्तिं विना स्वोपस्थापकत्वमिति स्वस्मिन् शक्तिरेवेत्याहुः । वस्तुतस्तु जबगडदशमाहेत्यत्र समुदाये क्रियान्वयो न सम्भवति, अतः प्रत्येकवर्णमात्रे प्रत्येकवर्णस्य च शक्तत्वेन स्वार्थसम्बन्धादेव स्वस्मिन् लक्षणा, स्थितेऽपि स्वार्थसम्बन्धाग्रहे स्वरूपोपस्थितिः शक्तिग्रहात् पदस्य स्वबोधकत्वम् वृत्तिं विनैव स्वभावात् । अन्येनहत्यन्यबोधनेऽतिप्रसङ्गवारणाय वृत्तिकल्पनम्, स्वस्य स्वबोधकत्वे त्वतिप्रसङ्गो नास्तीति न वृत्तिकल्पनमित्यपरे । लक्षणास्थले प्रथमं शक्यस्मरणम्, ततोऽन्वयानुपपत्तिज्ञानम्, ततः पुनः शक्यस्मरणम्, ततः स्मृतशक्याच्च तत्सम्बन्धितीरादेरन्वयबोधः । शक्तेः शक्यस्मृतौ सामर्थ्यावधारणात् । अत एव लाक्षणिकं पदं नानुभावकम् साक्षादन्वयप्रतियोग्यनुपस्थापकत्वात् । न तु लाक्षणिकपदात् स्वशक्यसम्बन्धेनान्वयप्रतियोग्युपस्थितिरेव, अन्यत्र पदानां परम्परार्थस्मारकत्वाकल्पनादिति प्राञ्चः ॥ गङ्गादिपदादाहत्य तीराद्यनुपस्थितौ विभक्त्यर्थान्वयानुपपत्तेः प्रकृत्युपनीतस्वार्थबोधकव्युत्पत्तेश्च विभक्तीनां नोक्तक्रमः । न च[2] गङ्गापदात् साक्षात्तीरोपस्थितौ शक्तिस्वीकारापत्तिः, तां विनाऽपि परम्परासम्बन्धेन तदुपस्थितिसम्भवात् । न चान्वयप्रतियोग्युपस्थापकतया लाक्षणिकपद-

---

१ 'परम्परासम्बन्धे स्मारक' । २ 'चैवं' ।

स्यानुभावकतापत्तिः । इतरपदार्थैः सह स्वशक्त्या[१]ऽन्वयानुभावकत्वेन लक्षणादितरपदादेव तीरानुभवसम्भवे लाक्षणिकस्याननुभावकत्वात्—इति चिन्तामणिकृतः । मण्डपं भोजयेदित्यादावपि रूढिपूर्विकालक्षणा, रूढ्यर्थस्य शीघ्रोपस्थितिकत्वात्, मण्डपानकर्तृत्वरूपयोगार्थस्य प्रकृत्यर्थप्रत्ययार्थपर्यालोचनसापेक्षप्रतिपत्तिकत्वात् । यत्र योगार्थ एव सम्भृतसामग्रीकत्वात् शीघ्रोपस्थितिकस्तत्र रूढिबाधोऽपि क्वचित् । यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमित्यादौ' । अत्र हि वाजिशब्देन योगाद्विश्वेदेवा अभिधीयन्ते । अस्ति हि तेषामामिक्षारूपवाजिसम्बन्धः, सा वैश्वदेव्यामिक्षा भवतीति प्रतीकेन बोधितश्च । अतो योगाद्रूढेरपहारान्न वाजिनामश्वानामिहान्वयः । किञ्च अग्निर्वसुभिः[२] सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुणश्चादित्यैर्बृहस्पतिर्विश्वेदेवैरित्यत्र विश्वे प्रकृते बुद्धिस्था ये देवाः इति योगबलाद्वसुरुद्रमरुद्गणरूपसकलदेवानामुपस्थितिः, न तु पुरूरवोमाद्रवःप्रभृतीनां, रूढिबलात् प्रकरणात् रूढ्यपेक्षया योगस्य बलवत्वात् । अन्यत्र तु सर्वत्र रूढिरेव योगापेक्षया बलवती[३] । यथा 'वर्षासु रथकार आदधीत' इत्यत्र रथकारशब्दात् तक्ष[४]जातिविशेषविशिष्टः प्रतीयते । तस्याधानानुकूला विद्याप्रयुक्तिरपि कल्प्यते । न तु रथं करोतीति रथकारो ब्राह्मणादिरेव लब्धविद्यो योगबलात्, योगापेक्षया रूढेर्बलवत्त्वात् । एवं क्रतुविशेषे हिरण्मयौ प्राकाशावध्वर्यवे दक्षिणां ददातीत्यत्रापि अध्वर्युपदात् रूढ्या ऋत्विग्विशेषस्य शीघ्रमुपस्थितस्यैव हिरण्मयप्राकाशस्वत्वलक्षणः सम्बन्धो विधीयते, न तु अध्वरं युनक्तीति योगबलात् सर्वेषामेव ऋत्विजाम् । गम्भीरायां नद्यां घोषः प्रतिवसतीत्यादौ गभीरनद्योरन्वयबोधानन्तरं वाक्येनैव स्वज्ञाप्यं गम्भीरनद्यास्तीरं लक्ष्यते, वाक्यार्थगम्भीरनदीसम्बन्धिनस्तीरस्य तीरत्वेन प्रतीतेः । न च वाक्ये शक्त्यभावात् सम्बन्धं विनाऽपि न लक्षणा इति वाच्यम् । स्वज्ञाप्यसम्बन्ध एव हि लक्ष्यस्मृतौ[५] तन्त्रम्, न तु सम्बन्धविशेषः शक्तिः गौरवात् ज्ञाप्यः शक्यसम्बन्धाद् वाक्यार्थोऽपि इति वाक्येऽपि लक्षणेति सोन्दडोपाध्यायः [?] । वाक्यस्य ज्ञाप्यमेव नास्ति संसर्गस्यापि तदज्ञाप्यत्वात् । पदं हि स्वार्थान्वयम् बोधयति न तु समूहम्, समूहे सम्बन्धा[१]भावात् । गम्भीरपदे नदीपदे वा द्वयोरपि वा पदयोर्लक्षणा, न तु वाक्ये इति नवीनाः । नदीपदात् स्वार्थसाक्षात्सम्बन्धेन शीघ्रतरोपस्थितिसम्भवात् नदीपद एव लक्षणेति चिन्तामणिकृतः । एवमरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यनेन एकहायनीकरणकसोमक्रयस्य विहितत्वात सोमक्रयार्थमानीयमानायाश्चैकहायन्याः पदपांसुना यूपमनक्ति सप्तमपदं गृह्णातीत्यनेन यूपाञ्जनार्थं सप्तमपदग्रहणमुक्तम्, यूपाञ्जनस्य सप्तपदीयपांसुकरणकत्वबोधनात् सप्तमम्पदमिति पदद्वयात्मकवाक्ये एव सप्तमपदपांसुलक्षणेति प्राञ्चः । पदपदएव पांसुलक्षणेति नवीनाः । एवम् पुरोडाशकपालेन तुषानुपवपतीत्यत्रापि तुषोपवा-

१ 'क्त्या' । २ 'यजुभिः' । ३ 'बलीयसी' । ४ 'तचा' । ५ 'स्थि' । ६ 'दुन्यर्था' ।

यस्य तुषप्रस्फोटनस्य पुरोडाशकपालकरणकत्वम् विधीयते। तच्च न सम्भवति, कपालस्य पुरोडाशश्रयणप्रयोजनावरुद्धतयोपस्थितत्वात् तुषोपवापम्प्रति निराकांक्षत्वात् पुरोडाशकपालेनेति वाक्येन स्वतन्त्रं कपालमात्रं लक्ष्यत इति प्राञ्चः। पुरोडाशपदे कपालपदे उभयत्र वा लक्षणेति नवीनाः। अत्र सर्वत्र प्राचामेव मतमुपपन्नम्, यत्रैवानुपपत्तिस्तत्रैव लक्षणाया न्याय्यत्वात्। तथा च यत्र वाक्यार्थोऽनुपपन्नस्तत्र वाक्य एव, पदार्थमात्रानुपपत्तौ च पद एव लक्षणा। न च लक्षणाया वृत्तित्वात् वृत्तेश्च पदधर्मत्वात् नैवम्' इति वाच्यम्; पङ्कजादिपदे वाक्यरूपेऽपि शक्तिकल्पनात् समुदायशक्तेरेव तत्र रूढिपदार्थत्वात्, कारयाम्बभूवेत्यादौ वाक्ये शक्तिकल्पनाच्च।

बहुव्रीहौ च चित्रग्वादिपदेऽन्यपदार्थशक्तिरेव, "अनेकमन्यपदार्थे" इत्याद्यनुशासनस्य शक्तिग्राहकत्वात्। एवं भूवादयो धातवः, चैत्रादीन् भोजय, लम्बकर्णमानय—इत्यादितद्गुणसंविज्ञानबहुव्रीहौ विशेषणस्यापि कार्यान्वयात् भूधातौ चैत्रे लम्बकर्णे रूढिरिति, तत्र योग इति योगरूढिरिति प्राञ्चः। अतद्गुणसंविज्ञाने बहुव्रीहौ चित्रगुमानयेत्यादौ भूवादयोधातव इत्यादौ च तद्गुणसंविज्ञानबहुव्रीहौ लक्षणैव। तत्र प्रथमा जहत्स्वार्था, द्वितीया चा जहत्स्वार्था। द्वयमेव लक्षणावाक्य एवेति सम्प्रदायः। चित्रापदे गोपदे वा उभयत्र वा लक्षणा न तु वाक्य इति नवीनाः। गोपदमात्रे लक्षणा, अन्यपदार्थस्य साक्षात्सम्बन्धित्वात्, न तु चित्रापदे, व्यवहितार्थत्वादित्यतिनवीनाः। यत्रापि यजमानपञ्चमाः ऋत्विजः प्रचरन्ति, लोहितोष्णीषा ऋत्विजः प्रचरन्ति—इत्यादौ नान्यपदार्थतात्पर्यम् किन्तु यजमानलौहित्ययोरेव विधित्वेन प्राधान्यम्; तत्र योगरूढिरेवेति प्राञ्चः।

तत्पुरुषे राजपुरुषइत्यादौ षष्ठ्यर्थशक्तिरेवानुशासनबलात् इत्येके। राजपदस्य षष्ठ्यर्थसम्बन्धत्वेन निरूढलक्षणयैव राजसम्बन्धिपुरुषबुद्ध्युपपत्तेर्न समासे शक्तिरित्येके। राजपुरुषादावन्वयप्रकारतया षष्ठ्यर्थसम्बन्ध बुद्धिः, अतो न पूर्वपदे लक्षणा, न वा समासे शक्तिरित्यन्ये। राज्ञःपुरुष इति विग्रहे समासाभिधाने लुप्ता षष्ठ्येव सम्बन्धस्मारिका, नातो लक्षणा न वा शक्तिरित्यप्याहुः॥

कर्मधारये शक्तिर्न वा लक्षणा, तेन विना विवक्षितार्थान्वयबोधोपपत्तेः। प्रतीयतेहि नीलोत्पलमित्यादौ समस्यमानपदार्थातिरिक्तोऽर्थः, सामानाधिकरण्यम् वा, नीलोत्पलपदार्थयोरभेदो वा, नीलगुणोत्पलयोः समवायो वा। स चान्वय एव, नत्वन्वयप्रतियोगीति समस्यमानपदमहिम्ना वाक्यार्थभानान्न शक्तिलक्षणे। राजपुरुष इत्यत्र-राजसम्बन्धी पुरुषः इति प्रतीतिः। तत्र सम्बन्धस्यान्वयप्रतियोगित्वम्, नान्वयत्वम्। अतस्तदुपस्थितये शक्तिलक्षणयोरन्यतरकल्पनमावश्यकम्। एवञ्च बहुव्रीहौ सर्वत्रा-

---

१ 'कारय'।

न्त्यपदानां षष्ठीतत्पुरुषे पूर्वपदस्य लाक्षणिकतया ताभ्यां कर्मधारयो बलवान् । अत्र सर्वेषाम् पदानां स्वार्थपरतया मुख्यत्वात् । अत एव निषादस्थपतिं याजयेदित्यत्र कर्मधारय एव, मुख्यार्थे शब्दस्वरसात् । तेन निषादश्चासौ स्थपतिर्मान्यश्चेति मान्यनिषादो लभ्यते । तस्य यागानुकूलविद्याप्रयुक्तिरपि कल्प्यते । न च निषादानां स्थपतिरिति षष्ठीतत्पुरुषेण निषादेश्वरस्य त्रैवर्णिकस्य कस्यचिल्लब्धविद्यस्य लाभोऽस्तु, किं विद्याप्रयुक्तिकल्पनया—इति वाच्यम् ; मुख्यार्थान्वयानुरोधेन प्रमाणवतो गौरवस्यापि न्याय्यत्वात्, निषादानां स्थपतिरिति षष्ठीतत्पुरुषेणापि निषाद एव स्थपतिर्लभ्यते, स्थपतेः सप्रतियोगिकत्वेन प्रतियोगिधर्माक्रान्त एव समासस्वरसात् । यथा नरपतिपदान्नरपतेर्नरस्यैव लाभः । षष्ठीतत्पुरुषापेक्षया कर्मधारयस्य बलवत्त्वाभिधानम् नीलोत्पलादावेव प्रयोजकम्, उत्पलस्य निष्प्रतियोगिकत्वात् । तथा चोभयत्रापि समासे शक्तिः, कर्मधारये सामानाधिकरण्यम्, षष्ठीतत्पुरुषे तु सम्बन्ध इति सारम् ।

उपकुम्भमित्यव्ययीभावे अर्धपिप्पलीत्यादौ तत्पुरुषे च उत्तरपदे षष्ठ्यर्थलक्षणेत्येके । अत्रापि समासे शक्तिरेवेति प्राञ्चः । पर्युदासत्वम: पूर्वपदस्य

नञ्समासे 'अब्राह्मणमानय' इत्यत्र—पर्युदासे नञ्पूर्वपद उत्तरपदार्थसदृशि क्षत्रिये लक्षणा । 'अघटः पट' इत्यादौ प्रसज्यप्रतिषेधे नञ्सामानाधिकरण्यादभाववति लक्षणा । | नञः असमासेऽपि 'न घटः पट' इत्यादौ पुनरभाववल्लक्षणा । न च पचतीत्यादावपि क्रियासंबन्धे लक्षणैव, क्रियाभाववति | प्रसज्यप्रतिषेधे च भूतले न घट इत्यादौ नञो मुख्यार्थता । 'यजतिषु ये यजामहङ्करोति नानुयाजे' ष्वित्यत्रासमस्तनञोऽपि पर्युदासलक्षणैव । तेनानुयाजव्यतिरिक्तासु यजतिषु ये यजामहङ्करोतीति वाक्यार्थः । अन्यथा यजतिषु येयजामहङ्करोतीत्यनुयाजेषु न करोतीति प्रसज्यप्रतिषेधे नञा[1] वाक्यभेदः स्यात् । नशब्दस्य(स्य) निषेधवाची नास्त्येव ।

धवखदिरौ छिन्धीति इतरेतरयोगद्वन्द्वे युगपत्स्मृत्यारूढाभ्यां धवखदिराभ्यां द्वित्वान्यथान्वयानुपपत्त्या न साहित्ये लक्षणा, अनुपपत्त्यभावात्, धवखदिरपदाभ्याम् प्रत्येकंस्वस्वस्मृतेः[2] समूहालम्बनस्मृतिः, ततो द्वित्वान्वयः, ततः छिन्धीति क्रियान्वयः । अत एव यत्रापि न साहित्यबोधकः समासस्तत्रापि—

'चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीःकमलेषु चञ्चला ।
मुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्तिखण्डितम् '—

इत्यादावेकस्मृतिसमारूढनानापदजनितैकस्मृतिविषयेषु कलङ्कादिषु बहुत्वान्वयबोधः । समाहारद्वन्द्वेषु—पाणिपादमित्यादौ—साहित्यलक्षणा । अतएव धर्मे धर्मिणि च तात्पर्यभेदात् द्वन्द्वयोर्भेदः । घटौ घटा इत्यादौ स्वरूपैकशेषे द्वित्वबहुत्वान्वय

---

१ Not in B. २ 'सम्बन्धिस्मृतेः'।

योग्यानेकोपस्थितिः शक्तित एव तन्त्रवृत्त्या घटपदात् सम्भवतीति न तदर्थं लक्षणा। ग्रहं सम्मार्ष्टीत्यत्र ग्रहपदात् तन्त्रवृत्त्या उपस्थितानेकग्रहसम्मार्गान्वयवत्। विरूपैकशेषे पितरावित्यत्र एकस्य पितृद्वयाभावादगत्या पितृपदे जनकदाम्पत्यलक्षणा। श्वशुरावित्यत्रापि पत्नीजनकदाम्पत्यलक्षणा। ब्राह्मणावानयेत्यस्त्रीपरत्वज्ञाने ब्राह्मणपदे स्त्रीपुंसलक्षणा, पुल्लिङ्गत्वन्तु पदार्थैकदेशगतमनूद्यते। शिवौ प्रणमेदित्यत्र स्त्री-नमस्यशिवान्तराभावात् विरूपैकशेषेऽगत्या शिवपदेन शिवश्च शिवा च लक्षणयोच्यते। भ्रातरौ पुत्रावित्यत्रापि मानान्तरात् स्त्रीपरत्वज्ञाने भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति विरूपैकशेषात् भ्रातृपदेन भ्रातास्वसारौ पुत्रपदेन पुत्रदुहितरौ लक्ष्येते, स्त्रीत्वाज्ञाने तन्त्रवृत्त्या भ्रातृद्वयं पुत्रद्वयञ्चोच्यते। क्षौमे वसानावग्नी आदधीयातामित्यत्र 'यत् कर्तव्यम् तदनया सह' इति विधिना अग्न्याधाने सहत्वेन प्राप्तया पत्न्यैव पुंसो द्वितीयता न तु पुरुषान्तरेण, वाक्यभेदापत्तेः।

प्रादीनामुपसर्गाणां द्योतकत्वेन वाचकत्वम, द्योतकत्वञ्च धातोरेवार्थविशेषे तात्पर्यग्राहकत्वम्[1], धातूनामनेकार्थत्वात्। उपसर्गोपसन्दानेन शक्तिर्वा द्योतकत्वम्,... रजिने[2] प्रकृष्टजेपे[3] शक्तः; इयमेवोपसन्दानिकी शक्तिरित्युच्यते। प्रतिष्ठत इत्यत्र स्थाधातोर्गमनमेवार्थः, प्रशब्दस्य गमनाद्यर्थत्वे आख्यातार्थभावनान्वयानुपपत्तिः। एवमभ्यागच्छतीत्यत्राभिमुख्यसामीप्ययोर्धात्वर्थतैव। यद्वा प्रतिष्ठत इत्यत्र धातौ विरोधि-लक्षणा, तत्तात्पर्यग्राहकः प्रशब्दः, अनन्यलभ्यस्य शब्दार्थत्वात्। अभ्यागच्छति प्रजयतीत्यादावपि विशेष्यवाचकस्य धातोर्विशिष्टेऽर्थे लक्षणा।

भुक्त्वा व्रजतीत्यादौ क्त्वार्थः पूर्वकालत्वम् समानकर्तृकत्वञ्च द्वयमपीति प्राञ्चः पूर्वकालत्वमात्रं क्त्वार्थः, समानकर्तृकत्वमाक्षेपबललभ्यम् इति सम्प्रदायः। समानकर्तृकत्वमेव क्त्वार्थः पूर्वकालत्वमाक्षेपबललभ्यमिति मीमांसकाः। आनन्तर्यम् क्त्वार्थस्तेन भोजनानन्तरं गमनमिति प्रतीतिरिति चिन्तामणिकृतः।

आख्यातार्थस्तु यत्नः। यत्न एव पूर्वापरीभूतो भावना इत्युच्यते। तदुक्तम्— 'कृताकृतविभागेन कर्तृरूपव्यवस्थया यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना' इति।

न कर्तृकर्मणी, तयोराक्षेपलभ्यत्वात्, अनन्यलभ्यस्य च शब्दार्थत्वात्। देवदत्तः पचतीति पाकानुकूलयत्नवान् देवदत्त इति प्रतीयते। यत्नवत्त्वमेव देवदत्तस्य कर्तृत्वम्। एवंदेवदत्तेन तण्डुलाः पच्यन्ते इत्यत्र पाकानुकूलदेवदत्तयत्नविषयास्तण्डुला इत्यन्वयबोधः। भावनायाः भाव्यभावकान्यतराकांक्षायां तृतीयया भावकस्य भावनावरुद्धतयैवोपस्थित्या निराकांक्षत्वेन शुद्धप्रातिपदिकार्थतण्डुलैरेव भावनान्वयात्[4]। भावनानुगामिनी संख्याऽपि

---

१ अत्रोभयत्रापि कानिचिदक्षराणिभ्रष्टानीवभान्ति। २ 'रजित्वेन' ३ 'तिङः'। ४ भावनाश्रयात्।

भावनान्वयिनि एवान्वेति, समानपदोपात्तप्रत्यासत्तेः । कर्तृगतसंख्याभिधानमेव कर्तुरभिधानं कर्मगतसंख्याभिधानमेव च कर्माभिधानम् । तेन देवदत्तः पचतीति कर्तृगतसंख्याऽभिधीयते, न तु कर्मगता । तथा चानभिहिते कर्मणि द्वितीया । रथो गच्छतीत्यादावपि अचेतनव्यापारे लाक्षणिकमाख्यातपदम्; करोति यतत इत्यादौ यत्नद्वयोपस्थितावपि योग्यतयैकयत्नान्वयः । एधिश्रिषिषतीति इत्यत्र इच्छान्तरवत् एको द्वौ बहव[1] इत्यत्र संख्यावदित्याचार्यरहस्यम् । नवीनास्तु—सुपः प्रकृत्यर्थगतसंख्याबोधकत्वम्, तिङः प्रथमान्तपदार्थगतसंख्यान्वयबोधकत्वमिति[2] व्युत्पत्तिरेव । चैत्रेण सुप्यत इत्यत्र प्रथमान्तपदाभावान्न संख्यान्वयः; धात्वर्थः फलानुकूलो व्यापारः । तथा च तण्डुलप्रक्षेपदर्वीघट्टनाधःसन्तापनाधिश्रयणादिव्यापारकलापः प्रयत्नसाध्यः पच्यर्थः । एवन्धात्वन्तरेऽपीति सिद्धान्तमाहुः ॥ फलानुकूलो व्यापारो धात्वर्थः आख्यातवाच्यन्तु संख्यामात्रम् । तेन चैत्रः पचति रथो गच्छतीत्यत्र चैत्ररथयोः धात्वर्थानुकूलव्यापारवत्ताप्रतीतेर्मुख्य एव प्रयोगः । पचतीत्यादौ यत्नलाभश्चाक्षेपात्, विक्लित्यनुकूलव्यापारस्य यत्नं विनाऽनुपपत्तेरितिगुरुमतम् ॥ धात्वर्थो व्यापारः । तस्य फलानुकूलत्वमात्रमाख्यातार्थः । तेन चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारस्य सत्त्वादाख्यातप्रयोगो मुख्य एवेति भट्टमतम् ॥ धात्वर्थोव्यापारः, आख्यातार्थ उत्पादना, सा चोत्पादकता, सैव भावना, पचतीत्यादावाख्यातार्थस्य पाकमुत्पादयतीति विवरणात् स्वार्थोत्पादकता, चेतनाचेतनयोरिति सर्वत्राख्यातप्रयोगो मुख्य एवेति रत्नकोषकृतः ॥ धात्वर्थः फलम् । तथा च पच्यर्थो विक्लित्तिः, गमेरुत्तरसंयोगः, पतेरधस्संयोगः, त्यजेर्विभागः, हन्तेर्मरणम्—अर्थः, न तु तत्तत्फलको व्यापारः खड्गघातादिःगौरवात् । देवतोद्देश्यकद्रव्यत्यागफलंस्वस्वत्वध्वंसो यज्यर्थः त्यागफलम् प्रक्षेपो जुहोत्यर्थः, सम्प्रदानस्वीकरणपूर्वकत्यागफलम् स्वस्वत्वध्वंसो ददात्यर्थः, न तु तत्फलत्यागो गौरवात् । धात्वर्थानुकूलव्यापारवर्तमानत्वमाख्यातार्थ इति मण्डनमिश्राः । वाचस्पतिमिश्रेणापि द्वितीयाध्यायटीकायामेतत् कटाक्षितमित्यतिगहनोऽयम् पन्थाः ॥

इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज-महामहोपाध्यायसन्मिश्र-
श्रीशङ्करकृतौ वादिविनोदे तृतीय उल्लासः

---

## अथ चतुर्थ उल्लासः

अथ प्रश्नपराघातः । तथा हि—'ईश्वरे किम्प्रमाणम्' इति तव प्रश्न ईश्वरगोचरप्रमाणं जानतोऽजानतो[3] वा ? । आद्ये प्रश्नो व्याहतः । नहि ज्ञाते प्रश्नः

१ 'र्थान्वित' । २ 'पदानुगतसंख्यानो' । ३ 'ज्ञानतो' ।

सम्भवति । जिज्ञासाविष्करणम् प्रश्नः । जिज्ञासा च ज्ञातुमिच्छा । सा च न ज्ञाते सम्भवति, इच्छाया असिद्धगोचरत्वनियमात्[1] । नाप्यज्ञाते प्रश्नः, व्याघातादेव । न ह्यज्ञाते स गौरः कृष्णो वेति प्रश्न उपपद्यते । ईश्वरं तद्विषयञ्च प्रमाणं जानत एव मम त्वदुपन्याससामर्थ्यजिज्ञासया प्रश्न इति चेन्न । तत्रापि पूर्ववद्व्याघातात् । उपन्याससामर्थ्यज्ञानाज्ञानयोर्व्याघातापत्तेः । न च तत्र प्रश्नस्यायमाकारः । ननु जिज्ञासया न प्रश्नः । किन्तु विप्रतिपन्नस्य ममायं प्रश्नः । तथाचेश्वरे तत्प्रमाणे च विप्रतिपत्तिरिति प्रश्नानुगतिरिति चेत् मैवम् । विप्रतिपत्तिरिति हि विरुद्धाप्रतिपत्तिः । विरोधश्चेश्वरतदभावगोचरप्रतिपत्त्यप्रतिपत्त्योर्वाच्यः । तथा च विरोधनिरूपकतयैव सिद्धे ईश्वरे विप्रतिपत्तिरफला । न हि विषयविरोधमन्तरेण प्रतिपत्तिविरोधमीक्षामहे । अथाभासप्रतिपन्नमीश्वरम् विरोधनिरूपकतया मन्यसे, तर्हि ईश्वरप्रतिपत्तेराभासत्वं व्यवस्थाप्य भवता कृतमिति न वयमाद्रियामहे । अथ तदाभासत्वप्रतिपादनार्थ एवायं प्रश्नः—यतस्त्वया यत् प्रमाणम् ईश्वरे वाच्यं तन्मया भासीकरणीयम् इति—तर्हि प्रतिपत्तिविरोधनिरूपके ईश्वरे यत्तव ज्ञानमस्ति तदाभासीकरणेनैव कृतार्थस्य भवतोऽनर्थक एव प्रश्नः । त्वदुपन्यस्यमानप्रमाणाभासीकरणादीश्वर एव बाधकयुक्तम्[2] भवेदिति चेत्, ईश्वरे बाधाभिधानाभिसन्धेरीश्वरगोचरस्वकीयज्ञानबाधनादपि निर्वाहात् प्रश्नानर्थक्यतादवस्थ्यात् । मांप्रति तदाभासत्वं सिद्धमेव, त्वांप्रति साधयितुमयं प्रश्न इति चेत्, तर्हि मदुपन्यस्तप्रमाणाभिधानादपि[3] नेश्वरे बाधो यावता प्रमाणान्तरस्य तस्य सम्भवात् । किं च मामाप्तमनाप्तं वा जानतस्ते प्रश्नः ? यद्याद्यः, तदा ईश्वरे प्रमाणमित्युत्तरादेव निर्वृतः । मदाप्तत्वज्ञानञ्च ईश्वरगोचरयथार्थज्ञानवत्त्वज्ञानम् । तच्चेत्तवास्ति तद प्रश्नो व्याहतः । नहीश्वरगोचरयथार्थज्ञानवत्त्वज्ञानमीश्वरज्ञानमन्तरेण सम्भवति, ज्ञानज्ञानस्य तद्विषयविषयकत्वात् । अथ त्वामाप्तं जानत एवायं मम प्रश्नो यतः साधु त्वमीश्वरमुपदेक्ष्यसि इतिचेत्, न, जिज्ञासापक्षोक्तदोषप्रत्यापत्तेः । अथ त्वामनाप्तमेव जानतः प्रश्नोऽयमिति चेत्, न, तथाऽपि प्रश्नपराहतत्वात् । नह्ययं जानाति[4] ज्ञात्वा पि वा न यथार्थमुपदिशतीति ज्ञात्वा प्रश्नः सम्भवति । ननु ईश्वरे किम्प्रमाणमिति न प्रश्नः, किन्तु ईश्वरे प्रमाणं नास्तीत्याक्षेपोऽयम्' इति चेत्, न; तथाऽपि व्याघातात् । ईश्वरे प्रमाणं नास्तीति वाक्यार्थमीश्वरं जानतोऽजानतो वाऽनुपपन्नमेव यतः । ननु ईश्वरं जानामि त्वया यथाऽङ्गीक्रियते तथा न जानामीति युक्त आक्षेपः इति चेत्, न; यथातथेति मदङ्गीकृतप्रकारनिर्देशान्न जानामीति व्याघातात् । अथ जानामि, न प्रमिणोमि इति चेत्, न; प्रमिणोमीति प्रमामात्रनिषेधादीश्वरगोचरप्रमा-

---

१ 'द्धोत्पादकत्व' । २ 'बाधामुक्तम्' । ३ 'मानादपि' । ४ 'नह्ययं धनं जानाति,' 'नह्ययंधनजानाति' ।

निषेधस्य तत्प्रसिद्धिनान्तरीयकत्वात् । अपि च ईश्वरज्ञाने प्रमात्वमारोप्य तत्प्रमात्वनिषेध इति चेत्, तर्हि आरोपितप्रमाभावस्येश्वरज्ञानस्य निषेधेऽपि न तत्प्रमानिषेधः । तत्प्रमानिषेधे वा नेश्वरसिद्धिः; तत्प्रमायास्तदन्यत्वात् । अथ यत्प्रमा नास्ति तदपि नास्ति शशविषाणवत् इति तत्प्रमानिषेधः तन्निषेधपर्यवसन्न इति चेत्, न; यत्प्रमा नास्ति तदपि नास्तीति व्याप्तेरेव दृष्टान्ताभावेनासिद्धे शशविषाणादीनामवस्तूनामदृष्टान्तत्वात्, दृष्टान्तत्वे वा हेतोरप्यवस्तुत्वाविरोधे सर्वविधिनिषेधानां सर्वत्रापत्तेः । प्रश्नखण्डनोक्तयुक्तयश्चात्र संवरणीयाः ॥

इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज—महामहोपाध्यायसन्मिश्रश्रीशङ्करकृतौ वादिविनोदे चतुर्थ उल्लासः ।

## अथ पञ्चम उल्लासः

अथ मध्यस्थदुर्दुरूटवादिना झटिति दुःपरिकलनीयार्थगोचरप्रश्ने कृते गजनिमीलिकया प्रश्नावधीरणे कृते सोत्प्रासाभिधाने प्रष्टुरहङ्कारखण्डनमेवान्यथा लब्धसम्भावनया सम्भावितायोत्तरं ददतोऽपकर्षःस्यात् । यथा—'त्वं गौरवपात्रमस्य[1] विकलान्धातर्सलक्ष्मीम् (?) निर्भयो वादिपुंगवः सततत्त्वाविरोधः शास्त्रासंगत्वम् पर्वतमानो[2] न मादृशां हस्तसाध्योऽसि । यशःसुरभिस्त्वज्जननी यस्या भवानीदृक्तनयः । पुरुषपुङ्गवप्रधानं पिता यस्य परमविद्वानेवंयशोभाजनम्पुत्रः । किन्तु परम्परातो विद्यासि त्वम् खलु भद्रः । किञ्च,

विवादप्रारम्भः कथयतितरां नाम भवति,
गुणानां गाम्भीर्यं भवति बत साक्षी कलकलः ।
पयःकुम्भःपूर्णो ध्वनति न तथा वातचलितो,
यथा रिक्तम्भाण्डम् ध्वनिमनिभृतम्मुञ्चति मुहुः ॥

सभापतिम्प्रति—

'सभास्तारास्तारापतिधवलकीर्तेस्तव पुरः, कथंकारं सारं वचनमभिधातुं नु चतुराः ।
मदोद्भेदोद्दामद्विपदमनदक्षाः क्व हरयो नृणां साध्यः कार्यं लघुलगुडवध्यः शशशिशुः' ॥

इत्यादि सभानुरञ्जनमनुरुध्य वक्तव्यम् !! !! !!

अकृत भवानीतनयो भवनाथसुतो भवार्चने व्यग्रः ।
एतं वादिविनोदं जगदुपकाराय परिकरः श्रीमान् ॥

इति महामहोपाध्याय-मैथिलसन्मिश्रश्रीभवनाथात्मज-महामहोपाध्यायसन्मिश्रश्रीशङ्करकृतौ वादिविनोदे पञ्चम उल्लासः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

१ 'प्रभृति' । २ 'प्रवर्तमानो' ।

॥ श्रीः ॥

# ॥ न्यायसिद्धान्तमञ्जरी ॥


भट्टाचार्य चूडामणि जानकीनाथ विरचिता
पण्डितवरनीलकण्ठदीक्षितप्रणीतबृ-
हत्तर्कप्रकाशाभिधया व्याख्यया
समेता ॥



काशीस्थसुप्रसिद्धब्रह्मामृतवर्षिणीसभासभ्या-
दृकपण्डितवरश्रीराममिश्रशास्त्रिणामन्ते-
वासिना नैयायिकेन श्रीगौरीनाथ-
शास्त्रिणा परिशोधिता ॥



श्रीकाश्यां रामापुरास्थामर यन्त्रालये
श्रीमदम्बिकाचरणचट्टोपाध्यायेन
मुद्रिता ॥

संवत् १९४१

( श्रीः )

# भूमिका ।

अथ दुःखवारिधिनिमग्नं कृत्स्नमेव जगदवेक्षमाणः कारुणिको भगवान् गोतमः पञ्चाध्याय्यात्मकमान्वीक्षिकीशास्त्रमुपनिबबन्ध यदुद्दिश्यतीर्थकाराः "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्म्माणां विद्योद्देशेप्रकीर्तिता ॥" एवमाचक्षते तदिदमतिप्राचीनं न्यायशास्त्रं शिष्यप्रशिष्याचार्यपरम्परया बहुधा विवर्द्धितं भाष्यवार्त्तिकटीकातद्व्याख्यानादिरूपेण वात्स्यायनोद्द्योतकरादिभिः परमर्षिकुलप्रसूतै राधुनिकैश्च वाचस्पतिमिश्रप्रमुखैः, चिन्तामणिकृतो गङ्गेशोपाध्यायात्पूर्वं वैशेषिकशास्त्रात्प्रविभक्तमपीदं चिन्तामण्यादिकालमारभ्याविभक्तोपन्यासम् एकैकग्रन्थोपन्यस्तोभयरहस्यं सहस्रधारमभवत् । अधुनातु रघुनाथशिरोमणिप्रणीतदीधितिव्याख्यानै रतिगहनैः सुविस्तरैः सुसूक्ष्मधियामप्यगोचरतां गतं, साधारणधिषणानां तु भीषणतामुपयातमनतिप्रयोजनकमिवाभासीदित्यालोच्य अनतिप्रौढधियामप्युपचिकीर्षया श्रीजानकीनाथशर्म्मभिर्न्यायसिद्धान्तमञ्जरीनामायं प्राणायि, सुलभपदार्थावगतिर्ग्रन्थः, अयं च ग्रन्थकारो गङ्गेशोपाध्यायाच्चिन्तामणिकृत उत्तरकालसमुद्भवो, मञ्जर्यां तत्र तत्र मण्युपष्टम्भदर्शनात् । अयं ग्रन्थकारो बङ्गदेशीयोऽथ मैथिलइति नावधारकं हेतुमुपलभामहे अत एवतु दुर्निश्चयेऽमुष्मिन्नर्थे संशेरते प्रायः सर्वे । परमस्मदाचार्या अशेषदर्शनाचार्या बहुश्रुताः श्री ६ राममिश्रशास्त्रिणोऽमुं जानकीनाथभट्टाचार्यममुष्य लेखप्रणाल्या बङ्गदेशीयमाचक्षते । भवेदसौ बाङ्गोऽथवा मैथिलः परमुत्कृष्टमतिरयमनतिकठिनया रीत्या सुकठिनानर्थांस्तथाभ्यधासीद्, यथासाधारणमतिरप्यवगत्यामुं ग्रन्थं ग्रथ्नीयादपि परं ग्रन्थं, व्याचक्षीत चान्यदपि शास्त्रमितीमामुपयोगितामालोच्य चिरं मुद्रयितुं प्रायतिषि अस्मिंस्त्ववसरे सर्वशास्त्रप्रकाशनकृतोत्साहेन श्रीमतास्मन्मित्रेणाम्बिकाचरणचट्टोपाध्यायेनाभ्यर्थितः सोत्साहं प्रवृत्तोऽस्मि मञ्जरीमुद्रणे परमियं " मञ्जरी " तर्कप्रकाशाख्यां व्याख्यामपेक्षते इति मयैव सङ्कलितैषा प्रकाश्यते, प्रकाशकारस्त्वयं महाराष्ट्रकुलोद्भवो वाराणसेयो दशाश्वमेधप्रान्तान्तर्गतागस्त्यकुण्डवीथीनिवास्तव्य इति जनश्रुतिः । अत्र ग्रन्थे सीसकाक्षरयोजक प्रमादजाः सुलभा अशुद्धय इति न ताभिरहं गर्हणीय इति साञ्जलिबन्धमभ्यर्थये तत्र भवतो विदुषः ॥

काशीस्थ राजकीय संस्कृत प्रधानपाठशालायां समुपार्जितन्यायाद्यनेकविद्यः सुप्रसिद्ध ब्रह्मामृत वर्षिणीसभासभ्यः पाठकोपनामा ।

मिति आश्विन कृष्ण २ भानुवासरे }<br>संवत् १८४१ }

गौरीनाथशास्त्री

# अथ बृहत्तर्कप्रकाशः ।

॥ श्रीगणेशाय नमः ॥

प्रणम्य परमात्मानं जानकीनाथशर्मणा ॥
क्रियते युक्तिमुक्ताभिर्न्यायसिद्धान्तमञ्जरी ॥ १ ॥

श्रीगणेशाय नमः । सन्ध्यायाः प्रणतिक्षणे गिरिजया सेर्ष्यं समालोकितं वीक्ष्य स्वामिनि सा कथा त्वदपरा नान्यास्ति वन्द्या मम ॥ किन्तु त्वामहमानमामि सततं ध्यात्वा तवैवाकृतीरित्थं हर्षितशैलराजतनया दृष्टः शिवः पातु नः ॥१॥ सिद्धान्तगूढवर्णैकभावनापरिशीलिता ॥ श्रीकण्ठनिर्मिता सेयं कृतिरातनुतां मुदम् ॥ २ ॥ सत्येकस्मिन्नपि बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वेन प्रतिबन्धकाभावस्यावश्यमपेक्षिततया प्रकृतग्रन्थसमाप्तिप्रतिबन्धकदुरितरूपविघ्नविघाताय कृतं भगवन्नमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति । प्रणम्येति । मङ्गलस्य समाप्त्यतिविघ्नध्वंसद्वारा हेतुत्वमिति सिद्धान्तस्थितिः तत्रानन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वघटकानन्यथासिद्धत्वांशग्रहे व्यापकत्वरूपनियमांशग्रहे वा *स्वस्वव्याप्येतराशेषकारणसत्त्वे यत्सत्त्वेऽवश्यं यत्सत्त्वं यदभावेऽवश्यं यदभाव इति निरुक्तघटितयोर्नियतान्वयव्यतिरेकयोः कारणत्वे मानाभावेऽप्यन्वयव्यतिरेकाभ्यां विशिष्टतद्रूपकारणत्वग्रहेऽतिरिक्तकारणत्वग्रहे वा तयोर्हेतुतया तत्सहकृतप्रत्यक्षप्रमाणगम्यत्वस्य यद्यपि नात्र सम्भवः मङ्गलसत्त्वेऽपि समाप्त्यसत्त्वान्मङ्गलाभावेऽपि समाप्तेश्चेत्यन्वयव्यतिरेकव्यभिचारात् तथापि मङ्गलस्य समाप्तिफलकत्वे लाघवमिति लाघवज्ञानसहकृतं शिष्टाचारविषयत्वहेतुकं सफलत्वानुमा-

---

* अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वघटकैकैकदलविषयकग्रहहेतुत्वं नोक्तनियतान्वयव्यतिरेकग्रहयोरन्वयग्रहमात्रस्यैवानन्यथासिद्धत्वग्राहकत्वेन व्यतिरेकग्रहस्य तदग्राहकत्वात् एवमन्वयग्रहो नियमांशग्रहे न पयुज्यत इति नैकैकदलविषयकग्रहहेतुत्वमुभयस्मिन्निति विशिष्टकारणत्वग्रहोपयोगित्वमेव विशिष्टे इत्यभिसन्धिः ॥

नभिधानं मानं, जन्मान्तरीयमङ्गलसन्देहेन व्यतिरेकव्यभिचारसंशयेऽपि †"ग्राह्यसंशयस्यानुमित्यप्रतिबन्धकतया" समाप्तिकारणत्वेऽनुमिते समाप्तिरूपकार्येण जन्मान्तरीयमङ्गलानुमानान्न व्यतिरेकव्यभिचारः। मङ्गले सति समाप्त्यभावश्च तत्र मङ्गलानाश्यविघ्नसत्त्वादनन्तरोत्पन्नविघ्नसत्त्वाद्वेति नान्वयव्यभिचारोऽपि अत एव तच्छङ्कया सन्त्योऽपि मङ्गलमाचरन्ति एवञ्चाशुविनाशिनः कालान्तरभाविफलजनकत्वं व्यापारं विनाऽनुपपन्नमिति विघ्नध्वंसद्वारा मङ्गलं हेतुरिति सम्प्रदायः।

नन्वास्तु मङ्गलं विनापि नास्तिकग्रन्थसमाप्तिर्न तत्र तद्धेतुः नच चरमवर्णरूपायाश्चरमवर्णध्वंसरूपाया वा समाप्तेराकाशनिष्ठतयाऽऽत्मनिष्ठमङ्गलस्य तज्जन्यविघ्नध्वंसस्य वा व्यधिकरणतया कारणत्वासम्भवेन स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति आश्रयतासम्बन्धेनात्मनिष्ठप्रत्यासत्त्या मङ्गले हेतुत्वस्यावश्यं वक्तव्यतया जन्मान्तरीयमङ्गलानुमानान्न व्यभिचार इति वाच्यम् जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टैस्तदनाचरणात् प्रार्थितसमाप्तेरेव तत्फलत्वं कारीरीवत् न तु जन्मान्तरीयसमाप्तेरपि, पुत्रेष्टिस्थले तु पुत्रनामफलकत्वश्रवणादैहिकामुष्मिकसाधारणफलकत्वम् तस्मादात्मनिष्ठप्रत्यासत्त्या कारणत्वे जन्मान्तरीयसमाप्तिमुद्दिश्यापि मङ्गलकरणापत्तेः स्वप्रतियोगिचरमवर्णावच्छेदकतासम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासम्बन्धेन शरीरनिष्ठप्रत्यासत्त्या तत्कारणत्वस्यावश्यं वाच्यतया नास्तिकशरीरे अवच्छेदकतया मङ्गलस्य तज्जन्यविघ्नध्वंसस्य चाभावेन व्यतिरेकव्यभिचारान्न कारणत्वसम्भवः ननु विघ्नस्थलीयसमाप्तित्वमेव तज्जन्यतावच्छेदकं तत्र च न व्यभिचारः विघ्नस्थलीयत्वं च विघ्नवज्जातीयशरीरकर्तृकत्वं मङ्गलजन्यविघ्नध्वंसविशिष्टत्वं वा विशिष्टत्वं च स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन जन्मान्तरीयमङ्गलजन्यविघ्नध्वंसस्य च स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन नास्तिकसमाप्तावभावेन तस्याः कार्यतावच्छेदकानाक्रान्तत्वादिति चेन्न प्रथमे समाप्त्यव्यवहितपूर्वक्षणे विघ्नासत्त्वेन तस्य विशेषणत्वासंभवात् उपलक्षणत्वे तु प्रमत्तानुष्ठितसमाप्तेरप्युत्पत्त्यसमानविघ्नवज्जातीयशरीरकर्तृकतया

---

† तद्विषयकप्रत्यक्षनिश्चयत्वावच्छिन्नस्यैव साध्यसंशयस्य प्रतिबन्धकत्वं नत्वनुमितित्वावच्छिन्नस्येत्यभिप्रायेण ॥

व्यभिचारस्य दुर्वारत्वात् अन्यविधस्य च विघ्नध्वंसजातीयशरीरविशिष्टकृतिजन्य स्वरूपस्य तत्कर्तृकत्वस्य दुर्वचत्वात् द्वितीये तु समाप्त्यव्यवहितपूर्वक्षणं तत्सहायकत्वेन निवेशनीयम्, अव्यवहितोत्तरत्वस्य वक्तव्यतयाऽननुगमात्, कारणस्य कार्यतावच्छेदकत्वानुपगमाच्च अन्यथा काशीमरणस्यापि स्वविशिष्टमुक्तिं प्रति हेतुत्वस्य सुवचतया "काशीमरणान्मुक्तिरिति" श्रुतेर्हेतुत्वपरतयैवोपपत्तौ प्रयोजकत्वपरतयोपवर्णनस्यासङ्गत्यापत्तेः । "नच तमेव विदित्वेति" श्रुत्या तत्त्वज्ञानस्यैव मुक्तिसामान्यहेतुत्वप्रतिपादनेन तस्य साक्षात्कारणत्वासम्भवात् श्रुतेः प्रयोजकत्वपरत्वमेवेति वाच्यम् । तावतापि तत्त्वज्ञान द्वारा हेतुत्वस्यादुष्टत्वाद् विघ्नध्वंसद्वारा समाप्तौ मङ्गलस्येव । नच स्वजन्यतत्त्वज्ञानविशिष्टमुक्तिं प्रति काशीमरणस्य हेतुत्वेऽप्यप्रतीत्याद्यन्यथासिद्धत्वा न तन्मुक्तिहेतुरिति वाच्यम् स्वजन्यविघ्नध्वंसविशिष्टसमाप्तिम्प्रति मङ्गलस्य हेतुत्वेऽपि तस्याः दुर्वारत्वात् तस्मादन्यथासिद्धतया मङ्गलं न समाप्तिहेतुः एतेन काशीमरणविशिष्टमुक्तौ काशीमरणस्य हेतुत्वे दृष्टापत्तिः तत्त्वज्ञानद्वारीभूतस्य न तद्धेतुरिति दूषणायैव प्रवृत्त्याः प्रयोजकत्वपरत्वमिति निरस्तम् । तथापि तद्वत्समाप्तिहेतुताबोधकप्रत्यक्षश्रुत्यभावेनोक्तदिशामङ्गलेऽन्यथासिद्धेर्दुर्वारत्वादिति नच निर्विघ्नं परिसमाप्यतामिति कामनया तदाचारात्समाप्तेरेव तत्फलत्वमिति वाच्यम् "नाऽगृहीतविशेषणन्यायेन" विघ्नध्वंसकामनाया आवश्यकत्वात्तस्यैव तत्फलत्वात् नहि यदुद्दिश्य यत्क्रियते तत्र तद्धेतुः चैत्यवन्दनादेरपि स्वर्गफलकत्वापत्तेः तज्जनकीभूतज्ञानस्य भ्रमतया न तथेति चेत् अत्रापि समाप्तिजनकत्वज्ञानस्य भ्रमत्वमादाय विवादसम्भवात् पाकप्रवृत्तिकाले तृप्तिकामनावदुभयनेष्टसाधनताज्ञानेन समाप्तिकामनाया अप्युपपत्तेरिति न किञ्चिदेतत् अत एव नास्तिकसमाप्तिप्रतियोगिव्यावृत्तं वैजात्यं चरमवर्णं स्वीकृत्य विजातीयचरमवर्णध्वंसरूपसमाप्तिं प्रति मङ्गलं हेतुरिति निरस्तम् । पुरुषविशेषजन्यतावच्छेदकजातिव्याप्यानन्तजातिकल्पने प्रमाणाभावात् अन्यत्र क्लृप्तेत्राप्यन्यथासिद्धिसत्त्वाच्च । तस्माद्विघ्नध्वंस एव मङ्गलस्य फलं समाप्तिस्त्वन्यत्र क्लृप्तसामान्यसामग्रीत एवोपपद्यत इति प्राञ्चरिति कृतं पल्लवितेन ।

अयं मत उत्कृष्टः अहमस्मादपकृष्ट इति ज्ञानविशेष एव नमस्कारपद वाच्यः तत्कुतोलभ्यते इत्यतआह । परमात्मानमिति । परमत्वं च नित्यज्ञानादिमत्त्वेन सर्वोत्कृष्टत्वं तथाच समानसम्बित्संवेद्यतया

सर्वस्मिंस्तदपेक्षयाऽपकृष्टत्वे भाति सर्वान्तः पातिनि स्वस्मिन्नप्यपकृष्टत्वज्ञानान्नमस्कारनिर्वाह इतिभावः नत्वेवं परममहत्परिमाणवत्त्वं परमत्वं तादृशपरिमाणविशिष्टात्मत्वस्य स्वापेक्षयाऽपकृष्टेऽपि सत्त्वेन नमस्कार्यतावच्छेदकत्वाभावात् यद्यपि नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति नियमेन सुखसमवायिकारणतावच्छेदकतया सिद्धस्यात्मत्वस्येश्वरेऽस्वीकारे सुखोत्पत्त्यापत्तिः तादृशनियमाभावेऽपि चात्यन्ताजनकव्यावृत्तरूपेणैव कारणताया न्याय्यत्वादीश्वरे आत्मत्वजातिसत्त्वे प्रमाणाभावः तथापि आत्मपदशक्यतावच्छेदकतयापि आत्मत्वजातिस्तत्साधारणी सिध्यति कार्यतावच्छेदकतया कारणतावच्छेदकतया च जातिसिद्धिवदसति बाधके शक्यतावच्छेदकतयापि जातिसिद्धेरदुष्टत्वात् असति बाधक इति विशेषणाच्च नाभावपदशक्यतावच्छेदकतयाऽभावत्वादिजातिसिद्धिः जन्यभावत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया ध्वंसत्वादेरपि जातित्वापत्त्या तद्विशेषणस्य भवतोऽप्यावश्यकत्वादित्याहुः तच्चिन्त्यम् तथा सति विभुपदशक्यतावच्छेदकतया विभुत्वमपि जातिः सिद्ध्येत् नचेष्टापत्तिः एवंविधानेकजातिकल्पने प्रमाणाभावादिति कारणतावच्छेदकतया कार्यतावच्छेदकतया च जातिसिद्धिरित्थं वाऽङ्गीकरणीयम् एवं च सुखसमवायिकारणतावच्छेदकात्मत्वजातेरीश्वरसाधारण्ये मानाभाव एव वस्तुतस्तु नहि शक्यतावच्छेदकतया जातिसिद्धिरिति ब्रूमो येनोक्तानुपपत्तिरुद्भाव्येत अपि तु सुखसमवायिकारणतावच्छेदकत्वेन जीवात्मनि सिद्धस्यात्मत्वस्य श्रौतात्मव्यवहारबलेन तत्सम्बन्धमात्रमीश्वरे कल्प्यते नित्यस्येत्यादिनियमस्य चाप्रयोजकत्वात् अदृष्टरूपसहकार्यन्तराभावादेव कार्याभावस्योपपन्नत्वात् अत्यन्ताजनकव्यावृत्तरूपेणैव कारणताकल्पनं च प्रमाणशून्यत्वमयुक्तं प्रकृते च श्रौतात्मव्यवहारस्यैव प्रमाणत्वेनात्यन्ताजनकसाधारणरूपेणापि कारणत्वकल्पनेक्षतिविरहात् नच सुखसमवायिकारणतावच्छेदकं द्रव्यत्वमेवातिप्रसक्तत्वेऽपि आत्मत्वस्यैवावच्छेदकत्वे बाधकाभावादिति वाच्यम् कारणत्वानतिप्रसक्तस्यैव कारणतावच्छेदकतया गगनादिषु कारणत्वसम्बन्धकल्पनेगौरवात् अन्यथा सत्त्वेनापि हेतुत्वापत्तेः संभवति व्याप्यधर्मे कारणतावच्छेदके व्यापकधर्मेणान्यथासिद्धावप्यतिप्रसक्तेरेवबीजत्वात् तस्यास्तु द्रव्यत्वेऽपि तुल्यत्वात् आत्मत्वे तथात्वेऽपि श्रौतात्मव्यवहारबलादीश्वरेऽपि कारणत्वसम्ब-

**इह खलुनिखिललोकविमोक्षमुख्योपायं**

---

न्यस्य कल्पनीयतया अतिप्रसक्तेरभावात् इत्थं चात्मपदशक्यतावच्छेदकत्वमपि तस्यैवेतिसारम् ।

नवीनास्तु नष्टएव पूर्वदेशसंयोगेउत्तरदेशसंयोगोत्पत्त्या उत्तरदेशसंयोगे पूर्वदेशसंयोगः प्रतिबन्धको वाच्यस्तत्र नतावत्पूर्वदेशत्वं उत्तरदेशभिन्नत्वम् उत्तरदेशभिन्नजतुरूपपूर्वदेशसंयुक्तस्यैवेषोरुत्तरदेशसंयोगात् किन्त्वात्मत्वं तत् तथाचात्मसंयोगत्वेन ; उत्तरदेशसंयोगे प्रतिबन्धकत्वमित्यायातम् एवंच प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वेनात्मत्वजातिसिद्धिः । विनिगमनाविरहेण तस्या ईश्वरसाधारण्यमपि नचैवमेकस्मिन्नीश्वरे एव सा जातिरास्तां नत्वनन्तेषु जीवात्मस्विति वाच्यम् एकव्यक्तिकत्वेन तस्याजातित्वासंभवात् तादृशधर्मस्वीकारेऽपि प्रत्येकं जीवमादाय विनिगमनाविरहतादवस्थ्यात् नचात्मनिरूपितत्वविशिष्टसंयोगत्वेन प्रतिबन्धकत्वे आत्मनिरूपितत्वसंयोगत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण विजातीयसंयोगत्वेनैव तत्प्रतिबन्धकत्वं स्यात् तथाच तत्प्रतिबन्धकतावच्छेदककोट्यप्रविष्टत्वान्नात्मत्वजातिसिद्धिरिति वाच्यम् विजातीयसंयोगसम्बन्धेनात्मनोऽपि विनिगमनाविरहेण तत्प्रतिबन्धकत्वस्य दुर्वारत्वात् नचैवं तज्जातेरीश्वरइव गगनादिष्वपि सत्त्वप्रसङ्ग इति वाच्यम् गगनादीनामीश्वरानतिरिक्तत्वेन तत्साधारण्येऽपि क्षतिविरहादिति पुनर्निर्व्यलीकः पन्था इति प्राहुः ।

प्रणम्येतिल्यबन्तपदस्य क्रियत इत्यनेनान्वयः नमस्कारसिद्धे नमःपदेनैव सम्भवेऽपि प्रणामस्य कर्त्तव्यापेक्षया पूर्वभावे दर्शिते शिष्या अप्येवं कुर्वन्त्विति शिष्यशिक्षार्थमेव ल्यबन्तेन तन्निर्देशः अत्र प्रशब्देन भक्तिश्रद्धातिशययोर्द्योत्यते युक्तिमुक्ताभिरित्यनेन युक्तीनां मुक्तासादृश्यप्रदर्शनेन निर्दोषत्वं मञ्जरीपदेनच स्वीयवाक्यावलीकोमलत्वं सूचितम् ॥ १ ॥

प्रवृत्तिसामान्यं प्रति इष्टसाधनताज्ञानस्य हेतुत्वात्प्रयोजकज्ञानं विना कथमेतद् ग्रन्थे प्रवर्त्ततामित्यत आह 'इहेति' मननोपायमात्मनस्तत्त्वज्ञानं निखिललोकविमोक्षमुख्योपायमामनन्तीति योजना तथाच सकलपुरुषकामनाविषयीभूतापवर्गजनकतत्त्वज्ञानप्रयोजकतया एतद्ग्रन्थे न प्रवृत्त्यनुपपत्तिरिति भावः मोक्षमुख्योपायत्वं च मुक्त्यभावप्रयोजकीभूताभावप्रतियो-

गित्वम् ॥ केचित्तु काशीमरणादितोपि श्रवणानधिकारिस्त्रीशूद्रादिलोकस्य
मुक्तिसम्भवेन मननोपायकतत्त्वज्ञानाभावस्य तदभावे प्रयोजकत्वाभावाल्लो-
कपदं श्रवणाधिकारिलोकपरतया व्याख्येयं तथाच श्रवणाधिकारिलोकमु
क्त्यभावे तत्त्वज्ञानाभावस्य प्रयोजकत्वलब्धा नोक्तदोष इति व्याचक्षते। तद-
सत्, श्रवणाधिकारिब्राह्मणादीनामपि काशीमरणादितो मुक्तिसम्भवेन त-
थाविधच्छित्यनुपपत्तेर्जागरूकत्वात् तस्मात्तत्त्वज्ञाने मोक्षमुख्योपायत्वं स्वा-
व्यवहितोत्तरक्षणोत्पत्तिकमुक्त्यभावप्रयोजकीभूताभावप्रतियोगित्वमेव वक्त-
व्यम् तत्र च नोक्तानुपपत्तिः तथाच लोकपदं यथाश्रुतमेव अत एव काशीम-
रणजन्यमुक्तौ मननोपायकतत्त्वज्ञानाजन्यत्वाद् 'विमोचितास्य' काशीमरणा-
द्यप्रयोज्यमोक्षइत्यर्थं इति निपुणतरमूहनीयम् अथ स्वसमानाधिकरण-
दुःखप्रागभावासमानकालीनदुःखध्वंसत्वं मुक्तित्वं दुःखध्वंसस्येदानीमपि
सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् मुक्त्यात्मकदुःख-
ध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनाम-
प्यमुक्तत्वप्रसङ्गात् स्वसमानाधिकरणत्वं प्रागभावविशेषणम् नच दुःखासमा
नकालीनत्वेनैव सामञ्जस्यात्प्रागभावेति व्यर्थमिति वाच्यम् यथासन्निवेशे वै-
यर्थ्याभावात् तथाप्यनतिप्रयोजनकत्वेन स्वसमानाधिकरणदुःखासमानका-
लीनदुःखध्वंसत्वमेव मुक्तित्वमित्यास्तां तल्लक्षणम् ननु स्वसमानाधिकरण-
दुःखासमानकालीनदुःखध्वंसत्वस्य मुक्तित्वरूपत्वे तस्य तत्त्वज्ञानजन्यताव-
च्छेदकत्वानुपपत्तिः स्वपदस्य दुःखध्वंससामान्यपरत्वे पुरुषान्तरीयदुःखध्वं-
ससमानाधिकरणदुःखासमानकालीनदुःखध्वंसस्येदानीमप्रसिद्ध्यापत्तेः स्व-
पदस्य तत्तद्दुःखध्वंसपरत्वे च सामान्यतः मुक्तित्वस्यैकस्याभावेन मुक्तित्वाव-
च्छिन्नं प्रति तत्त्वज्ञानत्वेन हेतुताया असम्भवदुक्तिकत्वापत्तेरिति चेन्न स्वसा-
मानाधिकरण्यकालिकविशेषणतोभयसम्बन्धेन दुःखवान्यस्तद्भिन्नदुःखध्वंसत्व
स्यैव मुक्तित्वरूपत्वात् अत्र च स्वत्वस्य परिचायकतया नोक्तविकल्पावसर इति
अत्र च ज्ञानादीनां क्षणिकत्ववारणाय विभुसमवेतयोग्यविशेषगुणनाशकत्वाव-
च्छिन्नं प्रति स्वोत्तरोत्पन्नविशेषगुणत्वेन नाशकतया तत एव मुक्त्यात्मकदुःखध्वं-
ससम्भवे तत्र तत्त्वज्ञानत्वेन हेतुतायां मानाभाव इति यदि विभाव्यते तदा
दुरितवद्भिन्नदुरितध्वंसत्वमेव मुक्तित्वमवसेयम् नचाग्रे दुरितानुत्पादात् दुरि-
तवद्भिन्नदुरितध्वंसत्वस्यार्थसमाजग्रस्तत्वात् कथं जन्यतावच्छेदकत्वमिति वा-
च्यम् प्रमाणाभावस्यैवार्थसमाजग्रस्तधर्मस्य कार्यतानवच्छेदकत्वे बीजतया प्र-

ज्ञाते मुक्तितत्त्वज्ञानयोः कार्यकारणभावबोधकवेदस्यैव बीजत्वेनार्थसमाजग-
स्तत्वेऽपि कार्यतावच्छेदकत्वे बाधकाभावात् नच सुखदुःखाभावयोरन्यतरस्यै-
व पुरुषार्थत्वेन मुक्तेरपुरुषार्थत्वप्रसङ्ग इति वाच्यम् बलवद्द्वेषविषयाभावत्वेन
पुरुषार्थत्वस्य दुःखाभाव इव दुःखजनकदुरितध्वंसेऽपि सम्भवादिति ननु तथा-
पि काशीमरणान्मुक्तिरिति वाक्येन काशीमरणस्यापि साक्षान्मुक्तिहेतुत्वप्रति-
पादनात् मुक्तित्वावच्छिन्नं प्रति तत्त्वज्ञानत्वेन हेतुत्वे व्यभिचारएवेति चेन्न
"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति" श्रुत्या तत्त्वज्ञान-
स्य मुक्तिसामान्यं प्रति पूर्वभावे दर्शिते काशीमरणस्य तत्त्वज्ञानद्वारा मुक्ति-
प्रयोजकत्वमित्येव तदर्थत्वात् सयुक्तिकं चैतत् अन्यथा तयोः परस्परजन्यमु-
क्तौ व्यभिचारेणोभयत्राप्यव्यवहितोत्तरत्वनिवेशे गौरवात् नच काशीमरणस्य
तत्त्वज्ञानं प्रति हेतुत्वेऽपि श्रवणादिजन्यतत्त्वज्ञाने व्यभिचारवारणायाव्यवहि-
तोत्तरत्वनिवेशोऽविशिष्ट इति वाच्यम् गङ्गामरणादिजन्यतत्त्वज्ञाने व्यभिचार-
वारणाय श्रवणादिजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्य भवतो-
प्यावश्यकत्वात् श्रवणादिजन्यतत्त्वज्ञाने व्यभिचारवारणाय परं काशीमरणज-
न्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेश इति तन्निवेशस्यैकधैव सम्भवात् भ-
वन्मते काशीमरणजन्यमुक्तौ व्यभिचारभिया तत्त्वज्ञानजन्यतावच्छेदककोटा-
वव्यवहितोत्तरत्वनिवेशः एवं तत्त्वज्ञानजन्यमुक्तौ व्यभिचारवारणाय काशी-
मरणजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेश इत्युभयत्राव्यवहितोत्तर-
त्वनिवेशस्यावश्यकत्वेनातिगौरवादिति ननु तथा "प्युभाभ्यामेव पक्षाभ्यां
यथा खेपक्षिणां गतिस्तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गति" रित्यनेन
कर्मणामपि मुक्तिहेतुत्वप्रतिपादनात् कथं तत्त्वज्ञानस्यैव मुक्तिहेतुत्वमिति
चेन्न तस्य तत्त्वज्ञानप्रतिबन्धकाधर्मध्वंसद्वारा तत्त्वज्ञानएवोपक्षयात् नतु मुक्तिं
प्रत्येव साक्षात्तस्य हेतुता "नान्यः पन्था विद्यतेऽयनायेति" श्रुतिविरोधात्
"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने-
ति" श्रुतिविरोधाच्च किंच यत्याश्रमविहितकर्मणएव हेतुत्वे गृहस्थस्या-
मुक्तत्वप्रसङ्गः "कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥ श्राद्धकृत्सत्य-
वादी च गृहस्थोऽपि विमुच्यत इति" गृहस्थस्यापि मुक्तिश्रवणात् गृहस्थस्या-
श्रमविहितकर्मणएव हेतुत्वे च यतेरमुक्तत्वप्रसङ्गात् नहि मुक्तौ वैजात्यमस्ति
येनोभयोरपि हेतुत्वमुपपादनीयमिति अतएव काशीमरणस्य कर्मणां वा
साक्षान्मुक्त्युपायत्वनिरासाय मोक्षमुख्योपायमित्यत्र मुख्येत्युक्तम् मूतरमो-

मननोपायमात्मनस्तत्त्वज्ञानं तत्त्वमामनन्ति तच्च प्रमाणाधीनमिति प्रमाणं निरूप्यते । तत्र प्रमायाः करणं प्रमाणम्

---

त्वासाधारणकारणभिन्नमित्यर्थः मुक्तित्वावच्छिन्नकार्यतानिरूपितकारणत्वं-त्वावासाधारणकारणत्वं तेनप्रागभावादीनां तत्तद्ध्वंसत्वेन हेतुत्वेपि न क्षतिरिति दिक् ।

नन्वात्माशरीरादिभ्योभिन्नइत्याकारकं तत्त्वज्ञानमिदानीमपि सम्भवति तत्कथन्नमुक्तिहेतुरित्यत आह ॥ मननोपायमिति । मननमुपायोयस्येत्यर्थः तथाच श्रवणमनननिदिध्यासनप्रयोज्यतत्त्वज्ञानमेव मुक्तिहेतुः तच्च नेदानीं सम्भवतीति भावः यद्यपि श्रवणोपायमित्येव वक्तुं युक्तम् तथापि मकारानुप्रासप्रसङ्गात् मननोपायमित्युक्तम् युक्तिभिरनुचि न्तनन्मननम् साधकबाधक-प्रमाणोपन्यासश्च युक्तिः । 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरिति' स्मरणात् श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानं निदिध्यासनमिति बोध्यम् ॥

तदिति तत्त्वज्ञानमित्यर्थः नीलपटो सुन्दरः स च मानीत्यादौ सर्वनाम्नां न नीलाद्युपस्थापकत्वं किन्तु मुख्यविशेष्यस्यैवेत्तरतोऽत्रापि पूर्वोपस्थितत-त्त्वज्ञानस्यैवोपस्थापकत्वतुतन्मननस्येत्यर्थः मननस्य मुख्यविशेष्यतया पूर्वमनु-पस्थितत्वेन तद्बोधासम्भवादित्यवधेयम्॥प्रमाणाधीनमिति । प्रमाणज्ञानप्रयो-ज्यमित्यर्थः । श्रवणादिप्रयोज्यमात्मनीतरभिन्नत्वज्ञानमेवहि तत्त्वज्ञानं तच्च नेतरपदार्थतत्त्वज्ञानं विना तत्तु नप्रमाणज्ञानं विना प्रमेयव्यवस्थितेः प्रमा-णाज्ञानाधीनत्वादिति प्रमाणनिरूपणमावश्यकमितिभावः । यद्वा तत्त्वज्ञान-स्य मननद्वारा प्रमाणाधीनत्वसूचनाय मननोपायमित्युक्तम् वस्तुतस्तु वस्तु व्यवहितोपस्थितविशेषणस्यापि तच्छब्देन परामर्शदर्शनात् अव्यवहितोपस्थि-तमुख्यविशेष्यमात्रोपस्थापकत्वनियमस्यौत्सर्गिकत्वतात्पर्यस्य नियामकत्वाच्च नोक्तातिप्रसङ्गः एवंच । तच्च । मननञ्चेत्यर्थः । साधकबाधकप्रमाणोपन्यासरू-पयुक्तिभिरनुचिंतनरूपमननस्यप्रमाणज्ञानं विनाऽसम्भवादितिभावः । प्रमाणं निरूप्यतइति । लक्षणस्वरूपादिप्रकारकवक्तृमाननिरूपणविषयीभूतं प्रमा-णमित्यर्थः । तत्रेति । प्रमाणेनिरूपणीयइत्यर्थः । प्रमायाःकरणमिति । अत्र प्रमाणपदवाच्यत्वं लक्ष्यतावच्छेदकं प्रमाकरणत्वंच लक्षणं । नातः प्रमा-

णत्वस्य प्रमाकरणत्वरूपत्वेन लक्षणलक्ष्यतावच्छेदकयोरभेदापत्तिः यथा-
च तयोरभेदेनिष्टापत्तिस्तथा विवेचनीयमुपरिष्टात् । ननु प्रमाकरणमिति वि-
धाय प्रमायाः करणमित्युक्तौ किंबीजमिति चेन्न लक्षणवाक्याद्यादृशार्थ-
स्य बोधस्तस्यैव लक्षणत्वेन प्रमानिरूपितकरणत्वस्य लक्षणत्वलाभाय त-
थोक्तिः अन्यथा तत्पुरुषे पूर्वपदलक्षणया प्रमासम्बन्धिभिन्नं कारणमित्यर्थलाभे
इतरभेदानुमाने हेतौ वैयर्थ्यस्य दुर्वारत्वाद् गुरुत्वाच्च लक्षणवाक्यतात्पर्यवि-
षयीभूतार्थस्यैव लक्षणत्वोपगमेन प्रमानिरूपितकरणत्वएव तात्पर्येण तस्यै-
व हेतुत्वोपपादने तु प्रयासगौरवमिति । वस्तुतस्तु प्रमाकरणमित्यभेदेनान्व-
यभ्रमनिराकरणाय प्रमायाःकरणमित्युक्तिः । असाधारणधर्मोहि लक्षणम्
यथा सास्नाशृङ्गवती गौरिति सास्नावत्त्वमात्रं सरटे शृङ्गवत्त्वमात्रं महिष्या-
दावतिव्याप्तमिति सास्नाशृङ्गवत्त्वविशिष्टधर्मो लक्षणं तदितरावृत्तित्वे सति
सकलतद्वृत्तित्वमसाधारणत्वं शृङ्गवत्त्वगगनत्वरूपवत्त्वादेर्गोलक्षणत्ववार-
णाय सत्यन्ततद्वृत्तित्वसाकल्यानां यथायथं सन्निवेशः । तदिदमुक्तम् "लक्ष-
णान्येव पदानि ग्राह्याणि यैः पदैरतिव्याप्त्यव्याप्त्यसम्भवादयोदोषानिराक्रियन्ते"
अलक्ष्ये लक्षणगमनमतिव्याप्तिः यथा शृङ्गवती गौरिति । लक्ष्यैकदेशे लक्षण-
स्यावर्त्तनमव्याप्तिः । यथाकृष्णागौरिति । लक्ष्ये क्वाप्यवर्त्तनमसम्भवः । यथै-
कशफा गौरिति । इत्थं चात्र छिदिक्रियाकरण कुठारादावतिव्याप्तेर्वारणाय
'मा'पदोपादानम् । दोषदुष्टचक्षुरिन्द्रिये भ्रमात्मकज्ञानकरणत्वादतिव्याप्ति-
वारणाय प्रपदम् । प्रमात्वं प्रमाणमित्युक्तौ चक्षुरिन्द्रियेऽव्याप्तिरतःप्रमाक-
रणमिति विशिष्टमुपात्तम् । ननु दोषदुष्टचक्षुरिन्द्रियेणापि कदाचित्प्रमाज-
ननात्तत्र प्रमाणव्यवहारोप्यस्त्येव नच दुष्टतादशायां तादृशव्यवहारा-
पत्तिरिति वाच्यम् न हीदं कालघटितं लक्षणं येन तस्मिन्काले आपत्तिः स्या-
त् किन्तु तत्तदिन्द्रिये आपादनीयं तत्र तु दोषशून्यतादशायामिष्टापत्तेरि-
तिचेन्न । यत्र घर्षणादिना खण्डचक्षुरुत्पन्नं भ्रममेवोत्पाद्य तन्नाशोपि तत्र प्रमा-
या अजनके केनापि प्रमाणव्यवहारस्यास्वीकारादतिव्याप्त्या प्रपदस्यावश्य-
कत्वात् दोषवशेनान्यदीयेदन्त्वस्यैव भानसम्भवेन सर्वांशे भ्रमस्यापि स-
म्भवात् यदिच "सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारेतु विपर्यय" इति नियमा-
त्सर्वांशे न भ्रमसम्भवः तथापि तत्तदर्थमादायैव प्रमाणव्यवहारात् । पीतः
शङ्ख इति भ्रमजनके पीतत्वांशे प्रमाणत्ववारणाय तत्तत्प्रमात्वलाभाय प्रप-
दस्यावश्यकत्वात् अनुभवस्यापि संस्कारद्वारा स्मृतिरूपज्ञानकरणत्वाद-
तिव्याप्तेश्च प्रपदमिति ।

**प्रमाख्ययथार्थानुभवः। "तदाहुराचार्याः" यथार्थानुभवो मानमिति ननु किमिदं याथार्थ्यं किंवानुभवत्वमिति। उच्यते। तद्वति तदवगाहित्वं याथार्थ्यं भवति हि रजते इदं रजतमिति ज्ञानं तद्वति तदवगाहीति यथार्थम्। शुक्ताविदं रजतमिति ज्ञानं तु न तद्वति तदवगाहीति न यथार्थम्।**

---

ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वात्प्रमाज्ञानं विना कथं प्रमाकरणत्वज्ञानमित्यत आह। प्रमाचेति। यद्वा ननु प्रमात्वं यथार्थज्ञानत्वं तथाच स्मृतेरपि प्रमात्वेन तत्करणेऽनुभवे प्रपदोपादानेप्यतिव्याप्तितादवस्थ्यमित्यत आह। प्रमाचेति। तथाचानुभवत्वघटितप्रमात्वस्य च स्मृतावसत्त्वेन न तत्करणेऽनुभवेऽतिव्याप्तिरितिभावः। अत्र चानुभवत्वस्यैव प्रमात्वरूपत्वे भ्रमेऽतिव्याप्तिः। यथार्थत्वस्यैव तद्रूपत्वे च स्मृतावतिव्याप्तिरित्युभयोपादानम्। ननुप्रमात्वस्यानुभवत्वघटितत्वे प्रमाणाभावः। नचेत्थं स्मृतिरूपप्रमाकरणतयाऽनुभवस्य प्रमाणत्वापत्तिः इष्टत्वात् अनुमित्युपमितिशाब्दभिन्नप्रमितिकरणत्वेन च प्रत्यक्षप्रमाणविभजनान्न विभागव्याघातोपीत्यतआह। तदाहुरिति। मानमित्यादि। यथार्थानुभवोमानमपेक्षतयेष्यतइति यावत्। भावव्युत्पत्त्या मानंमितिः प्रमितिरिति यावत्। अनपेक्षतया इतरप्रामाण्यानधीनप्रामाण्यकतया। स्मृतेःप्रमात्वं हि अनुभवप्रमात्वाधीनमिति स्मृतेरप्रमात्वमित्यर्थः। यदसाधारणंसहकार्यासाद्य मनोबहिर्गोचरां प्रमां जनयति तस्यैव प्रमाणान्तरत्वमितिनियमेनानुभवसहकारेण मनसः स्मृतिरूपप्रमाजनकत्वादनुभवस्य प्रमाणान्तरत्वापत्तिरतः स्मृतिव्यावृत्तमेवानुभवत्वघटितं प्रमात्वमवश्यं वाच्यम्। एवं प्रत्यक्षं निवेश्यानुमिति सन्निवेश्य प्रत्यक्षोपमिति शाब्दभिन्नप्रमितिकरणत्वेनानुभवस्यानुमानेप्यन्तर्भावापत्तिः विनिगमनाविरहादितिभावः।

तद्वतीति। तद्विशेष्यकत्वेसतीत्यर्थः। नचैवंवह्निगुञ्जापुञ्जयोरिमौगुञ्जापुञ्जवह्नी इति विपरीतभ्रमे वह्न्यंशे वह्नित्ववद्विशेष्यकत्वस्य गुञ्जापुञ्जांशे च वह्नित्वप्रकारकत्वस्य सत्त्वात् तत्रापिप्रमात्वापत्तिरितिवाच्यम्। तद्विशेष्यकत्वावच्छेदेन तत् प्रकारकत्वस्य विवक्षितत्वात्। तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमितितन्नि-

नन्वेवं रजतेदं रजतं नवेति संशयोऽपि प्रमा स्यादिति चेन्न ।
रजतत्वांशे प्रमैव । "तद्वति तदनुभवस्तत्प्रमेति प्रमाणि-
काः" । ननु शाखावच्छेदेन कपिसंयोगवति वृक्षे मूले वृक्षः
कपिसंयोगीतिप्रत्ययोऽपि प्रमा स्यात् । कपिसंयोगवति वृक्षे

---

ष्कर्षः । तथाच तत्सम्बन्धावच्छिन्नतद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धा-
वच्छिन्नतन्निष्ठप्रकारताशालिज्ञानत्वं तत्सम्बन्धावच्छिन्नतत्प्रकारकप्रमात्वमि-
तिफलितम् । तत्सम्बन्धावच्छिन्नतद्वत्त्वनिवेशात् तेनसम्बन्धेन तद्विरहिण्यपि
कालिकादिसम्बन्धेन तद्वत्त्वस्य सत्त्वेऽपि न भ्रमेऽतिव्याप्तिः । एवं रजते एवसं-
योगादिसम्बन्धेन रजतत्वप्रकारकज्ञानस्यापि समवायसंसर्गकरजतत्वप्रमात्वा-
पत्तिरित्युभयत्र तत्सम्बन्धावच्छिन्नत्वनिवेशः । लक्ष्ये लक्षणंघटयति । भवति-
ह्यीति । तद्वति । रजतत्ववति । तदवगाही । रजतत्वावगाही । अलक्ष्ये लक्षणा-
सत्त्वप्रदर्शनव्याजेन तद्वतीत्यस्य व्यावृत्तिमाह । शुक्तावित्यादिना । तद्वतीति ।
रजतत्ववतीत्यर्थः किन्तु रजतत्वाभाववति रजतत्वावगाहित्वाद् भ्रमइति
भावः एते न तदभाववति तत्प्रकारकं ज्ञानं भ्रमइति भ्रमलक्षणं सूचितम् । न-
नु वृक्षः कपिसंयोगीति ज्ञानस्यापि मूलावच्छेदेन संयोगाभाववति संयोग-
प्रकारकत्वात् भ्रमत्वापत्तिरितिचेन्न प्रतियोगिव्यधिकरणतदभाववत्त्वस्य-
विवक्षितत्वात् वृक्षे संयोगाभावस्य न प्रतियोगिव्यधिकरणइति नानुपपत्तिः ।
न चैवंमूले वृक्षः कपिसंयोगीतिज्ञानस्य भ्रमत्वानुपपत्तिरितिवाच्यम् । त-
त्रावच्छेदकत्वांशे एव भ्रमत्वाङ्गीकारात् नतुसंयोगांशेपीति ।

ननुतद्वतितत्प्रकारकज्ञानत्वस्यैव प्रमात्वरूपत्वे संशयेऽति व्याप्तिरतः निश्चय-
त्वघटितमेवतद्वाच्यमित्याशयेनाशङ्कते । नन्वेवमिति । एवं । निश्चयत्वाघटि-
तस्यैवप्रमात्वरूपत्वे रजतत्वांशइति । एकधर्मिकविरुद्धनाना कोटिकंज्ञानंसं-
शयइति रजतत्वसंशये रजतत्वरजतत्वाभावौ कोटी तत्र रजतत्वाभावव-
ति रजतत्वाभावप्रकारकत्वाभावात् रजतत्वाभावांशेऽप्रमात्वेऽपि रजतत्व-
वति रजतत्वावगाहित्वात्तदंशे प्रमात्वमिष्यतएवेति भावः । निश्चयत्वाघ-
टितमेव प्रमात्वमित्यत्र प्राचीनसंमतिमाह । तद्वतीति । स्मृतिव्यावर्त्त-
नायानुभवत्वघटितं परमङ्गीकुर्वंति नतुसंशयव्यावर्त्तनायनिश्चयत्वघटित-
मपीति भावः । शङ्कते । शाखेति । क्वचिन्नन्वित्येवपाठः कपिसंयोगरहिते

तदवगाहित्वादिति चेन्न । वृक्षे कपिसंयोगप्रत्ययः प्रमैव । मूले अवच्छेदकत्वप्रत्ययस्तु न तथा । तदयतदनवच्छेदकत्वादिति । स्मृतिभिन्नज्ञानत्वमनुभवत्वं जातिविशेषोवा । अनुभवामीत्यनुगतप्रतीतेर्बाधकं विना जातिविषयकत्वात् ।

---

वृक्षे कपिसंयोगवत्त्वाभावान्न प्रमात्वसम्भवइत्यतः कपिसंयोगवति वृक्षइति । तत्रापि मूलावच्छेदेन कपिसंयोगसत्त्वे प्रमात्वे इष्टापत्तिरतः शाखावच्छेदेनेति सावधारणं शाखावच्छेदेनैव नतु मूलावच्छेदेनापीत्यर्थः । वृक्षः कपिसंयोगीतिप्रत्ययस्य प्रमात्वे अविवादान्मूलइति । मूलावच्छेदेनान्ततोगगनादिसंयोगस्य सत्त्वात् मूले वृक्षः संयोगीतिप्रत्ययस्य प्रमात्वं सर्वसंमतमेवेत्यतः कपिसंयोगीति । अवच्छेदकत्वप्रत्ययस्तु । कपिसंयोगावच्छेदकत्वप्रत्ययस्तु । नतथा । नप्रमा । तत्र । मूलस्य तदनवच्छेदकत्वात् । कपिसंयोगानवच्छेदकत्वात् । कपिसंयोगवतिवृक्षे कपिसंयोगप्रकारकत्वात् कपिसंयोगांशे प्रमात्वमेव । अवच्छेदकत्ववति अवच्छेदकत्वप्रकारकत्वाभावाच न तदंशे प्रमात्वमितिभावः । ननुस्मृतिभिन्नज्ञानत्वमनुभवत्वमितत्र संस्कारजन्यज्ञानत्वमेव स्मृतित्वं वाच्यं तच्च प्रत्यभिज्ञायामतिप्रसक्तमनुगतंदुर्वचं संस्कारत्वेन तज्जन्यत्वं च स्मृतित्वस्य जातित्वमन्तरा संस्कारत्वेन जनकतायां मानाभावेनासम्भवि तस्य जातित्वेच संस्कारजन्यत्वघटितत्वाद् गुरुतरंलक्षणंस्यात् । यदिचस्मृतित्वं जातिः तदवच्छिन्नप्रतियोगिताकभेदस्यैव च निवेशान्न गौरवमिति विभाव्यते तदाऽनुभवत्वमपिजातिः तद्विशिष्टत्वमेव लक्षणमास्तां कृतमेतादृक्क्षुद्रयुक्त्याश्रयेणाह । जातिविशेषोवेति ।

नन्वत्र किंमानमतआह । अनुभवामीति । अनुगतप्रतीतेरनुगतधर्मंविनानुपपत्तेरनुगतधर्मोऽभ्युपेयस्तस्य चोपाधिरूपत्वे गौरवात् जातित्वमेवज्यायइतिभावः । अभावइत्यनुगतप्रतीत्याऽभावत्वरूपजातिसिद्ध्यापत्तिरतो बाधकंविनेति । तत्तु जातिबाधकस्यैव सत्त्वात् नित्यानेकसमवेतस्यैव जातित्वादितिभावः । तथाचोक्तम् । व्यक्तेरभेदस्तुल्यत्वं सङ्करोथानवस्थितिः । रूपहानिरसम्बन्धोजातिबाधकसंग्रहः । व्यक्तेरभेदः स्वाश्रयव्यक्तेरैक्यम् । यथाआकाशत्वादि । व्यक्तेस्तुल्यत्वम् । अन्यूनानतिरिक्तव्यक्तिकत्वम् । यथाघटत्वकलशत्वादि । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्रसमा-

---

* प्रामाणिकास्तुदन्त्यमेवपठन्ति ।

कारणत्वं च व्यापारवदसाधारणकारणत्वम् । घटं प्रति कपाल संयोगवारणाय व्यापारवदिति । ईश्वरज्ञानादिवारणायाऽसाधारणेति । नन्वेवं ज्ञानं प्रति आत्मापि करणं स्यात् आत्ममनःसंयोगरूपव्यापारस्य सत्त्वात् । तज्जन्यत्वे सति तज्जन्यजनकोऽवान्तरव्यापारः भवति चात्ममनःसंयोग आत्मजन्यः आत्मजन्यज्ञानजनकश्चेति चेत् । स्यादेव ।

---

वेशः सङ्करः यथाभूतत्वमूर्त्तत्वादि अनवस्था यथाजातित्वादि । विशेषत्वजातिस्वीकारे रूपहानिः रूपस्य लक्षणस्य सामान्यभिन्नत्वे सति समवेतत्वे सति सामान्यरहितत्वरूपविशेषलक्षणस्य हानिः विशेषस्वरूपजातेरवेतरव्यावर्त्तकत्वात् स्वतएव व्यावृत्तत्वरूपविशेषस्वरूपहानिरितिवार्थः । असम्बन्धः । असमवेतत्वम् यथाकम्बुग्रीवादिमत्त्वादीति । केचित्तु स्मृतौव्यभिचारवारणाय विशिष्टवैशिष्ट्यावगाह्यनुभवत्वस्यैव विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकत्वमुपेयम् । तथाच तज्जन्यतावच्छेदककोटिप्रविष्टत्वेनानुभवत्वजातिसिद्धिरित्याहुः । अत्रच स्वर्गाद्यनुमिति शाब्दबोधानन्तरं स्वर्गादिकमनुभवामीति प्रत्ययापत्तेः साक्षात्कारत्वमेव अनुभवत्वमनुभवामीति प्रत्यक्षविषयइति न तादृशप्रत्यक्षविषयतया प्रत्यक्षादिचतुष्टयसाधारणजातिसिद्धिः । यदपि विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकतया* तत्सिद्धिरिति । तदपिन । नित्यव्यावर्त्तनाय जन्यानुभवत्वमेव तत्कार्यतावच्छेदकमुपगन्तव्यं तत्र जन्यत्वं ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं †वा कालिकसम्बन्धेन घटत्वादिमत्त्वंवेति निर्वक्तुमशक्यतया जन्यप्रत्यक्षमात्रवृत्तिवैजात्यमेव कार्यतावच्छेदकंवाच्यं तथाचकुतःसकलप्रत्यक्षादि साधारणानुभवत्वजातिसिद्धिरित्यास्तामसदावेशेन ।

प्रमाकरणत्वघटककरणत्वंलक्षयति । व्यापारवदिति । कपालेति । तत्राप्यसाधारणकारणत्वसत्त्वादितिभावः । असाधारणेति । असाधारणकारणत्वं च कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । ईश्वरज्ञानस्य तु उपादानप्रत्यक्षविषयाकार्यत्वावच्छिन्नंप्रत्येवहेतुत्वान्ना-

---

* जन्यतावच्छेदककोटिप्रविष्टतयेत्यपिपाठान्तरम् ।

† घटादिमत्त्वेवेत्यपिपाठान्तरम् ।

उपाधीनां करणत्वादीनां भेदाच्च व्यवहारभेदः। अतएव विवक्षातः कारकविभक्तयो नाना भवन्तीति शाब्दिकाः। अतएवात्मानमात्मनावेत्सीति तृतीया। शिवादित्यमिश्रास्तु करणाद्याकारानुगतमतेः करणत्वादिकमखण्डोपाधिरूपमाश्रित्य सञ्जीचक्रुः। तच्च प्रमाणं चतुर्विधमित्याह भगवान्सूत्रकारः "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति," तत्र साक्षात्काररूपप्रमाकरणं प्रत्यक्षं। साक्षात्कारत्वंच साक्षात्करोमीत्यनुगतप्रतीतिसाक्षिकोजातिविशेषएव। नचेयमिन्द्रियजन्यज्ञानत्वविषया ज्ञानमात्रस्यमनोरूपेन्द्रियजन्यत्वात्। इन्द्रियाऽप्रतीतावपि तथा प्रतीतेश्च। नापि चाक्षुषत्वादिजातिविषया।

---

तिव्याप्तिरिति भावः नतु कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशून्यत्वन्तत् तथासति कार्यमात्रं प्रति कालस्य हेतुत्वेन कालोपाधिविधया चक्षुरादीनामपि कार्यमात्रं प्रति हेतुतया असङ्गत्यापत्तेरितिध्येयम्। ननु फलायोगव्यवच्छिन्नं कारणमेव करणम् अतएवात्मानज्ञानकरणं तस्य नित्यत्वेन फलायोगव्यवच्छेदाभावादित्यभिप्रायेणाशङ्कते। नन्वेवमिति। एवम्। एवंविधलक्षणकरणे। व्यापारस्य सत्त्वादिति। जन्यज्ञानत्वावच्छिन्नं प्रत्यसाधारणकारणत्वाच्चेत्यपि द्रष्टव्यम्। तज्जन्यत्वे सतीति। तज्जन्यत्वस्य फलेपि सत्त्वात्तज्जन्यजनकइति। तज्जन्यजनकत्वस्य चेश्वरज्ञानादावपि सत्त्वात्तज्जन्यत्वे सतीति। स्यादेवेति। सहकारिविरहे फलायोगव्यवच्छेदस्यासम्भवित्वात् सहकारिसमवधाने फलायोगव्यवच्छेदस्य चात्मन्यपि सत्त्वेन त्वन्मतेप्यगतेरितिभावः।

नन्वेकस्यैव कर्त्तृत्वकरणत्वस्वीकारे कर्त्ताकरणमिति नानाविधव्यवहारोऽनुपपन्नः व्यवहर्त्तव्यभेदस्यैव व्यवहारभेदनियामकत्वादित्यतआह। उपाधीनामिति। तथाची "धर्मेग्रसङ्करेप्युपाधेरसङ्करादिति" न्यायेन व्यवहर्त्तव्याभेदेपि व्यवहर्तव्यतावच्छेदकभेदादेव व्यवहारभेदः

यथा घटरूपव्यवहर्त्तव्याभेदेऽपि घटत्वद्रव्यत्वादिरूपव्यवहर्त्तव्यतावच्छेद-
कभेदादेव घटो द्रव्यमित्यादिव्यवहारभेदः एवं पाचकपाठकादिव्यवहारभे-
दोऽपीति भावः । अतएवेति । एकस्यैव कर्त्तृत्वकरणत्वस्वीकारादेवे-
त्यर्थः । अतएव । आत्मनः करणत्वकर्तृत्वस्वीकारादेव । तृतीयेति
तृतीयायाः करणत्वार्थकत्वादिति भावः । अङ्गीचक्रुरित्यस्वरसोद्भावनं तद्बी-
जन्तु सर्वत्रैवाखण्डोपाधेरेवानुगतप्रतीतिविषयत्वे सखण्डोपाधेरुच्छेदाप-
त्तिः । न च कर्त्रादिव्यावृत्तकरणत्वनिर्वचनानुपपत्त्या तस्याखण्डोपाधिरू-
पत्वमेव न्याय्यमिति वाच्यम् । तस्य तदाधारत्वेऽप्युक्ततः, व्यवहारभेदस्य व्यवह-
र्त्तव्यतावच्छेदकभेदादेवान्यथाप्युपेयत्वादिति । नन्वेवमप्यात्मनः प्रमाण-
त्वापत्तिरिति चेन्न । अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्यतानिरूपि-
तकारणताशालित्वे सति व्यापारवत्त्वस्यैव प्रमाणत्वरूपत्वेनात्मनि तदसम्भ-
वादिति । अनुभवत्वव्याप्यत्वंच तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं स्मृतित्व-
रूपजातिमादायानुभवेऽतिव्याप्तिवारणाय प्रमापदम् । यत्तु तमोभिन्नचाक्षुष-
त्वस्यालोकजन्यतावच्छेदकत्वादालोकेऽतिव्याप्तेर्जात्यवच्छिन्नेत्यत्रावच्छेद-
कतापर्याप्तिनिवेश आवश्यकः इत्थंच जन्यज्ञानत्वावच्छिन्नं प्रत्यात्मत्वेन हेतुत-
या ज्ञानत्वजातेरवच्छेदककोटिप्रविष्टत्वेऽपि कार्यतावच्छेदकतापर्याप्त्यधिकर-
णत्वाभावान्नातएव वारणेऽनुभवत्वव्याप्येति नोपादेयमिति । तन्न । तथापि नि-
त्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वोपगमेन ज्ञानत्वावच्छिन्नं प्रत्येवात्मत्वेन-
हेतुतया ज्ञानत्ववारणाय तदावश्यकत्वादिति । चार्वाकमते प्रत्यक्षस्यैव प्रमा-
णत्वात् भट्टानांचानुपलब्धेरपि प्रमाणत्वात्तन्निरासायाह । चतुर्विधमिति ।
तत्रेति । चतुर्विधप्रमाणमध्ये इत्यर्थः । तत्र प्रथमोद्दिष्टं प्रत्यक्षप्रमाणं लक्ष-
यति । साक्षात्काररूपेति । साक्षात्कारेति, अनुमानादावतिव्याप्तिवार-
णाय साक्षात्कारप्रमेत्युक्ते साक्षात्कारस्य प्रमेति भ्रमः स्यात् साक्षात्कारिप्रमे-
त्युक्तावपि तथेत्यतो रूपेति । इयं । साक्षात्करोमीति प्रतीतिः । इन्द्रियेति ।
तथाच न साक्षात्कारत्वरूपजातिसिद्धिरिति भावः । ज्ञानमात्रस्येति । तथाच-
मनोरूपेन्द्रियजन्यत्वस्यानुमित्यादावपि सत्त्वेन तत्रापि साक्षात्करोमीति प्रती-
त्यापत्तिरिति भावः । ननु इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यताशालि-
ज्ञानत्वमेव तद्विषयः मनसस्तु मानसज्ञान एव इन्द्रियत्वेन हेतुत्वम् अनु-
मित्यादिकं प्रति तु मनस्त्वेन इत्यरुचेराह । इन्द्रियाप्रतीताविति । इन्द्रियत्वा-

**अननुगतत्वात् । यद्वा जन्यधीजन्यमात्रवृत्तिजातिशून्यत्वमानन्तु तत् भवति हि जन्यधीजन्यमात्रवृत्त्यनुमितित्वादि तच्छून्यत्वं साक्षात्कारमात्रे ।**

---

प्रतीतावित्यर्थः । तथा चेन्द्रियत्वज्ञानं विना तद्घटितधर्मज्ञानाभावान्न तादृशधर्मस्य विषयत्वसम्भव इति भावः । वस्तुतस्तु साक्षात्कारत्वरूपजात्यभावे इन्द्रियत्वेन कार्यकारणभावासम्भवितयेन्द्रियजन्यत्वं नेन्द्रियजन्यज्ञानत्वस्य साक्षात्कारत्वरूपत्वासम्भवान्नेत्यमनतागीयं परन्तु ननु इन्द्रियनिष्ठजनकतानिरूपितविषयतासम्बन्धावच्छिन्नजन्यताशालिज्ञानत्वमेवानुमित्यादिव्यावृत्तं तद्विषय इत्यत आह । इन्द्रियेति । इन्द्रियाज्ञानेऽपीत्यर्थः । तथाप्रतीतिः । साक्षात्करोमीतिप्रतीतेरित्यर्थः । एतेन ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्यपि निरस्तम् । तद्ज्ञानेऽपि तत्प्रतीतेर्जायमानत्वादिति ।

अवश्याभ्युपेयचाक्षुषत्वादिजातिरपि नास्याः विषय इत्याशयेनाह । नापीति । अननुगतत्वादिति । अनुगतप्रतीतिश्चानुगतधर्मं विनानुपपत्तेरिति भावः । ननूपनीतभानानन्तरं साक्षात्करोमीत्यप्रतीतेर्लौकिकविषयतायास्तद्व्यञ्जकत्वेनावश्यकत्वाल्लौकिकविषयताशालिज्ञानत्वमेव साक्षात्करोमीतिप्रतीतिविषयः एवमनुगतप्रतीत्यैव जातिसिद्धौ विभुर्विभुरित्यनुगतप्रतीत्या विभुत्वरूपजातिसिद्धिः स्यात्किन्तु कारणतावच्छेदकतया कार्यतावच्छेदकतया वा तत्सिद्धिः । न चात्र तत्सम्भवति नचेन्द्रियत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया तत्सिद्धिरिति वाच्यम् । इन्द्रियत्वस्यैकस्याभावात् इन्द्रियनिष्ठेष्वेकत्वेषु वैजात्यं स्वीकृत्य विजातीयैकत्वरूपस्य तस्य सम्भवेऽपि कार्यमात्रवृत्तिधर्मस्यैव कार्यतावच्छेदकत्वेन साक्षात्कारत्वस्य नित्यानित्यवृत्तितया जन्यतावच्छेदकत्वासम्भवात् । जन्यत्वनिवेशे च जन्यत्वस्य ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वादिविकल्पग्रासेन निर्वक्तुमशक्यतया जन्यसाक्षात्कारमात्रवृत्तिवैजात्यं स्वीकृत्य तस्यैव जन्यतावच्छेदकत्वावश्यकतया कुतस्तत्कोटिप्रविष्टतया साक्षात्कारत्वरूपजातिसिद्धिः । एवं चाक्षुषस्पार्शनादौ विभिन्नचक्षुरादीनां हेतुत्वावश्यकतया तादृशसामान्यकार्यकारणभावे मानाभावाच्चेत्यत आह । यद्वेत्यादि । जन्यधीत्यादि । जन्या या धीस्तज्जन्यमात्रवृत्तिर्या जातिस्तच्छून्यज्ञानत्वं साक्षात्कारत्वमित्यर्थः । लक्ष्ये लक्षणङ्गमयति । भव-

न च निदिध्यासनजन्यमात्रवृत्तिमोक्षजनकतावच्छेदकजाति-

---

तिङ्गीति । अनुमितित्वादीत्यादिपदादुपमितित्वशाब्दत्वादिपरिग्रहः । तत्र हि जन्यं, ज्ञानं व्याप्तिज्ञानम्, अतिदेशवाक्यार्थज्ञानं पदज्ञानादि, तज्जन्यमनुमित्यादि, तन्मात्रवृत्त्यनुमितित्वादि तच्छून्यत्वं साक्षात्कारेऽस्तीत्यर्थः । अत्र च ज्ञानत्वं साक्षात्कारत्वमित्युक्तावनुमित्यादावतिव्याप्तिरतःशून्यान्तम् । जातिशून्यज्ञानत्वं साक्षात्कारत्वमित्युक्तावसम्भवः ज्ञानत्वादिजातेरेव तत्र सत्त्वादित्यतोऽजन्यधीजन्यमात्रवृत्तीति जातिविशेषणम् ज्ञानत्वस्य च जन्यधीजन्यभिन्नेश्वरसाक्षात्कारे निर्विकल्पके च वृत्तित्वान्न तन्मात्रवृत्तित्वमिति नासम्भवः । जन्यधीजन्यवृत्तीत्युक्तावपि तथा ज्ञानत्वादेर्जन्यधीजन्ये सविकल्पके वृत्तित्वादतो मात्रेति । जन्यधीजन्यभिन्नावृत्तित्वे सति जन्यधीजन्यवृत्तित्वं तन्मात्रवृत्तित्वं चाक्षुषत्वादिजातेरपि धीजन्यमात्रवृत्तित्वादव्याप्तिरतः प्रथमजन्यपदोपादानम् तस्य च जन्यज्ञानाजन्यनिर्विकल्पकवृत्तित्वान्न तन्मात्रवृत्तित्वम् । जन्यजन्यमात्रवृत्तीत्युक्तावपि निर्विकल्पकस्य जन्यशरीरादिजन्यत्वेन चाक्षुषत्वादेर्जन्यजन्यमात्रवृत्तित्वादव्याप्तिरतो धीपदोपादानम् । जन्यधीमात्रवृत्तीत्युक्तावपि चाक्षुषत्वस्य जन्यज्ञानमात्रवृत्तित्वादतो द्वितीयजन्यपदोपादानम् । जन्यमात्रवृत्तीत्युक्तावपि तथैवेत्यतो जन्यधीति धीमात्रवृत्तीत्युक्तौ ज्ञानत्वादिकमादायासम्भव इति समुदितमुपात्तम् । जन्यधीजन्यमात्रवृत्तिधर्मशून्यत्वमित्युक्तौ सविकल्पकत्वस्य तन्मात्रवृत्तित्वेनाव्याप्तिरतो जातिपदम् । सविकल्पकत्वन्तु न जातिः चाक्षुषत्वादिना सङ्करात् । समवायसम्बन्धावच्छिन्नजातिशून्यत्वं चात्र बोध्यम् । अन्यथा कालिकादिसम्बन्धेनानुमितित्वादेरपि प्रत्यक्षादौ सत्त्वेनासम्भवापत्तेः एतदर्थमेव च जातिपदम् । घटादावतिव्याप्तिवारणाय ज्ञानत्वमिति । ननूपादानप्रत्यक्षस्य कार्यमात्रे हेतुतया कपालविषयकोपादानप्रत्यक्षरूपजन्यज्ञानजन्यमात्रवृत्तिघटत्वादिजातिसत्त्वात्तत्रनातिव्याप्तिरिति चेन्न । सर्गादौ कुलालीभूय ईश्वरेणैव घटोत्पादनादीश्वरकपालप्रत्यक्षस्य चाजन्यतया घटत्वादेर्जन्यधीजन्यमात्रवृत्तित्वाभावाद् घटादावतिव्याप्तिसम्भवात् सामान्यादावतिव्याप्तिसम्भवाच्चेति दिक् ।

निदिध्यासनेत्युपलक्षणम् काशीमरणस्थले तारकोपदेशजन्यज्ञानेत्यपि द्रष्टव्यम् । निदिध्यासनेत्यादिना जन्यधीजन्यमात्रवृत्तित्वं सूचितम् । ननु तत्त्वसाक्षात्कारत्वं श्रवणादिप्रयोज्यात्मविषयकशरीरादिभिन्नत्वप्रकारक

मति तत्त्वसाक्षात्कारेऽव्याप्तिः। मानसाऽष्टन्त्वितु न जातिविशे-षणीयत्वात् मानसत्वं जातिविशेष इत्यास्तां विस्तरः। नास्ति-कास्तु वैशिष्ट्यानवगाहिज्ञानं साक्षात्कारः। अयं घट इत्या-दिज्ञाने च साक्षात्कारत्वप्रत्ययो भ्रान्तिः घटत्वाद्यलीकविषय-कत्वादित्याहुः। तन्न। बाधकं विना भ्रान्तित्वाऽयोगात्। न-

---

साक्षात्कारत्वं तत्तु विशिष्टस्यानतिरेकात् साक्षात्कारत्वमेव तच्च न मन्यधीजन्यमानवृत्तीति कुतोऽव्याप्तिरित्यत आह। मोक्षेति। तथा च मुक्तित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया सिद्धस्य तत्त्वज्ञा-नवृत्तिवैजात्यस्य निदिध्यासनादिजन्यतत्त्वसाक्षात्कारमात्रवृत्तित्वात् तच्छू-न्यत्वाभावेनाव्याप्तिरिति भावः। मानसेति। तथाच मानसवृत्त्यनु-मितित्वादिकमिव तच्छून्यज्ञानत्वस्य सत्त्वान्नाव्याप्तिरिति भावः। इदमुप-लक्षणम् आराध्यत्वप्रकारकज्ञानरूपभक्तिवृत्तिभक्तित्व फलायव्यभावनि-श्चयरूपश्रद्धानिष्ठश्रद्धात्वरूपजात्योर्मन्यधीजन्यमानवृत्तित्वान्मानसवृत्तीति जातिविशेषणमावश्यकमितिध्येयम्। ननु मानसत्वं मनोजन्यत्वं तथा चानु-मितित्वादेरपि मानसावृत्तित्वाभावादनुमित्यादावतिव्याप्तिः नच तादृश-जात्यप्रसिद्धिः देवदत्तप्रभवतावच्छेदकमन्दवृत्तिजातेरेव तादृशत्वादित्यत आ-ह। मानसत्वं चेति। ननु मानसत्वस्य जातित्वे प्रमाणाभाव इत्यत आह। आस्तां विस्तर इति। आत्ममानसत्वावच्छिन्नं प्रति विजातीयमनःसंयोग-त्वेन हेतुतया तज्जन्यतावच्छेदकतया मानसत्वजातिसिद्धिरिति भावः। ना-स्तिकास्तु वैशिष्ट्यानवगाहिज्ञानं निर्विकल्पकं तदेव साक्षात्कारः। अयं घ-ट इति। वैशिष्ट्यविषयक इति शेषः। घटत्वाद्यलीकेति। तन्मतेऽनुगतधर्मो घटत्वादिरतद्व्यावृत्तिरूप एव। व्यावृत्तिरन्योन्याभावः। अभावश्च तन्मते तु-च्छः। अलीक इति यावत्। तथा चाभावरूपघटत्वस्यालीकस्य विशिष्टज्ञाने भानादसतोऽसम्बन्धाभावाद्विशिष्टोप्यलीक एव असद्विषयकं ज्ञानं च भ्रम इति सविकल्पकं ज्ञानं भ्रमः। निर्विकल्पके च घटत्वादेरभानात्पारमा-र्थिकविषयकत्वेन तत्रैव साक्षात्कारत्वप्रमा अर्थजस्यैव प्रत्यक्षत्वादिति भा-वः। बाधकं विनेति। विषयविसंवाद एव हि प्रमात्वे बाधकः यथाशु-

**चालौकिकविषयकत्वं बाधकं घटत्वादेरलौकिकवि*षयत्वाऽसिद्धेः । सच साक्षात्कारो द्विविधः । नित्योऽनित्यश्च । नित्यो भगवतः । अनित्योऽन्यः । अनित्यो द्विविधः । निर्विकल्पकः सविकल्पकश्च । तत्र वैशिष्ट्यानवगाहिज्ञानं, निष्प्रकारकं†, वा ज्ञानं, निर्विकल्पकम् ॥**

---

गौरजतत्वस्य प्रकृते घटत्वस्याविसंवाद एवेतिभावः । ननु विषयविसंवादस्य बाधकत्वं न ब्रूमः अपि त्वलौकिकविषयकत्वस्येत्यभिप्रेत्याह । नचेति । अलौकिकत्वासिद्धेरिति । अभावस्यापि घटादिपदार्थवदनुभूयमानतयाऽलौकिकत्वमसिद्धमिति कुतोऽतद्व्यावृत्तिरूपघटत्वस्यालौकिकत्वम् एवमघटव्यावृत्तिरित्यघटभिन्नं यत्किञ्चित्तत्प्रतियोगिकभेदस्य पटेऽपि सत्त्वात् घटभिन्नं यावत्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूट एव घटत्वं वाच्यं तथा च यावत्प्रतियोगिज्ञानाभावाद् घटत्वबुद्धेरुच्छेद एव स्यात् यद्यपि चाभावत्वेनाभावज्ञाने एव प्रतियोगिज्ञानापेक्षा अत्र तु स्वरूपत एव घटत्वभानान्नानुपपत्तिरिति विभाव्यते तथापि घटत्ववानिति बुद्धेरुच्छेदापत्तिः तत्र घटत्वत्वेन घटत्वस्य भानात् तस्य च भेदत्वे यावत्प्रतियोगिज्ञानं विनाऽसम्भवादिति । किञ्चातद्व्यावृत्तिभिन्नस्यैव घटत्वादेरुपलम्भान्नाभावरूपत्वमिति कुत अलौकिकत्वसम्भावनेति भावः ।

भट्टादिभिरीश्वरानङ्गीकारेण तज्ज्ञानस्य सुतरामसम्भवितत्वेन साक्षात्कारस्यैकविधत्वमेवाङ्गीक्रियत इत्यतस्तन्मतं निराकुर्वन्नाह । सचेति । कार्यमात्रं प्रत्युपादानप्रत्यक्षस्य हेतुतया परमाण्वादिरूपोपादानप्रत्यक्षं विना द्व्यणुकादिरूपकार्यस्यानुत्पत्त्या ईश्वरोऽवश्यमङ्गीकार्यः । तथा च तज्ज्ञानसत्त्वेन द्वैविध्यमेव तस्येति भावः । द्वैविध्यमेव विवृणोति नित्य इत्यादिना । नित्यत्वं चात्र प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । सत्यन्तनिवेशान्न ध्वंसेऽतिव्याप्तिः । प्रागभावेऽतिव्याप्तिवारणाय विशेष्यदलनिवेशः । अनित्यत्वं च प्रागभावप्रतियोगित्वं ध्वंसप्रतियोगित्वं वा । अन्य इति । भगवद्भिन्नस्येत्यर्थः । अस्मदादिसाक्षात्कार इति यावत् । तत्र । निर्विकल्पकसविकल्पकयोर्मध्ये । वैशिष्ट्यानवगाहीति । वैशिष्ट्यविषयताशून्यज्ञानत्वमित्यर्थः । निर्विकल्पके विशेषणज्ञानसंपत्त्यर्थं घटत्वविषयकत्वमावश्यकम् । व्यक्तिभानसमये च जातिभानासम्भवात् घटविषयकत्वमपि तस्याङ्गीक्रियते । वैशि-

---

* घटत्वादेरलौकिकत्वासिद्धेरित्यपि पाठान्तरम् ॥

† निराकारं वेत्यपि पाठान्तरम् ॥

**तच्च यद्यपि न प्रत्यक्षसिद्धम् अतीन्द्रियत्वाऽभ्युपगमात् । तथा-प्ययं घट इति विशिष्टज्ञानरूपकार्यानुमेयम् । तथाहि जन्यतद्वि-**

---

ष्ट्यविषयकत्वे तु न किञ्चित्साधकमिति वैशिष्ट्यानवगाहित्वमक्षतमेव । सविकल्पके च वैशिष्ट्यस्यापि विषयत्वान्न तत्रातिव्याप्तिरिति भावः । नृसिंहाकारकज्ञानस्वीकारे तु तन्निरूपितवैशिष्ट्यविषयताशून्यज्ञानत्वं तन्निर्विकल्पकत्वमिति ध्येयम् । ननु चक्षुःसंयोगचक्षुःसंयुक्तसमवायरूपकारणबलात् घटघटत्वयोर्भानवत् चक्षुःसम्बद्धविशेषणतारूपकारणबलात्तत्सम्बन्धस्यापि भाने बाधकाभावः । प्रतिबध्यप्रतिबन्धकभावकल्पने च गौरवं तथाचेदं लक्षणमसम्भवग्रस्तमित्यत आह । निराकारं चेति । निष्प्रकारकं चेत्यर्थः । क्वचित्तथैव पाठः । वस्तुतस्तु वैशिष्ट्यानवगाहीत्यस्य संसर्गमर्यादया वैशिष्ट्यानवगाहीत्यर्थः वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यत्वं तत्त्वमिति निष्कर्षः । ननु प्रकारतासामान्यशून्यत्वं विशेष्यतासामान्यशून्यत्वमपि लक्षणं कर्तुं शक्यत एवेति तत्कथं नोक्तमित्यत इष्टापत्त्या तथैवाह । निराकारं चेति । निष्प्रकारकं निर्विशेष्यकं चेत्यर्थः । वाकारश्चात्र व्यवस्थितविकल्पे द्रष्टव्य इति पुनर्निर्व्यलीकः पन्थाः ॥

नन्वयं घट इति ज्ञानोत्तरं घटत्वेनेमं जानामीत्येवानुव्यवसायः । तत्र च वैशिष्ट्यस्य तृतीयार्थत्वे घटत्वविशिष्टविषयकज्ञानवानिति, प्रकारत्वस्य तृतीयार्थत्वे च घटत्वप्रकारकज्ञानवानित्याकारस्तथाच तादृशानुव्यवसायबलात्सविकल्पकस्य प्रत्यक्षसिद्धत्वेऽपि निर्विकल्पकस्य अनुव्यवसायगम्यत्वाभावान्न तत्र प्रत्यक्षं प्रमाणम् नाप्यनुमानमप्रयोजकत्वादिति मीमांसकमतं हृदि स्वीकृत्य शङ्कते । तच्चेति । निर्विकल्पकं चेत्यर्थः । प्रत्यक्षसिद्धम् । अनुव्यवसायात्मकप्रत्यक्षप्रमितिगम्यम् । अभ्युपगमादिति । नैयायिकैरिति शेषः । अनुमेयम् । अनुमानगम्यम् । तत्रायं घट इत्याकारकः जन्यघटत्वविशिष्टसाक्षात्कारः जन्यघटत्वज्ञानपूर्वकः जन्यघटत्वविशिष्टज्ञानत्वात् । यद्विशिष्टज्ञानं भवति तत्तज्ज्ञानपूर्वकं भवतीति सामान्यमुखव्याप्तौ दण्डीपुरुष इति प्रत्यक्षं दृष्टान्तः । नन्वत्र कार्यकारणभावादिरूपानुकूलतर्काभावादप्रयोजकत्वमित्यत आह । तथाहीत्यादि । जन्येति । जन्यतद्विशिष्टज्ञानत्वावच्छिन्नं प्रति जन्यतद्विशेषणज्ञानत्वेन हेतुत्वमिति कार्यकारणभाव एवानुकूलतर्क इति भावः । घटत्वज्ञानाद्दण्डविशिष्टज्ञानवारणाय तत्तदन्तर्भावः । नित्यज्ञानव्यावर्तनाय च कार्यतावच्छेदके जन्यत्वप्रवेशः । नित्यस्य स्वरूपयोग्यत्वे फलाव-

शिष्टज्ञानं प्रतिजन्यतद्विशेषणज्ञानं कारणमिति निर्विवादं भवति च प्राथमिकमस्माकमयं घटइति ज्ञानजन्यघटत्वविशिज्ञानम्। अतस्तत्रापि घटत्वज्ञानं कारणम्। नच तदानीं घटत्वविशिष्टज्ञानमस्ति। विशेषणीभूतस्य घटत्वस्याऽज्ञानात् तौवैशिष्ट्यानवगाहि तद्वाच्यं तदेवच निर्विकल्पकम्। नच जन्मान्तरीयं घटत्वविशिष्टज्ञानं तत्र कारणम्। अव्यवहितपूर्वकालवर्तिनएव विशेषणज्ञानस्य तत्र हेतुत्वात्। नच भागवतं

---

स्यभावइति नियमात् कारणतावच्छेदकेपि जन्यत्वप्रवेशः। वस्तुतस्तु सामानाधिकरण्यप्रत्यासत्त्या तस्य हेतुत्वबोधनाय कारणतावच्छेदके जन्यत्वनिवेशनमिति बोध्यम्। निर्विवादमिति। यथाच नविवादस्तथोपरिष्टाद्वक्ष्यते। तथाच कार्यकारणभावरूपानुकूलतर्कसत्त्वान्नाप्रयोजकत्वमनुमानस्येति भावः। पक्षेहेतुं सङ्गमयति। भवतिचेति। धारावाहिकस्थले द्वितीयादिविशिष्टज्ञानस्य पूर्वपूर्वविशिष्टज्ञानजन्यत्वसम्भवान्ननिर्विकल्पकसिद्धिरित्यतः प्राथमिकमिति। तत्रापि। घटत्वविशिष्टज्ञानेपि। ननु घटत्वप्रकारकज्ञानमेवाङ्गीक्रियतामित्याशङ्कानिराचष्टे। नचेति। तदानीम्। प्राथमिकघटत्वविशिष्टज्ञानात्पूर्वम्। अज्ञानादिति। तथाच विशेषणज्ञानं विना न तस्य विशिष्टज्ञानत्वमिति भावः। अतइति। विशेषणज्ञानाभावेन तस्यविशिष्टज्ञान*त्वाभावादित्यर्थः। तदिति। घटत्वविषयकं ज्ञानमित्यर्थः। ननु वैशिष्ट्यानवगाहिघटत्वविषयकज्ञानसिद्धावपि न निर्विकल्पकसिद्धिरित्यत आह। तदेवचेति। अनन्यथासिद्धपूर्ववर्त्तिनएव कारणत्वाज्जन्मान्तरीयघटत्वविशिष्टज्ञानस्य पूर्ववर्तित्वादेव कारणत्वमस्त्वित्याशङ्कते। नचेति। अव्यवहितेति। नहि पूर्ववृत्तित्वमात्रं कारणत्वघटकमपित्वव्यवहित पूर्ववृत्तित्वं तच्च न तत्रेति भावः। कार्यमात्रं प्रति ज्ञानत्वेन हेतुत्वादीश्वरीयज्ञानस्यैव हेतुत्वमस्त्वित्याशङ्कते। नचेति। तज्जनकं। घटत्वविविशिष्टज्ञानजनकं। सामानाधिकरण्येति। एकस्य दण्डज्ञाने पुरुषान्तरस्य दण्डविशिष्टज्ञानवारणाय समवायसम्बन्धेन तद्विशिष्टबुद्धिं प्रति समवायसम्बन्धेन तद्विशेषणज्ञानस्य हेतुत्वमिति सामानाधिकरण्यप्रत्यासत्या तस्य हेतुत्वेन भगवज्ज्ञानस्य न हेतुत्वमिति भावः। व्यधिकरणत्वात्। अस्मदीयघटत्वविशिष्टज्ञानव्यधिकरणत्वात्। तत्रकारणमिति। घटत्वविशिष्टानुभवे कारणमित्यर्थः। तदेव।

---

* सप्रकारकत्वाभावादिति भावइत्यपि पाठान्तरम्॥

घटत्वज्ञानं तज्जनकं सामानाधिकरण्यप्रत्यासत्त्या तस्य हेतु-
त्वात् । भागवतज्ञानस्य च वैयधिकरण्यात् । नन्वस्तु घटत्व-
विशिष्टस्मरणमेव तत्र कारणम् । न च विशेषणज्ञानं विना
तदेव विशिष्टज्ञानं कथमिति वाच्यम् । विशिष्टानुभवे हि वि-
शेषणज्ञानं कारणं । न तु स्मरणेऽपि तेन विनापि तदुपपत्तेः ।
अन्यथाऽनवस्थानात् ॥

अस्तु वा निर्विकल्पकं घटत्वस्मरणमिति चेन्न अपूर्वचै-
त्रत्वादिविशिष्टबुद्धौ तदसम्भवात् नहि चैत्रत्वादिकं पूर्व-

---

स्मरणात्मकविशिष्टज्ञानमेव । पूर्वानुभवस्य समवायसम्बन्धेन स्मरणपूर्वम-
सत्त्वाद्विशिष्टज्ञानत्वस्य विशेषणज्ञानकार्यतानवच्छेदकत्वेन विशिष्टानुभव-
त्वमेव कार्यतावच्छेदकं वाच्यमित्याह । विशिष्टानुभवे हीत्यादिना । नतु स्म-
रणेऽपि । न तु विशिष्टस्मरणेऽपि । तेन विना । विशेषणज्ञानेन विना ।
तदुपपत्तेरिति । विशिष्टस्मरणोपपत्तेरित्यर्थः । कदाचिदपि दण्डज्ञानासत्त्वे
संस्काराभावेनैव दण्डविशिष्टस्मरणाभावात्तत्र विशेषणज्ञानहेतुत्वस्य निर-
र्थकत्वात्पूर्वानुभवस्य विनष्टत्वे विशेषणज्ञानस्य स्मरणजनकत्वासम्भवाच्चेति
भावः । ननु पूर्वानुभवस्य नष्टत्वाद्विशेषणज्ञानस्य स्मरणजनकत्वासम्भवेऽपि
विशिष्टस्मरणमेव स्मरणात् पूर्वं कल्पनीयमित्यत आह । अन्यथेति । अन्य-
था विशिष्टस्मरणं प्रत्यपि विशेषणज्ञानस्य हेतुत्वे पूर्वमनुभवस्यासत्त्वात्तज्जन-
कमपि स्मरणमेव वाच्यमेवं तत्रापि स्मरणान्तरमित्यनवस्थेत्यर्थः ॥

नन्वनुभवत्वजातौ मानाभावेन स्मृत्यन्यज्ञानत्वरूपस्य तस्य निवेशे गौर-
वाद्विशिष्टज्ञानमात्रे विशेषणज्ञानस्य हेतुत्वेन विशिष्टस्मरणं प्रत्यपि वि-
शेषणज्ञानं हेतुः नचानवस्था तत्पूर्वं निर्विकल्पकात्मकस्मृतेरेवोपगमात् नच
ममापि घटत्वविशिष्टानुभवपूर्वं घटत्वविशिष्टस्मरणस्य तत्पूर्वं च घटत्वनिर्वि-
कल्पकस्मरणस्य कल्पनेन न दोष इति वाच्यम् तत्पूर्वं ज्ञानद्वयकल्पने गौरवात्
तदपेक्ष्य घटत्वनिर्विकल्पकानुभवस्यैव स्वीकर्तुमुचितत्वादित्यत आह । अस्तु वे-
ति । तथासति ममापि घटत्वविशिष्टानुभवपूर्वं घटत्वनिर्विकल्पकस्मरणमेव
कल्प्यत इति न ज्ञानद्वयकल्पने गौरवमिति भावः नच निर्विकल्पकात्मकस्मृ-
तिस्वीकारान्निर्विकल्पकात्मकं ज्ञानं सिद्धमेवेति अविवाद इति वाच्यम् तथा-

**अनुभूतं यतः स्मरेत् । नचानुभवं विनैव तस्य स्मरणं । तस्य तद्धेतुत्वात् ॥**

---

पि निर्विकल्पकानुभवस्यासिद्धत्वादिति । ननु निर्विकल्पकात्मकस्मरणमेवानुपपन्नम् तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन हेतुत्वाज्जायमानं सप्रकारकमेव स्यान्नतु निष्प्रकारकमिति चेत् तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारत्वेनापि सामान्यकार्यकारणभावकल्पनाद्विशेषणज्ञानं विनाजायमानं ज्ञानं निर्विकल्पकमेव जायतइति दिक् । ननु सर्वत्र विशिष्टानुभवपूर्वं विशिष्टस्मरणस्य निर्विकल्पकात्मकस्मरणस्य वा हेतुत्वकल्पने तत्स्मरणेऽनुभवः कारणं तदनुभवे च स्मरणान्तरमित्यनवस्था किञ्चपूर्वाननुभूतपदार्थस्य आद्यानुभवे स्मरणमेव कारणं वाच्यम् तच्च न सम्भवति तज्जनकानुभवाभावात् जन्मान्तरीयानुभवबलादेव स्मरणोपगमे च जन्मान्तरानुभूतानां घटादिपदार्थानामपि स्मृतिप्रसङ्गादिति चेन्न आद्यानुभवजनकस्मरणस्य जन्मान्तरीयानुभवादेवानादितया अदृष्टविशेषरूपोद्बोधकसहकृतादुपपत्तेः नच पटादिस्मृतिप्रसङ्गः तत्र फलोत्पत्तेरभावेनादृष्टस्योद्बोधकत्वाकल्पनात् अनवस्थायाश्च प्रामाणिकत्वेनादुष्टत्वादिति न किञ्चिदेतत् । तदसम्भवात् । स्मरणासम्भवात् । नन्वदृष्टविशेषरूपोद्बोधकवशाज्जन्मान्तरानुभूतचैत्रत्वादिकमपि स्मर्तव्यमित्यत आह । नहीति । पूर्वमिति । जन्मान्तर इत्यर्थः । अननुभूतमिति । चैत्रत्वादिजातेस्तच्छरीरवृत्तित्वेन चैत्रशरीरस्य च जन्मान्तरेऽभावेन तद्वृत्तिचैत्रत्वादेर्ग्राहकाभावादनुभवासम्भवेन नस्मृतिसम्भवः तत्स्मरणस्य तदनुभवपूर्वकत्वनियमादिति भावः । नन्वप्रयोजकोयं नियमोनादरणीयइत्यत आह । नचेति । तस्य । अनुभवस्य । तद्धेतुत्वात् । स्मरणहेतुत्वात् । तथाच स्मृतित्वावच्छिन्नं प्रत्यनुभवस्य हेतुतया न तादृशनियमस्याप्रयोजकत्वमिति भावः नचेदृशकार्यकारणभावेमानाभावइति वाच्यम् तथासति कदाचिदननुभूतस्यानुभूतस्य वा तदंशे उपेक्षात्मकज्ञानविषयस्य स्मरणापत्तेरुपेक्षान्यज्ञानत्वेन तद्धेतुताया आवश्यकत्वात् नच संस्काराभावान्नियमापत्तिरिति वाच्यम् । संस्काररूपव्यापारद्वारातस्यापि हेतुत्वात् व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावेन संस्कारेणानुभवान्यथासिद्धेरसम्भवात् उपजीव्यविरोधाच्च तथाहि आशुविनाशिनः कालान्तरभाविफलं प्रति कारणत्वं व्यापारं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानाच्चिरध्वस्तानुभवस्य कालान्तरीयस्मृतिहेतुत्वोपपत्त्यर्थं व्यापारे कल्पनीये संस्कार एव व्यापारः कल्प्यतइत्यनुभ-

किञ्च यत्र घटत्वं न स्मृतं तत्र विशिष्टज्ञानसामग्र्यभावा-द्घटघटत्वयोः साक्षात्कारसामग्रीतः साक्षात्कारोत्पत्तौ

---

वस्य कारणत्वमुपजीव्यैव संस्कारसिद्धिरिति । ननु तर्हि क्लृप्तत्वादनुभवध्वंसस्य व्यापारत्वमास्तांकृतमक्लृप्तसंस्कारकल्पनेन नचकारणीभूताभावप्रतियोगित्वस्यैवप्रतिबन्धकत्वपदार्थत्वात्स्मृतिकारणीभूतानुभवध्वंसप्रतियोगित्वस्यानुभवे सत्त्वात्तत्प्रतिबन्धकत्वापत्त्या न तस्य तद्धेतुत्वमिति वाच्यम् प्रतिबन्धकसंसर्गाभावत्वेनैव कार्यमात्रे हेतुतया संसर्गाभावत्वावच्छिन्नकारणताया एव प्रतिबन्धकत्वशरीरघटकत्वात् स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन संसर्गाभावत्वावच्छिन्न कारणतावच्छेदकीयोधर्मस्तद्वत्वस्यैव प्रतिबन्धकत्वपदार्थत्वात् तद्धर्मावच्छिन्नकार्यतानिरूपितसंसर्गाभावत्वावच्छिन्नकारणतानिरूपितस्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्वस्य तद्धर्मावच्छिन्नप्रतिबन्धकत्वपदार्थत्वादितिनिष्कर्षः तथाचानुभवध्वंसस्य ध्वंसत्वेन कारणतयाऽभावत्वेनाकारणत्वान्न प्रतिबन्धकत्वापत्तिरिति चेत् तर्हि सर्वांशेउपेक्षात्मकज्ञानादपि स्मरणापत्तेः अस्मन्मते चोपेक्षान्यज्ञानत्वेन संस्कारहेतुतया तदभावादेवास्मरणात् नच स्मरणं प्रत्येव तेन रूपेण हेतुत्वम स्तुकृत मन्तर्गडुनासंस्कारेणेति वाच्यम् उपेक्षात्वस्यैकस्याभावेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यैव निवेशनीयतया स्मृतिजनकतायां सर्वांशेउपेक्षाभेदानामांशिकोपेक्षाभेदानासिकत्र निवेशप्रसङ्गेन तेषां मिथोविशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यप्रसङ्गात् मन्मतेच संस्कारजनकतावच्छेदककोटौ सर्वांशेउपेक्षाभेदानामांशिकोपेक्षाभेदानां च स्मृतिजनकतावच्छेदककोटौ निवेशेनैकत्र तेषामनिवेशाल्लाघवमखण्डितमेवेति संस्कार सिद्धिरावश्यकत्वादितिकृतं पल्लवितेन ॥

ननु प्रमेयवानित्यनुभवे प्रमेयत्वेन चैत्रत्वविशिष्टस्यापि पूर्वमनुभूतत्वाददृष्टविशेषस्य च प्रमेयत्वांशे उद्बोधकत्वाकल्पनेन केवलंचैत्रत्वविशिष्टस्मरणोपपत्तिः तदंशेऽन्याप्रकारकतत्प्रकारकस्मृतिं प्रति तदंशेऽन्याप्रकारकत्वेन तु नानुभवस्य हेतुत्वं जातिमानित्यनुभवात्तरंसघटइतिस्मरणापत्तेश्च । जातित्वांशे उद्बोधकलाभस्य कल्पनेनैव वारणात् उद्बोधकलाभालाभयोः फलोन्नेयत्वादिति अनयैवच दिशा अदृष्टदशरथादिमनः पदादिशक्तिग्रहोपीत्यत आह । किंचेति । नस्मृतमिति । उद्बोधकविरहादिति शेषः । विशिष्टज्ञानसामग्र्यभावात् । घटत्वज्ञानरूपघटत्वप्रकारकज्ञानसामाग्र्यभावात् । सा-

न किञ्चिद्बाधकमस्ति । तदेवचास्माकन्निर्विकल्पकमिति सङ्क्षेपः ॥ ननु विशेषणज्ञानस्य हेतुतासिद्धौ सर्वमेतदेवं स्यात्तन्नैव तुमानन्नपश्याम इति चेन्न ॥ अन्वयव्यतिरेकाभ्यान्तदवधारणात् विस्तरस्तु मणिमरीचावनुसन्धेयः ॥ वैशिष्ट्यावगाहि-

ज्ञानाकारमाश्रीतः । चक्षुःसंयोगचक्षुःसंयुक्तसमवायरूपचाक्षुषप्रत्यक्षसामग्रीतः । साक्षात्कारोत्पत्तौ । चाक्षुषप्रत्यक्षोत्पत्तौ । नन्वेतावता साक्षात्कारोत्पत्तावपि न निर्विकल्पकसिद्धिरित्यत आह । तदेवचेति । घटत्वज्ञानशून्यकाले जायमानं प्रत्यक्षमेवेत्यर्थः । अस्माकन्नैयायिकानां । निर्विकल्पकमिति । तथाच घटत्वज्ञानाभावाज्जायमानं घटत्वज्ञाननिष्प्रकारकमेव भविष्यतीति सिद्धन्निर्विकल्पकात्मकं ज्ञानमितिभावः ॥

ननु रक्तो दण्डीनवेति संशये रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिज्ञानानुदयाद्विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन हेतुताया आवश्यकत्वात्तत एव दण्डज्ञानशून्यकाले दण्डविशिष्टपुरुषज्ञानानुत्पत्तिनिर्वाहेऽलंविशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुतया नच विशिष्टस्य वैशिष्ट्यमिति, न्यायेन विषयता*शालिबुद्धिं प्रत्येव विशेषणतावच्छेदकप्रकारकनिर्णयस्य हेतुत्वेन दण्डज्ञानशून्यकाले विशेष्ये विशेषणन्तत्रापि विशेषणान्तरमिति, न्यायेन दण्डविशिष्टज्ञानापत्तिवारणाय तद्धेतुत्वमावश्यकमिति वाच्यम् तथापि तद्धेतोरेवेति न्यायेन, विशेषणविशेष्येन्द्रियसन्निकर्षादेव विशिष्टप्रत्यक्षोपपत्तेः अनुमित्यादौ तु परामर्शादेरेव नियामकत्वाश्रयेन मीमांसकआशङ्कते । नन्विति । हेतुतासिद्धौ । विशिष्टज्ञानं प्रति हेतुता सिद्धौ । सर्वमेतत् । निर्विकल्पकादिसाधनम् । एवं स्यात् । पूर्वोक्तन्यायेन सयुक्तिकं स्यात् । तन्नैवचेति । विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वएवचेत्यर्थः । मानमिति । विशेषणविशेष्येन्द्रियसन्निकर्षादेव तदुपपत्तेस्तत्र प्रमाणाभावइत्यर्थः । प्रमाणाभावस्यच प्रमेयाभावव्याप्यत्वादिति भावः । अन्वयव्यतिरेकाभ्यामिति । विशेषणज्ञानसत्त्वे विशिष्टज्ञानं विशेषणज्ञानाभावे विशिष्टज्ञानाभावइत्येवंरूपान्वयव्यतिरेकाभ्यामित्यर्थः । तदवधारणात् । विशेषणज्ञानस्य विशिष्टबुद्धिहेतुत्वावधारणात् । यथान्वयव्यतिरेकाभ्यां दण्डे घटकारणत्वग्रहस्तथा प्रकृतेपीति भावः । ननु न केवलमन्वयव्यतिरेकावेव कारणताग्राहकावतिप्रस-

* विशिष्ट ज्ञानीय विषयताशालि बुद्धिं प्रतीत्यर्थस्तेन निर्विकल्पकेतुरीय विषयतासत्त्वे पिनदोष इतिभावः ॥

सप्रकारकं, वा ज्ञानं सविकल्पकम् ॥ प्रकारताशालिघट-त्वादिज्ञाने विशेषणस्य घटत्वादेर्विशेषणत्वापरनामाविष-

---

ज्ञादपित्वनन्यथासिद्धान्वयव्यतिरेकाविव प्रकृते च विशेषणविशेष्येन्द्रियसन्निकर्षेण विशेषणज्ञानस्यान्यथासिद्धत्वान्न तथाविधयोस्तयोस्सम्भवइत्यत आह । विस्तरस्त्विति । अनुसन्धेयइति । कदाचिद्घटइति स्वरूपतोघटत्वप्रकारकज्ञानस्य, कदाचिच्च जातिमानिति जातित्वरूपेणघटत्वप्रकारकज्ञानस्योत्पत्तिरिति नियमनिर्वाहाय स्वरूपतोघटत्वविशिष्टबुद्धिं प्रति स्वरूपतोघटत्वज्ञानत्वेन, जातित्वेन घटत्वविशिष्टबुद्धिं प्रति च जातित्वेन, घटत्वज्ञानस्य हेतुताया आवश्यकतया विशेषणज्ञानस्यहेतुतासिद्धिः । अथ घटत्वज्ञानसत्त्वेपि कदाचिद्घटइत्याकारकघटत्वप्रकारकज्ञानस्य कदाचिच्चाघटत्वमित्याकारकघटत्वविशेष्यकज्ञानस्योत्पत्त्या तन्निर्वाहायानायत्यातत्तज्ज्ञानेऽदृष्टविशेषस्यैव नियामकत्वकल्पनमावश्यकं तथाच प्रकृतेप्यदृष्टविशेषेणैव तथाविधकादाचित्कज्ञानद्वयोपपत्तेरलं विशेषणज्ञानस्य हेतुतयेति चेन्नैवं तत्र गत्यन्तराभावेनादृष्टस्य नियामकत्वकल्पनेपि प्रकृते दर्शितरीत्या गतिसम्भवेऽदृष्टविशेषस्यैव नियामकत्वकल्पनाया अन्याय्यत्वात् एवञ्चादृष्टस्य नियामकत्वकल्पनादन्यत्रापि तस्यैवनियामकत्वकल्पने कार्यकारणभावमात्रोच्छेदापत्तेरिति । ननु तथापि स्वरूपतो घटत्वविशिष्टबुद्धित्वं नाम घटत्वांशेऽन्याप्रकारकघटत्वप्रकारकबुद्धित्वं तत्र जातित्वादिभासकसामग्रीसत्त्वे जायमानं ज्ञानं घटत्वांशेऽन्यप्रकारकमेवोत्पद्यते तदंशे जातित्वादिभासकसामग्र्यसत्त्वे च घटत्वांशेऽन्याप्रकारकमेव जायतइति तादृशधर्मस्य नोक्तेतरघटत्वादिपदार्थसमाजग्रस्तत्वेन जन्यतानवच्छेदकत्वात्कथं तादृशज्ञानं प्रति स्वरूपतो घटत्वज्ञानस्य हेतुत्वङ्कल्पयित्वा विशेषणज्ञानस्य हेतुत्वसिद्धिरिति चेन्न । जातित्वभासकसामग्रीसत्त्वेऽपि जातिमान् घटइति स्वरूपतोघटत्वविशिष्टबुद्धेरुदयाद्घटत्वांशे निरवच्छिन्नप्रकारताशालिबुद्धित्वमेव स्वरूपतो घटत्वविशिष्टबुद्धित्वं तदवच्छिन्नंप्रति च स्वरूपतोघटत्वज्ञानस्यहेतुत्व कल्पनंविना आपत्तिवारणासम्भवादिति । ननु नित्यव्यावर्त्तनाय जन्यविशिष्टज्ञानत्वमेव विशेषणज्ञानकार्यतावच्छेदकं वाच्यं तत्र जन्यत्वं ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा कालिकसम्बन्धेन घटादिमत्त्वं वेत्यत्र विनिगमनाविरहइति चेन्न नित्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वे क्षतिविरहात् । अथैवं कारणतानु-

पपत्तिः कारणत्वं हि कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणदेशनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तच्च घटाधिकरणकपाले यत्किञ्चिद्घटाव्यवहितपूर्वक्षणावच्छेदेन दण्डाभावसत्त्वात्कारणत्वानुपपत्तिरिति तत्तत्कार्याव्यवहितपूर्वक्षणावच्छेदेन तत्तत्कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं वाच्यं तथा सति घटत्वावच्छिन्नं प्रति रासभत्वेनापि कारणत्वप्रसङ्गः यत्किञ्चिद्घटाव्यवहितपूर्वक्षणावच्छेदेन कपाले तस्य सत्त्वात् तथा च कार्यतावच्छेदकावच्छिन्नयावद्व्यक्तीस्तत्तद्व्यक्तित्वेन धृत्वा तत्तत्कार्याव्यवहितपूर्वक्षणावच्छेदेन तत्तत्कार्याधिकरणवृत्त्यभावेत्यत्र वाच्यम् एवं च नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वे कार्यतावच्छेदकावच्छिन्नयावन्मध्ये नित्यव्यक्तेरपि प्रविष्टतया तदव्यवहितपूर्वक्षणाप्रसिद्धेरिति चेन्न कार्यकारणभेदेन कारणताया भिन्नतया प्रकृते नित्यव्यक्त्यतिरिक्तव्यक्तीनामेव तत्तद्व्यक्तित्वेनोपादानात्तत्साधारणरूपेण कार्यत्वेऽपि कारणत्वे बाधकाभावात् एवं समवायकालिकविशेषणतोभयसम्बन्धेन विशिष्टज्ञानत्वस्य कार्यतावच्छेदकत्वेन नित्यसाधारण्याभावाच्च वस्तुतस्तु जन्यप्रत्यक्षमात्रवृत्तिवैजात्यं स्वीकृत्य विजातीयविशिष्टज्ञानत्वस्यैव तत्कार्यतावच्छेदकत्वाच्चाक्षुषत्वादिना सङ्करभयाच्च निर्विकल्पकेऽपि तद्वैजात्यस्वीकारः अतएव जन्यधीजन्यसाक्षात्त्वे तादृशवैजात्यशून्यत्वाभावाज्जन्यसाक्षात्कारे प्रागुक्तसाक्षात्कारलक्षणस्याव्याप्तिरिति परास्तम् तस्य निर्विकल्पकसाधारण्येन जन्यधीजन्यमात्रवृत्तित्वाभावात् मानसावृत्तित्वाभावाच्च तल्लक्षणे मानसावृत्तित्वेन ज्ञानविशेषणीयत्वादित्युक्तत्वादिति दिक् ॥

निर्विकल्पकं निरूप्य क्रमप्राप्तं सविकल्पकं निरूपयति । वैशिष्ट्यावगाहीति । सम्बन्धविषयकमित्यर्थः । नन्विन्द्रियसम्बद्धविशेषणतारूपकारणतावशान्निर्विकल्पकेऽपि सम्बन्धभाने बाधकाभावात्तस्यापि वैशिष्ट्यावगाहित्वमस्तीत्यतिव्याप्तिरित्यस्वरसादाह । सप्रकारकं चेति । किञ्चिन्निष्ठप्रकारताशालीत्यर्थः । निर्विकल्पके च प्रकारतया घटत्वादेरभानान्न तत्रातिव्याप्तिरिति भावः वस्तुतस्तु वैशिष्ट्यावगाहीत्यस्य संसर्गमर्यादया वैशिष्ट्यावगाहीत्यर्थः किञ्चिन्निष्ठसांसर्गिकविषयताशालित्वमिति पर्यवसितार्थः । ननु किञ्चिन्निष्ठप्रकारताशालित्वमित्यपि वक्तुं शक्यत एवेति तत्कुतो नोक्तमित्यत इष्टापत्त्या तथैवाह । सप्रकारकमिति । इदमुपलक्षणम् किञ्चिन्निष्ठविशेष्यताशालित्वमित्यपि तत्त्वमिति बोध्यम् । ननु सप्रकारकमित्यत्र प्रकारत्वनिवेशात्किमत्र प्रकारत्वमित्यतस्तन्निरूपयति । प्रकारता चेति । ज्ञान-

यताविशेषः विषयता च विषयाकारप्रतीतिसाक्षिकः स्व-
रूपसम्बन्धविशेषः ॥

पदार्थान्तरमित्येकदेशिनः ॥

---

इति । निरूपितत्वं सप्तम्यर्थः । घटत्वादेरिति । निष्ठत्वंषष्ठ्यर्थः । ज्ञाननिरूपितोघटत्वनिष्ठोविषयता विशेषइत्यर्थः । विषयताविशेषइति । विशेष्यताख्यविषयताप्रकारताख्यविषयतासांसर्गिकविषयतारूपत्रिविधविषयताभेदइत्यर्थः । ननुकिन्तद्विषयत्वमतआह । विषयताचेति । विषयेति । घटोज्ञानविषयइत्यनुगतप्रतीतिसाक्षिकइत्यर्थः । स्वरूपसम्बन्धविशेषइति । ज्ञानविषयरूपस्वरूपसम्बन्धइत्यर्थः ॥

ननुविषयतायाः स्वरूपसम्बन्धत्वाङ्गीकर्तृप्राचीनमतेतस्याज्ञानस्वरूपत्वं विषयस्वरूपत्वंवा नताबदाद्यः ज्ञानरूपघटभूतलवृत्तिविषयतयोरैक्येनघटवद्भूतलमितिज्ञानोत्तरं घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिज्ञानवानहमित्याद्यनुव्यवसायवद्भूतलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताशालिज्ञानवानहमित्याद्यनुव्यवसायापत्तेः घटपटावितिसमूहालम्बनज्ञानस्य भ्रमत्वापत्तेश्च तज्ज्ञानस्यैक्येन तत्स्वरूपघटपटादिविषयतायाअप्यभेदेन घटत्वाभाववन्निष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारताशालिज्ञानत्वरूपभ्रमत्वस्य तत्रसत्त्वात् । नद्वितीयः घटभूतलसंयोगाःघटवद्भूतलमितिसमूहालम्बनविशिष्टबुद्ध्योर्विषयाणामैक्येनविषयकृतवैलक्षण्याभावाद्विषयताकृतमेव वैलक्षण्यंवाच्यं तत्र च विषयतायाविषयस्वरूपत्वेनतत्स्वरूपाणां तासामपिवैलक्षण्याभावात्समूहालम्बनविशिष्टबुद्ध्योर्वैलक्षण्यानुपपत्तिर्जागरूकैव नचसमूहालम्बनाविषयस्य घटप्रतियोगिकत्वभूतलानुयोगिकत्वरूपसम्बन्धसम्बन्धस्यापि विशिष्टबुद्धिविषयत्वान्नवैलक्षण्यानुपपत्तिरिति वाच्यम् । घटभूतलसंयोगप्रतियोगित्वानुयोगित्वानीतिसम्बन्धसम्बन्धविषयकस्यापि समूहालम्बनस्य सम्भवात् नचसमूहालम्बने संयोगत्वेन संयोगभानान्नानुपपत्तिरिति वाच्यम् घटवद्भूतलं संयोगश्चेति विशिष्टज्ञानस्य तादृशसमूहालम्बनाद्वैलक्षण्यानुपपत्तेरितितस्याः स्वरूपसम्बन्धरूपत्वं दुर्वचमित्यतआह । पदार्थान्तरमिति । तथाचातिरिक्तायाविषयताया विषयभेदेन भिन्नतया न पूर्वोक्तानुपपत्तिरिति भावः । केचित्तु । स्वरू-

भट्टास्तु ज्ञातो घट इति प्रतीतेर्ज्ञानजन्यो विषयनिष्ठः प्राकट्यापरनामा पदार्थो ज्ञातता सैव च विषयता ज्ञानविषययोः सम्बन्धस्वरूपा युक्तञ्चैतत्कथमन्यथा ज्ञानकर्मत्वं घटादेः क्रिया जन्यफलशालित्वाभावादित्याहुः ॥ तन्न ॥ विनष्टे घटे ज्ञातो घट इति प्रतीतेः । नहि तच्च ज्ञानं किञ्चिज्जनयितुं शक्नोति तस्यैवासत्त्वात् नच समवायिकारणं विना भावका-

---

पसम्बन्धरूपाया विषयताया अननुगमेनानुगतप्रत्ययानुपपत्तिरित्यत आह । पदार्थान्तरमित्याहुः । तदसत् । तस्यातिरिक्तत्वेपि तत्तद्विषयभेदेन भिन्नतयाऽनुगतप्रत्ययानुपपत्तितादवस्थ्यात् नचानुगतप्रत्ययानुपपत्तिः कथं वारणीयेति वाच्यम् विषयतात्वमेकमङ्गीकृत्यैतयवेति अतएव घटत्वादिविशिष्टबुद्धिं प्रति घटत्वविषयकज्ञानत्वेन हेतुतायां विषयतायाः प्रकारताविशेष्यतादिभेदेन भिन्नतया एकस्याः निर्विशेऽन्यविधविषयताशालिज्ञानाद्विशिष्टबुद्ध्यनुत्पत्त्यापत्तिरपि निरस्ता । तत्र विषयतात्वेन प्रकारताविशेष्यतयोरनुगमेनानुपपत्त्यभावादित्यास्तां विस्तरः ॥

घटं जानातीत्यादौ ज्ञानजन्यं घटनिष्ठं ज्ञातताख्यं पदार्थान्तरमङ्गीकार्यम् अन्यथा घटस्य कर्मत्वानुपपत्तेः क्रियाजन्यफलशालित्वस्यैव कर्मत्वरूपत्वात् तत्र च ज्ञानं, निमित्तकारणं, समवायिकारणञ्च, घटस्तदेव च विषयत्वमिति निष्कृष्टभट्टमतमादर्शयति । भट्टास्त्विति । ज्ञानजन्यः । निमित्तकारणविधया ज्ञानजन्यः । विषयनिष्ठ इति । समवायेन विषयवृत्तिरित्यर्थः । सैव च । ज्ञाततैव च । सम्बन्धस्वरूपेति । अतिरिक्तसम्बन्धस्वरूपेत्यर्थः । युक्तं । सयुक्तिकम् । एतत् । ज्ञानजन्यविषयनिष्ठज्ञाततारूपपदार्थान्तराङ्गीकरणम् । अन्यथेति । ज्ञानजन्यविषयनिष्ठज्ञाततारूपपदार्थान्तरानङ्गीकार इत्यर्थः । ज्ञानकर्मत्वमिति । घटं जानातीत्यादौ घटादेः क्रियाजन्यफलशालित्वरूपङ्कर्मत्वमित्यर्थः । क्रियेति । ज्ञानरूपधात्वर्थजन्यफलवत्त्वाभावादित्यर्थः । विनष्ट इति । घटस्य नष्टत्वेन तत्र ज्ञानजन्यज्ञाततायाः असम्भवादिति भावः । तदेवोपपादयति । नहीति । तत्र । विनष्टे घटे । तस्यैव । घटस्यैव । असत्त्वात् । नष्टत्वात् । ननु यथा मनसा नष्टे घटेपि विषयतासम्बन्धेन ज्ञानमुत्पद्यते तथा ज्ञानेनापि तत्र तदुत्पादने बाधकाभाव इत्यत आह । नचेति । समवायिकारणस्य कार्यसहभावेन हेतुत्वाद् घटनाशेन न तदुत्पत्तिसम्भवः अन्यथा समवायिकारणनाशस्य समवेत-

र्योत्पत्तिः सम्भवति तच स्वरूपसम्बन्ध एव प्रतीतेर्विषय इति-
चेदन्यथापि स एवास्तु कृतमधिकेन कर्मविभक्तेरपि तद्वदे-
वोपपत्तेरिति सङ्क्षेपः ॥

अन्ये तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम् अयंच

---

नाशे हेतुत्वाज्ज्ञाततोत्पत्तिर्द्वितीयक्षण एव तस्या नाशापत्तेः क्षणिकत्वप्रसङ्ग-
इति भावः। ननु तत्र विषयतायाः ज्ञाततारूपत्वाभावेपि स्वरूपसम्बन्धरूप-
त्वमेवास्तामित्याशङ्कते । नन्वित्यादिना । तत्र । नष्टघटस्थले । प्रतीतेः ।
ज्ञातो घट इति प्रतीतेः । अन्यथापीति । विद्यमानघटस्थलेपीत्यर्थः । स ए-
वास्त्विति । स्वरूपसम्बन्ध एव विषयतास्त्वित्यर्थः । अधिकेनेति । स्वरूपसम्ब-
न्धातिरिक्तज्ञाततारूपविषयतास्वीकारेणेत्यर्थः । ननु सर्वत्र स्वरूपसम्बन्धस्य
विषयत्वरूपत्वे तस्य ज्ञानजन्यत्वाभावाद्घटस्य क्रियाजन्यफलशालित्व-
रूपमुख्यकर्मत्वाभावेन (कर्मणि द्वितीयेति) सूत्रेण घटं जानातीत्यादौ घटपदो-
त्तरं द्वितीयाविभक्त्यनुपपत्तिरित्यत आह । कर्मविभक्तेरपीति । द्वितीं-
याविभक्तेरपीत्यर्थः । तद्वदेव । नष्टघटस्थलवदेव । तथा च यथा नष्टघट
स्थले घटपदोत्तरं द्वितीयोपपत्त्यर्थं गौणमुख्यसाधारणकर्मत्वविशिष्टपरत्वं (क-
र्मणि द्वितीयेति ) सूत्रस्थकर्मपदस्यावश्यमङ्गीकार्यं मयापि च तेनैव विद्य-
मानघटस्थलेपि घटपदोत्तरं द्वितीयोपपत्तिरिति भावः । एवं च क्रियाजन्यफलशा
लित्वरूपमुख्यकर्मत्वाभावेपि सविषयवाचकधातुसमभिव्याहारस्थले वि-
षयत्वरूपगौणमेव कर्मत्वमिति नानुपपत्तिरिति हृदयम् । ननु तन्मतेऽभा-
वो ज्ञात इति प्रतीत्या अभावेपि ज्ञाततायाः अवश्यमङ्गीकारात् समवायि-
कारणं विना भावकार्योत्पत्त्यसम्भव इति न नियमस्तथा च नष्टघटस्थलेपि
नानुपपत्तिरित्यत आह । सङ्क्षेप इति । समवायस्यातिरिक्तस्य तैरनङ्गी-
काराद्विलक्षणस्वरूपसम्बन्धेन तस्याश्रयत्वमेव समवायिकारणत्वम् एवं च वि-
लक्षणस्वरूपसम्बन्धेन स्वाश्रयं विना स्वस्यानुत्पत्तिरित्येव नियमः अभावस्थले
च विलक्षणस्वरूपसम्बन्धेन स्वाश्रयत्वमभावस्याङ्गीक्रियते । विलक्षणस्वरूप-
सम्बन्धेन स्वाश्रयघटस्यासत्त्वाच्च नष्टघटस्थलेऽनुपपत्तिर्जागरूकैवेति भावः
स्वमतावष्टम्भेनेदं दूषणमित्यपि केचित् । वस्तुतस्तु गौणकर्मत्वेनाप्युपपत्ते-
रतिरिक्तज्ञाततायां प्रमाणाभावान्न तद्रूपत्वं विषयताया इत्येव दूषणं सा-
रम् ।

प्रकारता न विषयताविशेषः किन्तु प्रतियोगित्वमेवेत्यङ्गीकर्तॄणां केषांचिन्म-
तमाह । अन्ये त्वित्यादिना । भासमानं यद्वैशिष्ट्यं सम्बन्धस्तत्प्रति-

दण्डत्वेन हि घटत्वस्य वैशिष्ट्यम्भासते तत्प्रतियोगित्वञ्च घटत्वमित्याहुस्तन्न । दण्डपुरुषसंयोगादिति समूहालम्बने दण्डी पुरुष इतिवद्दण्डस्य प्रकारतापत्तेः संयोगो हि दण्डस्य वैशिष्ट्यम्भासते तत्प्रतियोगी च दण्ड इति दिक् ॥

तच्च प्रत्यक्षमिन्द्रियात्मकं द्वेधा द्रव्यग्राहकन्तदग्राहकञ्चद्र-

---

योगित्वमित्यर्थः । पुरुषे दण्ड इति ज्ञानेपि दण्डस्य प्रकारतापत्तिः संयोगप्रतियोगित्वस्य दण्डे सत्त्वादतो भासमानेति तज्ज्ञाने च दण्डप्रतियोगिकसंयोगाभानान्नातिव्याप्तिः । प्रतियोगित्वञ्च स्वरूपसम्बन्धविशेष एव । इदमेव सङ्गमयति । अयमिति । घटत्वस्य वैशिष्ट्यम् । घटत्वनिरूपितसामवायः । संयोगो हीति । वस्तुगत्या भासमानो यः संयोगस्तत्प्रतियोगित्वस्य दण्डे सत्त्वात्प्रकारत्वापत्तिरित्यर्थः । ननु तत्प्रतियोगिकत्वेन भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वमित्यर्थः समूहालम्बनविशिष्टबुद्ध्योर्भेदानुपपत्त्या विशिष्टज्ञाने प्रतियोगित्वानुयोगित्वरूपसम्बन्धसम्बन्धोपि भासत इत्युपेयते समूहालम्बने च दण्डप्रतियोगिकत्वेन संयोगस्याभानान्नातिव्याप्तिरित्यत आह । दिगिति । तथापि दण्डपुरुषदण्डप्रतियोगिकसंयोगा इति समूहालम्बनेऽतिव्याप्तिः न चात्र दण्डप्रतियोगिकत्वस्य सम्बन्धसम्बन्धविधया न भानमिति वाच्यम् तथा सति सांसर्गिकविषयताया अतिरिक्तत्वाभ्युपगमे किमपराद्धं प्रकारतया । सम्बन्धसम्बन्धस्य विशिष्टज्ञानविषयत्वे गोत्वञ्च विषयकृतवैलक्षण्याभावेपि विषयताकृतवैलक्षण्येनैव ज्ञानानां वैलक्षण्योपपत्तेरित्याद्यूह्यम् ।

तच्चेति । साक्षात्काररूपप्रमाकरणञ्चेत्यर्थः । तृतीयानुव्यवसायरूपप्रमाकरणत्वस्य व्यवसाये सत्त्वाद्धानोपादानोपेक्षादिप्रमाकरणत्वस्य च निर्विकल्पके सत्त्वात्सविकल्पकादिरूपप्रमाकरणत्वस्य चक्षुरादिसंयोगे सत्त्वात्तस्य बहुविधत्वमिति मतनिराकरणायाह । इन्द्रियात्मकमिति । चक्षुरादिकमेव प्रत्यक्षप्रमाणमन्येषां तु व्यापारत्वमिति भावः वस्तुतस्तु प्रत्यक्षप्रमाभ्रमनिराकरणायाह । इन्द्रियेति । द्रव्यग्राहकत्वम् । द्रव्यविषयकलौकिकसाक्षात्कारजनकतावच्छेदकधर्मवत्त्वम् तेनोपनीतभानमादाय रसनेन्द्रियादावतिप्रसङ्गः अनुपधायकखण्डचक्षुः सङ्ग्रहाय जनकतावच्छेदकधर्मव-

व्यग्राहकाणि चक्षुस्त्वङ्मनांसि ॥ अन्यद्घ्राणं रसनं श्रवणं च ॥
ननु मनसो द्रव्यग्राहकत्वे सत्यन्धस्यापि विप्रकृष्टघटोपलब्ध्या-
पत्तिः ॥ न च तदात्ममात्रग्राहकं सर्वविषयकसिद्धान्तव्याघा-
तात् ॥

उच्यते मनः सर्वविषयकमपि बहिर्विषयज्ञानजनने पर-
तन्त्रं परं चक्षुराद्यपेक्षिति योगजधर्मः सामान्यलक्षणा च-
न पुनश्चक्षुरादिमात्रं स्मृतपदार्थानां मनसा संसर्गग्रहाच्च

---

त्वनिवेशः । तद्ग्राहकश्च । द्रव्यग्राहकश्चेत्यर्थः । द्रव्यग्राहकत्वं च द्रव्य-
विषयकलौकिकसाक्षात्कारजनकतावच्छेदकधर्मशून्यत्वम् तेनानुपधायकख-
ण्डचक्षुषि नातिप्रसङ्गः तत्रापि चक्षुष्ट्वस्य सत्त्वादिति । अन्यत् । द्रव्य-
ग्राहकेतरत् । नन्वन्धस्य घटसन्निकर्षे स्पार्शनं जायत एवेत्यतो विप्रकृष्टे-
ति । दूरवर्तीत्यर्थः । तत् । मनः । आत्ममात्रग्राहकमिति । तथा च मन
स आत्मभिन्नाग्राहकत्वान्न तेन घटादिग्रहापत्तिरिति भावः ।
सर्वेति । मनः सर्वविषयकज्ञानजनकमिति सिद्धान्तभङ्गप्रसङ्गादित्यर्थः ।
सर्वविषयकमपि । सर्वविषयकज्ञानजनकमपि । तथा च न तादृशसिद्धा-
न्तभङ्ग इति भावः । परतन्त्रमिति । स्वेतरबहिर्विषयकज्ञानजनकसाम-
ग्रीसापेक्षमित्यर्थः । तथा चान्धस्य विप्रकृष्टघटादीनां मनसा न ग्रहापत्तिस्त-
त्सहकारिचक्षुरादेरभावादिति भावः । किन्तत्परमतमाह । परमिति ।
मीमांसकैर्ज्ञानलक्षणासामान्यलक्षणायोगजधर्माद्यस्वीकारान्मनसश्चक्षुरा-
दीन्द्रियमात्रसहकारित्वमेवोपेयते अत एवात्मा मनसा संयुज्यते मन इन्द्रि-
येण इन्द्रियमर्थेन इन्द्रियाणां वस्तुप्राप्यप्रकाशकारित्वनियमादिति सङ्ग-
च्छते इत्यतस्तन्मतनिराकर्तुमाह । न पुनरिति । चक्षुरादिमात्रमिति । च-
क्षुरादिकमेव परमिति न पुनरित्यन्वयः । मात्रपदेन ज्ञानलक्षणादिव्यव-
च्छेदः तथा च चक्षुरादिव्यापारं विनापि ज्ञानलक्षणादिसहकारेण कदा-
चिन्मनसा ज्ञानजननात्तेषामपि सहकारित्वमावश्यकमुपदर्शितनियमस्तु
लौकिकप्रत्यक्षस्थल एवेति भावः । ननु ज्ञानलक्षणासहकारेण मनसा ज्ञा-
नजनने मानाभाव इत्यत आह । स्मृतेति । संसर्गेति । परस्परसम्बन्ध-
ग्रहादित्यर्थः । ननु परस्परसंसर्गाग्रहे का क्षतिरत आह । कथमन्यथे-
ति । अन्यथा । ज्ञानलक्षणासहकारेण मनसा स्मृतपदार्थानां परस्परसंसर्गा-
ग्रहे इत्यर्थः । कविकाव्यादीति । कविना स्मृतिविषयीभूतपदार्थानां

कथमन्यथा कविकाव्यादि योगिनां योगजधर्मप्रत्यासत्त्या मनसा सर्वसाक्षात्काराच्च ॥ प्रमेयत्वादिसर्वसामान्यलक्षणाप्रत्यासत्त्या सर्वविषयग्रहाच्च ॥ क तर्हि मनःस्वतन्त्रम् अवाह्य वस्तुषु कान्यवाह्यानि ॥ आत्मा तद्योग्यगुणास्तदभावस्तद्वृत्तिजातिस्तत्समवायश्चेति योग्यगुणाः सविकल्पकज्ञाने क्वा

---

परस्पर संसर्गग्रहे काव्यं विरचयति नान्यथा वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात् तथाच तदस्वीकारे संसर्गग्रहाभावेन काव्यरचनोच्छेदप्रसङ्ग इति तत्स्वीकारश्चावश्यक इति भावः । इदमुपलक्षणम् लौकिकसन्निकर्षंविनापि घटो नास्तीत्यादावभावांशे घटस्य भानात् एवं सौरभे लौकिकसन्निकर्षं विनापि सुरभिचन्दनमिति चाक्षुषोदयाच्च तत्स्वीकारस्यावश्यकत्वमिति ध्येयम् । लौकिकान्यतद्विषयताशालिप्रत्यक्षत्वावच्छिन्नं प्रति किञ्चिद्विषयत्वावच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वेन हेतुतेति कार्यकारणभावो बोध्यः कार्यतावच्छेदके लौकिकान्यत्वनिवेशात्त्वाधनिकाविशिष्टबुद्धौ लौकिकसन्निकर्षजन्यनिर्विकल्पके च न व्यभिचारः कारणतावच्छेदके किञ्चिद्विषयत्वावच्छिन्नत्वनिवेशाच्च न निर्विकल्पकोत्तरमुपनीतभानापत्तिः निर्विकल्पकस्याप्युपनायकत्वाङ्गीकारे तु तद्विषयताशालिज्ञानत्वेनैव हेतुतेति बोध्यम् । सामान्यलक्षणाजन्यज्ञाने व्यभिचारवारणाय व्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यं निवेश्यैव तद्वृत्तिधर्मप्रकारकज्ञानजन्यत्वनिवेशितवृत्तिघटत्वद्रव्यत्वादिनानाधर्मप्रकारकज्ञाननिरूपितजन्यतानामनुगमकरूपाभावादिति । इत्थं च कार्यतावच्छेदके लौकिकान्यत्वानिवेशेऽपि न क्षतिरिति ध्येयम् । योगजधर्मसामान्यलक्षणाप्रत्यासत्तिस्वीकारेऽनुभवमेव प्रमाणयति । योगिनामिति । योगिनां योगजधर्मसहकारिणा मनसा चक्षुरादिव्यापारं विनापि सर्वविषयकालौकिकसाक्षात्कारोदयात्तस्य सहकारित्वमावश्यकमिति भावः । मेयत्वादीति । सर्वत्रप्रमेये चक्षुरादिव्यापारं विनापि प्रमेयत्वेन प्रमेयसामान्यविषयकालौकिकसाक्षात्कारोदयात्तस्या अपि सहकारित्वमावश्यकमिति भावः । स्वतन्त्रमिति । वहिर्विषयकज्ञानजनकसामग्र्यानपेक्षमित्यर्थः । अवाह्ये ति । अवाह्यविषयकज्ञानजनने इत्यर्थः । अवाह्यानीति । योग्यानीतिशेषः । तद्योग्येति । आत्मयोग्यगुणाइत्यर्थः । तदभावः । आत्मयोग्यगुणाभावः । तद्वृत्तीति । आत्मतत्समवेतयोग्यगुणवृत्तिजातिरित्यर्थः । साक्षात्मत्वज्ञानत्वादिः । तदेकत्वेति । आत्मै-

प्रयत्नसुखदुःखद्वेषात्मदैकत्वपरिमाणे च ॥ तदैकत्वपरि-माणे न योग्ये इतिटीकाकृतः ॥

नन्वित्थं परात्मा परेण गृह्येततद्गुणाश्चगृह्येरन्निति-चेन्न ॥ परात्मतद्गुणानांपरायोग्यत्वात् ॥ स्यादेतत् च-क्षुर्यदि द्रव्यग्राहकन्तदा परमाण्वादयोऽपि गृह्येरन्निति

---

त्वपरममहत्परिमाणेचेत्यर्थः । द्रव्यसाक्षात्कारसामग्रीसत्त्वे तद्गतसङ्ख्या परिमाणादिग्राहकसामग्र्या अपि सत्त्वाद्द्रव्यसाक्षात्कारस्य सङ्ख्यापरि-माणविषयकत्वनियमेनात्ममानसे तयोरपि भानसम्भवइति भावः । नयो-ग्ये । न लौकिकमानससाक्षात्कारविषयीभूतेइत्यर्थः । अत्र च मनःसंयुक्तस-मवायरूपकारणबलाज्ज्ञानादीनामिव तयोरपि मानसेबाधकाभावः नच तथासति संस्कारादीनामपिमानसापत्तिः सामग्रीसत्त्वादितिवाच्यम् त-न्मानापत्त्या संस्कारस्य प्रातिस्विकरूपेण, विजातीयगुणत्वेन, वा प्रतिबन्ध-कत्वकल्पनात्तद्वत्सङ्ख्यापरिमाणयोरपि प्रातिस्विकरूपेण प्रतिबन्धकत्वे प्र-तिबन्धकतावच्छेदकवैजात्यस्वीकारेण गौरवात्तत्प्रत्यक्षे न किञ्चिद्बाधकम् नच ज्ञानादियोग्यगुणेष्वेव संस्कारव्यावृत्तवैजात्यं स्वीकृत्य विजातीयगुण-विषयकमानसं प्रति विजातीयगुणत्वेन हेतुत्वात्तादृशवैजात्यस्य तत्स-ङ्ख्यापरिमाणयोः स्वीकारेगौरवात्तयोरप्ययोग्यत्वमिति वाच्यम् मनः संयु-क्तसमवायेन विजातीयगुणं विनापि आत्मत्वमानसजननाद्विजातीय-गुणस्य विशेषसामग्रीत्वासम्भवेन सामान्यसामग्रीबलात्संस्कारप्रत्यक्षा-त्तिवारणाय विजातीयगुणभेदत्वेन हेतुतया आवश्यकत्वादात्मत्वमानसे आत्मत्वेनापि हेतुत्वङ्कल्पयित्वा सामान्यसामग्र्या फले जननीये वि-जातीयगुणात्मत्वयोरन्यतरस्य सहकारित्वकल्पनेन संस्कारप्रत्यक्षापत्ति-वारणेत्वतिगौरवात्तदपेक्षया विजातीयगुणभेदत्वेन कारणतायाएवौचित्या दिति तयोः प्रत्यक्षस्वीकारएवौचितइत्यस्वरसष्टीकाकृतइत्यनेन सूचितः । इत्थमिति । आत्मनः आत्मसमवेतगुणानां च मनसोयोग्यत्वेइत्यर्थः । प-रात्मा । पुरुषान्तरीयात्मा । तद्गुणाश्च । परात्मसमवेतगुणाश्चेत्यर्थः । च-कारेण गुणसमवेतजात्यादीनां तदभावानांच सङ्ग्रहः । समाधत्ते । नेति । परायोग्यत्वात् । पुरुषान्तरीयमनसोयोग्यत्वात् । आत्ममानसत्वाव-च्छिन्नं प्रति विजातीयमनःसंयोगत्वेनात्मसमवेतमानसं प्रति विजातीयमनः

क्षेण ॥ तेषां चक्षुरयोग्यत्वात् ॥ किन्त्ववश्यञ्चक्षुर्योग्यत्वं-महदुद्भूतरूपवद्द्रव्यम् ॥ परमाणुश्च न महानात्माद-यश्चानोद्भूतरूपवन्तस्तद्रूपस्यानुद्भूतत्वादुद्भूतत्वञ्च जाति विशेष इत्येके ॥ अनुद्भूतत्वरूपजात्यभाव इत्यपरे ॥

---

संयुक्तसमवायत्वेनात्मसमवेतसमवेतमानसत्वावच्छिन्नं प्रति विजातीयम-नः संयुक्तसमवेतसमवायत्वेनेत्यादिनानाकार्यकारणभावकल्पनात्पूर्वान्त-दोषात्मान्यद्दीयमनसोः संयोगे च वैजात्यानभ्युपगमेन न तत्प्रत्यक्षापत्ति-रिति भावः। ज्ञेष्वेष्विति। परमाण्वादिषु चक्षुःसंयोगसत्त्वादिति भावः तेषाम्। परमाण्वादीनाम्। चक्षुरयोग्यत्वादिति। चक्षुर्जन्यलौकिकसाक्षा-त्कारायोग्यत्वादित्यर्थः। वक्ष्यमाणलौकिकचाक्षुषसामग्र्यसत्त्वादितिभावः। महदित्यादि। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषं प्रति सम-वायेन महत्त्वेन, उद्भूतरूपत्वेन, च हेतुतेत्यर्थः। परमाणौ महत्त्वा-भावात् आत्मनि रूपाभावात् पिशाचादेश्चोद्भूतरूपवत्त्वाभावान्न प्रत्यक्ष-मित्याखण्डलार्थः। तदेवाह। परमाणुश्चेत्यादिना। तद्रूपस्य। पिशाचादि-रूपस्य। अनुद्भूतत्वात्। उद्भूतभिन्नत्वात्। यद्यपि पिशाचादिशरीरस्य वायवीयत्वेन तत्र रूपाभावात्तद्रूपस्यानुद्भूतत्वादित्यसङ्गतम् तथापि पि-शाचादिपदेन तन्निमित्तकारणपार्थिवोपष्टम्भकभागो बोध्यः। ननु लाघवा-द्विजातीयचक्षुःसंयोगत्वेनैव द्रव्यचाक्षुषं प्रति हेतुत्वं परमाण्वादिचक्षुःसं-योगे च वैजात्यानभ्युपगमान्न तत्प्रत्यक्षापत्तिरिति किमुद्भूतरूपादिहेतुत-या न च विजातीयचक्षुःसंयुक्तविशेषणतया अभावचाक्षुषे हेतुतया वायावुद्भू-तरूपाभावप्रत्यक्षानुरोधेन तत्र विजातीयचक्षुःसंयोगस्यावश्यकतया वा-योश्चाक्षुषापत्तिरिति तत्र तद्धेतुत्वमावश्यकमिति वाच्यम्। द्रव्यचाक्षुषजनक-तावच्छेदकतया वैजात्यान्तरस्वीकारात्तस्य च तत्रानङ्गीकारात् न च तथा-पि विजातीयचक्षुःसंयोगस्य चक्षुष्यपि सत्त्वात्तच्चाक्षुषापत्तिरित्युद्भूतरूप-हेतुत्वमावश्यकमिति वाच्यम् स्वप्रतियोगिकसंयोगस्य स्वस्मिन्नभावेन च-क्षुषि चक्षुःप्रतियोगिकसंयोगाभावादिति चेन्न विजातीयक्रियाया एव विजातीयसंयोगनियामकत्वेन यत्रैकयैव चक्षुःक्रियया घटे परमाणौ च युगपत्संयोगस्तत्र परमाणावपि विजातीयसंयोगस्य दुर्वारतया तत्प्रत्य-क्षापत्तेर्वारणासम्भवात्। न च तत्तदुत्तरदेशस्यापि विजातीयसंयोगनिया-

योग्यगुणाः योग्यद्रव्यगतरूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगाः ॥ मात्रपदं घटाकाशसंयोगवारणाय ॥ कर्म च योग्यद्रव्यसमवेतम् ॥ जातिश्च योग्यवस्तुगता द्रव्यत्वरूपत्वादिः समवायश्च ॥ त्वचो महदुद्भूतरूपस्पर्शवद्योग्यं द्रव्यम् ॥ तेन परमाणुवायुप्रदीपप्रभादयस्त्वचा न गृह्यन्ते ॥ परमाणोरमहत्त्वाद्वायोर्नीरूपत्वात् प्रभायाउद्भूतस्पर्शाभावात् ॥ योग्यगुणाश्च रूपातिरि-

---

मकतया परमाण्वादिरूपान्तरदेशस्य तत्र नियामकत्वाकल्पनेन न तत्र विजातीयसंयोग इति वाच्यम् अनन्तान्तरदेशानां विजातीयसंयोगनियामकत्वकल्पनापेक्षया महदुद्भूतरूपादिहेतुताया एवोचितत्वादित्यादिक् । एतेनैतदस्वरसः सूचितः । स चोद्भूतत्वस्य जातित्वे नीलत्वादिना सङ्करप्रसङ्गः । न च नीलत्वादिव्याप्यनानैवोद्भूतत्वमिति वाच्यम् । तथा सति चाक्षुषत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेन कारणत्वानुपपत्तेः कारणाननुगमेन व्यभिचारादिति । अनुद्भूतत्वमिति । न च नीलत्वादिना साङ्कर्यमत्रापीति वाच्यम् । नीलत्वादिव्याप्यनानानुद्भूतत्वस्यैव स्वीकारात् । अनुद्भूतत्वाभावकूटविशिष्टरूपत्वेन च प्रत्यक्षं प्रति हेतुत्वेन व्यभिचाराभावादिति भावः ॥

प्रसङ्गाच्चक्षुर्योग्यगुणानाह । योग्यगुण इत्यादिना । चक्षुर्योग्या इति शेषः । योग्यद्रव्यरूपमिति । चक्षुर्योग्यद्रव्यवृत्तिरूपमित्यर्थः । तन्मात्रवृत्तीति । योग्यद्रव्यमात्रवृत्तीत्यर्थः । ननु तन्मात्रवृत्तीत्यत्र मात्रपदमनर्थकमित्यत आह । मात्रपदमिति । घटाकाशसंयोगस्याकाशेऽपि वृत्तित्वान्न योग्यद्रव्यमात्रवृत्तित्वमिति भावः । ननु त्वाचप्रत्यक्षे त्वक्संयोगस्य हेतुत्वात् परमाणुवायुप्रभादीनां स्पार्शनापत्तिरिति त्वगिन्द्रिययोग्यमेव द्रव्यं त्वचा गृह्यते तदेवं वाच्यं तत्र किन्त्वयोग्यमिति हृदिस्थाशङ्कायामाह । त्वच इति । महदित्यादि । तथा च द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचप्रत्यक्षं प्रति समवायेन महत्त्वत्वेनोद्भूतरूपत्वेनोद्भूतस्पर्शत्वेन च हेतुत्वान्नतत्प्रत्यक्षापत्तिरिति भावः । सामान्यतो बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेन हेतुत्वात् त्वाचप्रत्यक्षेऽपि रूपं हेतुः तेन न वायोः प्रत्यक्षमिति हृदयम् । यथाक्रमं परमाण्वादिप्रत्यक्षं वारयति । तेनेत्यादिना । प्रभाया इति । न च प्रभाहि तैजसीरूपमित्यनेन प्रभाया रूपत्वमेव न तु द्रव्य

णाश्च त्वग्योग्याः महदुद्भूतस्पर्शवन्मात्रवृत्तयो महदुद्भूतस्पर्शश्च । अतएव वायुपरिमाणादयस्त्वचा न गृह्यन्ते तच्चक्षुरयोग्यत्वात् नवा दीपप्रभापरिमाणादय उद्भूतस्पर्शवद्वृत्तित्वान्नवा घटप्रभासंयोगादय उद्भूतस्पर्शवन्मात्रावृत्तित्वात् तत्र हि अनुद्भूतस्पर्शादयो विद्यन्ते ॥ कर्म च योग्यद्रव्यसमवेतं, योग्यवस्तुगतं सामान्यं, च समवायश्च ॥

मीमांसकास्तु महदुद्भूतस्पर्शवत्त्वेनैव त्वचो योग्यता लाघवान्न तु महदुद्भूतरूपमपि तत्प्रयोजकं गौरवादतो वायुरपि स्पार्शनप्रत्यक्षः नच बहिरिन्द्रियजन्यद्रव्यसा-

---

त्वमिति वाच्यम् । तदन्यमतानुसारेणैतदुक्तत्वादिति । प्रसङ्गात्त्वगिन्द्रिययोग्यगुणानाह । गुणाश्चेत्यादिना । त्वचो योग्या इति शेषः चक्षुर्योग्यस्यापि रूपस्य त्वचा ग्रहणप्रसङ्गाद्रूपातिरिक्ता इति । महदुद्भूतस्पर्शवन्मात्रेति । तन्मात्रवृत्तित्वं च तदितरावृत्तित्वे सति तद्वृत्तित्वम् । महदुद्भूतस्पर्शश्चेति । सामानाधिकरण्येन महत्त्वविशिष्टोद्भूतस्पर्शश्चेत्यर्थः । ननु चक्षुर्योग्या इति व्यर्थं अत आह । अतएवेति । अतएव चक्षुर्योग्यत्वविशेषणादेव । वाय्विति । वायुपरिमाणस्य चक्षुरयोग्यत्वादिति भावः । ननूद्भूतस्पर्शवद्वृत्तेश्चक्षुर्योग्यगुणस्यैवाप्रसिद्धत्वात्तेनैव प्रत्यक्षापत्तिवारणे कृतं महदित्यादि विशेषणेनेत्यत आह । नवेति । तथाच प्रभापरिमाणस्य चक्षुर्योग्यत्वात्तस्यापि त्वाचप्रत्यक्षापत्तिरतस्तद्विशेषणमावश्यकमिति भावः । नच चक्षुर्योग्यत्वविशेषणेनैव परमाणुगुणप्रत्यक्षवारणेऽत्र पृथक् महदिति विशेषणवैयर्थ्यमिति वाच्यम् । त्रुटिपरिमाणस्पार्शनवारणाय प्रकृष्टमहत्त्वपरतया तदुपादानस्यावश्यकत्वात् । मात्रपदव्यावृत्तिमाह । नवा घटेति । उद्भूतस्पर्शवन्मात्रावृत्तित्वात् । उद्भूतस्पर्शवदितरवृत्तित्वात् । तथाच न तदितरावृत्तित्वस्वरूपं तन्मात्रवृत्तित्वं तस्येति भावः । तत्र हि । प्रभायां हि । कर्मेति । त्वग्योग्यद्रव्यसमवेतं कर्म त्वग्योग्यमित्यर्थः ॥

वायोरपि स्पार्शनप्रत्यक्षवादिमीमांसकमतं दर्शयति । मीमांसकास्त्वित्यादिना । लाघवात् । त्वाचप्रत्यक्षे रूपस्य हेतुताकल्पनेन लाघवात् । महदिति । महत्त्वविशिष्टोद्भूतरूपमित्यर्थः । तत्प्रयोजकं । त्वाचप्रत्यक्षप्रयोजकं ।

जात्याकारत्वावच्छेदेनोद्भूतरूपस्य हेतुत्वाद्वायौ तदभावान्नैव-मितिवाच्यम् ॥ लाघवाद्द्रव्यचाक्षुषत्वावच्छेदेनैव तद्धेतुत्वादित्याहुः ॥

---

गौरवात् । प्रभास्पार्शनवारणायोद्भूतस्पर्शस्य स्पार्शनंप्रति हेतुत्वस्यावश्यकतया त्वाचप्रत्यक्षं प्रति रूपस्य हेतुत्वे गौरवात् । ततइति । उद्भूतरूपस्य त्वाचप्रत्यक्षप्रयोजकत्वादित्यर्थः । बहिरिन्द्रियेति । आत्मप्रत्यक्षव्यभिचारवारणाय बहिरिन्द्रियजन्यत्वनिवेशः अतएव न नित्यसाधारण्यमपीति भावः । तदभावात् । उद्भूतरूपाभावात् । नैवमिति । न वायोः स्पार्शनप्रत्यक्ष-मित्यर्थः । लाघवादिति । बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारत्वापेक्षया द्रव्यचाक्षुषत्वस्यैव कार्यतावच्छेदकत्वे लाघवादित्यर्थः । अथ मीमांसकानामयमाशयः । आत्मप्रत्यक्षे व्यभिचारवारणाय बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे गौरवादुद्भूतरूपस्य कार्यतावच्छेदकं बहिर्द्रव्यप्रत्यक्षत्वं वाच्यम् तच्च बहिष्ट्वम् आत्मान्यत्वं मानसविषयान्यत्वं वेति विनिगमनाविरहः । अथ मूर्तप्रत्यक्षत्वमेव तत्कार्यतावच्छेदकं स्पन्दसमवायिकारणतावच्छेदकतया च मूर्तत्वं जातिरिति चेत् । तथापि प्रभायाः स्पार्शनवारणायोद्भूतस्पर्शस्य स्पार्शनं प्रति हेतुत्वावश्यकतया चाक्षुषत्वमेव रूपजन्यतावच्छेदकमुपेयते । नतुमूर्तप्रत्यक्षत्वं वायोः प्रत्यक्षसन्देहेन तस्य सन्दिग्धव्यभिचारकत्वात् तदुक्तम् ( परित्यज्य च निश्चिताव्यभिचारकं रूपशङ्क्यमानव्यभिचारकेण कारणत्वकल्पनायामपि कार्यत्वकल्पनाया अयोगादिति ) । तथाच वायोः स्पार्शनेबाधकाभावः । साधिकाच समीरोयं मन्दो वहतीत्यादिप्रतीतिः । नचोद्भूतस्पर्शनैव वायोरनुमानान्न तादृशप्रतीतेरनुपपत्तिरिति वाच्यम् । व्याप्तिज्ञानादिकं विनापि तादृशप्रतीतेर्लौचयानत्वात् । अन्यथा घटं स्पृशामीत्यादिप्रतीतिरप्यनुमानेनैवोपपत्तौ घटादीनामपि स्पार्शनोच्छेदापत्तिरिति । अत्राहुर्नैयायिकाः । कारणाभावात्कार्याभाव इति प्रतीत्या कार्यसामान्याभावे कारणाभावस्य प्रयोजकत्वन्तत्र च मूर्तप्रत्यक्षत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेनाकारणत्वेच तदवच्छिन्नाभावस्य प्रयोजकत्वासम्भवात् । प्रत्यक्षसामान्याभावे उद्भूतरूपाभावस्योद्भूतस्पर्शाभावस्येति विशेषाभावकूटस्य प्रयोजकत्वं वाच्यमिति गौरवम् । मन्मते चोद्भूतरूपाभावस्यैवेति लाघवम् उद्भूतरूपत्वेनाकारणत्वेच तदवच्छिन्नाभावस्य प्रयोजकत्वासम्भवात्तद्धेतुत्वमावश्यकमेव । ननु तर्ह्युद्भूतस्पर्शत्वेन हेतुत्वमादाय-

विनिगमनाविरहः । अथ मते वायोरिव मन्मते प्रभायाः प्रत्यक्षमस्तीत्या-वादिति चेन्न । ग्रहोपरिदेशे विहङ्गमवत्त्वस्य प्रभामण्डलस्यैवोपरिदेशतयान-न्तस्य प्रत्यक्षानङ्गीकारे ऊर्ध्व विहङ्गम इति प्रतीत्यनुपपत्तेः । संयोगप्रत्यक्षे या-वदाश्रयप्रत्यक्षस्य हेतुत्वात् । एवं संयोगविभागलिङ्गकं चन्द्रतारादौ गत्यनु-मानन्न स्यात् नच पूर्वोत्तरदेशयोश्चन्द्रादेरुपलम्भानुपलम्भाभ्यां संयोगविभाग-योरनुमाना त्ताभ्यां गत्यनुमानमिति वाच्यम् । प्रभामण्डलरूपयोस्तयो-र्भवन्मतेऽप्रत्यक्षत्वात्तत्प्रभायायाश्चाक्षुषाङ्गीकारस्यावश्यकत्वादुद्भूतस्पर्शत्वेन कारणत्वासम्भवः । नच मूर्तप्रत्यक्षत्वस्य नित्यसाधारण्यात् कथं जन्यता-वच्छेदकत्वमिति वाच्यम् । समवायकालिकविशेषणतोभयसम्बन्धेन प्रत्यक्ष-त्वस्यैव जन्यतावच्छेदकत्वात् । एवंरीत्या सिद्धे कार्यकारणभावे वायौ रूपाभावेनन तत्प्रत्यक्षमिति । वायुर्वातीति प्रतीतिरनुमानेनैवो पपा-दनीया घटादौ चोद्भूतरूपसत्त्वेन तत्प्रतीतेः प्रत्यक्षत्वमेवेति । ननु गगनघटसंयोगस्पार्शनवारणाय विजातीय स्पार्शनं प्रति सामानाधि-करण्यसम्बन्धेन स्पार्शनाभावस्य प्रतिबन्धकत्वावश्यकतया वायोः स्पार्शने वा-युस्पर्शस्पार्शनानुपपत्तिः । चतुरणुकस्पार्शने व्यभिचारवारणाय सतिविजा-तीय विलक्षण धर्मवत्त्व* निवेशः । वैजात्यञ्चेन्द्रियग्राह्यगुणकर्म-साधारणम् । नचप्रतिबध्यतावच्छेदककोटौ विजातीयसति स्पर्शान्य-त्वनिवेशान्नानुपपत्तिरिति वाच्यम् । तथासति विजातीयसत्त्वस्प-र्शान्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहप्रसङ्गात् । एवं त्वक्संयु-क्तसमवायरूपसामान्यसामग्र्या स्पार्शनाभावाभावरूपकारणं विनापि वायु-स्पर्शस्पार्शनजननात्तस्य विशेषसामग्रीत्वासम्भवेन त्वक्संयुक्तसमवायरूप-सामान्यसामग्रीबलाद्गगनघटसंयोगस्पार्शनापत्तेर्दुर्वारत्वाच्च नच स्पर्श-स्पार्शनं प्रति स्पर्शत्वेनापि हेतुत्वकल्पयित्वा सामान्यसामग्र्या द्रव्यसम-वेत स्पार्शनत्वावच्छिन्नजननीये स्पार्शनाभावाभावस्पर्शयोरन्यतरस्यसहका-रित्वकल्पनान्नानुपपत्तिरिति वाच्यम् तथासति प्रतिबध्यतावच्छेदककोटौ स्पर्शान्यत्वनिवेशेन स्पर्शत्वेन हेतुत्वकल्पनेन च वायोरप्रत्यक्षत्वस्यादिमते गौरवादिति वायुप्रत्यक्षत्वस्वीकारणोचित इतिचेन्नैवं । तादृशप्र-तिबन्धकाभावं विनापि त्वक् संयुक्तसमवायेन द्रव्यत्वस्पार्शनजननात् तस्य विशेषसामग्रीत्वासम्भवेन सामान्यसामग्रीबलात् गगनघटसंयोगस्पार्श-नापत्तेर्दुर्वारत्वात् । स्वङ्गिसद्द्रव्यसमवेतस्पार्शनं प्रति स्वङ्गिसत्वेनापि का-

* विजातीयत्वनिवेश इत्यपि पाठान्तरम्

रणत्वं कल्पयित्वा सामान्यसामग्र्याः फले जननीये तादृशप्रतिबन्धकाभावसन्निकर्षयोरन्यतरस्य सहकारित्वकल्पनाद्यापत्तिवारणत्वमिति गौरवात्तदपेक्षया गगनघटसंयोगस्पार्शनवारणाय स्पार्शनाभावविशिष्टविजातीयसत्त्वेनैव तादात्म्येन प्रतिबन्धकत्वौचित्यात् विजातीयसत्त्वे स्पार्शनाभाववैशिष्ट्यं च * सामानाधिकरण्यसम्बन्धेन । नच विजातीयसत्त्वस्पार्शनाभावयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविरह इति वाच्यम् । विजातीयसत्त्वविशिष्टस्पार्शनाभावत्वेन प्रतिबन्धकत्वे सामानाधिकरण्यस्यैव प्रतिबन्धकतावच्छेदकसम्बन्धतया गौरवात् स्पार्शनाभावविशिष्टविजातीयसत्त्वेन प्रतिबन्धकत्वे तु तादात्म्यस्यैव प्रतिबन्धकतावच्छेदकसम्बन्धतया लाघवात् । प्रतिबध्यतावच्छेदकं च स्पर्शान्यस्पार्शनत्वम् । तेन वायोरप्रत्यक्षत्वेऽपि न तत्स्पर्शस्पार्शने व्यभिचारः । नच तादृशप्रतिबन्धकाभावं विनापि वायुस्पर्शस्पार्शनजननात् तस्य विशेषसामग्रीत्वासम्भवेन सामान्यसामग्रीत्वाद्गगनघटसंयोगस्पार्शनापत्तिरिति वाच्यम् । स्पर्शस्पार्शनं प्रति स्पर्शत्वेनापि हेतुताकल्पनेन सामान्यसामग्र्या फले जननीये स्पर्शतथाविधप्रतिबन्धकाभावयोरन्यतरस्य सहकारित्वोपगमात् । नच प्रतिबध्यतावच्छेदककोटौ स्पर्शान्यत्वनिवेशेन स्पर्शत्वेन हेतुत्वकल्पनेन च वायोः प्रत्यक्षत्वानङ्गीकारे गौरवाद्वायुप्रत्यक्षतास्वीकार एवोचित इति वाच्यम् । वायुप्रत्यक्षानङ्गीकारे प्रकारान्तरेण लाघवसम्भवात् । तथाहि परमाण्वादिघटितसन्निकर्षवशाद्द्रव्यत्वस्पार्शनवारणाय द्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तस्पार्शनवत्समवायत्वेन हेतुत्वं वाच्यम् नच चतुरणुकस्पार्शने व्यभिचारवारणाय द्रव्यान्यद्रव्यसमवेतस्पार्शनत्वं कार्यतावच्छेदकमुपेयं । तस्य च सन्निकृष्टद्रव्यसमवेतस्पार्शनत्वस्य कार्यतावच्छेदकत्वमादाय विनिगमनाविरहः । वायोरप्रत्यक्षत्वे तु वायुस्पर्शस्पार्शने व्यभिचारेण द्रव्यान्यद्रव्यसमवेतस्पार्शनत्वस्य कार्यतावच्छेदकत्वासम्भवेन सन्निकृष्टद्रव्यसमवेतस्पार्शनत्वस्यैव कार्यतावच्छेदकतया विनिगमनाविरहासम्भवात् । नचैवमसन्निकृष्टगुणकर्मस्पार्शनापत्तिरिति वाच्यम् । एकाश्रयघटितसन्निकर्षाद्द्वित्वादिप्रत्यक्षवारणाय विजातीयसत्स्पार्शनं प्रति सामानाधिकरण्यसम्बन्धेन त्वक्संयोगाभावस्य प्रतिबन्धकत्वावश्यकतया तेनैव सन्निकृष्टगुणकर्मस्पार्शनापत्तिवारणसम्भवात् । नचैवं त्वक्संयुक्तसमवायहेतुतायामेव बीजाभावः । येन तत्कार्यतावच्छेदके विनिगमनाविरहो वायुप्रत्यक्षतावादिमते प्रस-

---

* सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेनेत्यपि पाठान्तरम् ॥

**वैशेषिकास्तु समवायो न प्रत्यक्षः सम्बन्धप्रत्यक्षे यावदा-**

---

ज्येतेति वाच्यम् असन्निकृष्टद्रव्यत्वादि स्पार्शनवारणाय त्वक्संयुक्तस्पार्शनवत्समवायत्वेन सन्निकृष्टद्रव्यसमवेतस्पार्शनत्वावच्छिन्नं प्रति हेतुता तच्च द्रव्यान्यद्रव्यासमवेतस्पार्शनत्वमादाय न विनिगमनाविरहः । वायोरप्रत्यक्षत्वे नवायुस्पर्शस्पार्शने व्यभिचारात् । वायुप्रत्यक्षत्ववादिमते तु द्रव्यान्यद्रव्यासमवेतस्पार्शनमादाय विनिगमनाविरहेणानन्तपुरुषभेदभिन्नानन्तसन्निकर्षहेतुत्वकल्पनापत्तेर्वायोरप्रत्यक्षत्वाङ्गीकार एवोचितः । एतन्मते उक्तरूपेण स्पर्शान्यत्वनिवेशेन स्पर्शत्वेन हेतुत्वकल्पनेन च कियद्गौरवसम्भवेऽपि पुरुषभेदभिन्नसन्निकर्षहेतुत्वकल्पनापेक्षया लाघवानपायादिति सिद्धान्तानुयायीपन्थाः

नव्यास्तु असन्निकृष्टद्रव्यत्वस्पार्शनवारणाय पुरुषभेदभिन्नसन्निकर्षहेतुत्वन्नोपेयते अपितु सन्निकृष्टद्रव्यसमवेतस्पार्शनं प्रति स्ववृत्तिप्रागभावप्रतियोगित्वविशिष्टं यत्स्ववृत्तिस्पार्शनं विषयतासम्बन्धेन तद्वद्वृत्तिसमवेतत्वसम्बन्धेन जातित्वेनैव कारणत्वं स्ववृत्तित्वं च कालिकसम्बन्धेन एवञ्च वायुप्रत्यक्षत्वस्वीकारेऽपि पुरुषभेदभिन्नसन्निकर्षहेतुतायास्तत्कार्यतावच्छेदकोपदर्शितगौरवस्यानवकाशात्तद्धेतुत्वस्यैवाकल्पनात् । नच जातिकार्यतावच्छेदके द्रव्यान्यद्रव्यासमवेतस्पार्शनत्वमादाय विनिगमनाविरहसम्भव इति वाच्यम् । भवन्मते स्पर्शान्यत्वनिवेशेन स्पर्शत्वेन हेतुत्वकल्पनेन च गौरवस्यातिस्फुटत्वात् । वस्तुतस्तु व्यापकधर्मेण कारणतायाइव कार्यताया अप्यकल्पनाद्द्रव्यान्यद्रव्यासमवेतस्पार्शनत्वेन कार्यतावच्छेदकत्वासम्भवात्सन्निकृष्टद्रव्यसमवेतस्पार्शनत्वस्यैव वायुप्रत्यक्षतावादिमतेऽपि सन्निकर्षकार्यतावच्छेदकत्वादित्याहुः । वस्तुतस्तु गुरुत्वाद्यतीन्द्रियप्रत्यक्षवारणाय तेषान्तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे गौरवाल्लाघवेन विषयत्वेनैव लौकिकप्रत्यक्षहेतुत्वं विषयत्वं च लौकिकविषयतया साक्षात्कारवत्त्वमेव । तथाच तेनैव गगनघटसंयोगस्पार्शनवारणे न तदनुरोधेन स्पार्शनं प्रति स्पार्शनाभावप्रतिबन्धकत्वमिति न वायुस्पर्शस्य स्पार्शनानुपपत्तिः । नचैवं विषयत्वाभावादेव नीरूपप्रत्यक्षवारणे रूपहेतुत्वमनावश्यकमिति वाच्यम् । घटादेः पाकादिना नीरूपतादशायां लौकिकप्रत्यक्षतापत्तेः रूपहेतुत्वस्यावश्यकत्वादित्यलमनल्पजल्पनेन ॥

समवायातीन्द्रियत्ववादिवैशेषिकमतं दूषयितुमुपन्यस्यति । वैशेषिकास्त्विति । न प्रत्यक्षः । नेन्द्रियजन्यलौकिकसाक्षात्कारविषयः । स-

श्रयप्रत्यक्षस्य हेतुत्वात् कथमन्यथा घटाकाशसंयोगोऽपि न प्रत्यक्षः नचसमवायस्यसर्वैश्राश्रयाः प्रत्यक्षाः परमाण्वादेरयोग्यत्वादित्याहुस्तन्न तथा हेतुतायाञ्च मानाभावात् नच घटाकाशसंयोगस्य प्रत्यक्षतापत्तिः योग्यसमानसमवेतगुणस्यैव योग्यत्वात् किन्तु लाघवात् संयोगप्रत्यक्षत्वावच्छेदेनयावदाश्रयप्रत्यक्षस्य हेतुता युज्यते नतु सम्बन्धप्रत्यक्षत्वावच्छेदेन सम्बन्धत्वं हि संयोग समवायान्यतरत्वमिति गौरवात्। घ्राणयोग्यौ महत्त्वसमानाधिकरणोद्भूतो गन्धस्तद्गतं सामान्यं तयोः समवायश्च अतएव परमाणुगन्धो न गृह्यते महत्त्वासमानाधिकरणत्वान्न वा घ्राणमणिवज्रादिगन्धस्तस्यानुद्भूतत्वात् रसनयोग्यौ महत्त्वसमानाधिकरणोद्भूतो रसस्तद्गतं सामान्यं तयोः समवायश्च तेनपरमाणुरसो न गृह्यते महत्त्वासमानाधिकरणत्वान्नवा मण्यादिरसोगृह्यते अनुद्भूतत्वात्। श्रवणयोग्यः शब्दस्त-

म्बन्धप्रत्यक्षेहेति। सम्बन्धत्वस्य समवायसाधारणत्वादिति भावः। ननु तादृशकार्यकारणभावेमानाभावस्तत्राह। कथमन्यथेति। अन्यथा। तादृशकार्यकारणभावाकल्पने। नप्रत्यक्षइति। तथापि चक्षुः संयुक्तसमवायरूपकारणसत्त्वेन द्रव्यसमवेतचाक्षुषापत्तेरिति भावः। नचेति। नहीत्यर्थः। तथा हेतुतायामिति। सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षत्वेन हेतुतायामित्यर्थः। घटाकाशसंयोगप्रत्यक्षापत्तिरेव मानमित्याशङ्कां निराचष्टे। नचेत्यादिना। योग्येति। द्रव्यत्वादिजातेर्योग्यमात्रसमवेतत्वाभावाद् योग्यत्वन्न स्यादतोगुणेति। योग्यत्वादिति। घटाकाशसंयोगस्य चायोग्याकाशवृत्तित्वेनायोग्यत्वादिति भावः। नन्वेवं वायुस्पर्शस्य शब्दस्यच प्रत्यक्षं न स्यात्तयोरयोग्यवृत्तित्वादित्यत आह। किन्त्विति। लाघवात्। सम्बन्ध प्रत्यक्षत्वापेक्षया लाघवात्। लाघवमेवाह। सम्बन्धत्वं हीति। संयोगत्वस्य जातिरूपतया लाघवम-

तानाति तयोः समवायश्चेति सङ्क्षेपः ॥ तस्य चेन्द्रियसन्निकृष्टार्थग्राहकत्वात्सन्निकर्षाः सहकारिणः के ते सन्निकर्षाः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणता च ॥

अथ केन सन्निकर्षेण किं गृह्यते द्रव्यं संयोगेन गृह्यते । शब्देतरगुणाः कर्म द्रव्यगता जातिः संयुक्तसमवायेन । भवति हि

---

स्यैवेति भावः । घ्राणग्राह्यगुणमाह । घ्राणेति । तद्गतं । गन्धगतं सामान्यं । गन्धत्वादि । तयोः । गन्धगन्धत्वयोः । अतएव । गन्धे महत्त्वसामानाधिकरण्यविशेषणादेः । उद्भूतत्वविशेषणव्यावृत्तिमाह । नवेति । रसनयोग्यगुणमाह । रसनेति । श्रवणयोग्यगुणमाह । श्रवणेति । ननु चक्षुरादीनां द्रव्यग्राहकत्वे निमीलितनयनस्यापि तद्ग्रहापत्तिरत आह । तस्य चेति । सन्निकृष्टार्थग्राहकत्वात् सन्निकृष्टार्थमात्रग्राहकत्वात् । असन्निकृष्टार्थाग्राहकत्वादिति यावत् । सहकारिणः । प्रत्यक्षे जननीये अपेक्षणीयाः । तथाचेन्द्रियसंयोगादेरपि प्रत्यक्षहेतुतया न निमीलितनयनस्य प्रत्यक्षापत्तिरिति भावः । नन्विन्द्रियत्वस्य तेजस्त्वादिना सङ्करात् जातित्वासम्भवेन कथं द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्नं प्रतीन्द्रियत्वसंयोगयोर्हेतुत्वमिति चेन्न । इन्द्रियनिष्ठेष्वेकत्वेषु वैजात्यं स्वीकृत्य विजातीयैकत्ववत्त्वेनैव तद्धेतुत्वात् । न च चक्षुःसंयोगदशायां स्पार्शनवारणाय त्वक्संयोगदशायां च चाक्षुषवारणाय चक्षुस्त्वक्संयोगयोश्चाक्षुषस्पार्शनहेतुत्वस्यावश्यकतयेन्द्रियसंयोगादेः प्रत्यक्षसामान्यहेतुत्वे मानाभाव इति वाच्यम् । प्रत्यक्षसामान्यानुत्पादे चक्षुःसंयोगाभावत्वक्संयोगाभावादीनां प्रयोजकत्वे गौरवात् लाघवेनेन्द्रियसंयोगाभावस्यैव प्रयोजकत्वे नेन्द्रियसंयोगहेतुत्वावश्यकत्वात् । * कारणविरहस्य कार्यविरहप्रयोजकत्वात् । इन्द्रियसंयोगस्य संयोगेनेन्द्रियस्य वा हेतुत्वमिति विनिगमनाविरहादिन्द्रियत्वेनापि तद्धेतुत्वमिति ॥

ननु सर्वेषामेव सन्निकर्षाणां द्रव्यादिग्राहकत्वे आत्मनः प्रत्यक्षानुपपत्तिस्तत्र संयुक्तसमवायाभावात् एवं रूपादेरपि तत्र संयोगाभावादिति प्रत्येकमेव द्रव्यादिग्राहकतावाच्या तत्र केन किं गृह्यते इति पृच्छति । अथ

---

* अकारणविरहस्य कार्यविरहाप्रयोजकत्वादित्यपि पाठान्तरम्

घटादिकं चक्षुरादिसंयुक्तं तत्र समवेतं रूपादि स्पन्दो द्रव्यत्वादिजातिश्च शब्देतरगुणकर्मगताजातिः संयुक्तसमवेतसमवायेन भवतिहि चक्षुरादिसंयुक्तो घटादि स्तत्समवेतं रूपादि तत्र समवायो रूपत्वादेः । शब्दः समवायेन गृह्यते कर्णशष्कुल्यवच्छिन्ने नभसि शब्दस्य समवायात् ॥ शब्दगता तु जातिः समवेतसमवायेन श्रवणसमवेते शब्दे शब्दत्वस्य समवायात् । विशेषणतया समवायोऽभावश्च गृह्यते तत्र संयोगसमवाययोरभावात् । सा च विशेषणता द्विविधा । इन्द्रियविशेषणता इन्द्रियसन्निकृष्टविशेषणता च । तत्रेन्द्रियविशेषणतया शब्दाभावो गृह्यते इन्द्रियरूपे श्रवणे तस्य विशेषणत्वात् । इन्द्रियसन्निकृष्टविशेषणतया भूतलादौ घटाभावादि इन्द्रियसन्निकृष्टे भूतले तस्य विशेषणत्वात् इन्द्रियसन्निकृष्टविशेषणतापि बहुविधा । सन्निकर्षस्य बहुत्वादवसेया । ननु संयोगो न प्रत्यासत्तिः संयुक्त-

---

केनेति । उत्तरयति । द्रव्यमिति । संयुक्तसमवायस्य गुणमात्रग्राहकत्वे शब्दग्रहो न स्यात् स्वस्मिन्स्वप्रतियोगिकसंयोगाभावेन श्रोत्रसंयुक्तसमवायस्य शब्देऽसत्त्वादतआह । शब्देतरेति । जातिः । द्रव्यत्वादिः । संयुक्तसमवेतसमवायस्य शब्दत्वेऽसत्त्वाच्छब्दत्वग्रहानुपपत्तेः । शब्देतरगुणेति । शब्देतरेति गुणविशेषणं । तत्र । समवायेऽभावे च । तथा च पञ्चविधसन्निकर्षाभावेन विशेषणतयैव तद्ग्रह इतिभावः । तस्य । शब्दाभावस्य । अग्रे च तस्य घटाभावस्येत्यर्थः । नन्विन्द्रियसन्निकृष्टविशेषणतेन्द्रियसंयुक्तविशेषणता तथा च रूपादौ रसत्वाभावग्रहानुपपत्तिरत आह । इन्द्रियसन्निकृष्टेति । बहुविधेति । इन्द्रियसन्निकृष्टविशेषणता इन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्तसमवेतविशेषणतेत्यादिरीत्याबोध्या । इन्द्रियसंयुक्तसमवेतविशेषणतया रूपादौ रसत्वाभावग्रहसम्भवान्नानुपपत्तिरितिभावः । बहुत्वात् । संयुक्तसमवायादिभेदेन बहुवि-

समवायेनैव घटादिग्रहसम्भवात् इन्द्रियसंयुक्ते कपालादौ तेषां समवायात् । नैवम् आत्मनि तदसम्भवात् तस्याऽसमवेतत्वादिति सङ्क्षेपः ॥ स्यादेतत् अन्धकारस्थघटादिः किमितिचक्षुषानोपलभ्यते संयोगप्रत्यासत्तेः सत्त्वात् ॥

उच्यते चक्षुषाद्रव्यग्रहे महदुद्भूतरूपालोकसंयोगः सहकारी नचान्धकारस्थघटे सोऽस्ति ॥ नच महदुद्भूतेति व्यर्थं

---

धत्वात् । ननु रूपादिग्रहार्थमवश्यमभ्युपेयतया संयुक्तसमवायादिप्रत्यासत्त्यैव घटादिग्रहोपपत्तिरलं संयोगस्यप्रत्यासत्तित्वेनेत्याशङ्कते । न । न्विति । न प्रत्यासत्तिः । न द्रव्यग्राहकप्रत्यासत्तिः । मानाभावादिति शेषः । ननु घटादिग्रहान्यथानुपपत्तिरेवमानमत आह । संयुक्तेति । तदसम्भवात् । संयुक्तसमवायासम्भवात् । तस्य । आत्मनः । तथाचात्मप्रत्यक्षे संयोगहेतुताया आवश्यकत्वेन तत्रैव द्रव्यप्रत्यक्षत्वमेव तज्जन्यतावच्छेदकमुपेयतइति भावः । ननु द्रव्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति चक्षुः संयुक्तसमवायस्य हेतुत्वेन ततएवोपपत्तेरलं चक्षुःसंयोगहेतुत्वेन । यदि चात्मप्रत्यक्षे लघुत्वात्सामान्यतोद्रव्यप्रत्यक्षत्वमेव तज्जन्यतावच्छेदकमुररीक्रियते तदा सत्प्रत्यक्षत्वमेव तथा स्तु । नच सत्प्रत्यक्षत्वस्य तथात्वे रूपादिचाक्षुषानुपपत्तिरित्यन्यथानुपपत्तिरेव तत्र बाधिकेति वाच्यम् । तथासतिचक्षुःसंयुक्तसमवायेनैवघटादिचाक्षुषोपपत्तेर्नद्रव्यप्रत्यक्षत्वं जन्यतावच्छेदकं साधकाभावस्यैवप्रकृते बाधकत्वादित्यत आह । सङ्क्षेपइति । चक्षुःसंयुक्तसमवायस्य द्व्यणुकादिरूपेपि सत्त्वाच्चाक्षुषापत्तेश्चक्षुः संयुक्तचाक्षुषत्वनिरूपितसमवायत्वेन तद्धेतुत्वं वाच्यं तत्र त्रुटिचाक्षुषे व्यभिचारवारणाय द्रव्यान्यसच्चाक्षुषत्वस्य विजातीयसच्चाक्षुषत्वस्य वा तज्जन्यतावच्छेदकत्वमुपेयम् । एवं च त्रुटिचाक्षुषस्यासङ्ग्रहीतया चक्षुः संयोगहेतुतावश्यकीति हृदयम् । संयोगप्रत्यासत्तेरिति । परमाणौ महत्त्वन्नास्तीति प्रत्ययात्परमाणाविवघटेऽआलोकोनास्तीति प्रत्ययाद् घटेपिचक्षुः संयोगस्यावश्यकत्वाच्चक्षुः सम्बन्धविशेषणतायाएवाभावग्राहकत्वादितिभावः ॥

महदुद्भूतेति । महत्त्वविशिष्टोद्भूतरूपविशिष्टालोकनिरूपितसंयोगः द्रव्यचाक्षुषप्रत्यक्षे कारणमित्यर्थः । सइति । महदुद्भूतरूपालोकसंयो-

तेजः परमाणु चक्षुरादिसंयोगयोर्विद्यमानत्वात् ॥ नन्वेवं चक्षुषा तेजः प्रत्ययो न स्यात् तत्र तेजः संयोगाभावात् प्रदीपे तत्प्रभासंयोगोऽस्तीति चेन्न मणिप्रभादौ तदभावात् ॥ दृश्यते च महान्धकारे चन्द्रकान्तमणिविशेषप्रभा । अथालोकेतरद्रव्यचाक्षुषं प्रत्यालोकसंयोगः सहकारीति चेन्न । महान्धकारे सुवर्णरूपतेजः साक्षात्कारापत्तेः ॥ अनभिभूतरूपद्रव्यचाक्षुषमात्रे आलोकसंयोगःसहकारी । नचालोकचाक्षुषे व्यभिचारः आलोकाकाशसंयोगस्यालोकेऽपि सत्त्वात् तस्य द्विनिष्ठत्वात् नचैवमन्धकारे सुवर्णसाक्षात्कारापत्तिः

---

गइत्यर्थः । नन्वेवमिति । एवम् । आलोकप्रतियोगिकसंयोगस्य हेतुत्वे । तेजः संयोगाभावात् । तेजोन्तरप्रतियोगिकसंयोगाभावात् । स्वस्मिन्स्वप्रतियोगिकसंयोगानभ्युपगमादिति भावः । तत्प्रभा । प्रदीपप्रभा दीपप्रभायां दीपसंयोगस्यैव सत्त्वादन्यो मणिप्रभादाविति । मणेः पार्थिवत्वेन तत्संयोगस्याहेतुत्वादिति भावः । ननु मणिप्रभादौ सौरालोकसंयोगस्यैव सत्त्वादत आह । दृश्यते चेति । महान्धकार इत्यनेन सौरालोकव्यवच्छेदः । अन्धकारे घटादिप्रत्यक्षापत्तिवारणाय तत्रालोकसंयोगस्य हेतुत्वमास्ताम् आलोकप्रत्यक्षे तु तद्धेतुत्वे माना भावः । अन्धकारेऽपि तत्प्रत्यक्षोदयादत आलोकभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव तस्य हेतुत्वमतो न व्यभिचार इत्याशङ्कते । अथेति । सुवर्णेति । सुवर्णस्यालोकभिन्नत्वाभावेन तच्चाक्षुषस्यालोकसंयोगकार्यतावच्छेदकानाक्रान्तत्वादिति भावः । आलोकसंयोग इति । आलोकनिष्ठसंयोगो हेतुरित्यर्थः । यत्रालोकवति भूतले घट आनीतस्तत्रालोकप्रतियोगिकसंयोगाभावादालोकवृत्तिसंयोगस्यैव हेतुत्वादिति भावः । तस्य । आलोकसंयोगस्य । द्विनिष्ठत्वात् । आलोकालोकभिन्नोभयवृत्तित्वात् । एवम् । उक्तरीत्या आलोकसंयोगस्यालोकेऽपि सत्त्वे । सुवर्णेति । तत्राप्यालोकाकाशसंयोगस्य सत्त्वादिति भावः अनभिभूतेति । अनभिभूतं रूपं यस्येति व्युत्पत्त्याऽनभिभूतरूपविशिष्टालोकसंयोगस्य हेतुतया सुवर्णे तदसम्भवः सुवर्णरूपस्याभिभूतत्वात् तथाच

अनभिभूतरूपालोकसंयोगस्यैव हेतुत्वात् सुवर्णरूपन्त्वभिभूतमन्यथा सुवर्णरूपालोकसंयोगाद्द्रव्यान्तरग्रहापत्तिः ॥

सम्प्रदायविदस्तु सुवर्णभिन्न तेजोभिन्नद्रव्यचाक्षुषे आलोकसंयोगो हेतुः भवति च सुवर्णमपि सुवर्णभिन्नं यत्तेजस्तद्भिन्नमतस्तद्ग्रहेऽप्यालोकसंयोगो हेतुस्तेनान्धकारे न सुवर्णसाक्षात्कार इत्याहुः ॥ तथापि पूर्वस्यां दिशि आलोकसंयोगवतः परस्यां तदसंयुक्तस्य भित्त्यादेः परदिगवस्थितपुरुषेण साक्षात्कारः स्यात् । आलोकसंयोगस्य पूर्वदिगवच्छेदेन सत्त्वात् । मैवं यदवच्छेदेनालोकसंयोगस्तदवच्छिन्नचक्षुःसंयोगस्य हेतुत्वात् इह च तदभावात् ॥

---

द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यनभिभूतोद्भूतरूपविशिष्टालोकसंयोगस्य हेतुत्वमिति भावः । अन्यथा । सुवर्णरूपस्यानभिभूतत्वे । द्रव्यान्तरेति । अन्धकारे घटादौ सुवर्णसंयोगाद् घटग्रहापत्तिरित्यभिभूतत्वं तस्येति भावः । बलवत्सजातीयग्रहणकृतमग्रहणमभिभव इति ॥

सम्प्रदायविदस्त्वित्यादि । आलोकेतरद्रव्यचाक्षुषे आलोकसंयोगस्य हेतुत्वेऽन्धकारे सुवर्णसाक्षात्कारापत्तिरितः सुवर्णभिन्नत्वमालोकविशेषणम् तथाच सुवर्णभिन्नं यत्तेजस्तद्भिन्नद्रव्य सुवर्णघटादिच तत्प्रत्यक्षे आलोकप्रतियोगिकसंयोगो हेतुरतो नान्धकारे सुवर्णादिसाक्षात्कार इत्यखण्डार्थः कार्यतावच्छेदके गौरवमेवात्र स्वरसः । केचित्तु । द्रव्यचाक्षुषे आलोकसंयोगस्य प्रभासंयोगत्वेनैव हेतुता । प्रभात्वं च सुवर्णादिव्यावृत्तमित्याहुः । सुवर्णादिसंयोगव्यावृत्तं वैजात्यमुपेत्य विजातीयालोकसंयोगत्वेनैव हेतुत्वमित्यपि कश्चित् । आलोकसंयोगानवच्छेदकावच्छेदेन चक्षुःसंयोगिघटादिग्रहः स्यात्तत्रालोकसंयोगस्य चक्षुःसंयोगस्य च परस्परानवच्छेदकावच्छेदेन सत्त्वादित्याशङ्कते । तथापीति । तथापि आलोकसंयोगस्य हेतुत्वेऽपि । परस्याम् । परदिगवच्छेदेन । तदसंयुक्तेति । आलोकासंयुक्तेत्यर्थः । पुरुषेणेति । परदिगवच्छेदेन चक्षुःसंयोगवतेति शेषः । यदवच्छेदेनेति । आलोकसंयोगावच्छेदकावच्छिन्न चक्षुः

स्यादेतत् । विशेषणता न प्रत्यासत्तिः समवायाभावयोरेवासत्त्वात् नहि तयोर्मानमस्ति । नन्वयं घटोऽयं रूपवानयं

---

संयोगत्वेन हेतुत्वादिति भावः । अथ मूर्तयोः समानदेशताविरोधाद् घटाद्यवयवावच्छेदेन संयोगसम्बन्धेनालोकचक्षुषोरसम्भवादालोकसंयोगावच्छेदकावच्छिन्नचक्षुः संयोगः कथमुपपद्यत इति चेन्न । निबिडयोरेव मूर्तयोः समानदेशतानङ्गीकारात् । आलोकचक्षुषोस्तैजसत्वेन निबिडत्वाभावात् । वस्तुतस्तु वृत्तितानियामकसम्बन्धेनैव मूर्तयोर्विरोधः । नतु यथाकथंचित्सम्बन्धेनापि चक्षुःसंयोगस्य वृत्त्यनियामकत्वादालोकसंयोगावच्छेदकावच्छेदेनापि तत्सत्त्वमव्याहतमेव । नच तथाप्यालोकसंयोगस्य कारणतावच्छेदककोटिप्रविष्टत्वान्न कारणत्वमिति वाच्यम् । तादृशचक्षुःसंयोगत्वेन चक्षुःसंयोगावच्छेदकावच्छिन्नालोकसंयोगत्वेन वा हेतुत्वमिति विनिगमनाविरहेण तस्यापि कारणत्वात् । नचालोकसंयोगं विनापि बिडालादेः साञ्जनचोरादेश्चान्धकारे प्रत्यक्षोदयात्कथं तस्य कारणत्वमिति वाच्यम् । विजातीयचाक्षुषं प्रत्येवालोकसंयोगस्य हेतुत्वात् । बिडालादिसाञ्जनपुरुषीयचाक्षुषव्यावृत्तं चैतद्वैजात्यमिति । केचित्तु अञ्जनाभावविशिष्टालोकसंयोगाभावत्वेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति प्रतिबन्धकत्वं तदभावत्वेन च कारणता अञ्जनाभावश्च स्वसंयुक्तचक्षुःसंयोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । आलोकसंयोगाभावेऽञ्जनाभाववैशिष्ट्यञ्च सामानाधिकरण्येन आलोकसंयोगाभावश्च स्वसमानाधिकरणैकत्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । तेन संयोगस्याव्याप्यवृत्तित्वेपि न क्षतिः । स च विशिष्टाभावः । क्वचिद्विशेषणाभावप्रयुक्तः क्वचिद्विशेष्याभावप्रयुक्तः साञ्जनपुंसोऽञ्जनाभावविरहप्रयुक्तो विशिष्टाभावः । आलोकसंयोगस्थले चालोकसंयोगाभावविरहप्रयुक्त इत्युभयत्रापि प्रतिबन्धकाभावसत्त्वमव्याहतं । बिडालादिचाक्षुषे व्यभिचारवारणाय च तत्पुरुषीयत्वं निवेशनीयमित्याहुः ॥

समवायाभावग्रहार्थमेव विशेषणता प्रत्यासत्तिरित्युक्तं तत्तु समवायाभावयोः प्रमाणसत्त्वे एव सम्भवति तदेव नेत्याशङ्कते । स्यादेतदिति । समवायाभावग्राहकत्वेनैव तत्प्रत्यासत्तित्वं स्यादित्यत आह । समवायेति । प्रमाणसत्त्वे कथं तयोरसत्त्वमत आह । नहीति । तथाच प्रमाणाभावस्य प्रमेयाभावव्याप्यत्वात्तयोरसत्त्वमिति भावः । नन्वयं घट इत्यादिप्रत्यक्षं घट

घटवानिति प्रत्यक्षमेव घटत्वरूपवत्तान सम्बन्धविषयकं स-मवाये मानं नहि घटादौ तेषामन्यः सम्बन्धोऽस्तीति चेन्न स्वरूपसम्बन्धस्याधाराधेयभावाख्यस्य सत्त्वात् नहि स-मवायएव घटत्वस्याधारता पटादावपि सत्त्वात् एकएव हि घटत्वपटत्वयोः समवायः ॥ सैवं घटे घटत्वं रूपं च समवेतं तन्तुषु पटः समवेतः इह कर्म समवेतमित्यनुगतसमवाया-कारप्रतीत्या तत्सिद्धेः ॥ नचाऽभावोऽसन् घटोनास्तीतिप्रती त्यातत्सिद्धेः ॥

---

घटत्वयोः सम्बन्धविषयकं तत्र च समवायातिरिक्तसंयोगादीनां बाधा-त्समवायसिद्धिः । तथा चेतरबाधसहकृतप्रत्यक्षप्रमाणस्यैव सम्भवात् कथं प्रमाणाभावइत्याशङ्कते । अयङ्घटइत्यादि । ननु समावायातिरि-क्तस्यैव कस्यचित्सम्बन्धस्यैव सत्त्वान्नेतरबाधइत्यतआह । नहीति । तेषां । घटत्वरूपवत्तादीनाम् । अन्यः सम्बन्धः । संयोगादिः । सत्त्वादिति । तथा च समवायातिरिक्तस्याधाराधेयभावाख्यस्वरूपसम्बन्धस्य सत्त्वात्तद्विषय-कत्वेनैव प्रतीतेरुपपत्तेर्न तदन्यथानुपपत्त्या समवायसिद्धिरिति भावः । नन्वाधारता समवायइति पर्यायइति सिद्धं समवायेनेत्यतआह । न-हीति । पटादावपीति । सत्त्वात् । समवायस्य सत्त्वात् । तथा च समवाय-स्यैवाधारतात्वे पटादावपि समवायरूपघटत्वाधारतासत्त्वेन तत्रापि घ-टत्वविशिष्टबुद्ध्यापत्तेः समवायातिरिक्तैवाधारता स्वीकार्या तथा च किं समवायेनेति भावः । ननु पटे घटत्वसमवायाभावादेव न तथा प्रतीत्याप-त्तिरतआह । एकएवहीति । तत्सिद्धेरिति । तथाच समवेतमितिप्रतीतेः स्वरूपसम्बन्धविषयकत्वेनोपपादयितुमशक्यत्वात्समवायस्वीकारइति भावः वस्तुतस्तु अयंघटइत्यादिप्रतीतीनामनन्तस्वरूपसम्बन्धविषयकत्वे गौरवात्ला-घवेनातिरिक्तसमवायविषयकत्वमितिध्येयम् । समवाये प्रमाणमुक्त्वा अभावे तदाह । नचेति । असन्निति । अप्रामाणिकइत्यर्थः । तत्सिद्धेः । अभावसिद्धेः ॥

अत्र प्राभाकराः नाभावोऽधिकः किन्तु केवलाधिकरणस्वरूप एव अतः किं तद्ग्रहाय प्रत्यासत्त्यन्तरकल्पनेन । ननु किमिदं कैवल्यं भूतलरूपं चेत्सघटभूतलस्यापि तत्त्वापत्तिः घटाभाववत्त्वं चेत्सिद्धमभावेनेति चेन्न । यत्राधिकरणे यदवच्छिन्नाभावोऽङ्गीक्रियते तदधिकरणस्यैवाभावत्वाङ्गीकारात् । न चाभेदे आधाराधेयभावानुपपत्तिः । घटाभावे घटो नास्तीति प्रतीतेरभेदेऽपि त्वया घटाभावे तथाभावाङ्गीकारात् । न चान्य एव घटाभावे घटाभावः अनवस्थापत्तेरपसिद्धान्ताच्च । अत्रोच्यते यदि भूतलविशेष एव घटाभावस्तदा भूतले घटाभाव इत्याधारताप्रत्ययो न स्यात् न हि भूतलं भूतलाधिकरणं भूतले भूतलमिति प्रतीत्यापत्तेः । किञ्च यत्रेदानीं घट आनीतस्तदाधिकरणं घटाभावो न वा आद्ये इदानीं घटो नास्तीति प्रतीतिः स्यात् । अन्त्ये अन्यदापि घटो नास्तीति प्रत्ययो न स्यात् ॥

---

ननु वयमभावो नास्तीति न ब्रूमः किन्तु तस्याधिकरणस्वरूपत्वेनैवोपपत्तेरतिरिक्तत्वे मानाभाव इति प्राभाकरमतमुपन्यस्यति । अत्र प्राभाकरा इति । अतिरिक्तः । अधिकरणादतिरिक्तः । तद्ग्रहाय । अभावग्रहाय । प्रत्यासत्तीति । विशेषणतारूपप्रत्यासत्त्यन्तरकल्पनेनेत्यर्थः । यद्यपि समवायग्रहार्थं सम्बन्धान्तरप्रत्यासत्तेरङ्गीकारः । तथाप्यभावग्राहकत्वेन तत्प्रत्यासत्तित्वं यन्नैयायिकैरुपेयते तदेव खण्ड्यत इति भावः । इदम् । अभावप्रतीतिविषयीभूतं । तत्त्वापत्तिः । अभावस्वरूपत्वापत्तिः तथा च तत्रापि घटाभाववत्ताबुद्धिप्रसङ्ग इति भावः । अभावेनेति । अभावाधिकरणेनेत्यर्थः । यत्रेति । यत्कालावच्छेदेन घटाभावाधिकरणता भूतले उपेयते तस्यैव तत् स्वरूपत्वमङ्गीक्रियत इति भावः । नचाभेद इति । अभेदे । अभावाधिकरणयोरभेदे । तथा भावः । आधाराधेयभावः । अनवस्थापत्तेरिति । घटाभावेऽतिरिक्ताभावश्चेद् घटाभावस्याभावेऽप्यतिरिक्तः कल्प्येत तथा चानवस्थेत्यर्थः । ननु यद्धर्मविशिष्टे यद्धर्मावच्छिन्नवत्ता न प्रतीयते तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्ननिरूपिताधिकरणता नोपेयते । एवं च भूतले भूतलत्वावच्छिन्ननिरूपिताधिकरणत्वाभावान्न भूतले भूतलमिति प्रतीत्यापत्तिः । भूतले घटाभावत्वावच्छिन्ननिरूपिताधिकरणतायाः स्वीकाराच्च भूतले

किञ्च कपाले घटोभविष्यति घटोनष्टइति प्रतीते रक्तिकपाले पूर्वं घटप्रागभाव उत्तरकाले घटध्वंसः स यदि कपालात्मा तदा सर्वदा तत्प्रतीतिः स्यात् कपालस्य सत्त्वात् अन्यथा कपालप्रतीतिरपि न स्यात् । किञ्चैवंमोक्षो दुःखाभावःआत्मरू-

घटाभावइति प्रतीतिरुपपन्नैवेत्यस्वरसादाह । किंचेति । आद्ये । तदधिकरणस्य घटाभावस्वरूपत्वे । इदानीमित्यनन्तरमिहेति शेषः । अन्त्ये । तदधिकरणस्य घटाभावास्वरूपत्वे । अन्यदापीति । घटे नीतेपीत्यर्थः ॥

नन्वतिरिक्ताभाववादिमते घटे आनीते घटाभावो न नश्यति नदा यच्छति तस्य नित्यत्वादभावत्वाच्चेति कुतो न घटाभाववत्तावुद्धिः । कथं वा भावाभावयोरेकाधिकरणावृत्तित्वरूपो विरोधस्तचै वोभयोःसत्त्वात् । अथ घटानधिकरणकालावच्छिन्नतद्भूतलादिकमेव घटाभावस्य सम्बन्धः तथाच घटवद्भूतले अनेन सम्बन्धेन घटाभावस्याविद्यमानत्वान्न घटाभाववत्तावुद्धिः घटाभावस्य तेनसम्बन्धेनाविद्यमानत्वाच्च न विरोधिता घटकसम्बन्धेन तदधिकरणावृत्तित्वरूपविरोधव्याघातोपीतिचेत् । तर्हि विशिष्टसत्ताया अनतिरेकेपि यथा विशिष्टनिरूपिताधिकरणताया गुणेऽसत्त्वात् गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति न प्रत्ययस्तथा सघटभूतलेपि तत्कालावच्छेदेन घटाभावाधिकरणताया अनङ्गीकारान्नघटाभाव त्ताबुद्धिप्रसङ्ग इत्यस्वरसादाह । किञ्चकपालइति । केचित्तु नन्वेवं दविनाशशालिनो एकातिरिक्ताऽधिकरणतोपेयते तस्याश्च घटे आनीते नाशोपगमेन न तद्वत्तावुद्धिप्रसङ्गइत्यस्वरसमाहुः । तदसत् प्रतिक्षणस प्रामाणिकानन्ताधिकरणत्वतन्नाश्युपगमे गौरवेणातिरिक्ताभावस्यैव कल्पयितुमुचितत्वात् । नच त्वदुक्तप्येव दोषइतिवाचम् । मन्मते घटाभावाधिकरणतायांघटाधिकरणकालस्यावच्छेदकत्वानभ्युपगमेनानुपपत्त्यभावात् । सइति । घटप्रागभावोघटध्वंसश्चेत्यर्थः । सर्वदेति । प्रागभावनाशकालेध्वंसानुत्पत्तिक्षणेचेत्यर्थः । कपालस्याचइत्यर्थइतिकश्चित् । अन्यथा । प्रागभावध्वंसयो घटकाले सत्त्वेपि प्रतीत्यस्वीकारे । कपालप्रतीतिरपीति । कपालस्वरूपप्रागभावध्वंसयोरप्रतीतौ कपालमपि कथं प्रतीयेत त्रयाणामैक्येनैकस्याप्रतीतौ न कस्यापि प्रतीतिः स्यात् । कस्यचित्प्रतीतौ सर्वमेव प्रतीयेतेति भावः । अन्यथा । कपालासत्त्वइत्यर्थइति कश्चित् । नन्व

पः स्यात् तथाच असाध्यतापत्तिस्तस्य नित्यत्वादिति सङ्क्षेपः। स्यादेतत् एवं घटाभावो नास्तीति प्रतीत्या घटाभावाभावोऽप्यधिकः स्यात् स्यादेवेति चेत्तर्हि तदभावोऽप्यधिकः स्यादित्यनवस्था। केवलाधिकरणं तदभाव इति चेत्तर्हि सर्वत्र स एवाभावोऽस्तु क्लृप्तमधिकेन भवदुक्तदूषणगणप्रसङ्गश्चैवं स्यात् ।

---

त्रापि घटकालावच्छेदेन घटप्रागभावध्वंसाधिकरणताया अनभ्युपगमात् तत्काले तद्वत्ताबुद्धिरित्यस्वरसादाह । किञ्चमोक्षइति । ननूत्पादविनाशशालिनी मधिकरणतामङ्गीकृत्य घटकाले घटप्रागभावाधिकरणताया नाशाद् ध्वंसाधिकरणताया अनुत्पत्तेश्च न तद्वत्ताबुद्धिरित्यस्वरसात्किञ्चेतीति केचित् । तत्तु पूर्वमेव दूषितत्वादनादेयम् । असाध्यत्वेति । दृष्टापत्तौतु श्रवणमनन निदिध्यासन ध्यान धारणा समाधिप्रभृतमनेकविधं दुःखमुक्तोऽपि*नानुभूयादिति बोध्यम् । ननु नित्यसुखाभिव्यक्तेरेव मुक्तित्वेनना-साध्यतापत्तिरित्यत आह । सङ्क्षेपइति । तैरीश्वरानङ्गीकारादीश्वरीयनित्यसुखस्याप्रसिद्धंजीवस्य तु नित्यसुखे प्रमाणाभावेन नित्यसुखाभिव्यक्तिमुक्तिरिति मुक्तिलक्षणासम्भवि । तस्माद्दुःखध्वंसरूपमुक्तेरसाध्यत्वापत्तिरस्त्येवेतिभावः । इदन्तु चिरन्तनमते दुःखध्वंसनिरूपिताधिकरणतायाः साध्यत्वं सम्भवत्येव मोक्षाधिकरणतायाः साध्यत्वोपगमादिति प्राभाकरमते न कश्चिद्दोषः । वस्तुतस्तु भूतले घटोनास्ति पर्वते घटोनास्तीत्यादिप्रतीतीनामनन्ताधिकरणभेदेन तत्तदधिकरणस्वरूपाभावविषयकत्वकल्पने गौरवादेकातिरिक्तघटत्वावच्छिन्नप्रतियोगिताकाभावविषयकत्वमेव समुचितम् । एवं घटवत्ताबुद्धिं प्रति घटाभाववत्ताज्ञानत्वेन प्रतिबन्धकतायां सघटभूतलेऽपि यत्किञ्चिद्घटाभावस्य सत्त्वाद्घटाभावकूटवत्ता ज्ञानत्वेनैव प्रतिबन्धकत्वं वाच्यम् । तदपेक्षया घटत्वावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानत्वेनैव प्रतिबन्धकत्वस्यौचित्यमित्यादिरीत्या अतिरिक्ताभावसिद्धिरिति निपुणतरमूहनीयम् । तदभावइति । घटाभावाभावस्याप्यभावइत्यर्थः । केवलाधिकरणमित्यादि । केवलाधिकरणम् । घटाभावानधिकरणं भूतलं । तदभावः । घटाभावाभावः । सर्वत्र । घटाभावस्थलेऽपि । सएव । अधिकरणस्वरूप एव । ननु सर्वत्राधिकरणस्वरूपत्वे पूर्वं दूषणमुक्तमेवेत्यत आह । भव-

---

* नानुभवेदितिपाठोयुक्तः ॥

इत्याहुः घटाभावाभावो घटएव तत्सत्त्वे घटाभावोनास्तीति प्रतीतेः नच केवलाधिकरणरूपः उक्तयुक्तेरिति संप्रदायः ॥ नव्यास्तु घटाभावाभावोऽधिकएव अभावत्वेन प्रतीतेः नचायं भ्रमः बाधकाभावात् तदभावस्तु घटाभावएव नाधिकइतिनानवस्थानमित्याहुः । स्यादेतत् भूतलं घटभेदभिन्नं नवा अन्त्ये आयातं भूतलमेव घटभेदइत्यनेन । आद्ये तद्भेद भेदोप्यधिकः स्यात् स्यादेवेति चेत्तद्भेदभेदोप्यधिकः स्यादित्यनवस्था । अथानवस्थाभयाद्भेदभेदोनाधिकः किन्त्वधिकरणरूपइति चेन्न भवदुक्तदूषणगणप्रसङ्गात् । अत्राहुः भेदभेदोप्यधिकएव नचैवं तद्भेदोप्यधिकः स्यादिष्टत्वात् नचेयमनवस्था दोषाय प्रामाणिकत्वात् । तदाहुः "सर्वतो बलवतीह्ययन्यथानुपपत्तिरिति" सङ्क्षेपः । सचायमभावो द्वेधा अन्योन्याभावः संसर्गाभावश्च । तत्रेदमिदन्न भवति इदमेत-

---

दुक्तेति । एवम् । घटाभावाभावस्याधिकरणस्वरूपत्वे । तथाच यानि दूषणानि घटाभावस्याधिकरणस्वरूपत्वे त्वयोक्तानि तानि त्वन्मतेप्यविशिष्टानीति भावः । तत्सत्त्वे । घटसत्त्वे । उक्तयुक्तेरिति । आधाराधेयभावानुपपत्तिरूपदूषणादित्यर्थः ॥

सम्प्रदायमतेऽस्वरसं वदन्नव्यमतमाह । नव्यास्त्विति । अयम् । अभावत्वेन प्रत्ययः । बाधकाभावात् । प्रमात्वे बाधकाभावात् । अन्योन्याभावस्थलेप्याशङ्कते । स्यादेतदिति । अन्त्ये । भूतले घटभेदभिन्नत्वाभावे । आद्ये । भूतलस्य घटभेदभिन्नत्वे । तद्भेदोपीति । घटभेदस्यभेदोपीत्यर्थः । भवदुक्तेति । आधाराधेयभावानुपपत्तिरूपदूषणगणप्रसङ्गादित्यर्थः । । प्रामाणिकत्वादिति । बीजाङ्कुरानवस्थायाइव प्रमाणसिद्धत्वादित्यर्थः । सङ्क्षेपइति । घटभेदाभावोघटत्वस्वरूपइत्यादि बोध्यम् । सचायमिति । प्रागुक्तयुक्त्या अतिरिक्तत्वेन सिद्धोऽभावश्चेत्यर्थः । तत्र प्रथमोद्दिष्टमन्योन्याभावं लक्षयति । तत्रेति । प्रतीतिसाक्षिकइति । इदृशप्रतीतिसिद्धमखण्डोपाधिरूपमन्योन्याभावत्वमेवान्योन्याभावलक्षणमित्यर्थः । प्राचीनोक्तमन्योन्याभावलक्षणं दर्शयति । यदिदमाहुरित्यादिना । तादात्म्येति । तदात्मनोभावस्तादात्म्यम् घटतादात्म्यं हि घटत्वं तथाच घटान्योन्याभावबोधे घटत्वं सम्बन्धविधया प्रकारतया च प्रतियोगितावच्छेदकंभासतइति द्विविध-

भिन्नमिति प्रतीतिसाक्षिको ऽभावोऽन्योन्याभावः यदिदमा-
ङ्क "तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः" इति
तदन्योऽभावः संसर्गाभावः। सोऽपि त्रिविधः अत्यन्ताभाव-
प्रागभावप्रध्वंसाभावभेदात् । नास्तीत्यनुभवसिद्धो नित्यः
संसर्गाभावोऽत्यन्ताभावः ॥

---

वाघटत्वस्यभानं । नच संयोगितादात्म्यं संयोगएवेति संयोगावच्छिन्नप्रतियोगिताकसंयोग्यत्यन्ताभावेऽतिव्याप्तिरिति वाच्यम् । तादात्म्यसामान्यसम्बन्धावच्छिन्नेति तदर्थात्तादात्म्यत्वविशिष्टत्वमेव हि तादात्म्यसामान्यत्वं तादात्म्यं च सम्बन्धताविशेषः प्रतीतिसाक्षिकः घटत्वादिरूपतादात्म्यं तादात्म्यत्वेनैव घटान्योन्याभावप्रतियोगितावच्छेदकमितिलक्षणसमन्वयः । संयोग्यत्यन्ताभावे च संयोगत्वेनैव सम्बन्धत्वं नतु तादात्म्यत्वेनेति नानुपपत्तिः । अत ध्वंसप्रागभावयोरिवान्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्धे मानाभावः। नचात्यन्ताभावस्यापि तथास्त्विति वाच्यम् । संयोगसम्बन्धावच्छिन्नघटात्यन्ताभाववत्ताज्ञाने सत्यपि समवायादिसम्बन्धेन घटवत्ताज्ञानोदयात्संयोगसम्बन्धावच्छिन्नघटनिष्ठप्रकारताशालिज्ञानं प्रति संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावप्रकारकज्ञानत्वेन प्रतिबन्धकत्वात् । अत्यन्ताभावस्य प्रतियोगितावच्छेदकसम्बन्धावश्यकत्वादन्योन्याभावस्य च नानासम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावेन समवायेन घटत्ववत्ताज्ञानं प्रति घटान्योन्याभाववत्ताज्ञानत्वेनैव प्रतिबन्धकतयाऽन्योन्याभावस्य तथानावश्यकत्वादित्यखण्डोपाधिरूपत्वमेव तस्य सम्यगित्यस्वरसमाहुरित्यनेनसूचितः । तदन्यइति । अन्योन्याभावान्यइत्यर्थः । तथाचान्योन्याभावभिन्नाभावत्वंसंसर्गाभावत्वमितितल्लक्षणमितिभावः । अत्र च यद्यपि नास्तीति प्रतीतिसाक्षिकोऽभावः संसर्गाभावस्तदन्यो ऽभाव अन्योन्याभावइत्यपि वक्तुमुचितम् । तथापि नास्तीतिप्रतीतेरत्यन्ताभावविषयकत्वेनैवोपपत्तेरतिरिक्तसंसर्गाभावत्वे मानाभावान्न तथोक्तम् । सोऽपि । संसर्गाभावोऽपि । अत्र नास्तीत्यनुभवेत्यादि अग्रे च विनष्टइत्यादिप्रतीतिप्रदर्शनमत्यन्ताभावध्वंसयोः प्रमाणदर्शनाय नतु लक्षणेऽपि तन्निवेशइति बोध्यम् । नित्यत्वमात्रोक्तौ गगनादौ संसर्गाभावमात्रोक्तौ च प्रागभावध्वंसयोरतिव्याप्तिरित्युभयोपादानं । नित्यत्वं चात्र प्रागभावाप्रतियोगित्वे सतिध्वंसाप्रतियो

विनष्ट इति प्रतीतिसाक्षिकोत्पत्तिमानभावो ध्वंसः । स च न विनाशशाली तद्विनाशकल्पनायां मानाभावात् नहि विनाशो विनष्ट इति प्रत्येति कश्चित् तत्प्रागभावस्य घटादिरूपप्रतियोगी तत्प्रागभावस्य उभयत्र । ध्वंसो भविष्यतीति प्रत्ययात् । विनाश्यभावः प्रागभावः स च भविष्यतीत्यनुगतानुभव साक्षिको दुरपह्नवः ॥ तस्य च ध्वंसः घटादिरूपप्रतियोगी त-

---

गित्वम् । ध्वंसस्य प्रागभावप्रतियोगित्वात् प्रागभावस्य ध्वंसप्रतियोगित्वाच्च नात्रातिप्रसङ्गः । एकतरमात्रोक्तौ चान्यतरातिव्याप्तिरिति ध्येयम् ॥

उत्पत्तिमानिति । उत्पत्तिमत्त्वमात्रोक्तौ घटादावभावत्वमात्रोक्तौ चात्यन्ताभावादावतिव्याप्तेर्वारणायोभयोपादानम् । आद्यक्षणसम्बन्ध उत्पत्तिः । स्वाधिकरणक्षणावृत्ति प्रागभावप्रतियोगिक्षणसम्बन्ध उत्पत्तिरिति यावत् । अध्वस्त क्षणयोगस्य क्षणयोगो जनिर्मतेति वा तदर्थः । स्वाधिकरणक्षणध्वंसानधिकरण क्षणसम्बन्ध एवोत्पत्तिरिति । महाप्रलयाङ्गीकर्तृमते तु क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति तस्य तत्समयसम्बन्ध उत्पत्तिरिति तदर्थः । स्ववृत्तिपदार्थप्रागभावानधिकरणत्वं स्ववृत्तिध्वंसप्रतियोग्यनधिकरणत्वं वा क्षणत्वमिति बोध्यम् । स च । ध्वंसश्च । ननु प्रतीतिरेव मानमत आह । नहीति । ध्वंसस्य ध्वंसाप्रतियोगित्ववत्प्रागभावाप्रतियोगित्वमपि स्यादिति भ्रमं निराकर्तुमाह । तत्प्रागभावस्येति । ध्वंसप्रागभावस्येत्यर्थः । अग्रे च प्रतियोगिप्रागभाव एव तत्प्रागभावपदेन ग्राह्यः । अत्र प्रतीतिं प्रमाणयति । उभयत्रेति । प्रतियोगिदशायां प्रतियोगिप्रागभावदशायां चेत्यर्थः इदमुपलक्षणं । ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमेन ध्वंसस्य ध्वंसस्वीकारे घटोन्मज्जनप्रसङ्गाद् ध्वंसस्य न ध्वंसः । एवं घटप्रागभावकाले ध्वंसोन्मज्जनप्रसङ्गाद् घटप्रागभावस्य घटध्वंसप्रागभावरूपत्वमपि द्रष्टव्यम् । प्रागभावं लक्षयति । विनाशीति । घटादौ अत्यन्ताभावादौ चातिव्याप्तिवारणाय यथाक्रमं विशेषणद्वयोपादानं । ननु प्रागभावाङ्गीकारे मानाभाव इत्यत आह । स चेति । तथा च भविष्यतीति प्रतीतिविषयतया प्रागभाव आवश्यक इति भावः । ननु भविष्यत्त्वस्य वर्तमानप्रागभावप्र-

तद्ध्वंसस्य उभयत्र विनष्टः प्रागभाव इति प्रतीतेः। अत्यन्ताभावान्योन्याभावौ च नित्यौ॥

नित्यस्याभावो द्विविधः। एकमात्रवृत्तिधर्मावच्छिन्नप्रतियो-

---

तियोगित्वरूपत्वे प्रागभावसिद्धिः। तदेव न किन्तु वर्तमानकालोत्तरकालोत्पत्तिकत्वमेव तत्त्वम्। नच यस्मात्सामग्र्यव्यवहितोत्तरोयः क्षणः स तदुत्पत्तिमानिति सामग्रीव्याप्ते घटादिद्वितीयक्षणे घटादेरुत्पत्तिवारणाय प्रागभावहेतुत्वमावश्यकमिति वाच्यम्। उत्पत्त्यन्तर्भावेन सामग्रीव्याप्तेरनुपगमात् अपितु तदधिकरणत्वान्तर्भावेनैव अस्तु वा तथा तथापि जन्यद्रव्यत्वावच्छिन्नं प्रति समवायेन द्रव्यत्वेन प्रतिबन्धकत्वोपगमेनानुपपत्त्यभावात् अनन्तप्रागभावकल्पनामपेक्ष्य प्रतिबध्यप्रतिबन्धकभावकल्पनाया एवोचितत्वादिति चेत्। अत्राहुः। सहस्रतन्तुकपटस्थले तदनधिकरणतन्त्वादौ पटोत्पत्तिवारणाय तावत्संयोगानान्तत्तत्तन्तूनां वा तत्तद्व्यक्तित्वेन कारणत्वमपेक्ष्य प्रागभाव कारणत्वमेव वक्तुमुचितं। प्रागभावस्य च प्रतियोगिसमानदेशत्वनियमेन पटादीनां देशनियमोपपत्तिः। नच चित्र*तुर्षूत्पन्नेषु संयुक्तेषु च तन्तुषु तत्पटोत्पत्तिवारणाय तत्तत्तन्तूनां तत्तत्तन्तुसंयोगानां वा हेतुत्वमावश्यकमिति वाच्यम्। चरमतन्तुसंयोगव्यक्तेरेव तद्व्यक्तित्वेन हेतुत्वोपगमात्। चरमसंयोगानधिकरणतन्त्वादावपि तत्पटोत्पत्त्या तादृशहेतु तन्त्वन्तरे तत्पटोपादानवारणासम्भवात् प्रागभावस्वीकारस्यावश्यकत्वात्। चरमसंयोगस्य च तत्पटं प्रति समवायेन न हेतुता चरमसंयोगानधिकरणतन्तावपि तत्पटोत्पत्तेः किन्तु समवायसम्बन्धेन तत्पटं प्रति कालिकसम्बन्धेन चरमसंयोगो हेतुरित्यलमप्रकृतविचारेण। तस्य चेति। प्रागभावस्य चेत्यर्थः। तद्ध्वंसस्य। प्रतियोगिध्वंसस्य। प्रतीतिं प्रमाणयति। उभयत्रेति। प्रतियोगिदशायां प्रतियोगिध्वंसदशायांचेत्यर्थः। इदमुपलक्षणं। प्रागभावोन्मज्जनप्रसङ्गोऽपि द्रष्टव्यः॥

नित्याविति। नित्यत्वं चात्र प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं ग्राह्यम् अतएव ध्वंसप्रागभावयोर्न विभाग इति भावः। प्रसङ्गाद् व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावमतिरिक्तं साधयितुं प्रक्रममारभते। नित्यस्येत्यादिना। एकमात्रेति। एकमात्रपर्याप्तवृत्तिकेत्यर्थः।

---

* चित्रतुरेषु इतिपाठं सम्यक् प्रतिपद्ये॥

गिताकोऽन्यश्च । न चानये मानाभावः । घटवति घटपटौ न स्तः घटो न घटपटौ । एकघटवति न घटौ । एको न द्वावित्यादिप्रतीतेः एकघटवति द्वित्वावच्छिन्नतदत्यन्ताभावस्यैतद्भिन्नोभयान्योन्याभावस्य च सत्त्वात् । न च प्रतियोगिमति

---

अन्यश्चेति । एकमात्रापर्याप्तवृत्तिकधर्मावच्छिन्नप्रतियोगिताकश्चेत्यर्थः । मयान्ये । एकमात्रापर्याप्तवृत्तिकधर्मावच्छिन्नप्रतियोगिताके अभावे । घटवतीत्यादिप्रतीतिद्वयप्रदर्शनमत्यन्ताभावान्योन्याभावभेदेन । घटवतीति । व्यासज्यवृत्तिधर्मावच्छिन्नाभावानभ्युपगमे तादृशप्रतीत्यनुपपत्तिरिति भावः । न च तादृशप्रतीतेः पटाभावविषयकत्वेनैवोपपत्तेर्नातिरिक्ताभावसाधकत्वमिति वाच्यम् । तथा सति क्वचिद् घटाभावः क्वचित्पटाभावो विषय इति तादृशानुगतप्रतीत्यनुपपत्तेः । अनुगतधर्मं विनाऽनुगतप्रतीत्यभावात् । नन्वायातु द्वित्वावच्छिन्नप्रतियोगिताकाभावस्तथापि क्रमानामेव द्वित्वसमानाधिकरणघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकाभावानां प्रतियोगितावच्छेदकत्वमुपेयते । तथा च तस्यातिरिक्तत्वे मानाभाव एवेत्यत आह । एकघटवतीति । घटौ न स्त इति प्रतीतेर्यदि घटप्रतियोगिताकाभावो विषयस्तर्हि घटद्वयवत्यपि यत्किञ्चिद् घटप्रतियोगिकाभावसत्त्वात् तादृशप्रतीत्यापत्तिः । यदि च घटत्वावच्छिन्नाभावो विषयस्तदा एकघटवत्यपि घटौ न स्त इति प्रतीत्यनुपपत्तिरित्यनायत्या अतिरिक्तोऽभावोऽभ्युपेयत इति भावः । ननु तद्घटवति तद्घटान्यघटत्वावच्छिन्नाभावः घटान्तरवति च तदन्यघटत्वावच्छिन्नाभावो विषयो वक्तुं शक्यत एवेति चेन्न । तथाप्यनुगतधर्मं विनानुगतप्रतीतेरुपपादयितुमशक्यत्वमित्यादेः प्रागेव निवेदितत्वात् । ननु यत्किञ्चिद् घटवति घटपटौ न स्त इति प्रतीतेर्हि स्वसामान्यं न प्रतियोगितावच्छेदकं तथाविधयत्किञ्चिद् घटासत्त्वेन तदवच्छिन्नाभावासम्भवात् । नापि द्वित्वविशेषः । तत्तद्द्वित्वस्य नाप्यनुपस्थितेः । तत्तद्द्वित्वाद्यनुपस्थितिदशायामपि तादृशाभावप्रतीतेः । केवलघटादिमत्यपि तथा प्रत्ययेन प्रत्येकघटत्वपटत्वादिकमपि न तथेति त्वन्मतेऽप्यनुगतप्रत्ययोऽनुपपन्न एवेति चेन्न । द्वित्वं द्वित्वधर्मितावच्छेदकीभूतं घटत्वं पटत्वं च तथा । प्रतियोगितावच्छेदकताचात्र व्यासज्यवृत्तिपर्याप्ता प्रतियोगितावच्छे-

कथं तदभाव तयोर्विरोधादिति वाच्यम् । प्रतियोगि-
तावच्छेदकावच्छिन्नेनैवाभावस्य विरोधात् । नचैकोहि-
त्वावच्छिन्न एकोद्वावित्यप्रतीतेः । अतएव दण्डिपुरु-
षाद्दण्डे अपनीते पुरुषे सत्यपि दण्डीपुरुषो नास्तीति धी-
बलाद् विशिष्टाभावो विशेषणावच्छिन्नविशेष्याभावरूपो भ्यु-
पेयते । नचेयं दण्डाभावविषया । दण्डवत्यपि तथा प्र-
तीतेः । नच पुरुषाभावविषया तस्य सत्त्वात् । तस्माद्य-
विशेषणाभावो विशेष्याभाव उभयाभावो वा तत्र विशिष्टा-
भावोऽधिकोऽवसेयः ॥

---

दकावच्छिन्नं च घटपटोभयमिति नानुपपत्तिलेशोऽपीति ध्येयम् । तयोरिति । प्रतियोग्यभावयो रेकाधिकरणावृत्तित्वरूपविरोधादित्यर्थः । नन्वेकस्मिन्नपि समवायेन द्वित्वसत्त्वेऽत्यत आह । एकोद्वाविति । एकस्मिन्समवायेन द्वित्वस्य सत्त्वेन एकोद्वाविति प्रतीत्यापत्तिरतः समवायेन तत्सत्त्वेऽपि पर्याप्ति सम्बन्धेन तदसत्त्वान्न तथा प्रतीतिरित्युपेयम् । एवंच प्रतियोगितावच्छेदक पर्याप्त्यधिकरणेनैवाभावस्य विरोधात्तदनुपपत्तिरिति भावः । प्रतियोगितावच्छेदकावच्छिन्नेनैवाभावस्य विरोधात्प्रतियोगिमत्यपि नातिरिक्तविशिष्टाभावोऽनिरुक्त इत्यत आह । अतएवेति । प्रतियोगितावच्छेदकावच्छिन्नेनैवाभावस्य विरोधादेवेत्यर्थः । इयं । दण्डीपुरुषोनास्तीति धीः । तस्य । पुरुषस्य । न च क्वचिद्दण्डाभावोविषयः क्वचित्पुरुषाभावोविषयइति वाच्यम् । विषयानुगमं विनाऽनुगतप्रतीत्यनुपपत्तिरित्यस्य सकृदावेदितत्वात् ॥

नन्वायातु उपदर्शितरीत्या अतिरिक्तोऽभावः । तथापि तद्ग्राहिका न विशेषणता प्रत्यासत्तिः किन्तु चक्षुरादिना वन्ह्यादिज्ञानासम्भवात् यथाऽनुमानादेः प्रमाणान्तरत्वं तथाऽभावग्रहे क्लृप्तानांसंयोगादिसन्निकर्षाणामभावेनेन्द्रियादेर्ग्राहकत्वासम्भवात् प्राप्तस्यैवेन्द्रियस्य ग्राहकत्वात् । अन्यथा निमीलितनयनस्यापि घटादिग्रहापत्तेरितरनुपलब्ध्याख्यं प्रमाणान्तरमभावग्राहकमेषितव्यम् । नच विशेषणतैव सन्निकर्षः । तस्यास्तत्त्वेनाक्लृप्तत्वात्समवायानङ्गीकारेण समवायग्राहकत्वेनाप्यक्लृप्तत्वाच्च । तथाच

भट्टास्तु अभावो नेन्द्रियग्राह्यः क्लृप्तसन्निकर्षाणामभावात् किन्त्वनुपलब्धिरूपप्रमाणगम्य इत्याहुः । तन्न । प्रमाणान्तरकल्पनातः सन्निकर्षान्तरकल्पनाया लघुत्वात् । अन्यथा संयोगादीनां क्लृप्तानां सन्निकर्षाणामभावात् शब्देऽपि प्रमाणान्तरकल्पनापत्तेः । तत्र शब्दं साक्षात्करोमीति प्रतीतेः प्रत्यक्ष एवायमिति चेत् । इहापि पश्यामि घटाभावमिति प्र-

---

घटाभावस्यानुपलब्धिरूपप्रमाणजन्यमनुपलब्धिरूपमेव ज्ञानं नतु साक्षात्कारः साक्षात्कारत्वस्येन्द्रियजन्यत्वव्याप्यत्वात् । नचैवं निमीलितनयनस्यापि घटाभावग्रहापत्तिः । सन्नामभावो निरूप्यइति नियमात् । अभावग्रहेऽधिकरणप्रत्यक्षस्य जनकतया तज्जननार्थमिन्द्रियापेक्षणात् अतएव तज्जनकतया ऽन्यथासिद्धमिन्द्रियं नाभावग्रहे हेतुः । नचाधिकरणप्रत्यक्षस्य व्यापारतया न तेन तदन्यथासिद्धिः । व्यापारेण व्यापारिणोऽन्यथासिद्ध्यसम्भवात् । अन्यथा चक्षुः सन्निकर्षेण चक्षुषोप्यन्यथासिद्धिः प्रसज्येत इति वाच्यम् । इन्द्रियस्य जनकत्वसम्भवेपि अधिकरणप्रत्यक्षस्य तद्व्यापारत्वं तदैव न क्लृप्तसन्निकर्षाभावात् । एवंचानुपलब्धिरूपप्रमाणस्यापि सत्त्वात्सत्त्वायैव प्रमाणानीत्यप्यसङ्गतमिति निष्कृष्टं भट्टमतं दूषयितुं तन्मतमुपन्यस्यति । भट्टास्त्वित्यादिना । नेन्द्रियग्राह्यः । नेन्द्रियजन्यलौकिकसाक्षात्कारविषयः । क्लृप्तसन्निकर्षाणां । संयोगादिषण्णां सन्निकर्षाणाम् अभावात् । अभावे असम्भवात् । ननु तर्हि अभावग्रहानुपपत्तिरत आह । किन्त्विति । दृष्टप्रमाणान्तरजन्यज्ञाने च न सन्निकर्षापेक्षेति नेन्द्रियसमानतेति भावः । प्रमाणान्तरेति । धर्मिकल्पनातो धर्मकल्पनायां लघीयस्त्वमिति न्यायादनुपलब्धेः क्लृप्तविजातीयप्रमां प्रति करणत्वकल्पनामपेक्ष्य क्लृप्तप्रत्यक्षप्रमाहेतुतया विशेषणतारूपसन्निकर्षकल्पनमेव लघीय इत्यर्थः । तथाचेन्द्रियेणैव तद्ग्रह इति भावः । अन्यथेति । सन्निकर्षकल्पनयोपपत्तावपि प्रमाणान्तरकल्पने इत्यर्थः इत्यपि क्वचित् । क्लृप्तानां संयोगादित्रयाणां सन्निकर्षाणामङ्गते । तत्रेति । प्रत्यक्षएव । प्रत्यक्षविषयएव । अयं । शब्दः । तथाच जन्यसाक्षात्कारत्वावच्छिन्नं प्रति सन्निकर्षत्वेन हेतुतया शब्देपि सन्निकर्षकल्पनमावश्यकं । सन्निकर्षत्वं च संयोगाद्यन्यतमत्वमिति भावः । अध्यक्षतएवेति अनन्तरमभावइति शेषः । स-

नीतेः प्रत्यक्षएवेतितुल्यम् । किञ्चानुपलब्धेः प्रमाजनकव्यापाराभावात् कथं प्रमाकरणत्वम् । व्यापारवद्धि कारणं करणमित्युक्तम् । नन्वेवं घटाभाववति घटोपलम्भावपि घटाभावप्रत्ययः स्यात् इन्द्रियसम्बद्धविशेषणतायाः सत्त्वादिति चेन्न । योग्यानुपलब्धेरप्यभावग्रहहेतुत्वात् । अथ केयं योग्यानुपलब्धिः योग्यस्य प्रतियोगिनोऽनुपलब्धिः

---

याग्राह्याप्यभावग्रहार्थं सन्निकर्षापेक्षणमावश्यकमितिभावः । ननुशब्देपि प्रमाणान्तरापत्तेरित्ययुक्तं प्रतिबन्देरनुत्तरत्वादित्यस्वरसादाह । किञ्चेति । ननु व्यापाराभावेपि फलायोगव्यवच्छिन्नकारणत्वरूपकरणत्वमुपपद्यतएव । अतएव "साधकतमं करणमिति" सूत्रमपीत्यत आह । व्यापारवदिति । निमीलितनयनदशायामन्धकारे च चक्षुषोपि फलायोगात् स्वेतरयावत्कारणसमवधाने यदव्यवहितोत्तरक्षणे कार्योत्पत्तिस्तत्त्वमेव फलायोगव्यवच्छिन्नत्वं वाच्यम् । एतस्य च यावत्कारणघटिततया गुरुत्वेन व्यापारवत्कारणत्वस्यैव करणत्वरूपत्वौचित्ये नानुपलब्धेः प्रमाणत्वव्याघात इति भावः । उक्तमिति । उक्तप्रायमित्यर्थः । वस्तुतस्तु । धर्मिकल्पनान्यायेनैव सन्निकर्षकल्पनं न तु प्रमाणान्तरकल्पनमिति पूर्वोक्तयुक्तिरतिरमणीयेति हृदयम् ॥

अनुपलब्धाख्यप्रमाणानङ्गीकारे घटाभाववति घटभ्रमदशायां घटाभावसत्त्वादिन्द्रियसम्बद्धविशेषणतया घटाभावप्रत्यक्षापत्तिः । मन्मते च घटोपलम्भसत्त्वे नानुपलब्धेरभावान्न तत्प्रत्यक्षापत्तिरित्यनायत्त्या प्रमाणान्तरकल्पनमावश्यकमित्याशयेन मीमांसकः शङ्कते । नन्वेवमिति । एवम् । अनुपलब्ध्याख्यप्रमाणमनङ्गीकृत्येन्द्रियसम्बद्धविशेषणताया अतिरिक्तायाः प्रत्यासत्तित्वे । योग्यानुपलब्धेरपीति । चक्षुषा घटाभावप्रत्यक्षजननीये भवतामतिरिक्तप्रमाणत्वेनाभ्युपगतायाः योग्यानुपलब्धेः सहकारित्वं कल्प्यते । घटाभाववति च घटोपलम्भेन योग्यानुपलब्ध्यभावादेव न घटाभावप्रत्यक्षापत्तिरिति भावः । नन्वेवं किमविशिष्टमनुपलब्धेः प्रमाणत्वे न प्रत्युतेन्द्रियस्य कारणत्वे विशेषणतारूपप्रत्यासत्तिकल्पनमधिकमिति चेन्न । विजातीयप्रमाणकल्पनापेक्षया प्रत्यासत्त्यन्तरकल्पनाया न्याय्यत्वात् । व्यापारवत्त्वाभावेन प्रमाणत्वासम्भवस्य पूर्वमेव दर्शितत्वाच्चेति । अभावग्रहे । अभावलौकिकप्रत्यक्षे । अथ केयमिति । इयम् । अभावग्रहे हेतुः । योग्यस्यानुप-

सहकारिणीतिमतं तन्न । पृथिवीत्वाभावस्य जलपरमाणौ ग्रहापत्तेः भवति हि पृथिवीत्वं चक्षुर्योग्यं तदनुपलब्धिश्च जलपरमाणौ किञ्च स्तम्भे पिशाचभेदग्रहानुपपत्तेः पिशाचस्य भेदप्रतियोगिनोऽयोग्यत्वात् । अथ योग्येऽधिकरणे प्रतियोगिनोऽनुपलब्धिः सहकारिणीति चेन्न । भूतले पिशाचात्यन्ताभावग्रहापत्तेः । परमाणौ महत्त्वाभावग्रहानापत्तेश्च ॥ यत्तु अत्यन्ताभावग्रहे योग्यप्रतियोग्यनुपलब्धिरन्योन्याभावग्रहे च योग्येऽधिकरणे प्रतियोगितादात्म्यानुपलब्धिः सहकारिणीति मतं तन्न । जलपरमाणौ पृथिवीत्वात्यन्ताभावग्रहापत्तेः । वायावुद्भूतरूपवद्भेदग्रहानापत्तेश्च । नचेष्टापत्तिः । अनुभवविरोधात् ॥

अत्रोच्यते योग्या सहकारिसम्पन्नानुपलब्धिः कारणम् । अतएवान्धकारे न घटाभावग्रहश्चक्षुषा । तत्रालोकाधिकरणसन्निकर्षस्यापि हेतुत्वात् नवा जलपरमाणौ पृथिवीत्वाभावग्रहः योग्यसन्निकर्षाभावात् । कः सन्निकर्षो योग्यः पृथि-

---

ब्धिरिति वा योग्येऽनुपलब्धिरिति वा योग्यानुपलब्धिशब्दार्थ इत्यर्थः । तत्राद्यमाशङ्कते । योग्यस्येति । जलपरमाणाविति । महत्त्वाभावप्रत्यक्षानुरोधेन विजातीयचक्षुःसंयुक्तविशेषणतया अवश्यमङ्गीकार्यतया पृथिवीत्वाभावस्यापि प्रत्यक्षापत्तिरिति भावः । दूषणान्तरमाह । स्तम्भेति । द्वितीयमाशङ्क्य निराचष्टे । अथयोग्येति । एकदेशिमतं दूषयितुं तन्मतमुपन्यस्यति । यत्त्विति । वायाविति । वायोरयोग्यत्वादिति भावः । परमाणौ महत्त्वग्रहानापत्तेश्चेत्यत्रापि द्रष्टव्यम् । अनुभवेति । वायुर्नरूपवान् परमाणुर्न महानित्यादि प्रत्यक्षप्रतीतीनां विलोपप्रसङ्गादित्यर्थः ॥

योग्या चासावनुपलब्धिश्चेति कर्मधारयमभिप्रेत्याह । अत्रोच्यत इति । योग्येत्यस्य विवरणं सहकारीति । तथाचाभावप्रत्यक्षसामग्रीविशिष्टा प्रतियोग्यनुपलब्धिरेव योग्यानुपलब्धिरित्यर्थः । अतएव । सहकारिसम्पन्नत्वरूपयोग्यत्वविशेषणदानादेव ॥ योग्येति । योग्यसन्निकर्षस्यैव अभावप्र-

पृथिवीत्वाभावग्राहकइति चेत् इन्द्रियसन्निकृष्टमहत्त्वोद्भूतरूप-
विशेषणता । उद्भूतरूपाभावे तु इन्द्रियसन्निकृष्टमहत्त्ववद्वि-
शेषणता योग्यः सन्निकर्षोऽतो मनसि न तद्ग्रहः । भवति
च महति वायावेव अन्यत्रापि योग्यः सन्निकर्षः का-
र्यवशादुन्नेयः । पिशाचात्यन्ताभावस्त्वयोग्यत्वादेव न गृह्य-
ते । का पुनरत्यन्ताभावे योग्यता । योग्यमात्रप्रतियोगिकेति

---

तत्प्रत्यक्षसामग्र्यघटकत्वेन परमाणौ न पृथिवीत्वाभावग्रह इति भावः । ननु महत्त्वोद्भूतरूपवद्विशेषणतायाः पृथिवीत्वाभावग्राहकत्वेऽपि नोद्भूतरूपाभावग्राहकत्वमुद्भूतरूपाभाववति वायौ तस्या असम्भवादिति तत्रेन्द्रियसम्बद्धविशेषणतायाएव योग्यसन्निकर्षत्वमुपेयम् । एवंच मनस्यपि उद्भूतरूपाभावप्रत्यक्षं स्यादित्यत आह । उद्भूतरूपाभावेत्विति । उद्भूतरूपाभावग्रहेत्वित्यर्थः । तथाच प्रकृते रूपमनिवेश्य महत्त्वं निवेशनीयमिति भावः । अतः । महत्त्वविशेषणात् । तद्ग्रहः । उद्भूतरूपाभावग्रहः । वायावित्यत्र तद्ग्रह इत्यनुषज्यते । ननु महत्त्वाभावग्रहे कः सन्निकर्षो योग्यः । एवं गुणादौ पृथिवीत्वाभावप्रत्यक्षानुपपत्तिस्तत्रेन्द्रियसन्निकृष्टमहत्त्वादिमद्विशेषणता विरहात् । एवमन्योन्याभावग्राहकः योग्यः कः सन्निकर्ष इत्यत आह । एवमन्यत्रापीति । महत्त्वाभावादावपीत्यर्थः । सन्निकर्ष इति । महत्त्वाभावे इन्द्रियसन्निकृष्टोद्भूतरूपवद्विशेषणता योग्यः सन्निकर्षः गुणादौ पृथिवीत्वाभावग्रहे त्विन्द्रियसन्निकृष्टविशेषणतैव योग्यः सन्निकर्षः । अन्योन्याभावे तु पृथिवीभेदादौ इन्द्रियसन्निकृष्टमहत्त्वादिमद्विशेषणता योग्यः सन्निकर्ष इत्यर्थः । ननु कुत्रचिदिन्द्रियसन्निकृष्टमहत्त्वादिमद्विशेषणता कुत्रचिच्चेन्द्रियसन्निकृष्टविशेषणतायोग्यः सन्निकर्ष इत्यत्र किं नियामकमत आह । कार्यवशादिति । तत्र तत्र तत्तदभावग्रहानुरोधादित्यर्थः । ननु पिशाचात्यन्ताभावादीनामपि प्रत्यक्षापत्तिस्तत्र योग्यसन्निकर्षसत्त्वेन योग्यानुपलब्धिसत्त्वादत आह । पिशाचात्यन्ताभावस्त्विति । अयोग्यत्वादिति । प्रत्यक्षे विषयस्य हेतुतया अभावप्रत्यक्षेयोग्याभावत्वेन हेतुत्वोपगमादिति भावः । अयोग्यप्रतियोगिकस्यापि स्तम्भे पिशाचभेदस्य प्रत्यक्षोदयादत्यन्ताभावएवपृच्छति । का पुनरत्यन्ताभावेयोग्यतेति । उत्तरमपि तत्रैव बोध्यम् । योग्यमात्रेति । पिशाचस्यायोग्यत्वे-

योग्यधर्मावच्छिन्नप्रतियोगिताकत्वविशेषणम् । एवमन्यत्रा-
प्यनुभवानुसारेण योग्यता वाच्या । सर्वाभावसाधारणं किं
योग्यत्वमिति चेन्न । किञ्चिदिति गृहाण । तत्किं नानैवा-
भावयोग्यतेति चेदोम् । गुणयोग्यतावदननुगतस्यैव त-
त्त्वादिति सङ्क्षेपः ॥

---

न योग्यप्रतियोगिकत्वाभावादेव न तदभावप्रत्यक्षमिति भावः । घटपि-
शाचान्यतराभावप्रत्यक्षवारणाय । मात्रेति । अतीन्द्रियावृत्ति प्रतियोगि-
ताकत्वमिति तदर्थः । ननु वायौ रूपसामान्याभावप्रत्यक्षानुपपत्तिस्तस्या-
तीन्द्रियरूपप्रतियोगिकत्वेन योग्यमात्रप्रतियोगिकत्वाभावात् । एवमे-
तद्गुरुत्ववदत्यन्ताभावप्रत्यक्षापत्तिश्चेत्यस्वरसादाह । योग्यधर्मेति । पिशा-
चत्वघटपिशाचान्यतरत्वादीनां योग्यधर्मत्वाभावेन न तदवच्छिन्नाभाव-
प्रत्यक्षमिति भावः । वस्तुतस्तु योग्यमात्रप्रतियोगिके योग्यधर्मावच्छिन्न-
प्रतियोगिताकत्वं विशेषणमित्येव पाठः । योग्यमात्रप्रतियोगिकेऽभा-
वे योग्यधर्मावच्छिन्नप्रतियोगिताकत्वं विशेषणमित्यर्थः । योग्यमात्र-
प्रतियोगिताकत्वे सति योग्यधर्मावच्छिन्नप्रतियोगिताकत्वं योग्यतेति या-
वत् । तत्र च भूतले द्रव्यसामान्याभावप्रत्यक्षवारणाय योग्यमात्रवृत्तिप्र-
तियोगिताकत्वम् । एतद्गुरुत्ववदत्यन्ताभाववारणाय योग्यधर्मेति । वायौ
रूपसामान्याभावप्रत्यक्षं नेष्यत एवेति तदसङ्ग्रहो न दोषाय । एतद्गुरुत्वगु-
रुत्वान्यतरावच्छिन्नाभाववारणाय च योग्यधर्मेत्यस्य योग्यधर्ममात्रावच्छि-
न्नप्रतियोगिताकत्वमिति तदर्थ इत्यवधेयम् । ननु पिशाचवदन्योन्याभावो-
ऽप्ययोग्यत्वादेव न गृह्यत इति वाच्यम् । तत्रान्योन्याभावे का योग्यता न
तावत् योग्यप्रतियोगिकत्वं स्तम्भे पिशाचभेदग्रहानापत्तेः पिशाचवद्भे-
दग्रहापत्तेश्चेत्यत आह । एवमन्यत्रापीति । अन्योन्याभावेपीत्यर्थः ।
अनुभवानुसारेणेति । तत्तद्धर्मावच्छिन्नप्रतियोगिताकत्वमेव तत्तदन्योन्या-
भावयोग्यत्वमित्यर्थः । अतएव क्वापुनरत्यन्ताभावे योग्यतेति सामान्यतएवा-
त्यन्ताभावे योग्यता निरुक्तान्योन्याभावेतु अननुगतैव चेति ध्येयम् । सर्वेति ।
अत्यन्तान्योन्याभावेत्यर्थः । तत्किमिति । अत्यन्ताभावे योग्यमात्रेत्यादिरू-
पान्योन्याभावे तत्तदन्योन्याभावत्वमित्येवंरूपा नानैवाभावे योग्यतेत्यर्थः ।
ओमिति अङ्गीकारार्थकमव्ययं । गुणयोग्यतावदिति । यथा रूपरसादौ तत्तदि-
न्द्रिययोग्यत्वं नैकं तथा प्रकृतेपीत्यर्थः ॥

अथ किमिदं चक्षुरादि उच्यते। तैजसमिन्द्रियं रूपग्राहकं महदिन्द्रियं वा चक्षुः। वायवीयमिन्द्रियं स्पर्शग्राहकं महदिति वा त्वक्। आप्यमिन्द्रियं रसग्राहकं महदिन्द्रियं वा

---

केचित्तु विजातीयचक्षुःसंयोगाश्रयविशेषणतया अभावग्राहकत्वेन न परमाणौ पृथिवीत्वाभावग्रहः। पिशाचादावन्त्याभावादिप्रत्यक्षवारणं तु गुरुत्वादितादात्म्येन तत्तदभावत्वेन साक्षात्कारं प्रति प्रतिबन्धकत्वाङ्गीकारेणेत्याहुः। तदसत्। परमाणौ महत्त्वाभावप्रत्यक्षानुरोधेन विजातीयचक्षुःसंयोगस्यावश्यकतया तेन तत्र पृथिवीत्वाभावप्रत्यक्षवारणासम्भवात्। पूर्वोक्तं चक्षुरादिकं लक्षयितुं पृच्छति। अथ किमिदमिति। तैजसमिति। आलोकघ्राणादावतिव्याप्तेर्यथायथमुभयोपादानम्। चक्षुषस्तैजसत्वे विवादादाह। रूपग्राहकमिति। रूपग्राहकत्वमात्रोक्तौ मनस्यतिव्याप्तिरतो महदिति। महत्त्वमात्रोक्तौ घ्राणादावतिव्याप्तिरतो रूपग्राहकमिति। रूपग्राहकं महदित्युक्तावात्मन्यतिव्याप्तिरत इन्द्रियमिति। अत्र केचित् चक्षुषः प्राप्यकारित्वे चन्द्रमसो ग्रहणानुपपत्तेः। शाखाचन्द्रमसोस्तुल्यकालं ग्रहणानुपपत्तेश्च अप्राप्यकार्येव तद्वाच्यम् एवं चाप्राप्यकारित्वाविशेषात् गोलकमेव तदिति पार्थिवत्वमेव तस्य तत्राहुः। तदसत्। चक्षुषोऽप्राप्यकारित्वे निमीलितनयनस्यापि चाक्षुषापत्तेः प्राप्यकार्येव तद्वाच्यम्। चक्षुषस्तैजसत्वेनातिशीघ्रगामितया चन्द्रमसा संयोग उपपद्यते। शाखाचन्द्रमसोस्तुल्यकालग्रहणं त्वसिद्धं यथा मया युगपच्छतं शतपत्राणि च्छिन्नानीतिवत्। तथाच गोलकस्य च घटादौ संयोगाभावेनातिरिक्तं तैजसं चक्षुः स्वीकार्यमिति। एवमन्यत्रापि बोध्यम्। वायवीयमिति। वायवीयत्वमात्रं वायाविन्द्रियत्वमात्रं चक्षुरादावतिव्याप्तमिति मिलितोपादानं। त्वचो वायवीयत्वे विवादादाह। स्पर्शग्राहकमिति। चक्षुर्मनआत्मनां वारणाय विशेषणत्रयोपादानम्। आप्यमिति। जलचक्षुरादावतिव्याप्तिवारणाय विशेषणद्वयोपादानम्। रसनस्याप्यत्वे विवादादाह। रसग्राहकमिति। चक्षुर्मनआत्मनां वारणाय यथायथं विशेषणत्रयोपादानम्। पार्थिवमिति। व्यावृत्तिः पूर्ववत्। इन्द्रियत्वं च शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्। आत्मन्यतिव्याप्तिवारणाय सत्यन्तनिवेशः। शब्दरूपविशेषगुणसत्त्वाच्छ्रोत्रेऽव्याप्तेः शब्देतरेति गुणविशेषणं। चक्षुषि तादृशरूपस्य सत्त्वात्। उद्भूतेति। उद्भूतत्वं च नीलत्वादिव्याप्यानुद्भूतत्वाभावकूटवत्त्वमेव तस्य च संयोगसाधारणतया चक्षु-

रसनं । पार्थिवमिन्द्रियं गन्धग्राहकं महदिन्द्रियं वा घ्राणं महत्पदं मनोवारणाय । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रं । शब्दग्राहकं महदिन्द्रियं वा । निःस्पर्शमणु मनः । निःस्पर्शपदं पार्थिवाद्यणुवारणाय अणुपदं विभुवारणाय ॥ २८

अत्र मीमांसकाः मनो नाणु किं तु विभु निःस्पर्शद्रव्यत्वात् आत्मवत् मनस्त्वं च आत्मान्यत्वे सति ज्ञानासमवायिकारण-संयोगाश्रयत्वमित्याहुः । तन्न । विभुत्वे मनसा सहात्मनः

---

रादावव्याप्ते रतो विशेषेति । चक्षुरादेः महत्त्वाद् गुणेति । कालादावति-व्याप्तेर्ज्ञानकारणेति । इन्द्रियावयवार्थावयवसंयोगस्यापि प्रत्यक्षकारण-तया इन्द्रियावयवेऽतिव्याप्तिवारणाय मनःसंयोगेति । श्रोत्रं लक्षयति । कर्णेति । घटावच्छिन्ननभसोऽपि श्रोत्रत्वापत्तेः कर्णशष्कुलीति । नभसः श्रोत्रत्वे विवादादाह । शब्दग्राहकमिति । मनो लक्षयति । निःस्पर्शमिति ॥

मनोवैभववादिनां मीमांसकानां मतमादर्शयति । अत्र मीमांसका इति । अ-णुत्वभावसिद्धेऽपि विभुत्वासिद्धिरत आह ॥ किन्त्विति । निःस्पर्शत्वं गुणादौ व्य-भिचारीति । द्रव्यत्वादिति । द्रव्यत्वं च घटादौ व्यभिचारीति विशिष्टहेतू-पादानं । नन्वेतन्मते मनस्त्वस्य निःस्पर्शाणुत्वरूपत्वासम्भवेन पक्षतावच्छे-दकासिद्धिरत आह । मनस्त्वञ्चेति । आत्मन्यतिव्याप्तिवारणायात्मान्यत्वे सती-ति । संयोगाश्रयत्वं कालादावपीति ज्ञानासमवायिकारणेति । चक्षुर्म-नोयोगस्य ज्ञानकारणत्वाज्ज्ञानकारणसंयोगाश्रयत्वं चक्षुरादावतिव्याप्तमि-त्यत आह । असमवायीति । ज्ञानासमवायिकारणं चात्ममनःसंयोग ए-वेति नातिव्याप्तिः । केचित्तु नवीनमतेऽदृष्टविशेषाकृष्टत्रुटेर्मनस्त्वेन पक्षतावच्छेदकस्यैक्याभावात् कथं पक्षतावच्छेदकावच्छेदेनानुमितिः त्रुटौ विभुत्वस्य बाधेन कथं वा तत्र विभुत्वानुमितिरत आह । म-नस्त्वञ्चेति । ज्ञानासमवायिकारणेति । पुरुषान्तरीयात्मप्रत्यक्षवारणाय तत्तदात्ममानसत्वावच्छिन्नं प्रति तत्तदात्ममनःसंयोगत्वेन हेतुतया म-नस्त्वत्रुटौ नानावच्छेदककोटौ निवेशे गौरवेण लाघवेनैकैकमनःसिद्धिः । नच विजातीयसंयोगत्वेन तस्य हेतुतया न तत्र मनसो निवेश इति वा-च्यम् । तथापि समवायेन विजातीयसंयोगस्य विजातीयसंयोगसम्बन्धेन म-

संयोगाऽनुपपत्तेः। तथाहि द्विविधः संयोगः कर्मजोऽवयवसंयोगजश्चेति। न चविभोरात्मनः कर्मास्ति मनोपि च यदि विभु तदा तस्यापि कर्माभावात् कुतः कर्मजसंयोगसम्भवः। न च तयोरवयवोस्ति येन तत्संयोगजः स्यात्संयोगः। नच नित्य एव निभ्वोः संयोगः। अजसंयोगनिषेधात् कुतो निषेधइति चेन्मानाभावात्। संयोगत्वावच्छेदेन द्रव्यजन्यत्वावधारणाच्च। अप्रयोजकं चेदमनुमानमिति संक्षेपः॥

---

नसो वा हेतुत्वमिति विनिगमनाविरहादिति भाव इत्याहुः। विभुत्वे। मनसो विभुत्वे। संयोगानुपपत्तेरिति। तथाचोपदर्शितानुमाने पक्षतावच्छेदकासिद्धिर्बाधश्चेति भावः। कर्मजः। यथा श्येनक्रियया श्येनस्य वृक्षे संयोगः। अवयवसंयोगजः। कारणाकारणसंयोगात् कार्याकार्यसंयोगः। यथा हस्ततरुसंयोगात् कायतरुसंयोग इत्यर्थः। नच विभोरिति। मूर्तेतरद्रव्यत्वं विभुत्वं स्पन्दत्वावच्छिन्नं प्रति मूर्त्तद्रव्यत्वेन कारणतया मूर्तत्वाभावेनात्मनि न कर्मोत्पत्तिरिति भावः।। अनयोः। आत्ममनसोः। तत्संयोगजः। अवयवसंयोगजः। मानाभावादिति। नित्यसंयोगग्राहकप्रत्यक्षादेरभावादनुमानस्यचाप्रयोजकत्वादित्यर्थः। साधकाभावमुक्त्वा बाधकमप्याह। संयोगत्वावच्छेदेनेति। संयोगत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतायां तत्कार्यतावच्छेदकं जन्यसंयोगत्वमेव नित्यसंयोगाङ्गीकर्त्रा वाच्यम् कार्यमात्रवृत्तिधर्मस्यैव कार्यतावच्छेदकत्वात् तथाच जन्यत्वनिवेशे गौरवमेव प्रतिकूलतर्कइति भावः। ननु समवायेन रूपादिकं प्रति सामानाधिकरण्यसम्बन्धेनावयवरूपादीनां हेतुतया कपालगन्धादावपि रूपोत्पत्त्यापत्तेर्जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वावश्यकतया संयोगत्वावच्छिन्नं प्रति तद्धेतुत्वे मानाभावइति न दर्शितगौरवमत आह। अप्रयोजकञ्चेदमिति। यद्वा नित्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वे क्षतिविरहादत आह। अप्रयोजकञ्चेदमिति। इदं। विभुत्वसाधकमनुमानमित्यर्थः। अनुकूलतर्काभावादितिभावः। संयोगत्वावच्छेदेनेति। संयोगत्वस्य द्रव्यजन्यत्वव्याप्यत्वेन नित्यसंयोगस्वीकारे व्याप्तिनियमभङ्गप्रसङ्गादिति

इति श्रीभट्टाचार्यचूडामणिकृतायां न्यायसिद्धान्तमञ्जर्यां प्रत्यक्षपरिच्छेदः ॥

भावः । ननु तादृशनियमे मानाभाव इत्यत आह । अप्रयोजकश्चेतीत्यपरे

नानातर्कविचारणैकमतिना यत्किञ्चिदुक्तं मया तत्सूक्तन्तु हृदा विभाव्य सुधियः सारार्थसङ्ग्राहकाः । हृद्येतद्यदि धारयेदपि जनः सञ्जायते सोऽचिराद्वादीन्द्रः परवादिदूषणयुताधानैकदक्षः कृती ॥ १ ॥

इति श्रीमहिद्वन्मुकुटमाणिक्यराजिनीराजनाराजितपदद्वन्द्वन्यायवागीश श्रीदीक्षितशितिकण्ठशर्मविरचितायां न्यायसिद्धान्तमञ्जरीदीपिकायां प्रत्यक्षखण्डः समाप्तः ॥

---

अथानुमानं निरूपयति । तत्रानुमितिकरणमनुमानम् । अनुमितित्वं चानुमिनोमीत्यनुभवसिद्धो जातिविशेषः । अनु-

श्रीगणेशाय नमः । प्रत्यक्षनिरूपणानन्तरमुपजीव्योपजीवकभावसङ्गत्या ऽनुमाननिरूपणं † प्रतिजानीते । अथेति । अथ शब्दोऽत्रानन्तर्यवचनः । तत्र च प्रत्यक्षनिरूपणस्यार्थादवधित्वमवगम्यते । अतएव च सिद्धत्वमपि । निरूप्यतइति वर्त्तमानार्थकलट्प्रत्ययेन चानुमाननिरूपणस्य साध्यत्वलाभः । एवंच सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यतइति न्यायेन मलिनं तेषपुःखायाद्रुत्यन्वयात्रापि प्रत्यक्षानुमाननिरूपणयोरुपजीव्योपजीवकभावलाभः । तथाचोपजीवकत्वसङ्गत्याऽनुमाननिरूपणमिति भावः । यद्यप्यनुमितिकरणत्वेनानुमानज्ञाने न प्रत्यक्षज्ञानापेक्षेति तन्निरूपणयोरुपजीव्योपजीवकभावासम्भवः । तथापि सविशेषणे हीति न्यायेन* निरूप्य प्रत्यक्षानुमानयोरेवोपजीव्योपजीवकभावलाभः । अत्र क्वचिदुपजीवकन्निरूप्याप्युपजीव्यनिरूपणादुपजीवकत्वादिसङ्गतेरानन्तर्यानियामकत्वेपि स्वतन्त्रस्येति न्यायेन इच्छाया एव नियामकत्वान्न पौर्वापर्यनियम इति ध्येयम् । ननु निरूपणप्रतिज्ञायाः विषयान्तरसञ्चाररहित्यरूपशिष्यावधानप्रयोजकत्वेप्युन्मत्तप्रलपितत्वादिशङ्कानिरासाय सङ्गताभिधानस्यैवोचितत्वम् । ननु सङ्गतिप्रदर्शनस्यापि व्यर्थत्वादिति चेन्न । द्विविधं हि शिष्यावधानमनुपेक्षणीयत्वरूपं विषयान्तरसञ्चाररहित्यरूपं च तत्रासङ्गतत्वज्ञानेनोपेक्षासम्भवात् सङ्गतिप्रदर्शनमावश्यकं तथाच सङ्गतिज्ञाने सत्यसङ्गतत्वज्ञानासम्भवान्नासङ्गतत्वज्ञानप्रयुक्तमुपेक्षणीयत्वं । द्वितीयं च निरूपणप्रतिज्ञयेति परमरहस्यमत्रानुसन्धेयम् । ग्रन्थमध्येपि मङ्गलाचरणात् अथशब्दोमङ्गलार्थकएवेत्यपि कश्चित् । आनन्तर्यं चात्र ध्वंसाधिकरणक्षणवृत्तित्वं तथाच प्रत्यक्षनिरूपणध्वंसाधिकरणक्षणवृत्ति वर्त्तमाननिरूपणविषयोऽनुमानमिति शाब्दबोधः । तत्र । लक्षणस्वरूपप्रामाण्यादिप्रकारकनिरूपणविषयेऽनुमाने । करणत्वमात्रस्य कुठारादौ मितिकरणत्वस्य च प्रत्यक्षादावतिव्याप्तेर्वारणायानुमितिकरणमिति विशिष्टोपादानम् । नन्वनुपस्थिति-

† अनुमानंनिरूपयन् । शिष्यावधानाय प्रतिजानीते इत्यपिपाठान्तरम् ।
* स विशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सतिविशेष्ये बाध इति न्यायस्वरूपम् ॥

र्शानमिति व्युत्पत्त्या किञ्चिज्जन्यज्ञानकरणत्वं लक्षणं लब्धं तच्चातिप्रसक्त-मेवेत्यत आह । अनुमितित्वञ्चेति । तथाच न किञ्चिज्जन्यज्ञानत्वमनुमिति-त्वमपितु जातिविशेषएव तदवच्छिन्नकरणत्वं च न प्रत्यक्षादाविति ना-तिव्याप्तिरिति भावः । यद्वा ननु व्यावृत्तिर्व्यवहारोवा लक्षणस्य प्रयोजन-मिति नियमेनेतरभेदानुमापकमेवैतल्लक्षणं वाच्यम् । इतरभेदानुमानं चा-नुमानं प्रत्यक्षादिभ्योभिद्यते अनुमितिकरणत्वात् यन्नैवं तन्नैवं यथा प्रत्यक्षा-दात्याकारकं । तत्र चानुमितेः प्रत्यक्षप्रमितिविलक्षणत्वाज्ञाने प्रत्यक्षप्रमा-येप्यनुमितिकरणत्वग्रहसम्भवेन प्रत्यक्षे प्रत्यक्षभेदासत्त्वेन च व्यभिचार-ज्ञानापत्तेरिति लक्षणप्रयोजनमनुपपन्नमित्यत आह । अनुमितित्वञ्चेति । प्रत्यक्षप्रमित्यनन्तरमनुमिनोमीत्यनुव्यवसायानुदयात्प्रत्यक्षवृत्तमनुमिति-त्वमेव तद्विषयः । तच्च न प्रत्यक्षे इति प्रत्यक्षप्रमितिविलक्षणप्रमितिकर-णत्वहेतुकमितरभेदानुमानं सुकरमेवेति न कोपि दोषइति सारम् । केचि-त्तु व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानकरणत्वमेवानुमितिकरणत्वं वाच्यं तत्र च व्याप्तिज्ञानत्वादेरेव गमकत्वसम्भवेनाधिकस्य वैयर्थ्यमितीतरभेदानु-मानमनुपपन्नमित्यत आह । अनुमितित्वञ्चेति । तथाच जातिरूपानुमिति-त्वावच्छिन्नकरणत्वमेव तल्लक्षणं नतूक्तरूपमिति न व्यर्थत्वशङ्कापीत्याहुः ।

नन्वनुमानत्वमनुमितिकरणत्वं तथाचेतरभेदानुमाने पक्षतावच्छेद-कहेत्वोरभेदेऽसान्वयव्याप्तिज्ञानस्यैवानुमितिहेतुतया हेतौ साध्याधिकरण-वृत्तित्वरूपव्याप्तिज्ञाने जायमाने एव तुल्यवित्तिवेद्यतया साध्येपि हेत्वधि-करणवृत्तित्वग्रहसम्भवेन पक्षतावच्छेदकाश्रये साध्यसिद्धेः सिद्धसाधनापत्ति-रिति तयोर्भेद आवश्यकः । यदि च हेतौ साध्याधिकरणवृत्तित्वे ज्ञातेपि पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरनुदयान्न सिद्धसाधनावकाशः । अन्यथा पृथिवी इतरभेदवती पृथिवीत्वादित्यत्रापि पृथिवीत्वाधिकरणे घटादावि-तरभेदस्य निश्चितत्वादनुमितेरुच्छेद एव स्यात् । किञ्च व्यतिरेकव्याप्तिज्ञान-स्याप्यनुमितिकरणतया साध्यसामानाधिकरण्यस्य तत्राघटकत्वेन न सिद्ध साधनमिति विभाव्यते । तथाप्युद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबो-धानुपपत्तिरेव । अन्यथा दण्डवान् दण्डवानित्यादेर्निराकाङ्क्षत्वानुपपत्ते-रिति चेन्नैवम् । अनुमानपदवाच्यत्वस्य लक्ष्यतावच्छेदकत्वेन क्वाप्यनु-पपत्तेरभावादिति । केचित्तु नामार्थयोः साक्षादभेदातिरिक्तसम्बन्धेना-न्वयबोधानभ्युपगमादनुमितिकरणमित्यस्यानुमितिसम्बन्धिभिन्नकरणमर्थः ।

ज्ञानजन्यत्वाव्यभिचारि [जन्यशब्दधीजन्यत्वव्यभिचारि जातिमदनुभवत्वं वा। प्रत्यक्षत्ववारणाय जन्यज्ञानजन्यत्वाव्यभिचारीति ज्ञानाजन्ये नित्ये निर्विकल्पके च तद्धीजन्यत्वं व्यभिचरति। तथापि प्रथमजन्यपदं चाक्षुषत्वादिवारणाय। तद्धीश्वरज्ञानजन्यत्वाव्यभिचारि। सर्वेषां तदाश्रया-

---

अनुपूर्वकमाधातुनाऽनुमितिकरणल्युटा च करणं बोध्यते। तथाचानुमितिकरणमनुमितिसम्बन्धाभिन्नकरणमिति शाब्दबोधो नानुपपन्नः करणतायाः कार्यघटितत्वेनानुमितिकरणस्य करणपदार्थत्वेऽप्यनुमितिकरणमनुमितिसम्बध्यभिन्नानुमितिकरणमिति शाब्दबोधोऽपि नानुपपन्नः। विधेयतापर्याप्त्यधिकरणोद्देश्यतावच्छेदकयोरैक्य एव शाब्दबोधानभ्युपगमात् अन्यथा दण्डवान् रक्तदण्डवानिति बोधानुपपत्तेरित्याहुः॥ १

नन्वनुमितित्वस्यैवानुमितिलक्षणत्वेन लक्षणलक्ष्यतावच्छेदकयोरैक्यमित्यत आह। जन्यज्ञानेति। जन्यज्ञानजनकत्वाव्यभिचारिणी जनकशब्दधीजनकत्वव्यभिचारिणी च या जातिस्तद्वदनुभवत्वमनुमितित्वमिति लक्षणार्थः। जनकज्ञानं व्याप्तिज्ञानं तज्जनकत्वाव्यभिचारिणी तज्जनकत्वव्याप्याजनकशब्दधीजनकत्वव्यभिचारिणी च या जातिरनुमितित्वं तद्वत्त्वमादाय लक्षणसमन्वयः। तथाच तस्य स्वरूपतो लक्ष्यतावच्छेदकत्वेन तादृशजातित्वेन च लक्षणत्वेन न तयोरैक्यमिति भावः। ननु जन्यशब्दधीजन्यत्वव्यभिचारिजातिमदनुभवत्वमेव लक्षणमस्तु किमेतावद्विशेषणेनेत्यत आह। प्रत्यक्षत्वेति। अतिव्याप्तिं निराकरोति। ज्ञानाजन्य इति। जनकज्ञानाजनक इत्यर्थः। नित्ये। ईश्वरसाक्षात्कारे। तद्धीति। तत्प्रत्यक्षत्वं। धीजनकत्वं। जनकज्ञानजनकत्वं। तथाच प्रत्यक्षत्वस्य जनकज्ञानजनकत्वाव्याप्यत्वान्नातिव्याप्तिरिति भावः। तथापि। जनकज्ञानजनकत्वाव्यभिचारित्वदलेऽपि। अतिव्याप्तिमुपपादयति। तद्धीति। चाक्षुषत्वं हीत्यर्थः। तदाश्रयाणामिति। चाक्षुषत्वाश्रयाणामित्यर्थः। जन्यपदोपादाने च चाक्षुषत्वस्य जनकज्ञानाजन्ये निर्विकल्पके सत्त्वेन जनकज्ञानजनकत्वाव्यभिचारित्वाभावान्न तदादाय* प्रत्यक्षेऽतिव्याप्तिरिति भावः। जनकजनकत्वाव्यभिचारीत्युक्तावपि [चाक्षुषत्वस्य] जनकशरीरादिजनकत्वव्याप्यत्वात्तत्रैवा-

---

* तदाश्रये प्रत्यक्षे इत्यपि पाठान्तरम्।

णामीश्वरधीजन्यत्वात्। उपमितित्वशाब्दत्ववारणाय व्यभिचारीत्युक्तम्। तद्भिन्नयथोक्तज्ञानजन्यत्वव्यभिचारि। उपमितीनां सर्वासां शब्दविषयकातिदेशवाक्यार्थज्ञानजन्यत्वात्। शब्दानुभवानां च सर्वेषां शब्दज्ञानजन्यत्वात्। नच

---

तिव्याप्तिरित्यत आह। ज्ञानेति। यदि च ज्ञानपदोपादानेऽपि कालोपाधिविधया जन्यज्ञानजन्यत्वं निर्विकल्पकेऽपीति चाक्षुषत्वमादायोक्तदोषतादवस्थ्याज्जन्यज्ञाननिरूपितासाधारणजन्यताऽवश्यं निवेशनीया। तथा च ज्ञानपदानुपादानेऽपि जन्यज्ञानत्वावच्छिन्नं प्रत्येव शरीरत्वेन हेतुतया जन्यशरीरादिनिरूपितासाधारणजन्यत्वं न निर्विकल्पके इति तद्वैयर्थ्यमिति विभाव्यते। तथापि चाक्षुषत्वावच्छिन्नं प्रति चक्षुष्ट्वे न हेतुतया जन्यं चक्षुरादि तज्जन्यत्वव्याप्यत्वं चाक्षुषत्वस्येति तद्दोषवारणाय ज्ञानपदनिवेशः। तथाच जन्यज्ञाननिरूपितासाधारणजन्यत्वमित्यर्थ इति नकाप्यनुपपत्तिः। ज्ञानत्वाव्यभिचारीत्युक्तौ प्रत्यक्षत्वादेरवारणात् जन्यत्वाव्यभिचारिज्ञानजन्यत्वाव्यभिचारीत्युक्तावपि चाक्षुषत्वादेरवारणात् जन्यज्ञानजन्यत्वाव्यभिचारीत्युक्तम्। जन्यज्ञानजन्यत्वसमानाधिकरणेत्युक्तौ सत्त्वज्ञानत्वप्रत्यक्षत्वादेरवारणात् अव्यभिचारीति। ननु तथापि जन्यज्ञानजन्यत्वाव्यभिचारिजातिमदनुभवत्वं तत्त्वमित्यास्तामलं व्यभिचारीत्यन्तेनेत्यत आह। उपमितित्वेति। उपमितित्वशाब्दत्वयोरतिदेशवाक्यार्थज्ञानपदज्ञानादिरूपजन्यज्ञानजन्यत्वाव्यभिचारित्वेनातिव्याप्तिरितिभावः। अतिव्याप्तिं निराकरोति। तद्भीति। उपमितित्वं शाब्दत्वं हीत्यर्थः। यथोक्तज्ञानेति। जन्यशब्दज्ञानेत्यर्थः। तदेवोपपादयति। उपमितीनामिति। अतिदेशेति। गोसदृशो गवयपदवाच्य इत्याकारकशब्दविषयकज्ञानजन्यत्वादित्यर्थः। सर्वासामिति। अनेनोपमितित्वस्य तादृशज्ञानजन्यत्वव्याप्यत्वं लब्धम्। एवं च तद्व्यभिचारित्वस्य तत्रासम्भवान्नातिव्याप्तिरिति भावः। शाब्दानुभवानां। शाब्दबोधात्मकानुभवानां। क्वचित् शब्दानुभवानामिति पाठः। तत्र शब्दप्रयोज्यानुभवानामित्यर्थः। अत्र च प्रथमजन्यत्वोपादानवैयर्थ्यमित्याशयेन शङ्कते। नचेति। व्यभिचा-

शब्दज्ञानजन्यत्वव्यभिचारीत्येव सम्यक् । अनुमितित्वस्य ईश्वरीयशब्दज्ञानजन्यत्वाव्यभिचारित्वेनासम्भवात् । नच मोक्षजनकतावच्छेदकं तत्त्वज्ञानवृत्ति सामान्यं जन्यज्ञानजन्यसाक्षाद्वृत्तीत्यतिव्याप्तिः । तस्य शब्दविशेषविषयकमननजन्यसाक्षाद्वृत्तित्वेन जन्यशब्दज्ञानजन्यत्वाव्यभिचारित्वात् । जातिपदं वा मानसवृत्तिजातिपरम् । अतएव भ-

---

वीति । व्यभिचारीत्येव कारेणाच प्रथमजन्यत्वव्यवच्छेदः । उत्तरयति । अनुमितित्वस्येति । असम्भवादिति । तथाच तादृशजात्यप्रसिद्ध्या तद्वत्त्वमादाय न लक्षणगमनसम्भव इति भावः । अतिव्याप्तिं शङ्कते । नचेति । निषेधति । तस्येति । तत्त्वज्ञानवृत्तिवैजात्यस्येत्यर्थः । शब्देति । आत्मा शरीरादिभ्यो भिन्नः तत्त्वमसीत्यादिवाक्यविशेषविषयकेत्यर्थः । इदं च मनने शब्दस्याप्युपनीतभानमभिप्रेत्य । अव्यभिचारित्वादिति । तथा च तस्य शब्दज्ञानजन्यत्वव्यभिचारित्वाभावादेव वारणमिति भावः । ननु निदिध्यासनोपक्षीणं मननं न तत्त्वज्ञानजनकमत स्तस्यापि शब्दज्ञानजन्यत्वव्यभिचारित्वमेवेत्यत आह । जातिपदंवेति । वाकारस्तु तत्त्वज्ञानस्य मननजन्यत्वानङ्गीकारेऽपि न क्षतिरिति सूचनाय । यद्वा । ननु शरीरादिभिन्नत्वेन श्रुतस्यात्मनः युक्तिभिरनुचिन्तनं मननं । तदुक्तं । "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरिति" । तच्चानुमानादिजन्यमनुमित्यात्मकमेव । अनुमितावुपनीतभाननिषेधेन च तस्य शब्दविषयकत्वासम्भवाल्लिङ्गोपहितलैङ्गिकभाने प्रमाणाभावेन लिङ्गविधयापि शब्दस्यानुमितौ भानासम्भवाच्च । तथाच जन्यशब्दज्ञानजन्यत्वव्यभिचारित्वं तस्याक्षतमेवेत्यत आह । जातिपदं वेति । वाकारश्चात्र मननस्य शब्दविषयकत्वानभ्युपगमेऽपि न क्षतिरित्येतत्सूचनायेति । केचित्तु शब्दविशेषविषयकेति । "श्रोतव्यो मन्तव्यश्चेत्यादि" श्रुतिवाक्यरूपशब्दज्ञानेत्यर्थः । जन्यशब्देत्यादि । जन्यत्वं प्रयोज्यत्वं जन्यशब्दज्ञानप्रयोज्यत्वाव्यभिचारित्वादित्यर्थः । तथाच जन्यशब्दधीजन्यत्वव्यभिचारित्वपदेनजन्यशब्दज्ञानप्रयोज्यत्वव्यभिचारित्वमेवविवक्षणीयं तत्त्वज्ञानवृत्तिवैजात्यस्य च जन्यशब्दज्ञानप्रयोज्यत्वव्याप्यत्वादेव नातिव्याप्तिरिति भावः । ननु

क्तित्वश्रद्धात्वादेर्व्युदासः। अनुभवपदं स्मृतिवारणायेति दिक्

---

भक्तित्वादिवारणाय जातिपदस्य मानसावृत्तिजातिपरत्वावश्यकत्वे तत एवा-
न्याप्यतिप्रसङ्गवारणे किं जन्यत्वपदस्य प्रयोज्यत्वपरत्वमङ्गीकृत्य तादृशा-
तिव्याप्तिवारणेनेत्यत आह । जातिपदं वेति । वाकारस्य जन्यत्वपदस्य
प्रयोज्यत्वपरत्वाभावेऽपि न क्षतिरिति सूचनायेत्याहुः । तदसत् । जन्यशब्द
ज्ञानप्रयोज्यत्वव्यभिचारित्वविवक्षणे वेदादिवाक्यरूपशब्दज्ञानजन्यादृष्ट-
जन्यत्वस्यानुमितावपि सत्त्वेनानुमितित्वस्यापि तत्प्रयोज्यत्वव्यभिचारित्वा-
भावादसम्भवापत्तेरिति । अतएवेति । जातिपदस्य मानसावृत्तिजातिपर-
त्वादेवेत्यर्थः । भक्तित्वेति । आराध्यत्वेन ज्ञानं भक्तिः आराधना च गौर-
वितप्रीतिहेतुभूता क्रिया फलावश्यं भावनिश्चयश्च श्रद्धेति तल्लक्षणे बोध्ये ।
आराध्यव्यक्तिज्ञानं विना आराध्यत्वेन ज्ञानासम्भवात् एवं फलज्ञानं विना
फलावश्यं भावनिश्चयासम्भवाच्च । भक्तित्वश्रद्धात्वयो र्जन्यज्ञानजन्यत्वाव्य-
भिचारित्वस्य सत्त्वात् जन्यशब्दधीजन्यत्वव्यभिचारित्वस्यापि सत्त्वाच्च त-
त्रातिव्याप्तिः । जातिपदस्य मानसावृत्तिजातिपरत्वे चैतयो र्मानस
वृत्तित्वेन नातिप्रसङ्ग इति । ननु भक्तित्वश्रद्धात्वादे र्जातित्वे मानाभावा-
देव नातिव्याप्तिरित्यत आह । आदेरिति । आदिना आपत्तित्वपरिग्रहः ।
आपाद्यत्वस्य विधेयत्वातिरिक्तत्वे मानाभावेन वह्न्यनुमित्यनन्तरमपि वह्नि-
मापादयामीति प्रतीत्यापत्तेः । तादृशानुव्यवसायं प्रति वह्निविधेयका-
पत्तित्वेनैव हेतुतया आपत्तित्वजातेरावश्यकत्वेन तद्वारणाय जातिप-
दस्य मानसावृत्तिजातिपरत्वमावश्यकमिति हृदयम् । अनुभवपदव्यावृत्ति-
माह । अनुभवपदमिति । स्मृतिवारणायेति । स्मरामीत्यनुगतप्रतीत्या
अनुभवसामग्रीप्रतिबध्यतावच्छेदकतया वा सिद्धं स्मृतित्वमादायातिव्या-
प्तिवारणायेत्यर्थः । अनुभवपदोपादाने च स्मृतिभिन्नज्ञानत्वरूपानुभवत्व-
स्य स्मृतावसत्त्वान्नातिव्याप्तिरिति भावः । ननु तथाप्येतादृशपरोक्षत्व-
जातिमादायैतल्लक्षणस्य शाब्दबोधादावतिप्रसङ्गः । नच तादृशजातौ मा-
नाभावः । अनुमित्यादिस्थलीयबाधादिप्रतिबध्यतायामाहार्यप्रत्यक्षे व्य-
भिचारवारणाय प्रत्यक्षान्यज्ञानत्वस्यावश्यं निवेशनीयतया तयो र्मिथो-
विशेषणविशेष्यभावे विनिगमनाविरहेण गौरवात्तदपेक्ष्य परोक्षत्वजाते-
रेव प्रतिबध्यतावच्छेदकत्वौचित्यादित्यत आह । दिगिति । अनुभवत्वं वि-

त्वाय परोक्षत्वं स्मृतौ परोक्षत्वं विहायानुभवत्वं प्रत्यक्षे अनुमितौ चोभयोः समावेश इति अनुभवत्वेन सङ्कारान्न परोक्षत्वं जातिः । एवं भिन्नविषयकानुमित्साविशिष्टानुमितिसामग्रीप्रतिबध्यतावच्छेदकतया सिद्धानुमित्यन्यज्ञानत्वरूपजातिमादाय सङ्कराच्च । विधेयताया आपत्तिसाधारण्येन बाधप्रतिबध्यतावच्छेदकतःसम्भवेप्यनुमित्यादौ विशिष्यानुमितित्वादिकं निवेश्यैव बाधबुद्धेः प्रतिबन्धकत्वमिति नाहार्यप्रत्यक्षे व्यभिचारः । अतएव शाब्दबोधे बाधबुद्धेः प्रतिबन्धकत्वस्याक्लृप्ततया लाघवाद्योग्यताज्ञानं शाब्दहेतुरिति सिद्धान्तः । अन्यथा प्रत्यक्षान्यज्ञानत्वं निवेश्यैव वाहार्यप्रत्यक्षे व्यभिचारो वारणीयः । वस्तुतस्तु जन्यतासम्बन्धेन बाधविशिष्टान्यज्ञानत्वावच्छिन्नं प्रति बाधाभावस्य हेतुत्वोपगमेन प्रत्यक्षानुमित्यादिसाधारणैककार्यकारणभावेनैवोपपत्तेः । परोक्षत्वनिवेशस्यानर्थक्यात् । इच्छाविशिष्टत्वावच्छिन्नं प्रति इच्छात्वेन हेतुतया च नेच्छाशून्यकाले बाधकाले विशिष्टबुध्यापत्तिः । अन्यथेच्छाया उत्तेजकत्वेऽप्राशस्त्यज्ञानाभावादिभि विशेषणविशेष्यभावे विनिगमनाविरह इत्यादिकं वहुतरमूहनीयं । नन्वनुमितित्वजातौ मानाभावेन लक्षणमसम्भवि । न चानुमिनोमीत्यनुव्यवसायविषयतया तत्सिद्धिः । योग्यात्मविशेषगुणानां विषयविनिर्मोकेण भानानुपगमात् । केवलमनुमिनोमीत्यनुव्यवसायस्यासिद्धेः । नच पर्वते वह्निमनुमिनोमीत्यनुव्यवसायविषयतया तत्सिद्धिरिति वाच्यं । वह्निप्रकारकानुमितित्वस्य तद्विषयत्वे वह्निमान् पर्वतो घटवान् इत्यनुमित्यनन्तरं तादृशानुव्यवसायापत्तेः । वह्निनिष्ठविधेयताशालिज्ञानत्वस्य तद्विषयत्वावश्यकत्वेऽनुमितित्वस्यानिवेशात् तद्विषयतया तत्सिद्धेरभावात् । नच पर्वतोद्देश्यकवह्निविधेयकानुमितित्वस्य धूमपरामर्शजन्यतावच्छेदकतया तत्कोटिप्रविष्टत्वेन तत्सिद्धिरिति वाच्यं । साधनादिभेदेन व्याप्तेर्भिन्नतया आलोकपरामर्शजन्यानुमितौ व्यभिचारवारणाय स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन धूमपरामर्शविशिष्टानुमितित्वस्य तत्कार्यतावच्छेदकत्वावश्यकत्वे तत्रानुमितित्वमनिवेश्य धूमपरामर्शविशिष्टज्ञानत्वस्यैव तत्त्वोपगमात् तत्कोटिप्रविष्टतया तत्सिद्धेरसम्भवात् । एवंसिध्यभावविशिष्टज्ञानत्वस्यैव सिध्यभावकार्यतावच्छेदकतया तत्कार्यतावच्छेदकतयापि न तत्सिद्धिरिति चेन्मैवं । वह्निनिष्ठविधेयताशालिज्ञानत्वस्य वह्निमनुमिनोमीत्यनुव्यवसायविषयत्वे पर्वतो वह्निमान् स्यादित्याहार्यज्ञानानन्तरमपि तादृशानुव्यवसायापत्तेः । तथाहि व-

ह्निमापादयामीत्यनुव्यवसायस्य वन्हिप्रकारकापत्तिविषयकत्वे वन्हिमान् पर्वतो घटवान् स्यादित्यापत्त्यनन्तरमपि तादृशानुव्यवसायापत्त्या वन्ह्यापाद्यकापत्तित्वमेव तद्विषयो वाच्य: । तत्र चापाद्यत्वस्यापाद्यभेदेन भिन्नस्यातिरिक्तस्य कल्पने गौरवादनुमित्यादिसाधारणविधेयत्वमेवापाद्यत्वं तथाचानुमित्यनन्तरमापादयामीत्यनुव्यवसायापत्त्या आपत्तित्वस्येवापत्त्यनन्तरमनुमिनोमीत्यनुव्यवसायापत्तेरनुमितित्वस्यापि सिद्धे: । एवं पर्वत वन्हिरित्यादिशाब्दबोधानन्तरमपि तादृशानुव्यवसायापत्ति: । शाब्दबोधे प्राङ्निर्दिष्टस्यैवोद्देश्यत्वेन चरमनिर्दिष्टस्य च विधेयत्वेन तत्र वन्हौ विधेयताया आवश्यकत्वात् । अन्यथा तत्र वन्हिपर्वतवृत्तित्वयोरेवोद्देश्यविधेयभावस्वीकारे पर्वते वन्हि: वन्हि: पर्वत इति शाब्दबोधयोरुद्देश्यविधेयभावावैलक्षण्येनावैलक्षण्यप्रसङ्गात् । अथ विधेयतायामनुमितित्वे च मानाभाव: वन्हिप्रकारकज्ञानत्वस्यैव वन्हिमनुमिनोमीत्यनुव्यवसायविषयत्वात् विषयतया तादृशानुव्यवसायं प्रति तत्तदनुमितिसामग्रीविशिष्टज्ञानत्वेन तादात्म्यप्रत्यासत्त्या हेतुत्वं । कार्यतावच्छेदकं च वन्हिप्रकारकतत्तदनुमितिसामग्रीविशिष्टज्ञानविषयकमानसत्वमेव । तत्तदनुमितिसामग्रीच बाधाभावसिषाधयिषाभावतत्तत्परामर्शादिरूपा । सामग्रीवैशिष्ट्यं च स्वसामानाधिकरण्य स्वाव्यवहितोत्तरत्वोत्पत्तिकत्वसम्बन्धेन । नचतदपेक्ष्य वन्हिनिष्ठविधेयताशाल्यनुमितित्वेन हेतुत्वे लाघवाद्विधेयताया अनुमितित्वस्य च सिद्धिरिति वाच्यं । लाघवमात्रेणातिरिक्तविषयता सिद्धौ अव्यवहितोत्तरत्वादेर्निवेशे गौरवेण धूमपरामर्शजन्यतावच्छेदककोटिप्रविष्टत्वेनाप्यतिरिक्तविषयतासिद्धिप्रसङ्गात् । एवमनुमितिं प्रति विलक्षणविषयताशालिज्ञानत्वेन हेतुतयैवोपपत्तौ व्याप्त्यादिविषयतानिवेशे प्रयोजनाभावाच्चेति लाघवमात्रेणातिरिक्तविषयतासिद्धेरभावात् विधेयतायां मानाभावेन सामग्रीविशिष्टज्ञानत्वेन हेतुत्वस्यावश्यकत्वे विधेयतायामिवानुमितित्वेऽपि मानाभाव इति चेन्न । लाघवेनातिरिक्तविषयताया अनभ्युपगमेऽपि आपत्त्यनन्तरं तादृशानुव्यवसायवारणाय बाधाभावस्यावच्छेदककोटौ निवेशे गौरवात् । तदघटितानुमितिसामग्रीविशिष्टवन्हिप्रकारकानुमितित्वेन हेतुत्वेनैवापत्त्यनन्तरं तादृशानुव्यवसायवारणे लाघवेनानुमितित्वजातेरावश्यकत्वात् । वस्तुतस्तु सामग्रीजन्यत्वानुपस्थितिदशायामपि वन्हिं नानुमिनोमीत्यनुव्यवसायोद-

ननु किमिदं तत्करणमिति चेत् । व्याप्तिविशिष्टपक्षधर्मताघटकलघुपदार्थज्ञानमिति गृहाण ।

॥ ननु केयं व्याप्तिः न तावत्साध्यात्यन्ताभाववदवृत्तित्वं पर्वतीयवन्ह्यत्यन्ताभाववति धूमस्य सत्त्वात् । नच साध्यवदन्या-

---

यासामग्रीजन्यज्ञानत्वावच्छिन्नाभावस्य तद्विषयत्वाभावेन वन्हिर्निविधेष्ठ-यताशाल्यनुमितित्वावच्छिन्नाभावस्य तद्विषयत्वावश्यकत्वात् । वन्हिनिष्ठविधेयताया अनुमितित्वजातेश्च सिद्धिः । नच स्वव्याप्यवत्तापरामर्शादिघटितसामग्रीविशिष्टज्ञानत्वसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगितावच्छेदकताकज्ञानाभाव एव तद्विषय इति वाच्यं । तस्य सम्बन्धत्वे मानाभावात् तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्ववृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकतानवच्छेदकत्वाच्चेतिक्तं पल्लवितेन ॥ १

ननु ज्ञायमानलिङ्गस्यानुमितिकरणत्वेऽतीतानागतहेतुकानुमितेरपलापस्तस्यानुमितेः पूर्वमसत्त्वात् अन्यस्य च व्याप्यत्वेनाज्ञानात् व्याप्तेरैक्याभावेन यत्र विशेष्ये विशेषणमिति न्यायेन परामर्शस्तत्र परामर्शपूर्वं व्याप्तिज्ञानस्यासम्भवेन चव्याप्तिज्ञानत्वेनापि न करणत्वसम्भवइत्याशयेन पृच्छति । नन्विति । लघुपदार्थेति । हेतुसाध्याभावज्ञानादिकमित्यर्थः । नचाभावज्ञानत्वेन चानुमितिहेतुत्वे परामर्शादिशून्यकालेप्यनुमित्यापत्तिरिति वाच्यं । विशेषसामग्रीसहकृताया एव सामान्यसामग्र्याः फलोपधायकत्वेन परामर्शाद्यभावेनापत्त्यभावादिति वक्ष्यति । अत्र यद्यपि व्याप्तिघटकेत्येव वक्तुमुचितं तथापि व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपपरामर्शद्वारा तस्य करणत्वसूचनाय तथोक्तम् । ननु व्याप्तेर्निर्वक्तुमशक्यतया कथं तद्घटकपदार्थज्ञानं करणमित्याशयेन पृच्छति । ननु केयमिति । साध्यात्यन्ताभाववदिति । वन्हिमान् धूमादित्यादौ वन्ह्यभाववति जलह्रदादौ धूमस्याविद्यमानत्वाल्लक्षणसमन्वयः । धूमवान् वन्हेरित्यत्र धूमाभाववति अयोगोलकादौ वन्हेर्विद्यमानत्वान्नाति व्याप्तिः । पर्वतीयेति । पर्वतीयवन्हेस्तद्व्यक्तित्वेनात्यन्ताभाववतीत्यर्थः । पूर्वक्षणवृत्तित्वविशिष्टवन्ह्यभाववन्हिघटोभयाभावसमवायसम्बन्धावच्छिन्नवन्ह्यभावादीनां वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छि-

कप्रतियोगिताकत्वेन साध्याभावविशेषणेन वारणं सम्भवतीति तत्परित्यागः । ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभाववत्त्वं व्याप्तिः । समवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकवह्न्यभाववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वनिवेशः । अतएव पर्वतीयवह्न्यभावस्यापि निरासः । नच पर्वतीयवह्नित्वं पर्वतीयत्वविशिष्टवह्नित्वं तथाच विशिष्टस्यानतिरेकात् वह्नित्वावच्छिन्नप्रतियोगिताकत्वमस्त्येवेति वाच्यं । साध्यतावच्छेदकावच्छिन्नेत्यस्य साध्यतावच्छेदकपर्याप्तावच्छेदकताकत्वार्थकत्वेन पर्वतीयत्ववह्नित्वोभयपर्याप्तावच्छेदकतायाः शुद्धवह्नित्वपर्याप्तत्वाभावेनानुपपत्त्यभावात् । यद्विचोभयादेः प्रत्येकानतिरिक्ततया पर्वतीयत्ववह्नित्वोभयपर्याप्तावच्छेदकताया अपि शुद्धवह्नित्वादुक्तदोषस्तदवस्थ एवेति विभाव्यते । तदा साध्यतावच्छेदकभिन्ननिष्ठावच्छेदकत्वानिरूपकत्वे सति किञ्चिदवच्छेदकत्वानिरूपितसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकप्रतियोगिताकत्वमिति निष्कर्षो बोध्यः । सत्यन्तनिवेशात् पर्वतीयत्ववह्नित्वोभयावच्छिन्नप्रतियोगिताकमादाय विशेष्यदलनिवेशाच्च पर्वतीयत्वविशिष्टवह्नित्वावच्छिन्नाभावमादाय यथायथं नाप्रसङ्गः । वह्न्यभाववति धूमावयवे धूमस्य समवायेन सत्त्वात् हेतुतावच्छेदकसम्बन्धनिवेशः । धूमाभाववज्जलह्रदवृत्तित्वाभावस्य वह्नौ सत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय सामान्याभावेति । इत्थं चायोगोलकवृत्तित्वस्यापि सामान्यान्तर्गततया तदभावस्य हेतावसत्त्वान्नातिव्याप्तिः । नच तथाप्ययोगोलकवृत्तित्वघटोभयाभावस्य हेतौ सत्त्वादतिप्रसङ्गतादवस्थ्यमिति वाच्यं । तादृशवृत्तित्वत्वावच्छिन्नाभावस्य सामान्याभावपदेन लाभात् । अथ कालिकसम्बन्धेन वह्न्यभाववति पर्वतादौ धूमस्य सत्त्वात् साध्याभाववत्त्वमभावीयदैशिकविशेषणताविशेषेणैव वाच्यम् एवं घटत्वाभाववान् पटत्वादित्यादौ घटत्वाभावाभावस्य घटत्वरूपस्य समवायेनैव सत्त्वादभावीयविशेषणतया तदधिकरणाप्रसिद्धिः ।

अत्र केचित् । भूतले घटो नास्तीत्यत्रेव घटाभावो नास्तीति प्रतीतावपि अभावीयदैशिकविशेषणताविषयकत्वमनुभूयत इति भावाभावसाधारणीं विशेषणतामङ्गीकृत्याप्रसिद्धिं परिहरन्ति । तदसत् । तथा सति

कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्याकाशाभावाभावस्य साध्यतायामात्मत्वादिहेतावव्याप्तेः आकाशाभावरूपसाध्याभावीयविशेषणतया आत्मनि वृत्तेः एवं भावाभावसाधारणविशेषणतास्वीकारेऽभावीयविशेषणतया भूतलवृत्तिर्घट इति प्रतीत्यापत्तिश्चेति चेन्नैवं । साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन साध्याभाववद्वृत्तस्य विवक्षितत्वात् घटत्वाभाववान् पटत्वादित्यादौ समवाय एव घटत्वाभाववत्ताग्रहविरोधितानियामक इत्यप्रसिद्धेरसम्भवात् । ननु तथापि जातिमान् सत्त्वादित्यादौ जात्यभाववत्सामान्यादिनिरूपितहेतुतावच्छेदकसमवायेन वृत्तित्वाप्रसिद्ध्याऽव्याप्तिरिति चेन्न । साधिकरणावृत्तिसाध्याभाववत्त्वमित्यस्य तदर्थत्वात् । अथैवमपि धूमाधिकरणे कालिकसम्बन्धेन वन्ह्यभावसत्त्वादव्याप्तिः । अभावीयविशेषणतया ऽवृत्तित्वनिवेशे च घटत्वाभाववान् प्रमेयत्वादित्यत्रातिव्याप्तिः । घटत्वाभावाभावस्य घटत्वस्य विशेषणतया वृत्तेः तथाच साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन वृत्तित्वस्यावश्यं निवेशनीयतया सत्ताभाववान् जात्यभावादित्यत्राव्याप्तिः जात्यभावाधिकरणसामान्यादिनिरूपितसाध्यवत्ताग्रहविरोधितानियामकसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरिति चेन्न । साधिकरणावृत्तिसाध्याभावाधिकरणताकत्वस्य विवक्षितत्वात् । साध्याभावाधिकरणता च साध्यवत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्ना बोध्या । अत्र वृत्तित्वं स्वरूपसम्बन्धेनैव ग्राह्यम् । इदं च जात्यभावाधिकरणसामान्यादिनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य प्रमेयत्वादौ प्रसिद्धत्वात् तदभावस्य च सत्ताभावाभावाधिकरणत्वे सत्त्वेनानुपपत्त्यभावादिति । अव्याप्यवृत्तिसाध्यकेऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यमप्यत्र निवेशनीयम् । केचित्तु हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः साध्याभाववद्वृत्तित्वसामान्याभावो व्याप्तिः । तेन सत्तावान् जातेरित्यादौ न कापि दोष इत्याहुः । अपरे तु साध्याभाववदवृत्तित्वमित्यत्र सत्तावान् जातेरित्यादावप्रसिद्धिवारणाय हेतुतावच्छेदकसम्बन्धसामान्ये साध्याभाववदनुयोगिकत्वप्रतियोगिकत्वतदुभयाभावविशिष्टत्वं व्याप्तिरित्याहुः । इति न काप्यनुपपत्तिरिति चेत् । अत्रोच्यते । तथापि केवलान्वयिनि साध्याभावाप्रसिद्ध्या व्याप्तिलक्षणमव्याप्तमेव । नन्वव्याप्तिर्नाम अनुमितिकरणत्वेनाभिमतस्य व्याप्तिज्ञानस्य व्यतिरेकव्यभिचार एवं स च न सम्भवति वस्तुगत्या वाच्यत्वाभावाप्रसिद्धावपि प्रतियोगितया वा-

वृत्तित्वं वह्निमत्पर्वतान्यचत्वरवृत्तित्वाद्धूमस्य । अथ साध्य-
वत्त्वावच्छिन्नान्योन्याभाववदवृत्तित्वं विवक्षितं । नच धूमवति

---

च्यत्वीयोऽभाव इत्याकारकभ्रमात्मकज्ञानमादायानुमितेरुपपन्नत्वात् ।
तथाहि साध्यनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपित अधि-
करणनिष्ठविषयतानिरूपितवृत्तित्वनिष्ठविषयतानिरूपिताभावनिष्ठविषय-
तानिरूपितहेतुतावच्छेदकावच्छिन्न हेतुनिष्ठविषयतानिरूपितपक्षनिष्ठवि-
षयताशालिज्ञानत्वेनैवानुमितिहेतुत्वं तच्च भ्रममादायोपपद्यत एव । अथ
अभावो न वाच्यत्वीय इत्येतादृशविशेषदर्शनकाले तदनुपपत्तिरेव । न च
तदानिष्यत एवानुमितिरिति वाच्यं । तस्या स्तदाप्यनुभूयमानत्वादिति चेत्
तथापि निर्धर्मितावच्छेदकज्ञानस्य बाधबुद्ध्यप्रतिबध्यतयाऽभावो न वा-
च्यत्वीय इति ज्ञानकालेपि प्रतियोगितया वाच्यत्वीय इति निर्धर्मितावच्छे-
दकज्ञानोत्पत्तौ बाधकाभावेनानुमितेरुपपत्तेः । अभावत्वमनिवेश्य साध्यी-
यवदवृत्तित्वज्ञानस्यैव चानुमितिहेतुत्वादिति चेन्नैवम् । अवृत्तित्वज्ञानस्य
निर्धर्मितावच्छेदकज्ञानं प्रत्यपि प्रतिबन्धकतया प्रतियोगितया वाच्यत्व-
मवृत्तीति ज्ञानकाले वाच्यत्वीयवदवृत्तित्वज्ञानस्याप्यसम्भवेनानुमित्युप-
पादनस्य दुरुद्धरत्वादिति निपुणतरमालोचनीयं सूक्ष्मदर्शिभिरिति ॥

ननु नीलघटे यत् किञ्चिद्घटप्रतियोगिकभेदसत्त्वेन नीलघटो घटान्य इ-
त्यादिवाक्यस्यापि प्रामाण्यापत्तिरित्य न्वयितावच्छेदकावच्छिन्नप्रतियोगि-
ताकान्योन्याभावबोधं प्रत्येव किञ्चित्पदसमभिव्याहृतान्यादिपदज्ञानत्वेनहे
तुत्वमुपेयम् । एवं च प्रकृतेपि साध्यवत्पदसमभिव्याहृतान्यादिपदज्ञानस्य
साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावबोधकत्वमेव तथाच साध्यवत्त्वाव
च्छिन्नप्रतियोगिकान्योन्याभाववदवृत्तित्वमेव लक्षणं लभ्यते । तत्र च नोक्तदोष
इत्याशयेनाशङ्कते । अथेति । साध्यवत्त्वेति । साध्यतावच्छेदकावच्छिन्नसाध्यव-
त्त्वेत्यर्थः । अन्यथा साध्यवत्त्वस्य साध्यस्वरूपत्वे न पर्वतीयवह्निमदन्योन्याभा-
वावारणात् । साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितसाध्यनिष्ठावच्छेद-
कतानिरूपकप्रतियोगिताकान्योन्याभाववदवृत्तित्वमिति तु निष्कर्षः । सा-
ध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तीन पूर्वोक्तलक्षणेपि
चालनीन्यायेनाव्याप्तिनिराससंभवेप्यत्यन्ताभावस्याव्याप्यवृत्तितया संयोगि

वह्निमत्त्वावच्छिन्नान्योन्याभावो वर्तते । धूमवान्वह्निमानिन्त्यप्रतीतेरिति चेन्न । केवलान्वयिसाध्यकाव्याप्तेः । अत्र मीमांसकाः केवलान्वयिसाध्यकमनुमानमेव न क्व तावदव्याप्त्यवकाश इत्याहुस्तन्न । इह मेयत्वमनुमिनोमीत्यनुभवापलापापत्तेः । नच कारणबाधाद्भ्रान्तिरियं । व्यभिचारेणैव तद्बुद्धेः कारणत्वासिद्धेः ॥ सौगतास्तु केवलान्वयिनि

---

द्रव्यत्वादित्यादावव्याप्तिः । इह चान्योन्याभावस्य व्याप्यवृत्तितया संयोगवदन्योन्याभावस्य द्रव्ये ऽसत्त्वेनैव नाव्याप्तिरिति पूर्वं च प्रतियोगिवैयधिकरण्यादिनिवेशानौरवमिति न तत्र तथा विवेचितमिति ध्येयम् । अव्याप्तिं निरस्यति । नचेति । नह्येत्यर्थः । केवलान्वयीति । इदं प्रमेयं वाच्यत्वादित्यादावित्यर्थः । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं प्रमेयत्वस्य च सार्वत्रिकत्वेन तदन्याप्रसिध्याऽव्याप्तिरिति भावः । लाघवात्साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानमेवानुमितिहेतु केवलान्वयिनि च तादृशज्ञानासंभवेनानुमितिरेवानेपेयते एवं च न क्वाप्यव्याप्तिरिति मीमांसकमतमुपदर्शयति । अत्र मीमांसका इति । इहमेयत्वमिति । साध्यवदन्यावृत्तित्वज्ञानाभावेनानुमित्यसंभवादनुमिनोमीत्याकारकतल्लौकिकप्रत्यक्षानुदयापत्तिरित्यर्थः । नचान्योन्याभावे प्रमेयत्वप्रतियोगिकत्वभ्रमदशायामेव तादृशानुभवोपपत्तिरिति वाच्यं । तथापि प्रमेयत्वस्य केवलान्वयित्वज्ञानदशायां तादृशप्रतीत्यनुपपत्तितादवस्थ्यात् । कारणबाधात् । विशेषदर्शनदशायां साध्यवदन्यावृत्तित्वज्ञानस्यानुमितिकारणत्वेनाभिमतस्य बाधात् । असंभवात् । भ्रान्तिरिति । इयं । मेयत्वमनुमिनोमीति प्रतीतिः । मेयत्वविधेयकानुमितिरेव तादृशानुव्यवसायविषयः कारणबाधेन च प्रमेयत्वविधेयकानुमितेरनुत्पत्त्याविषयबाधेन तादृशप्रतीतेर्भ्रमत्वमित्यर्थः । व्यभिचारेण । व्यतिरेकव्यभिचारेण तद्बुद्धेः । साध्यवदन्यावृत्तित्वरूपव्याप्तिबुद्धेः । कारणत्वासिद्धेरिति । सिद्धेतस्य कारणत्वे तदभावेन न तथानुमितिरित्युपेयं तादृशानुमितावेवव्यभिचारेण च तस्यैव कारणत्वमसिद्धं । न च परेण तादृशानुमितिरेव नेष्यत इतिवाच्यं । तत्रानुभवस्य प्रमाणत्वेन दर्शितत्वात् । यथाकथञ्चित् प्रतीतेः प्रमात्वस्य शक्योपपादनत्वे प्रतीतेर्भ्रमत्वकल्पनाया अन्याय्यत्वाच्च । अन्यथा क्वापि विषयव्यवस्थानस्यादिति भावः । साध्यवदन्यत् । प्रमेयत्ववदन्यत् अलीकमित्यनेन प्रमेयत्वशून्यत्वं सूचितम् । नन्वलीकस्यज्ञान विषयत्वेमाना

साध्यवदन्यदलीकमेव असत्ख्यातिसिद्धं तत्। तद्वृत्तित्वज्ञानादेवानुमितिरित्याहुः। तन्न॥ असत्ख्यातेरसिद्धेः। किं च ज्ञेयत्वसाध्यके इत्थमप्यव्याप्तिर्दुर्वारा। न त्वयलीकमङ्गेयं भवद्भिरिष्यते। अन्ये तु कार्त्स्न्येन सम्बन्धो व्याप्तिरित्याहुः। अत्र वदन्ति। कोयं कार्त्स्न्येन सम्बन्धः। कृत्स्नेन साध्येन हेतोः सम्बन्धः। कृत्स्ने हेतौ साध्यसामानाधिकरण्यं वा। कृत्स्ने हेतुमति साध्यवत्त्वं वा। नाद्यः प्रसिद्धानुमानेऽव्याप्तेः। नहि धूमे सकलवह्निसामा-

---

भाव इत्यत आह। असदिति। शशशृङ्गमिति। प्रतीतिविषयस्य शशीयशृङ्गस्यापारमार्थिकत्वेनालीकत्वमेवेति भावः। असत्ख्यातेरिति। ज्ञानविषयत्वस्य कालसम्बन्धित्वव्याप्यत्वादित्यर्थः। तेन न सिद्ध्यसिद्धिव्याघातः। असतोपि भाने कालसम्बन्धिन्यलीक एव ज्ञानविषयत्वसत्त्वेन न तद्व्याप्यत्वं तस्य सम्भवतीत्यर्थस्तन्निरासात्। शशशृङ्गमित्यादिप्रतीतेश्च शृङ्गस्य शशीयत्वेन भानोपगमेनान्यथाख्यात्यैवोपपत्तेरिति न तदन्यथानुपपत्त्या तत्सिद्धिरिति भावः। ननु आयात्वसत्ख्यातिस्तथापि प्रमेयत्वसाध्यकाव्याप्तिपरिहारेपि ज्ञेयत्वादिसाध्यके सा दुर्वारेतिचेत् "तुष्यतुदुर्जन" इति न्यायेनाह। किञ्चेति। कश्चित्तु सिद्ध्यसिद्धिव्याघातादाह। किञ्चेतीति। तदसत्। उक्तरीत्या तत्परिहारात्। इत्थमपीति। असत्ख्यातिस्वीकारेपीत्यर्थः। अव्याप्तिः। साध्यवदन्याप्रसिद्धिनिबन्धनाव्याप्तिः। तथा व्याप्तिमेव दर्शयति। नहीति। भवद्भिः। असत्ख्यातिवादिभिः। विरोधादिति शेषः। लौकायतीकारमतमाशङ्कते। अन्येत्विति। सम्बन्धः। साध्यसामानाधिकरण्यं। धूमवान् वह्नेरित्यादौ वह्नौ धूमसामानाधिकरण्यसत्त्वादतिव्याप्तिरतः। कार्त्स्न्येनेति। अयोगोलकीयवह्नौ धूमसामानाधिकरण्याभावेन कार्त्स्न्येन सम्बन्धाभावान्नदोषः। अत्रास्वरसमाह। तत्रेति। तत्र। लक्षणवाक्ये। वदन्ति। दूषणं वदन्ति। कार्त्स्न्यं साध्ये साधने साधनवतिवेति प्रश्नमुखेन तदेवाह। कोयमिति। साध्ये कार्त्स्न्यं दूषणेनैव साध्यवति कार्त्स्न्यविवक्षणे दूषणसम्भवेन पृथक् तन्नोट्टङ्कितं। प्रसिद्धानु-

नाधिकरण्यमस्ति । अयः पिण्डीयवन्हेः सामानाधिकरण्या-भावात् न द्वितीयः एकव्यक्तिकहेतावव्याप्तेः । न तृतीयः एकमात्रवृत्तिहेतावव्याप्तेः ॥

---

माने । वन्हिमान् धूमादित्यादौ । अव्याप्तिमेव विवृणोति । नहीति । अयःपिण्डीयवन्हेरिति । अत्र निरूपितत्वं षष्ठ्यर्थः । अयःपिण्डीयवन्हिनिरूपितसामानाधिकरण्याभावादित्यर्थः । एकव्यक्तीति । द्रव्यं पृथिवीत्वादित्यादावित्यर्थः । अत्र हेतोरैक्येन अनेकाश्रितत्वरूपत्वकार्त्स्न्यासम्भवादव्याप्तिरिति भावः । एकमात्रवृत्तीति । एतद्रूपवान् एतद्रसादित्यादावित्यर्थः । तत्र हेतुमत ऐक्येन हेतुमति उक्तरूपकार्त्स्न्यासम्भवादिति भावः ॥

ननु हेतावेव कार्त्स्न्यं विवक्षितं तथाच प्रकृते कार्त्स्न्यस्य व्यापकत्वरूपतया हेतुतावच्छेदकव्यापकसाध्यसामानाधिकरण्यवत्त्वमिति निष्कर्षइतिचेन्न । द्रव्यं सत्त्वादित्यादौ सत्ताया एकव्यक्तिकत्वेन सत्तात्वव्यापकद्रव्यत्वसामानाधिकरण्यसत्त्वादतिव्याप्तेः । ननु तथापि हेतुमति कार्त्स्न्यं विवक्षितं तथा च हेतुव्यापकसाध्यसामानाधिकरण्यं तत्त्वं । व्यापकत्वं चावच्छेदकतया यत्र यत्र धूमस्तत्र तत्रावच्छेदकतया वन्हिसामानाधिकरण्यसत्त्वाद् वन्हिमान् धूमादित्यादौ लक्षण समन्वयः । पर्वते धूमे वन्हिसामानाधिकरण्यमिति प्रतीतेः । अथवा हेत्वधिकरणताव्यापकसाध्याधिकरणताकत्वं तत्त्वमिति चेन्न साध्याधिकरणवृत्तित्वरूपसाध्यसामानाधिकरण्यस्य तत्तदाधेयभेदेन भिन्नतया तद्वन्निष्ठाभावाप्रतियोगित्वरूपव्यापकत्वस्यासम्भवात् प्रथमस्य दुष्टत्वात् द्वितीयेचैतदपेक्ष्य हेतुव्यापकं यत्साध्यं तत्सामानाधिकरण्यस्यैव लघुत्वात् तस्यापि च वक्ष्यमाणव्याप्त्यपेक्षया गुरुत्वेन हेयत्वादिति न किञ्चिदेतत् । ननु साध्यसमानाधिकरणाः स्वसमानाधिकरणाः यावन्तस्तत्त्वं व्याप्तिरित्येनेन यावन्तः साध्यसमानाधिकरणास्ते सर्वेपि हेतुसमानाधिकरणा इत्यर्थलाभः स्यात् । तच्च चायं गौरश्वत्वादित्यादौ गोत्वसमानाधिकरणद्रव्यत्वादीनामश्वत्वसमानाधिकरणत्वादतिव्याप्तिवारणाय यावत्पदनिवेशः इत्थं च गोत्वप्रकारकप्रमाविशेष्यत्वादीनामपि यावदन्तःपातितयाऽश्वत्वसामानाधिकरण्याभावेन च नातिव्याप्तिः

अन्योच्यते साध्यसमानाधिकरणस्यसमानाधिकरणयाव- त्कत्वं व्याप्तिः । यत्समानाधिकरणायावन्तः साध्यसमा- नाधिकरणास्तत्त्वं व्याप्तिरिति यावत् । भवति च धू- मसमानाधिकरणायावन्तो वह्निसमानाधिकरणा इति धूमे वह्निव्याप्तिः । ननु वह्नौ धूमस्य नहि वह्निसमानाधिक- रणा यावन्तो धूमसमानाधिकरणाः । अयःपिण्डत्व- स्य वह्निसमानाधिकरणस्य धूमासमानाधिकरणत्वात् ।

---

इदं तु न सङ्गच्छते । इदं वाच्यं ज्ञेयत्वादित्यत्र वाच्यत्वसमानाधिकरणानां यावतां ज्ञेयत्वसमानाधिकरणत्वात् लक्षणसम्भवेपि वह्निमान् धूमादि- त्यादौ वह्निसमानाधिकरणानामयोगोलकत्वादीनां धूमसामानाधिकरण्या- भावादव्याप्तिः धूमवान् वह्नेरित्यादावतिव्याप्तेश्चेत्यत आह । यत्समा- नाधिकरणा इति । वह्निसमानाधिकरणद्रव्यत्वादीनां धूमसमानाधिक- रणत्वाद्व्यभिचारिण्यतिव्याप्तिवारणाय यावन्त इति । इदमेव समुचयति । भवतिचेत्यादिना । धूमस्येति । निरूपितत्वं षष्ठ्यर्थः । धूमनिरूपितावह्नि- निष्ठा व्याप्ति र्नेत्यर्थः । अथ द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्येन सत्तासमानाधिकरणानां गुणत्वादी- नां द्रव्यत्वसामानाधिकरण्याभावादव्याप्तिः । एवं गुणकर्मान्यत्वविशिष्टस- त्तावान् जातेरित्यत्रातिव्याप्तिश्च । जातिसमानाधिकरणानां सर्वेषां स- त्तासामानाधिकरण्यादिति चेन्न । विशिष्टस्यातिरिक्तत्वमङ्गीकृत्यैतल्लक्ष- णाभिधानात् । विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्ये गुणः सत्तावानिति प्रतीतिवद् गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीत्यापत्ते र्विशिष्ट स्यातिरिक्तत्वमेवोपेयते । एवंच नोक्ताव्याप्त्यतिव्याप्ती । ननु विशिष्टस्या- तिरिक्तत्वेपि सत्ताधिकरणतायाः विशिष्टसत्ताधिकरणतायाश्चैक्ये न गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीत्यापत्तिवारणाय विशिष्टस्यातिरि- क्तत्वाङ्गीकर्त्रापि विशिष्टनिरूपिताधिकरणताया अतिरिक्तत्वमवश्यमङ्गी- कार्यम् एवं च किं विशिष्टस्यातिरिक्तत्वे नेति पूर्वोक्तदोषस्तदवस्थएवेत्य

यद्विशिष्टसमानाधिकरणायावन्तः साध्यसमानाधिकरणा

तो विशिष्टस्यानतिरिक्तत्वेऽपि लक्षणमाह । यद्विशिष्टेति । यद्विशिष्टसमानाधिकरणाः यावन्तः साध्यसमानाधिकरणा स्तद्वत्त्वं वेति पाठः । यत्पदं हेतुतावच्छेदकपरं । केचित्तु । विशिष्टस्यानतिरिक्तत्वे पूर्वोक्ताव्याप्तिव्याप्तौ इत्यतआह । यद्विशिष्टेति । तथाच पूर्वलक्षण एव हेतुतावच्छेदकसाध्यतावच्छेदकनिवेश इति भाव इत्याहुः । तदसत् । तद्वत्त्वं वेत्यनेन लक्षणान्तरत्वकथनस्यासङ्गतत्वापत्तेः । तस्मात्मदुक्तरीतिरेवानुसर्त्तव्या । द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र विशिष्टस्यानतिरिक्तत्वे नाव्याप्तिरतो यद्विशिष्टेत्युक्तं । नचैवमपि गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिः साध्यतावच्छेदकस्यापि निवेश आवश्यक इति वाच्यं । विशिष्टसत्तायाः विशिष्टनिरूपिताधारतासम्बन्धेन साध्यतायां जातिसमानाधिकरणगुणत्वादीनां विशिष्टनिरूपिताधारतासम्बन्धेन विशिष्टसत्ताधिकरणद्रव्यवृत्तित्वाभावेनातिव्याप्तेरभावात् । समवायेन तस्याः साध्यत्वे तु सद्धेतुत्वादेवोक्तदोषाभावादित्यभिप्रायात् । यदिच समवायेनैव तत्साध्यता गुणे गुणकर्मान्यत्वविशिष्टसत्तानास्तीति धीबलात् गुणकर्मान्यत्वविशिष्टसत्ताभावस्य गुणे सत्त्वेन विशिष्टसत्तात्वावच्छिन्नाभाववद्वृत्तितया व्यभिचारित्वं । नच विशिष्टसत्ताभावो न प्रतियोगिव्यधिकरण इति वाच्यं । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वस्यैव व्यभिचारतया तस्य तथापि सत्त्वात् अन्यथा भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादेर्व्यभिचारित्वानुपपत्तेः । लाघवेन निरवच्छिन्नसाध्याभाववद्वृत्तित्वस्यैव व्यभिचारत्वाच्चेति । समवायेन विशिष्टसत्तायाः साध्यतायामपि अतिव्याप्तिरिति विभाव्यते । तदा साध्यतावच्छेदकमपि निवेश्यम् । अतएव यद्विशिष्टसमानाधिकरणा यावन्तः साध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणास्तद्वत्त्वं वेति । तेन द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र विशिष्टसत्ताया अनतिरिक्तत्वेऽपि नाव्याप्तिः । तत्र चानतिरिक्तत्वेऽपीत्यपिना विशिष्टस्यातिरिक्तत्वमङ्गीकृत्य पूर्वलक्षणं सूचितमिति न काप्यनुपपत्तिः । नवा गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरिति पुस्तकेषु तु शोधितः पाठो दृश्यते । इदमेव लक्षणं

त्तद्वत्त्वं वा । भवति च धूमत्वविशिष्टसमानाधिकरणयावन्तो वह्निसमानाधिकरणास्तद्वत्त्वं च धूमे । नचेद्दृशं धूमं प्रति

---

सङ्गमयन्ति । भवतिचेति । नचेदृशमिति । तत्त्वविशिष्टसमानाधिकरणं सर्वं धूमसमानाधिकरणमिति नेत्यर्थः । वह्नित्वविशिष्टसमानाधिकरणयावदन्तर्गतायोगोलकत्वादेर्धूमासमानाधिकरणत्वादिति भावः । धूमव्याप्तिः । धूमनिरूपिता व्याप्तिः । अत्र च साधनतावच्छेदकसम्बन्धेन साधनाधिकरणत्वं बोध्यम् । अन्यथा समवायेन धूमाधिकरणवृत्तिधूमावयवत्वादीनां वह्निसामानाधिकरण्याभावादव्याप्तिः । एवं साध्याधिकरणत्वमपि साध्यतावच्छेदकसम्बन्धेन अन्यथा वह्निसमानाधिकरणायोगोलकत्वादीनामपि कालिकसम्बन्धेन धूमाधिकरणायोगोलकवृत्तित्वादतिप्रसङ्गापत्तेः । धूमसमानाधिकरणानां संयोगेन वह्न्यधिकरणपर्वतादिवृत्तित्वात् समवायेन वह्निसाध्यके संयोगेन धूमहेतुकेऽतिव्याप्तिश्च । एवं साधनाधिकरणवृत्तित्वघटकसम्बन्धेन साध्याधिकरणवृत्तित्वं वाच्यम् । अन्यथा वह्निसमानाधिकरणायोगोलकत्वादीनामपि धूमाधिकरणमहानसादौ कालिकसम्बन्धेन वृत्तित्वादतिव्याप्तिः तादवस्थ्यमिति । नन्वत्र साधनाधिकरणवृत्तित्वं यदि साधनतावच्छेदकसम्बन्धेन विवक्षितं तदा इदमेतद्रूपभिन्नं गुणत्वादित्यादौ गुणत्वाधिकरणसमवेतानां यावतामेतद्रूपभिन्नसमवेतत्वादतिव्याप्तिः । एतद्रूपमात्रसमवेतस्याप्रसिद्धेः नापि साध्यतावच्छेदकसम्बन्धेन । जातिमान् मेयत्वादित्यत्र मेयत्वाधिकरणसमवेतानां यावतां जातिमत्समवेतत्वादतिप्रसङ्गात् । नच विषयतया तद्वृत्तित्वं विवक्षणीयं वह्निमान् धूमादित्यादौ विषयतया धूमाधिकरणवृत्तीनां धूमवह्न्याद्युभयविषयकज्ञानादीनां वह्न्यधिकरणे विषयतया वृत्तेर्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादावयोगोलकमात्रविषयकज्ञानादीनां धूमासमानाधिकरणत्वान्नातिव्याप्तिरिति वाच्यं । घटभिन्नं मेयत्वादित्यत्र मेयत्वाधिकरणवृत्तिज्ञानानां घटभिन्नघटत्वसमानाधिकरणत्वादतिव्याप्तिः । घटमात्रविषयकज्ञानस्य चाप्रसिद्धत्वात् । नच येन केनचित्सम्बन्धेन साधनाधिकरणवृत्तित्वं विवक्षितमिति वाच्यं । द्रव्यं सत्त्वादित्यादौ सत्ताधिकरणवृत्तीनां यावतामेव कालिकसम्बन्धेन द्रव्यत्वाधिकरणमहाकालवृत्तित्वादतिव्याप्तिरितिचेन्न । येन येन सम्बन्धेन साधनाधिकरणवृत्तयो या-

वह्नित्वं नातो वह्नौ धूमव्याप्तिः । अस्ति चेदं केवलान्वयि-नि अभिधेयत्वविशिष्टसमानाधिकरणानां यावतां मेयत्वस-मानाधिकरणत्वात् । एवं च लाघवात् साध्यवदन्यावृत्तित्वे सति साध्यसमानाधिकरणत्वं व्याप्तिः । नचेदं केवलान्वयिन्य-स्ति । अतो नेदमनुमानमिति मीमांसकमतमपास्तं । ततो-

---

वत्त्वेन तेन सम्बन्धेन साध्याधिकरणवृत्तयस्तत्त्वस्य विवक्षितत्वात् । यद्येवमननुगम इति विभाव्यते तदा विशेषणताविशेषेण साधनाधि-करणवृत्तयो यावन्तः विशेषणताविशेषसम्बन्धेन साध्याधिकरणवृत्तयस्त-त्त्वमिति बोध्यं । धूमवत्त्वप्रकारकप्रमाविशेष्यत्वादीनां वह्निसमानाधिक-रणत्वाल्लक्षणसमन्वयः । अयोगोलकत्वप्रकारकप्रमाविशेष्यत्वस्य च धूमासमा-नाधिकरणत्वान्न व्यभिचारिण्यतिव्याप्तिरिति निगर्वः । केवलान्वयिनि लक्षणमुपपादयति । अस्तिचेदमिति । इदं । निरुक्तव्याप्तिलक्षणं के-वलान्वयिनि । केवलान्वयिसाध्यके । प्रमेयमभिधेयत्वादित्यादौ । एवमि-ति । मतमपास्तमित्यनेनान्वयः । एवं च । एतादृशस्य व्याप्तित्वे च । ला-घवादिति । हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्त्यपेक्षया लाघवा-दित्यर्थः । तत्र प्रतियोगिवैयधिकरण्यादिनिवेशेन गौरवादिति भावः । साध्यवदिति । साध्यवदन्यावृत्तित्वस्य गगनादावपि सत्त्वेन वह्निसाध्य-कगगनादावतिव्याप्तिरतः साध्यसामानाधिकरण्यमिति । नच तत्र व्याप्ति सत्त्वेपि पक्षधर्मताज्ञानविरहेणैवानुमितिवारणे किं तद्वारणाय विशेषणोपा-दानेनेति वाच्यं । गगनमवृत्तीत्यवृत्तित्वज्ञानस्य गगनं पर्वतवृत्तीति ज्ञाने ग्राह्याभावावगाहितया प्रतिबन्धकत्वेन तदनुत्पत्तावपि भिन्नविषयकस्य गगनवान् पर्वत इति ज्ञानस्योत्पत्तौ बाधकाभावेन पक्षधर्मताज्ञानस्या-पि सम्भवेन तद्वारणाय विशेषणोपादानस्यावश्यकत्वात् । एवं इदं द्रव्यं घटत्वपटत्वोभयस्मादित्यत्र विरुद्धेऽतिव्याप्तिवारणाय तस्यावश्यकत्वम् । इदं तु साध्यसामानाधिकरण्यज्ञानस्याप्यन्वयव्यतिरेकाभ्यां कारणत्वाभिप्रायेण अन्यथा तु वृत्तिमत्त्वनिवेशेनापि गगनादिवारणसम्भव इति बोध्यम् । नचे-दमिति । साध्यवदन्यावृत्तित्वमित्यर्थः । नेदमनुमानमिति । न केवलान्व-

प्यस्य लघुत्वात् । अत्र चार्वाकाः । भवत्वियं व्याप्तिः नत्वेयं ग्रहीतुं शक्या । क्वचिद्धूमसमानाधिकरणं वह्नेर्यसमानाधिकरण्यं

---

यिसाध्यकानुमानमित्यर्थः । व्याप्तिज्ञानाभावात्तादृशानुमितेरसिद्ध्या न तत्करणतया तदनुमानस्वीकार इति भावः । ततोपीति । साध्यवदन्यावृत्तित्वविशिष्टसाध्यसामानाधिकरण्यरूपव्याप्तिस्वरूपतोपि । अस्य । निरुक्तव्याप्तिस्वरूपस्य । लघुत्वात् । अभावाद्यप्रवेशेन लघुत्वात् ॥ ४

ननु यावत्त्वस्य व्यापकत्वादन्यस्य दुर्वचतया व्यापकत्वस्याभावघटितत्वेन गुरुतया कुतोऽस्य लघुत्वमिति चेन्न । अपेक्षाबुद्धिविशेषविषयत्वरूपस्यैव यावत्त्वस्यात्र प्रवेशनीयत्वात् । वस्तुतस्तु साध्यवदन्यावृत्तित्वस्य स्वाधिकरणावृत्तिसाध्याभावकत्वरूपस्यावश्यं विवक्षणीयत्वेनावृत्तित्वस्य च साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेनावश्यं वक्तव्यतया विरोधितानियामकत्वस्य समवायाभावीयविशेषणतासाधारणस्यानुगतस्याभावाद्गौरवेण निरुक्तव्याप्तिस्वरूपस्यैव लघुत्वात् । निरुक्तव्याप्तिस्वरूपे च विशेषणताविशेषेणैव सामानाधिकरण्यनिवेशेन व्यापकत्वांशे प्रतियोगिवैयधिकरण्याद्यप्रवेशेन लाघवस्यातीवस्फुटत्वात् । एवं गुरुधर्मावच्छिन्नसाध्यके साध्यतावच्छेदकावच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नाभाववदवृत्तित्वं व्याप्तिरिति वक्तव्यं । तत्र च तादृशप्रतियोगितानवच्छेदकत्वञ्च तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदनिवेशनं न सम्भवति घटत्वावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वापेक्षयाकम्बुग्रीवादिमत्त्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुत्वात्तादृशाभावाप्रसिद्धेः किन्तु तादृशप्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वेनोपादाय तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटएव निवेश्यतइति गौरवाद् दुर्ज्ञेयत्वाच्च न तादृशव्याप्तिज्ञानं हेतुरिति ध्येयम् । इदमुपलक्षणं । प्रमेयत्वमनुमिनोमीत्यनुव्यवसायबलादेव तत्स्वीकारस्यावश्यक इति प्रागेवोक्तमिति । सर्वत्र व्यभिचारशङ्कासम्भवेन व्याप्तिग्रहानुदयात् कारणाभावेनानुमितेरसिद्ध्या न तत्करणतयाऽनुमानप्रामाण्यमिति चार्वाकमतं दूषयितुं तन्मतमुपन्यस्यति । अत्र चार्वाका इति । अत्रानुमितिकरणत्वेन व्याप्तिनिश्चयस्याप्रमाणत्वे चार्वाकाः पूर्वपक्षयन्तीति शेषः । क्वचिदिति । धूमस-

कथं भविष्यतीति शङ्काया दुर्वारत्वात् । गच्चेदृशशङ्कायां व्याप्तिनिश्चयो भवितुमर्हति । तस्यास्तत्प्रतिबन्धकत्वात् । नच भूयो दर्शनात्तन्निवृत्तिः । अतश्चः सहचरितयोरपि व्य-

---

मानाधिकरणत्वसामानाधिकरण्येन वन्हिसामानाधिकरण्याभावसंशये धूमसमानाधिकरणत्वावच्छेदेन वन्हिसमानाधिकरणत्वरूपव्याप्तिग्रहानुदयादित्यर्थः । ननु तादृशशङ्कायामपि व्याप्तिग्रहे किं बाधकमत आह । नचेति । नहीत्यर्थः । ईदृशशङ्कायां । धूमसमानाधिकरणत्वसामानाधिकरण्येन वन्हिसामानाधिकरण्याभावशङ्कायां । तस्याः । तादृशशङ्कायाः । तत्प्रतिबन्धकत्वात् । तादृशव्याप्तिग्रहप्रतिबन्धकत्वात् । ननु भूतलत्वसामानाधिकरण्येन घटाभाववत्ताज्ञानस्य निर्णयात्मनः भूतलत्वावच्छेदेन घटवत्ताज्ञाने बाधनिर्णयविधया प्रतिबन्धकत्वेपि तादृशशङ्कायाः कथं तत्प्रतिबन्धकत्वं ग्राह्यसंशयस्यापि प्रतिबन्धकत्वे च पर्वतो वन्हिमान् वेति संशयेऽनुमित्यादेरनुत्पत्त्यापत्तिरिति चेन्न । "ययोः सामग्रीप्रतिबन्धिका यत्र विशेषादर्शने तयोरपि तत्रेति" न्यायेन विशिष्टप्रत्यक्षे विशेषदर्शनाभावविशिष्टतदभावप्रकारकज्ञानत्वेन संशयस्यापि प्रतिबन्धकत्वाङ्गीकारात् । अन्यथा स्थाणुर्वा पुरुषो वेति संशयोत्तरं विनैव विशेषदर्शनं संशयोत्तरप्रत्यक्षापत्तेः । तत्र बाधनिर्णयस्याभावात् संशयस्य च तव नये अप्रतिबन्धकत्वादिति । यदि चाप्रामाण्यज्ञानाभावादिभिर्विशेषणविशेष्यभावे विनिगमनाविरहेण विशेषदर्शनस्योत्तेजकत्वासम्भवान्न विशेषदर्शनाभावविशिष्टतदभावप्रकारकज्ञानत्वेन संशयस्य प्रतिबन्धकत्वं विशेषदर्शनशून्यकाले संशयोत्तरप्रत्यक्षानुत्पत्तिश्च संशयोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वकल्पनेन तदभावादेवोपपन्नेति विभाव्यते तदा तादृशसंशयसामग्री प्रतिबन्धिका बोध्येति दिगवं । ननु बहुषु धूमाग्न्योः सामानाधिकरण्यदर्शनमेव तादृशशङ्काविरोधीत्याशयेनाह । नचेति । भूयो दर्शनात् । बहुषु साध्यसाधनयोः सहचारदर्शनात् । तन्निवृत्तिः । व्यभिचारशङ्कानिवृत्तिः । अतश्चेति । घटादिरूपापृथिवी लोहलेख्या पार्थिवत्वादित्यादौ घटादिषु पार्थिवत्वलोहलेख्यत्वयोः सामानाधिकरण्यग्रहेपि हीरके व्यभिचारग्रहादित्यर्थः । तथाच व्यभिचारेण भूयो दर्शनस्य न तादृशशङ्काप्रतिबन्धकत्वमिति भावः । ननु धूमवन्ह्योः कार्यकार्यकारण

भिचारोपलब्धेः। न च तर्कात्तन्निवृत्तिः। तस्य व्याप्तिनि-
श्चयमूलकत्वेनानवस्थानात्। इत्थं च ग्राहकाभावाद् व्याप्ते-
रग्रहे कुतोऽनुमानं स्यादित्याहुः। तन्न। व्यभिचारज्ञानविर-

---

भावात्। धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादिति तर्क एव धूमो वह्निव्यभिचारी नवेति शङ्कानिवर्त्तकः। पार्थिवत्वलोहलेख्यत्वयोस्तु कार्यकारणभावाद् यदि लोहलेख्यत्वं न स्यात्तदा पार्थिवत्वं न स्यादिति तर्कासम्भवान्न तत्र व्यभिचारशङ्काविरह इत्याशङ्कते। नच तर्कादिति। धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादितितर्कादित्यर्थः तन्निवृत्तिः। व्यभिचारशङ्कानिवृत्तिः। व्याप्तिग्रहमूलकत्वेन। आपाद्यापादकयोर्व्याप्तिग्रहमूलकत्वेन। अनवस्थानादिति। तर्कमूलभूतव्याप्तावपि व्यभिचारशङ्कानिरासार्थं तर्कान्तरापेक्षायामनवस्थेत्यर्थः। तथाच मूलशैथिल्यान्न तर्कस्य तच्छङ्कानिवर्त्तकत्वमिति भावः। अत्र विपर्यये तत्कोटिमात्रापर्यवसानं, इष्टापत्तिः, मूलशैथिल्यं, चेति तर्के त्रयो दोषाः। विपर्यये तत्कोटिमात्रपर्यवसान एव तर्कस्य तदभावशङ्कानिवर्त्तकत्वात्। तदितरकोटिपर्यवसाने च तदसम्भवाद् विपर्यये तत्कोटिमात्रापर्यवसानस्य दूषकत्वं बोध्यम्। इष्टापत्तेश्च तर्ककारणीभूतापाद्यव्यतिरेकनिर्णयविघटकत्वेन। मूलशैथिल्यस्य च तत्कारणीभूतापाद्यापादकयोर्व्याप्तिग्रहप्रतिबन्धकत्वेन यथायथं दूषकता बोध्या। उपसंहरति। इत्थं चेति। व्यभिचारशङ्काप्रतिबन्धकस्याभावेन जागरूके व्यभिचारसंशये चेत्यर्थः। ग्राहकाभावात्। व्यभिचारज्ञानाभावरूपग्राहकाभावात्। कुतइति। कुतो हेतोरनुमानं प्रमाणं स्यादित्यर्थः। अनुमितिकरणतयैवानुमानस्य प्रामाण्यं व्याप्त्यनिश्चये चानुमितेरभावात् तत्करणतयाऽनुमानस्य प्रामाण्यं दूरापास्तमिति भावः। व्यभिचारज्ञानविरहादिकमिति। तद्वत्ताज्ञानं प्रति तदभाववत्ताज्ञानाभावस्य हेतुतया अव्यभिचाररूपव्याप्तिग्रहे साध्याभाववद्वृत्तित्वादिरूपव्यभिचारज्ञानाभावो हेतुरित्यर्थः। आदिना सहचारज्ञानपरिग्रहः। नच साध्याभाववद्वृत्तित्वांशे संशयात्मकव्यभिचारज्ञानसत्त्वे

शादिकमेव व्याप्तिग्राहकं । नच तच्छङ्काविरहो दुःशकः ।
क्वचित्तर्कात्क्वचित्तन्मूलभूतव्याप्त्यादौ कोटिस्मरणाद्यभा-
वादपि तन्निवृत्तेः । नहि सर्वदा व्यभिचारशङ्काकोटिस्मृ-
तिर्वास्ति अनुभूयते वेति दिक् ॥

---

व्याप्तिग्राहकं संशयनिश्चयसाधारणव्यभिचारज्ञानाभाव एव हेतुर्वाच्य-
स्तथाच पक्षीयसाध्यसन्देहात्मकव्यभिचारज्ञानस्यापि प्रतिबन्धकत्वप्रसक्त्या-
ऽनुमानमात्रोच्छेदप्रसङ्ग इति वाच्यं । साध्याभाववत्त्वांशे निश्चयात्मक-
वृत्तित्वांशे संशयनिश्चयसाधारणव्यभिचारज्ञानाभावस्यैव हेतुत्वात्
ननु ज्ञानादीनामव्याप्यवृत्तितया व्यभिचारज्ञानसत्त्वेऽपि घटावच्छेदेनात्मनि
समवायेन तदभावसत्त्वाद् व्याप्तिग्रहापत्तिरिति चेन्न । समवायसम्बन्धा-
वच्छिन्नप्रतियोगिताकव्यभिचारज्ञानविशिष्टात्मत्वाभावस्य स्वसमानाधि-
करणैकत्वसम्बन्धेन व्यभिचारज्ञानाभावस्य वा हेतुत्वात् । तस्य च व्या-
प्यवृत्तित्वादिति । अथ तथापि धूमवह्न्योः सहचारज्ञानस्य व्याप्तिग्रह-
हेतुत्वे मानाभावः । नच विरहे सहचारभ्रमाद् व्याप्तिभ्रमदर्शनादन्व-
यव्यतिरेकाभ्यां तस्य कारणत्वमिति वाच्यं । ग्राहकसामग्र्यौ क्रमयौग-
पद्याभ्यामेव सहचारग्रहव्याप्तिग्रहक्रमयौगपद्ययोरुपपत्तेः । तयोः परस्पर
हेतुत्वे मानाभावादिति चेन्मैवं । यत्समानाधिकरणाः यावन्तो धर्मा इत्यत्र
धर्मे हेतुसामानाधिकरण्यरूपसहचारज्ञानस्य विशेषणज्ञानत्वेन हेतुतया
तस्यैवादिपदेन सङ्गृहीतत्वात् नतु साध्यसाधनसहचारज्ञानस्यापि एवं
प्रतिबन्धकाभावान्तरस्यापि आदिपदेन सङ्गृहीतत्वादिति दिक् ॥

ननु व्यभिचारज्ञानविरहः संशयनिश्चयसाधारणज्ञानाभावः सर्वत्र तत्सं-
शयसत्त्वे च कथं सघटते इत्याशङ्क्य निराचष्टे । नचेति । तर्कात् । धूमो यदि
वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादिति तर्कात् । अनवस्थां
निरस्यति । क्वचित्तन्मूलभूतेति । तर्कमूलभूतेत्यर्थः । तन्निवृत्तेः । व्यभि-
चारशङ्कानिवृत्तेः । ननु सर्वत्र व्यभिचारशङ्काकोटिस्मृतिर्वास्त्वत आह ।
अनुभूयते वेति । तथाच प्रमाणाभावेन संशयसामग्र्येव न कल्प्यत इति भावः ।

ननु तर्कस्य व्यभिचारशङ्कानिवर्त्तकत्वे मानाभावः। अनाहार्यशङ्काया-स्तर्कीकारणीभूतज्ञानेनैव निरस्तत्वात्। तथाहि आपत्तिं प्रति पक्ष-धर्मताशि आहार्यरूपमापाद्यव्याप्यापादकवत्ताज्ञानमापाद्यव्यतिरेकनि-श्चयसहेतुः व्याप्तिश्चान्वयतो व्यतिरेकतश्च। तथाच धूमो यदि वह्निव्य-भिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्यत्र वह्निव्यभिचारित्वं वह्निज-न्यत्वाभावव्याप्यमिति अन्वयव्याप्तिज्ञाने वह्निजन्यत्वाभावे वह्निव्यभि-चारित्वव्यापकत्वग्रहाद् वह्निव्यभिचारित्वव्यापको वह्निजन्यत्वाभाव इति ज्ञानसम्भवात् आपाद्यव्यतिरेकनिर्णयविषया तदभावज्ञानस्य च सत्त्वाद् वह्निव्यभिचारित्वव्यापकाभाववत्ताज्ञानसम्भवात्नानाहार्यव्यभि-चारित्वशङ्कासम्भवः। एवं वह्निजन्यत्वव्यापकीभूताभावप्रतियोगिवह्नि-व्यभिचारित्वमिति व्यतिरेकव्याप्तिग्रहेऽपि वह्निव्यभिचारित्वाभावे वह्नि-जन्यत्वव्यापकत्वग्रहे तुल्यवित्तिवेद्यतया वह्निजन्यत्वेऽपि वह्निव्यभिचारि-त्वाभावव्याप्यत्वग्रहे वह्निव्यभिचारित्वाभावव्याप्यं वह्निजन्यत्वमिति ज्ञान-सम्भवेन तद्वत्ताज्ञानस्य चापाद्यव्यतिरेकनिर्णयविषया सत्त्वेन तदभाव-व्याप्यवत्ताज्ञानस्य सत्त्वान्न तादृशशङ्कोदयः। नचान्वयिनि आपादकव्या-पकमापाद्यं तदभाववांश्चायमिति ज्ञाने विद्यमानेऽपि तद्व्यापकाभावव-त्ताज्ञानस्य विशिष्टवैशिष्ट्यावगाहिन एव तद्वत्ताज्ञानप्रतिबन्धकतया कथं तस्य विरोधित्वम्। एवं व्यतिरेकिणि आपादकाभावव्याप्यः आपाद्याभावः तद्वांश्चायमिति ज्ञानसम्भवेऽपि तदभावव्याप्यवत्ताज्ञानस्यापि विशिष्टवै-शिष्ट्यावगाहिन एव तत्र प्रतिबन्धकत्वात् तदसम्भव एवेति वाच्यं। धूमव्यापको वह्निः वह्न्यभाववांश्चायमिति ज्ञानद्वयसाधारण्याय त-द्धर्मावच्छिन्नविशेष्यकव्यापकत्वग्रहकालीनतद्धर्मावच्छिन्नाभाववत्तानिश्चयत्वेनै-व तद्व्यापकाभाववत्ताज्ञानस्य प्रतिबन्धकत्वात्। एवं पुरुषत्वव्या-प्यं करादि तद्वांश्चायमिति ज्ञानद्वयसाधारण्याय तद्धर्मावच्छिन्नविशे-ष्यकव्याप्यत्वग्रहकालीनतद्धर्मावच्छिन्नवत्तानिश्चयत्वेनैव तदभावव्याप्यव-त्ताज्ञानस्य प्रतिबन्धकत्वादुक्तज्ञानद्वयसत्त्वे तत्संशयाभावात्। यदि च व्यतिरेके आपादकाभावे आपाद्याभावव्यापकत्वग्रहेऽपि आपाद्याभावे

आपादकाभावव्याप्यत्वभानस्य न नैयत्यं । तुल्यवित्तिवेद्यत्वे मानाभावात् । एवं व्यापकाभावज्ञानस्य तदभाववद्व्याप्यवत्ताज्ञानस्य च विशिष्टवैशिष्ट्यावगाहिन एव लाघवात् प्रतिबन्धकत्वम् । उक्तज्ञानद्वयस्याप्रतिबन्धकत्वेऽपि तदुत्तरोत्पन्नविशिष्टज्ञानादेव प्रतिबन्धइति प्रकृते आपादकसंशयोत्पत्तौ बाधकाभावइति विभाव्यते तथापि आपाद्याभाववत्तानिश्चयस्यापादकज्ञाने व्यावर्त्तकधर्मदर्शनविधया प्रतिबन्धकत्वमव्याहतमित्यनाहार्यव्यभिचारित्वसंशयासम्भवात् आहार्यशङ्कायास्त्वविरोधित्वात्तर्कस्य वैयर्थ्यमिति चेत् । अत्रोच्यते । अनाहार्यशङ्कानिवृत्त्यसम्भवेऽप्याहार्यशङ्कानिवर्त्तकत्वेनैव तर्कस्योपयोगः तस्या अप्रतिबन्धकत्वे तु तत्सामग्र्याः प्रतिबन्धकत्वमेव । नच तथापि तर्कस्याहार्यज्ञानरूपस्य कथमाहार्यशङ्काप्रतिबन्धकत्वम् आहार्यज्ञानस्याप्रतिबन्धकत्वाद्प्रतिबध्यत्वाच्चेति वाच्यम् । अनिष्टप्रसञ्जनात्मकतर्केण आपादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजनने आपादकज्ञानेन द्वेषोत्पत्त्या तत्रेच्छानुत्पत्ताविच्छारूपकारणाभावेनाहार्यशङ्कानुदयात् । तर्के तन्निवर्त्तकत्वस्यार्थवशसंपन्नत्वात् । अतएवापादकांशे संशयनिश्चयसाधारण्यज्ञानमपि तर्के हेतुः । अन्यथा तन्निर्णयस्यैवहेतुत्वे कारणीभूते आपादकनिर्णय एव तर्कात्मकानिष्टसाधनताज्ञानसम्भवेऽपि संशये द्विष्टसाधनताज्ञानाभावेन तत्रेच्छोत्पत्तौ बाधकाभावेनाहार्यशङ्कानिवर्त्तकत्वासम्भवात् । केचित्तु । तदापादकवत्त्वेनाहार्यानाहार्यसाधारणतद्विशिष्टबुद्धित्वेन प्रतिबध्यप्रतिबन्धकभावः समानविषयकत्वाभावेऽपि फलवत्वात्कल्पनीय इति तर्कोपयोगित्वमाहुः । अन्येतु व्यभिचारशङ्कायामुत्तेजकतयातर्कोपयोग इत्याहुः । यद्यपि बाधकालीनेच्छाजन्यं ज्ञानमाहार्यं तथापि प्रकृते इच्छाजन्यत्वमात्र मापादकांशे आहार्यत्वं वाच्यं । तर्कश्च द्विविधः । व्याप्तिग्राहको विषयपरिशोधकश्च । आद्यश्चोक्त एव । द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्याकारकः विषयस्यानुमितिविषयस्य साध्यस्य परिशुद्धिः विरोधिशङ्काविधूननम् । ननु साध्यव्याप्यवत्तापरामर्शे सति साध्यसंशयस्यानवतारात् कुतस्तस्य विरोधित्वं ग्राह्यसंशयस्याप्रतिबन्धकत्वाच्चेति तर्केणापि वा कथं तन्निरास इति चेन्मैवम् । स्वरसवाहिनः संशयस्य विशेषदर्शनप्रतिबध्यत्वेऽपि अनु-

ननु सेयं व्याप्तिर्दृष्टान्तवृत्तिधूमादौ गृहीता । नच पक्षीयेपि तथाच कथं तदनुमितिः पक्षवृत्तिधूमे व्याप्तिग्रहस्यानुमितिहेतुत्वादिति चेत् अत्राहुः उक्ता व्याप्तिर्दृष्टान्तवृत्तिहेतौ धूमत्वेन गृहीता पर्वते धूमं दृष्ट्वा स्मर्यते ततो विशेषणज्ञानरूपात्तस्मादसति बाधके व्याप्तिविशिष्टत्वेन पक्ष-

---

मित्यप्रतिबन्धकत्वेपि चान्याहितस्य तस्याप्रतिबध्यत्वात् प्रतिबन्धकत्वाच्च । तथाच यथा धूमाद्वन्हिमताऽनेन भवितव्यं तथा कुतश्चिद्वह्न्यभावसाधकाद् वन्ह्यभाववतापि भवितव्यमिति शङ्का तदन्न किं वन्हिविरुद्धसाधकमिति जिज्ञासा जायते विरोधिप्रमाणजिज्ञासया च बाधकप्रमाणशङ्का तयाच साध्याभावशङ्काजन्यते । साच सत्यपि परामर्शेऽन्याहितत्वादुत्पद्यते । अप्रामाण्यशङ्काहिते चार्थशङ्का सत्यप्यर्थनिश्चये निर्वह्निः स्यात्तर्हि निर्धूमः स्यादिति तर्केण चानिष्टप्रसञ्जनात्मना विरोधिप्रमाणजिज्ञासानुत्पत्तौ बाधकप्रमाणशङ्कानिवृत्तौ तदाहितसाध्याभावशङ्काया अपि निवृत्तिः अन्यविधायास्तु साध्यशङ्कायाः सति परामर्शे ऽसम्भवात् अप्रतिबन्धकत्वाच्चेति सर्वमवदातम् । दृष्टान्तेति । महानसीयधूमवन्ह्योः सन्निकर्षेण तत्रैव व्याप्तिग्रहो नतु पर्वतीयधूमेपि पर्वतीयवन्हेरसन्निकर्षेण तन्निरूपितव्याप्तिग्रहासम्भवादिति भावः । स्मर्यत इति । महानसीयधूमे धूमत्वं धर्मितावच्छेदकीकृत्य व्याप्त्यनुभवः ततः पर्वतीयधूमे धूमत्वज्ञानात् एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन तादृशव्याप्तेः स्मरणं जायते ततो * व्याप्तिस्मरणरूपविशेषणज्ञानाद् वन्हिव्याप्योयं धूमः पर्वतवृत्तिरिति व्याप्त्यंशे उपनीतभानात्मकं प्रत्यक्षं ततश्चानुमितिरित्याखण्डलार्थः । नच महानसीयधूमवृत्तिव्याप्तेः पर्वतीयधूमेऽसत्त्वात् कथं तत्र तत्प्रत्यक्षमिति वाच्यं । यद्विशिष्टसमानाधिकरणाः सर्वे साध्यसमानाधिकरणास्तद्धर्मवत्त्वमित्यत्र तद्धर्मवत्त्वं तद्धर्म एवेत्यर्थपर्यालोचनया धूमत्वस्यैव व्याप्तित्वलाभात् तस्य च पर्वतीयधूमेपि सत्त्वात् । नचैवं

---

* जाते च व्याप्तिस्मरणइत्यपिपाठान्तरम् ॥

धर्मधूमज्ञानं जायते यद्वा दृष्टान्ते व्याप्तिज्ञानं जायमानं धूमत्वरूपसामान्यलक्षणाप्रत्यासत्त्या सकलधूमगोचरमेव जायतइत्यदोषः ॥

---

धूमत्वस्यैव व्याप्तित्वे तस्य व्याप्यतावच्छेदकत्वानुपपत्तिः । अभेदे अवच्छेद्यावच्छेदकभावानभ्युपगमादिति वाच्यं । घटकारणताया घटकारणतावच्छेदकत्वयोर्दण्डत्व इव उपस्थितानुपस्थितभेदादेव तस्य समर्थनीयत्वात् । अतएव परामर्शग्रन्थे स्मृतव्याप्तिः पक्षधर्मधूमे सत्त्वादेकैव स्थिता व्याप्तिरित्यनेन चिन्तामणिकारेणापि तथाभिहितम् । नच यो यत्र पूर्वमवगतः स एव तत्र संस्कारवशात् यथार्थप्रत्यक्षे भासत इति नियमात् पर्वतीयधूमे पूर्वं व्याप्तेरनवगमात् कथं तत्र व्याप्तिरुपनीतभानं यथा यत्र चन्दने सौरभं घ्राणेनोपलब्धं तत्रैव चक्षुषा सुरभिचन्दनमित्युपनीतभानमन्यथा त्वनुमानादिति वाच्यं । यद्धर्मावच्छेदेन यद्वत्त्वं गृहीतं तद्धर्मावच्छेदेनतद्रुपनीतभानमित्येव नियमात् । अस्तिचात्र धूमत्वेनैव व्याप्तेर्ग्रहाद् धूमत्वेनैव व्याप्तिरुपनीतभानमिति । इदं तु सामान्यलक्षणानङ्गीकारेणोक्तं । वस्तुतस्तु सामान्यलक्षणाङ्गीकारेण व्याप्तेर्नानात्वेपि तादृशनियमाभ्युपगमेपि च नक्षतिः । महानसीयधूमे धूमत्वेनैव वह्निव्याप्तिज्ञानं जायमानं धूमत्ववह्नित्वसामान्यलक्षणया यावद्धूमवह्निभाने यावद्वह्निनिरूपितयावद्धूमनिष्ठं व्याप्तिज्ञानमेव जायतइति पर्वतीयधूमेपि व्याप्तेः पूर्वं गृहीतत्वेन तदुपनीतभाने बाधकाभावात् अनुमितिरुपपन्नैवेत्याशयेनाह । यद्वेति । केचित्तु उक्तेत्यादिमहानसीयधूमनिष्ठाव्याप्तिः तत्रैव गृहीता ततः पर्वतीयधूमे धूमत्वदर्शनात् महानसीयधूमनिष्ठव्याप्तेरेव स्मरणं ततः पक्षवृत्तिधूमे महानसीयधूमनिष्ठव्याप्तेरुपनीतभानं ततोऽनुमितिरित्यर्थः । तथाच भ्रमात्मकपरामर्शादेवानुमितिरिति भावः । ननु सल्लिङ्गकपरामर्शस्यैव प्रमात्मकानुमितिहेतुतया यथार्थपरामर्शाभावेन कथं प्रमात्मिकानुमितिरतआह । यद्वेत्याहुः । तदसत् । धूमत्वस्यैव व्याप्तित्वेन सल्लिङ्गकपरामर्शस्यैव पूर्वकल्पेपि सम्भवात् । यद्यपि यत्समानाधिकरणाद्द्रयत्र तत्त्वं व्याप्तिरित्युक्तौ व्याप्तेर्नानात्वमपि ग्रन्थ

त्वादभिमतं तथापि यद्विशिष्टेति द्वितीयलक्षणस्यैव निर्दुष्टत्वेन तदभिप्रायेण सन्निकृष्टपरामर्शमादायैव योजयितुं शक्यत्वे भ्रमात्मकपरामर्शमादायोत्कृष्टेरनादरणीयत्वादिति न किञ्चिदेतत् । धूमत्वसामान्यलक्षणाप्रत्यासत्त्येति । अत्र च ज्ञायमानं सामान्यं प्रत्यासत्तिर्बोध्या । तच्चेन्द्रियसम्बद्धं तथा तेन निमीलितनयनस्य न सामान्यलक्षणाप्रत्यासत्तिजन्यज्ञानापत्तिः । तथाचेन्द्रियसंयुक्ते धूमे धूम इति ज्ञानानन्तरं धूमत्वसामान्यलक्षणया यावद्धूमविषयकं धूमा इत्याकारकं ज्ञानं जायते इन्द्रियसम्बन्धश्च न संयुक्तसमवायः धूलीपटले धूमत्वभ्रमानन्तरं धूमा इति ज्ञानानुदयापत्तेः । तथाच तदुत्तरं धूलीपटले धूमत्वेन व्याप्तिग्रहात् जायमानायाः वह्न्यनुमितेरुच्छेदप्रसङ्गात् पर्वतीयधूमे व्याप्त्यग्रहात् किंतु इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्वरूपो वैज्ञानिकः सम्बन्धः । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः । तेन निमीलितनयनस्य न तदापत्तिः । ज्ञानं च तदिन्द्रियजन्यं ग्राह्यं तेन पुरोवर्त्तिनि दोषवशादवगाह्यमानेन स्मर्यमाणघटत्वेन न यावद्घटचाक्षुषापत्तिः । इदं च बहिरिन्द्रियस्थले बोध्यं । तेन तथाविधमानसोदयेऽपि न क्षतिः । अत्र च ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे यत्र नानाकपालेषु एकएव घटः प्रत्यासन्नस्तत्र तद्घटनाशदशायां तद्घटत्वसामान्यलक्षणया यावद्घटवतां ज्ञानं न स्यात् । सामान्यस्य तदानीमभावात् । नच तत्र घटत्वमेव तद्व्यक्तिघटितसम्बन्धेन परम्परया प्रत्यासत्तिरिति वाच्यम् । यत्र परम्परया तद्व्यक्तिसम्बन्धेन घटत्वादिकं न भातं किंतु तद्व्यक्तित्वेन (तद्व्यक्तिप्रकारेण तद्व्यक्तिमतां) ज्ञानं तत्र गत्यभावात् । नच तत्र परम्परया तद्व्यक्तित्वमेव प्रत्यासत्तिरिति वाच्यं । तद्व्यक्तित्वस्य तद्वृत्तिरूपाद्यात्मकतया तस्यापि नष्टत्वादिति तथाविधसामान्यज्ञानं प्रत्यासत्तिर्बोध्या । तच्च न तावद् घटत्वाश्रययावद्व्यक्तिप्रत्यक्षे इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटत्वत्वेन तथाविधघटत्वज्ञानत्वेन वा हेतुता यावद्विषयकत्वस्य कार्यतानवच्छेदकत्वेऽपि विनिगमनाविरहेण यावद्विषयकत्वस्यार्थवशसम्पन्नत्वेन तन्निवेशे प्रयोजनाभावात् ॥

अथ संयोगाजन्यस्वविषयकज्ञानाजन्यघटत्वातिरिक्तघटवृत्तिधर्माप्रकारकघटप्रत्यक्षं प्रति तथाविधघटत्वत्वेन तथाविधघटत्वज्ञानत्वेन वा हेतुता नि-

नन्वु सामान्यं यदि प्रत्यासत्तिस्तत्प्रकारकतदाश्रयलौकि-
कसाक्षात्कारजनिका तदा विमुद्रितनयनस्यापि धूमत्वेन

---

विकल्पकोत्तरोत्पन्नघटप्रत्यक्षे व्यभिचारवारणाय संयोगाजन्यत्वनिवेशः। पटत्वेन घटभ्रमानन्तरं यत्र पटवदित्युपनीतभानं तत्र पटत्वेन घटप्रत्यक्षोदयात्तत्र घटज्ञानाभावाद्व्यभिचारवारणाय स्वविषयकज्ञानाजन्यत्वनिवेशः। द्रव्यत्वसामान्यलक्षणाजन्यप्रत्यक्षवारणायघटत्वातिरिक्तेत्यादीति चेन्न। तथासति घटत्वद्रव्यत्वोभयसमूहालम्बनस्थले परापरकार्यकारणभावापत्तेः किंतु घटत्वादिप्रकारतानिरूपितलौकिकान्यघटादिमुख्यविशेष्यताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति चाक्षुषप्रकारीभूतघटत्वत्वादिना घटत्वादिप्रकारताशालिचाक्षुषत्वादिना वा हेतुता बोध्या। प्रथमे विषयत्वसमवायोभयघटितसामानाधिकरण्यं प्रत्यासत्तिः। द्वितीये समवायसमवायोभयघटितसमाधिकरण्यं प्रत्यासत्तिः। विशेष्यतायां घटत्वादिप्रकारतानिरूपितत्वनिवेशाद् द्रव्यत्वादिना सामान्यलक्षणाजन्यज्ञाने न व्यभिचारः। निर्विकल्पकानन्तरोत्पन्नघटमुख्यविशेष्यकलौकिकचाक्षुषे व्यभिचारवारणाय लौकिकान्यत्वनिवेशः। घटत्वप्रकारकतद्घटस्मरणजन्ये घटाद्युपनीतभाने घटत्वप्रकारकचाक्षुषरूपकारणविरहाद् व्यभिचारवारणाय विशेष्यतायां मुख्यत्वनिवेशः मुख्यविशेष्यतात्वं च प्रकारतान्यविशेष्यतात्वं। वहिरिन्द्रियजन्यज्ञाने उपनीतं विशेषणतयैव भासते मानसत्वनियम इति नियमाद् विशेषणत्वेनैव घटादेर्भानम्मुख्यविशेष्यत्वमिति कारणतावच्छेदककोटौ घटत्वादिप्रकारताकत्वनिवेशान्न निर्विकल्पकोत्तरसामान्यलक्षणाजन्ययावद्घटप्रत्यक्षापत्तिः। पुरोवर्त्तिनि दोषवशान्नयनेनागृह्यमाणेन स्मरणप्रकारीभवता घटत्वेन यावद्घटचाक्षुषवारणाय चाक्षुषत्वनिवेशः। समवायेन घटत्वप्रकारकज्ञानबलात् कालिकादिसम्बन्धेन घटत्वाश्रयत्वाद्यत्यक्षापत्तिवारणाय सम्बन्धविशेषोपि निवेशनीय इति प्राचीनमतनिगर्वः। नवीनमतं दर्शयितुं शङ्कते। नन्विति। तदाश्रयेति।सामानाश्रयेत्यर्थः। साक्षात्कारः स्यादिति। चाक्षुषसाक्षात्कारः स्यादित्यर्थः। तेन मानससा-

**सकलधूमसाक्षात्कारः स्यात् इति चेन्न । यत्सामान्यं प्रत्यासत्तिस्तत्प्रकारकतदाश्रयस्य लौकिकसाक्षात्कारजनकसामग्र्या अपि सामान्यलक्षणप्रत्यासत्तौ सहकारित्वात् ।**

साक्षात्कारोदयेऽपि न क्षतिः । नवीनमतमभिप्रेत्य सिद्धान्तयति । यत्सामान्यमिति । यदित्यस्य सामान्यमित्यनेनाभेदान्वयः । तत्प्रकारकतदाश्रयेति । मानससाक्षात्कारसामग्रीसत्त्वाल्लौकिकेति । सामग्री च तत्तत्सन्निकर्षालोकसंयोगादिरूपा । सहकारित्वादिति । बहिरिन्द्रियजन्यज्ञाने सहकारित्वादित्यर्थः । विमुद्रितनयनस्यापि चक्षुःसंयोगादिरूपसामग्र्यसत्त्वान्न प्रत्यक्षमिति भावः । नच धूलीपटले धूमत्वभ्रमानन्तरं धूमा इति ज्ञानं न स्यात् धूमत्वाश्रयलौकिकप्रत्यक्षसामग्र्यसत्त्वादिति वाच्यं । तदाश्रयेत्यस्य तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यताश्रयेत्यर्थात् । धूमत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रये धूलीपटले लौकिकप्रत्यक्षसामग्रीसत्त्वेनादोषात् । ननु प्राचीनमते तत्पुरुषीयधूमत्वाश्रयविषयकालौकिकचाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीयचक्षुःसन्निकृष्टयत्किञ्चिद्विशेष्यकतत्पुरुषीयचाक्षुषप्रकारीभूतधूमत्वत्वेन हेतुतया तेनैव विमुद्रितनयनस्यापि प्रत्यक्षापत्तिवारणे गुरुतरसामग्र्याः सहकारित्वकल्पने नव्यमते गौरवमिति चेन्नैवम् । अन्धतमसे सौदामिनीसम्पातजनितद्रव्यविषयकचाक्षुषोत्तरमालोकसंयोगविगमेऽपि तादृशकारणसत्त्वात् सकलद्रव्यसाक्षात्कारधारायाः आपत्तेः तादृशसामग्र्याः सहकारित्वकल्पनस्यावश्यकत्वात् । एवं च धूमत्वाश्रयप्रत्यक्षे ज्ञानप्रकारीभूतधूमत्वत्वेनैव हेतुत्वं नत्विन्द्रियभेदेन पुरुषभेदेन वा कार्यकारणभाव इत्यपि लाघवम् । अथैवं चक्षुःसन्निकृष्टपुरोवर्त्तिनि घटत्वग्रहप्रतिबन्धकदोषसत्त्वे घटत्वस्मरणबलात् यावद्घटचाक्षुषापत्तिः । नच तदाश्रयेत्यस्य तद्धर्मविशिष्टेत्यर्थस्तथाच तद्धर्मविशिष्टलौकिकप्रत्यक्षसामग्र्याः सहकारित्वात्तद्धर्मांशेऽपि लौकिकप्रत्यक्षसामग्री सहकारित्वलब्धा प्रकृते च घटत्वांशे दोषाभावघटितसामग्र्यसत्त्वान्न घटत्वाश्रययावत्प्रत्यक्षापत्तिरिति वाच्यं । तथासति धूलीपटले धूमभ्रमात् * धूम इति ज्ञानानुदयापत्तेः धूमत्वांशे लौकिक-

* धूमभ्रमानन्तरं धूमा इति ज्ञानानुदयापत्तेरित्यपि पाठान्तरम् ॥

प्रत्यक्षसामग्र्यास्त्वादिति चेन्न । तत्र यावद्घटचाक्षुषस्वीकारे लिङ्गापत्तेरिति मध्यमतनिगर्वः । अत्र केचित् ज्ञानलक्षणाप्रत्यासत्त्यस्वीकारे सुरभिचन्दनमित्यादौ सौरभत्वादेर्भानानिर्वाहात् तत्स्वीकार आवश्यकः सौरभत्वसामान्यलक्षणया सौरभभाननिर्वाहेऽपि सौरभत्ववृत्तिधर्मज्ञानाभावेन सौरभत्वभानस्य सामान्यलक्षणया निर्वाहासम्भवात् अतएव दीधितिकारः "अतएव सुरभिचन्दनमित्यादौ सौरभत्वादेरपि भान" मित्याह । तन्तु न सङ्गच्छते । सौरभत्वप्रकारक सौरभनिष्ठविशेष्यताशालिलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति सौरभत्वप्रकारकज्ञानत्वेन सामान्यलक्षणाप्रत्यासत्ते र्हेतुत्वोपगमेन सौरभत्ववृत्तिधर्मज्ञानाभावेपि सौरभत्वज्ञानबलादेव सौरभत्वभानोपपत्तेरिति ज्ञानलक्षणाप्रत्यासत्तिस्वीकारो निरर्थकः । अथ सामान्यलक्षणया प्रत्यक्षे जननीये तद्धर्मप्रकारतानिरूपितविशेष्यताश्रये लौकिकप्रत्यक्षसामग्र्याः सहकारित्वात्तां विना कथं सामान्यलक्षणया सुरभिचन्दनमित्यादौ सौरभस्य सौरभत्वस्य वा भानमिति ज्ञानलक्षणास्वीकार आवश्यक इति चेन्न । सामान्यलक्षणया तद्धर्माश्रयमुख्यविशेष्यताशाल्यलौकिकप्रत्यक्षे जननीय एव तदाश्रयलौकिकप्रत्यक्षसामग्र्याः सहकारित्वात् प्रकृते च तदभावेपि सौरभविशेषणकालौकिकप्रत्यक्षे * जननीये बाधकाभावादित्याहुः । तन्न । यत्र सौरभत्वांशे उपनीतभानात्मकं सौरभत्वप्रकारकं चन्दनविशेष्यकं सौरभं चन्दनमिति भ्रमात्मकं ज्ञानं तत्र सौरभत्वज्ञानरूपसामान्यलक्षणया न निर्वहति सौरभत्वप्रकारतानिरूपितसौरभनिष्ठविशेष्यताशालिज्ञानत्वस्यैव सौरभत्वज्ञानरूपसामान्यलक्षणाप्रत्यासत्तेः कार्यतावच्छेदकत्वात् । तदुक्तं दीधितिकृता । "इयं च धर्मिविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिरितरांशे तु यद्विषयकं ज्ञानं तस्यैवेति" । तथा च चन्दनस्य सौरभत्वानाश्रयत्वेन तत्र सौरभत्वभानार्थं ज्ञानलक्षणा स्वीकार आवश्यकः । न च तत्र दोषबलादेव सौरभत्वांशे भानमिति वाच्यं । प्रत्यक्षस्य विषयेन्द्रियसन्निकर्षजन्यत्वनियमेन सौरभत्वांशेऽन्द्रियसन्निकर्षस्यावश्यकत्वात् । अतएव रजतत्वांशे लौकिक-

---

* सौरभविशेषणकालौकिकप्रत्यक्षजनने बाधकाभावादिति पाठान्तरम् ॥

ननु व्याप्तिज्ञानस्यानुमितिहेतुत्वे यत्र धूमो वह्निव्याप्य इति ज्ञानं तत्राप्यनुमितिः स्यात्। न च पक्षवृत्तिधूमे व्याप्तिज्ञानं कारणं तच्चात्र नास्तीति वाच्यं। धूमत्वेन सामान्यलक्षणप्रत्यासत्तिभूतेन सर्वत्रैव धूमे व्याप्तिज्ञानात्। न च हेतोः पक्षधर्मताज्ञानमपि सहकारीति वाच्यं। धूमो वह्निव्याप्यो द्रव्यं पर्वतश्चास्तीति ज्ञानादप्यनुमित्यापत्तेः द्रव्यत्वेन रूपेण पर्वते धूमज्ञानस्यापि सत्त्वात्॥

---

सन्निकर्षाभावात् अलौकिकसन्निकर्षस्य चाक्लृप्तत्वाच्चान्यथाख्यातिरिति प्राभाकराः। तथा च तादृशनियमस्य सर्वसिद्धत्वात्तौरभत्वभानार्थं ज्ञानलक्षणास्वीकार इति। ननु व्याप्तिज्ञानस्यानुमितिहेतुत्वसम्भवेऽपि केवलव्याप्तिज्ञानकालेऽप्यनुमित्यापत्तिरित्याशङ्कते। नन्विति। ननु पक्षवृत्तिधूमविशेष्यकं व्याप्तिज्ञानं कारणं तच्च पक्षवृत्तिर्धूमो वह्निव्याप्य इत्याकारकं तत्सत्त्वे चानुमित्युत्पत्तौ न कस्यापि विवाद इत्याशयेनाशङ्कते। न चेति। सर्वत्रैव धूम इति। पक्षवृत्तित्वावगाहिज्ञानं कारणमिति तावद्दुर्वचं वह्निव्याप्य धूमवान् पर्वत इति ज्ञानादप्यनुमित्यनापत्तेः। तत्राधेयताया भाने मानाभावात्। किंतु वस्तुगत्या पक्षवृत्तिविषयकं तत्त्वं च धूमो वह्निव्याप्य इत्यत्रापि धूमत्वेन पर्वतीयधूमविषयकत्वादक्षतमिति ततोऽनुमित्यापत्तिरिति भावः। यत्तु दृष्टान्ते धूमो वह्निव्याप्य इति ज्ञानाद् दृष्टान्तेऽनुमित्यापत्तिरित्याशङ्कते। नन्विति। तन्तुच्छं। दृष्टान्ते महानसादौ वह्निमत्ताज्ञानसत्त्वेन पक्षताविरहादेवानुमितेरनुदयात् अन्यथा सिद्धान्तेऽप्यगतेः नहि व्याप्यत्वरूपेण पक्षताविशिष्टे हेतुसत्तानिश्चयः कारणमिति तदर्थः। तथा सति पक्षतायाः परामर्शकुक्षिनिक्षेपापत्त्या कारणतावच्छेदकतापत्त्या कारणत्वानुपपत्तेः। किंतु पक्षत्वं साध्याधिकरणत्वमेव तथा च व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं कारणमित्यर्थो लभ्यते तत्तु महानसादावपि सम्भवत्येवेति पक्षताविरहान्न तत्रानुमितिरित्येवापेयमिति। द्रव्यन्ते-

उच्यते व्याप्यत्वप्रकारेण पक्षे हेतुनिश्चयोऽनुमितौ हेतुः ॥

---

नेति । एकरूपावच्छिन्नव्याप्तिपक्षधर्मतावगाहिज्ञानत्वेन हेतुत्वोक्तौ तु वह्निव्याप्यवानिति ज्ञानादनुमित्यनापत्तिरिति भावः । व्याप्यत्वप्रकारेणेति । व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं कारणमित्यर्थः । नन्वेवं खण्डशः अव्यभिचारसहचारयोर्ग्रहे वह्न्यव्यभिचरितवह्निसहचरितधूमवानिति ज्ञानात् एवं "विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति" न्यायेन वह्निव्याप्यधूमवानिति ज्ञानाच्चानुमित्यनुदयापत्तिरिति चेन्न । व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेन लाघवात् कारणत्वे सिद्धे ततोऽनुमित्यभावे इष्टापत्तेः लाघवं च व्याप्त्यंशे निश्चयत्वानिवेशादेव । अन्यथा वह्निव्याप्तिवह्निव्याप्यभाववद्धूमवान् पर्वत इति व्याप्त्यंशे संशयात्मकज्ञानादनुमित्यापत्तेः व्याप्त्यंशे निश्चयात्मकतादृशज्ञानत्वेन कारणता वाच्येति गौरवात् । मन्मते च विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावत्वेन कार्यकालवृत्तितया वा कारणत्वेन व्याप्त्यंशे संशयात्मकतादृशज्ञाने विशिष्टवैशिष्ट्यविषयकत्वाभावेनैवापत्त्यभावादिति दिक् । व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वं च व्याप्त्यवच्छिन्नप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालित्वम् । नच व्याप्यपक्षोभयवैशिष्ट्यावगाहित्वं तत् व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षनिष्ठविषयताशालित्वमिति यावत् । एवं च वह्निव्याप्यो धूमः पर्वते इत्याधेयतासंसर्गकपर्वतप्रकारकज्ञानस्यापि संग्रह इति वाच्यम् । अप्रामाण्यज्ञानाभावद्वयस्योत्तेजकत्वानुरोधेन निश्चयत्वद्वयनिवेशानुरोधेन च तयोः पृथगेव हेतुताया आवश्यकत्वात् अन्यथा एकविधपरामर्शसत्त्वेऽन्यविधाप्रामाण्यज्ञानसत्त्वेऽनुमित्यनापत्तेः मिथो विशेषणविशेष्यभावे विनिगमनाविरहाच्च नानासम्बन्धावच्छिन्ननानाधर्मावच्छिन्नावच्छेदकतायाश्चैक्यासम्भवेनावच्छेदकताया व्यासज्यवृत्तित्वासम्भवात् । नन्वेवं वह्निव्याप्यो धूमः पर्वते इति ज्ञानादनुमित्यनुदयापत्तिः तत्रोक्तविशिष्टवैशिष्ट्यावगाहिज्ञानाभावादिति चेन्न । तस्यापि स्वातन्त्र्येण हेतुत्वोपगमात् अव्यवहितोत्तरत्वनिवेशेन च परस्परजन्यानुमितौ न व्यभिचारः ।

ननु व्याप्तिज्ञानमात्रं ॥ नच धूमो वन्हिव्याप्यो द्रव्यं पर्वतवृत्तीति ज्ञानं व्याप्यत्वेन पर्वते धूममवगाहते येन ततोऽनुमितिः स्यात् ॥ पर्वतो* धूमवान्नवेति संशयवारणाय निश्चयपदम् ॥

वस्तुतस्तु अनुमितेः पक्षविशेष्यकत्वनियमेन । "एकोऽपि विशेषोऽध्यवसायकर" इति न्यायेन पक्षविशेष्यक परामर्श एव हेतुः नतु व्याप्यविशेष्यकोऽपीति ध्येयम् । उक्तातिप्रसङ्गं वारयति । नचेति । नचैवं वन्हिव्याप्यो धूमः धूमवान् पर्वत इति ज्ञानादनुमित्यनुदयापत्तिरिति वाच्यं तदुत्तरं परामर्शाङ्गीकारेण तदुपपत्तेरिति भावः । निश्चयपदमिति । निश्चयत्वं च तदभावाप्रकारकत्वे सति तत्प्रकारकत्वं तथाच शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हिव्याप्यधूमाभाव प्रकारताशून्यत्वे सति शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हिव्याप्यधूमप्रकारताशालिज्ञानत्वेन पर्वतोद्देश्यकवन्हिविधेयकानुमितौ हेतुत्वं नीलपर्वतो वन्हिव्याप्यधूमाभाववान् पर्वतो वन्हिव्याप्यधूमवांश्चेति निर्णयसङ्ग्रहाय प्रथमशुद्धत्वनिवेशः । नीलपर्वतो वन्हिव्याप्यधूमवान्नवेति संशयवारणाय द्वितीयशुद्धत्वनिवेशः । नीलपर्वतो वन्हिव्याप्यधूमवानिति निश्चयस्य तादृशानुमितौ स्वातन्त्र्येण हेतुतया न ततोऽनुमित्यनुपपत्तिः । अथ पर्वतत्वसामानाधिकरण्येन धूमधूमाभावावगाहि वन्हिव्याप्यधूमवान् वन्हिव्याप्यधूमाभाववांश्च पर्वत इति ज्ञानादनुमित्यनापत्तिरिति चेन्न । धर्मितावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहिज्ञानं समुच्चयः । धर्मितावच्छेदकावच्छेदेनान्यतरकोट्यवगाहिज्ञानं संशय इति नियमात् । तथाच पर्वतत्वसामानाधिकरण्येन वन्हिव्याप्यवत्ताज्ञानस्य हेतुतायां पर्वतत्वव्यापकत्वविशिष्टदैशिकविशेषणतासम्बन्धावच्छिन्नधूमाभावप्रकारताशून्यत्वनिवेशः । पर्वतत्वावच्छेदेन वन्हिव्याप्यवत्ताज्ञानस्य हेतुतायां च शुद्धदैशिकविशेषणतासम्बन्धावच्छिन्नधूमाभावप्रकारताशून्यत्वनिवेश इति । अनुमितिं प्रति परामर्शत्वेन हेतुत्वे कारणत्वघटकानन्यथासिद्धत्वनियतपूर्ववृत्तित्वरूपधर्मद्वयं विशिष्टपरामर्शत्वावच्छेदेन कल्प-

* पर्वतो वन्हिव्याप्यधूमवान्नवेति संशयादनुमितिर्माभूदिति निश्चयपदमिति पुस्तकान्तरस्थः पाठः ॥

मीमांसकास्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानं व्याप्तिज्ञाने सहकारि व्याप्यतावच्छेदकं च धूमत्वं तद्रूपेण व्याप्तिग्रहात् न तु द्रव्यत्वं । नातो द्रव्यं पर्वतवृत्तीति ज्ञानादनुमितिः । एवं च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानद्वयादप्यनुमितिरित्याहुः । तन्न । व्याप्यप्रकारकपक्षधर्मताज्ञानस्य हेतुतायां लाघवात् । किञ्चैवं वह्नि-

---

मीयं वह्निव्याप्यो धूमः धूमवान् पर्वत इति ज्ञानद्वयस्यानुमितिहेतुत्वे तु परामर्शं हेतुत्वेन समनियतपूर्ववृत्तिताकस्य तस्यैवानन्यथासिद्धत्वमात्रकल्पनं तथाच विशिष्टपरामर्शत्वेन हेतुत्वमसम्भवदुक्तिकमिति निष्कृष्टमीमांसकमतं दर्शयति । मीमांसकास्त्वित्यादिना । व्याप्यतावच्छेदकेति । व्याप्यतावच्छेदकत्वेन गृहीतो यो धर्मस्तत्प्रकारकं पक्षधर्मताज्ञानमित्यर्थः । अत एवानुपदं तद्रूपेण व्याप्तिग्रहादिति वक्ष्यति यथाश्रुते व्याप्यांशे भ्रमात्मकज्ञानादनुमित्युदयापत्तेः । तत्र वस्तुगत्या व्याप्यतावच्छेदकत्वाभावात् । व्याप्तिज्ञाने । व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञाने । सहकारि । तादृशव्याप्तिज्ञानेनानुमितौ जननीयायां सहकारि । धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीतिज्ञानादनुमित्यापत्तिं वारयति । व्याप्यतावच्छेदकमिति । व्याप्यतावच्छेदकतया गृहीतमित्यर्थः । स्वमते लाघवं दर्शयति । एवंचेति । ज्ञानद्वयादपीत्यपीना वह्निव्याप्यधूमवान् पर्वत इति ज्ञानसङ्ग्रहः । तथाच नैयायिकमते ज्ञानद्वयात्परामर्शं कल्पयित्वा अनुमितिस्वीकारे गौरवमिति भावः । लाघवादिति । विशिष्टनिश्चयत्वरूपलघ्वेकधर्मावच्छेदेनानन्यथासिद्धत्वनियतपूर्ववृत्तित्वकल्पनायाः गुरुधर्मद्वयावच्छेदेनानन्यथासिद्धत्वकल्पनापेक्षया लघुत्वादित्यर्थः । ननु कारणतावच्छेदकलाघवेऽपि यत्र धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानं ततोऽनुमितिस्तत्र भवता विशिष्टपरामर्शं कल्पयित्वाऽनुमितिकल्पनेन तज्ज्ञानतद्ध्वंसादिकल्पने गौरवं क्षणापलापश्चेत्यत आह । किञ्चेति । वह्निव्याप्यवानिति । व्याप्य-

ह्व्याप्यवानयमिति ज्ञानादनुमितिर्न स्यात् ॥ धूमत्वेन पक्ष-

---

तावच्छेदकधूमत्वादीनां तत्राभानादित्यर्थः । तथाच लाघवाद् विशिष्टवैशिष्ट्यावगाहिज्ञानत्वरूपलघुकधर्मावच्छेदेन कारणत्वे सिद्धे यत्रैतादृशज्ञानद्वयं तत्राप्यन्तराविशिष्टपरामर्शं कल्पयित्वाऽनुमितिस्वीकारः । लाघवानुरोधेन यथापलाघवस्यापि न्याय्यत्वात् फलमुखगौरवस्यादोषत्वात् मीमांसकमते तु व्याप्यांशे निर्धर्मितावच्छेदकाद् वह्निव्याप्यवानिति शाब्दपरामर्शात् सर्वथैवानुमित्यपलाप इति । वस्तुतस्तु व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञान व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानयो र्हेतुत्वेपि वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादनुमित्यापत्तिः । आलोकत्वस्य वस्तुगत्या व्याप्यतावच्छेदकत्वात् व्याप्यतावच्छेदकत्वेन गृह्यमाणधर्मप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वेपि तथा । आलोकत्वस्यापि कदाचिद् व्याप्यतावच्छेदकत्वेन ग्रहात् तत्कालीनतत्पुरुषीयव्याप्यतावच्छेदकत्वप्रकारकग्रहविषयधर्मेत्युक्तौ तु तत्कालीनतत्पुरुषीयत्वनिवेशे गौरवात् । एतेन गृह्यमाणव्याप्यतावच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताग्रहप्रकारीभवद्धर्मावच्छिन्नविशेष्यकव्याप्तिज्ञानत्वेन वा एकधर्मेण मयापि कारणत्वं कल्प्यत इत्यपि परास्तं । कालादिप्रवेशेन गौरवादिति । धूमत्वप्रकारकव्याप्तिज्ञानत्वेन धूमत्वप्रकारकपक्षधर्मताज्ञानत्वेन वा हेतुत्वं वाच्यं । तथाच वह्निव्याप्यो धूमः धूमवान् पर्वत इति ज्ञानद्वयस्य न तावत् पर्वतोद्देश्यकवह्निविधेयकानुमितिसामान्ये नियतपूर्ववृत्तित्वं क्लृप्तं । वह्निव्याप्यालोकवान् पर्वत इति परामर्शजन्यतादृशानुमितौ तयोःपूर्ववृत्तित्वाभावात् । किंतु अनुमितिविशेषे तथात्वं वक्तव्यं तत्तु विशिष्टपरामर्शस्यापि वह्निव्याप्यवानिति शाब्दपरामर्शजन्यानुमितावस्त्येवेति किं लाघवमेतन्मते न जानीम इति दिक् । ननु व्यभिचारज्ञानकालेपि निर्धर्मितावच्छेदकव्याप्यवत्तापरामर्शसम्भवेनानुमित्यापत्तेर्व्यभिचारस्य हेत्वाभासत्वानुपपत्त्या हेतुतावच्छेदकमनिवेश्य निश्चयत्वनिर्वचनानुपपत्त्या व्याप्तेर्निर्वक्तुमशक्यतया च हेतुतावच्छेदकगर्भव्याप्यवत्ता

धर्मतावगाहनात् ॥ तस्माद्वह्निव्याप्यवानयमित्येवंरूपाद्व्या-
प्तिविशिष्टपक्षधर्मताज्ञानात्तृतीयलिङ्गपरामर्शत्वेन प्रसि-
द्धादेवानुमितिः ॥ तृतीयत्वं कथमिति चेत् ॥ प्रथमं दृष्टा-
न्ते धूमदर्शनं ततो व्याप्तिज्ञानं ततस्तद्विशिष्टपक्षधर्मताज्ञान-
मित्येवं रूपेणेति गृहाण ॥ तृतीयकं प्रातिकमित्युक्तं नतु
तेन रूपेण हेतुत्वं गौरवाद्व्यभिचाराच्चेति ध्येयम् । सोऽयं प-

---

परामर्श एव हेतुर्वाच्यः । तथाच वह्निव्याप्यवानिति शाब्दपरामर्शस्थले
कथमनुमितिरित्यस्वरसादाह । तस्मादिति । वह्निव्याप्यवानित्येवं रूपादिति ।
वह्निव्याप्यधूमवानित्येवं रूपादित्यर्थः । प्रसिद्धादेवेत्येवकारेण मीमांसका-
भिप्रेतज्ञानद्वयव्युदासः । व्याप्त्यंशे संशयात् पक्षधर्मतांशे संशया चानु-
मित्यापत्तिवारणाय व्याप्त्यंशे निश्चयत्वं पक्षधर्मतांशे च निश्चयत्वं निवेश्यं
नैयायिकमते च व्याप्त्यंशे निश्चयत्वमनिवेश्य व्याप्तिविशिष्टवैशिष्ट्यावगाहि-
निश्चयत्वेनैव हेतुत्वमुपेयते व्याप्त्यंशे संशयात्मकज्ञाने च विशिष्टवैशिष्ट्यवि-
षयकत्वाभावेनैवापत्त्यभावादिति पूर्वमेवावेदितवान्. एवं धर्मद्वयावच्छेदे-
न हेतुत्वकल्पनात् एकधर्मावच्छेदेनैव तत् कल्पनमित्यास्तां विस्तरेण ।
तृतीयमिति । अनुमितिकारणीभूतलिङ्गपरामर्शस्य तृतीयत्वं कथमित्यर्थः ।
प्रथममिति । दृष्टान्ते यद्धूमदर्शनं तत्प्रथममित्यन्वयः । तत इति । पर्वते
धूमदर्शनानन्तरं धूमो वह्निव्याप्य इति स्मरणात्मकव्याप्तिज्ञानं द्वितीयमि-
त्यर्थः । तद्विशिष्टेति । व्याप्तिविशिष्टेत्यर्थः । स्मृतायां व्याप्तौ वह्निव्याप्यधू-
मवान् पर्वत इति ज्ञानमेव तृतीयमिति भावः । केचित्तु दृष्टान्ते धूमद-
र्शनं प्रथममित्यर्थः । व्याप्तिज्ञानं । दृष्टान्तीयधूमस्य व्याप्तिमत्तयाज्ञानं द्विती-
यमित्यर्थः । तद्विशिष्टेति । दृष्टान्ते प्रागनुभूतव्याप्तिविशिष्टस्य हेतोः ।
पक्षवृत्तित्वावगाहिज्ञानं तृतीयमित्यर्थ इति व्याचक्षुः । गौरवादिति । लिं-
ङ्गपरामर्शत्वापेक्षया तृतीयलिङ्गपरामर्शत्वेन हेतुत्वे तु गौरवादित्यर्थः ।
ननु प्रामाणिकगौरवं न दोषायेत्यत आह । व्यभिचाराच्चेति । महानसादौ

परामर्शो नानुमितेः करणं व्यापाराभावात् । अथ परामर्शद्वारा लिङ्गं परामर्शव्यापारकं भूतभाविभ्यां लिङ्गाभ्यामनुमित्यनुदयापत्तेः । अनन्यथासिद्धनियतपूर्ववृत्तित्वा-

---

सिद्धिसत्वेपि सिषाधयिषाधीनानुमित्युत्पत्त्या तत्र तृतीयलिङ्गपरामर्शाभावेन व्यभिचारादित्यर्थः । फलायोगव्यवच्छिन्नकारणत्वरूपकारणत्वमभिप्रेत्य परामर्श एवानुमानमिति केचित् । एवं लिङ्गपरामर्शयोरनुमितिहेतुत्वे लिङ्गस्यापि तत्त्वं विशिष्टे कारणताग्राहकंप्रमाणमसति बाधके विशेषणस्यापि कारणत्वं गृह्णातीति न्यायाद् विशेषणीभूतलिङ्गस्यापि कारणत्वग्रहाद्दण्डत्वादेरपि घटकारणतापत्त्या सत्यन्तनिवेशः तस्यान्यथासिद्धेरेव बाधकत्वात् । एवं विनिगमनाविरहेणापि लिङ्गस्यानुमितिकारणत्वमित्यामनन्त्याचार्याः , तदुभयमतं निराकुर्वन् स्वमतमाह । सोयमिति । व्यापाराभावादिति । फलायोगव्यवच्छिन्नकारणत्वस्य च व्यापारवदसाधारणत्वापेक्षया गुरुत्वेन हेयत्वादिति भावः । यथा चैतत्तथा प्रत्यक्षपरिच्छेदे विवेचितम् । ननु यत्र परामर्शोत्तरं लिङ्गनाशस्तत्र तदनुमितिस्तत्र योग्यविभुविशेषगुणनाश्यत्वावच्छिन्नं प्रति स्वोत्तरोत्पन्नगुणत्वेन नाशकतया परामर्शस्यापि लिङ्गनाशरूपव्यापारसत्त्वात्कारणत्वं संभवत्येवेति चेन्न । यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तद्व्यापारत्वमिति नियमेन मत्वानीये अन्यत्र तथात्वासंभवेन तस्यानुमानत्वाङ्गीकारस्यासंभवितत्वादिति । लिङ्गमिति । अनुमितिकारणमित्यनुषज्यते । परामर्शव्यापारकमित्यनेन कारणलक्षणसत्त्वं सूचितम् । भूतेति । अतीतानागतधूमविषयको यत्र मानसो वह्निव्याप्यवत्तापरामर्शस्तत्रानुमित्यनुदयापत्तेरित्यर्थः । न च तत्र तत्प्रागभावादीनामेव लिङ्गत्वमास्तामिति वाच्यम् तेषां तदा तद्व्याप्यत्वेनापरामृश्यमानत्वादिति भावः । ननु अतीतलिङ्गस्थलेऽनुमितिपूर्वं तस्य सत्त्वेन हेतुत्वमक्षतमत आह । अनन्यथेति । अनुमित्यव्यवहितपूर्वक्षणावच्छेदेन न तत्सत्त्वमिति भावः । ननु कारणत्वं कार्याव्यवहितपूर्वक्षणावच्छेदेन कारणतावच्छेदकसंबन्धावच्छिन्नकार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तच्चातीतानागतधूमस्थलेऽनुमित्यव्यवहितपूर्वं धूमासत्त्वेपि

तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यासंभवादवश्यमेव । तथाहि न तावत्तादृगभावौ ध्वंसप्रागभावौ भवतः तयोः संबन्धावच्छिन्नप्रतियोगिताकत्वे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे च मानाभावेन तथात्वासंभवात् । तत्त्वे वाप्रमाणसत्त्वे च एकविशेषवति सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसप्रागभावयोरनभ्युपगमेन धर्माधिकरणे तयोस्तथात्वासंभवात् । नाप्यत्यन्ताभावः प्रप्रतियोगिवद् ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वादिति चेन्न । तयोर्विरोधित्वे मानाभावात् । अन्यथा अन्तराश्यामे रक्तं रूपं नास्तीति प्रतीत्यनुपपत्तेः । तस्याः ध्वंसादिविषयकत्वे भूतभाविरक्तघटेऽपि तदापत्तेरिति । एवञ्च ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे भग्ने अग्रेऽपि तयोस्तत्सामानाधिकरण्ये बाधकाभावः इत्थं चातीतभाविधूमवत्यपि धूमो नास्तीति प्रतीत्या धूमात्यन्ताभावसत्त्वे नानुमितिरूपकार्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपकारणत्वासंभवात् ज्ञायमानलिङ्गमनुमानमिति दिक् । ननु धूमवति धमात्यन्ताभावसत्त्वेऽपि अव्याप्यवृत्तिक्रियादीनां संयोगादीनां संयोगादिकं प्रति हेतुत्वोपपत्तये कारणतालक्षणे कार्याधिकरणवृत्त्यभावेत्यत्राभावे प्रतियोगिवैयधिकरण्यं वृत्तिमत्त्वं वा हेतुमत्ताप्रविरोधितानियामकसंबन्धेनावश्यं विवक्षणीयम् । एवं च धूमाधिकरणे धूमात्यन्ताभावसत्त्वेऽपि तस्य प्रतियोगिवैयधिकरण्याभावात् धूमवत्ताप्रविरोधितानियामकसंबन्धेन वृत्तिमत्त्वाभावाच्च न तादृशत्वं किन्त्वन्य एव तादृशोऽभावस्तत्प्रतियोगितानवच्छेदकधर्मवत्त्वं धूमे अक्षतमेव । नच धर्मानधिकरणकालावच्छेदेन धूमाभावोऽपि प्रतियोगिव्यधिकरणएवेति वाच्यम् । प्रतियोगिव्यधिकरणत्वं हि न प्रतियोग्यधिकरणावृत्तित्वं सामानाधिकरण्यस्याव्याप्यवृत्तित्वे मानाभावात् किंतु प्रतियोग्यनधिकरणवृत्तित्वम् । अन्योन्याभावस्य व्याप्यवृत्तितया प्रतियोग्यधिकरणेन प्रतियोग्यनधिकरणत्वसंभवः अन्यथा ऽव्याप्यवृत्त्यसङ्ग्रहतादवस्थ्यादिति धूमाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् । नचैवं रासभसंयोगादीनामपि घटकारणत्वापत्तिः त्वदुक्तरीत्या तस्यापि प्रतियोगिवैयधिकरण्याभावादिति वाच्यम् । अनन्यथासिद्धपदेनैव तद्वारणात् । न च रासभादीनामपि तेनैव वारणे कारणतालक्षणे नियतपदवैयर्थ्यमिति वाच्यं । रासभसामान्यस्य घटसामान्यं प्रति हेतुत्ववारणाय तत्सार्थक्यादिति स्वयमेव तावद्विभावनीयम् । नच रासभसंयोगादिवल्लिङ्गस्यापि अन्यथासिद्धत्वमिति वाच्यम् ।

अन्यथासिद्धेरेकस्या निर्वक्तुमशक्यतया तत्तद्व्यक्तिभेदकूटस्यैव निवेशनीयतया गौरवेण धूमव्यक्तिभेदानिवेशात् । विशिष्टे कारणताग्राहकं प्रमाणमसति बाधके विशेषणस्यापि कारणत्वं गृह्णातीतिनियमस्य साधकस्य सत्त्वाच्च । अन्यथा इन्द्रियसंयोगादीनां हेतुत्वे इन्द्रियस्यापिहेतुत्वानुपपत्तेः एवं विषयितया लिङ्गविशिष्टज्ञानं कारणं विषयतया ज्ञानविशिष्टलिङ्गं वेत्यत्र विनिगमनाविरहोऽपि तद्धेतुत्वसाधकः। ननु परामृश्यमानलिङ्गस्यानुमितिसामान्ये न हेतुत्वं धूलीपटलादपि भ्रमानुमित्युदयेन तत्र लिङ्गाभावात् । नच प्रमानुमितौ तद्धेतुः अनुमितिसामान्ये तु परामर्श एव हेतुरिति वाच्यं । यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे तद्विशेषस्यैवासति बाधके प्रयोजकत्वात् परामर्शप्रमात्वस्यैवानुमितिप्रमात्वे प्रयोजकत्वौचित्यादितिचेन्न। लिङ्गत्वं न तावद्व्याप्तिपक्षधर्मतावत्त्वं येन धूलीपटले धूमभ्रमानन्तरं तन्न स्यात् किंतु तद्धेतुत्वं तच्च तत्राप्यक्षतत्वादिति न किञ्चिदेतत् इत्याचार्यमतमखण्डितमेवेतिचेन्नैवं । कार्याधिकरणवृत्तिर्यो स्वप्रतियोग्यधिकरणता तदवच्छेदककार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति कार्याधिकरणे सत्त्वमेव कारणत्वपदार्थत्वात् तच्च चातीतानागतलिङ्गस्थलेऽसत्त्वादिति दिक् । नवीनास्तु नहि वयं लिङ्गज्ञानत्वेन कारणतां ब्रूमो येनोक्तानियमावकाशो विनगमनाविरहो वा भवेत् किन्तु ज्ञानत्वेनैवेति न लिङ्गस्य हेतुत्वं व्याप्तिप्रकारकपक्षधर्मताज्ञानरूपपरामर्शात्मकविशेषसामग्रीविरहाच्च न यत्किञ्चिज्ज्ञानादनुमित्यापत्तिरित्याहुः । ननु यत्र विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन परामर्शादनुमितिस्तत्र व्याप्तिज्ञानस्य परामर्शद्वारा कारणत्वासंभवइत्यत आह । साध्यज्ञानंवेति। ननु साध्यत्वं सिद्धिकर्मत्वादिरूपतया गुरुतरमत आह । लिङ्गज्ञानंवेति । लिङ्गनिवेशेपि गौरवादाह । जन्यज्ञानेति । जन्यपदं नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियममभिप्रेत्य तदङ्गीकारे तु नोपादेयमेव तत् । अतिप्रसङ्ग इति । परामर्शशून्यकालीनघटज्ञानादनुमितिप्रसङ्ग इत्यर्थः । व्यापारेण । परामर्शरूपव्यापारेण । तन्निरासात् । अतिप्रसङ्गनिरासात् । नन्वेवं घटज्ञाने पर्वतो वह्निमानित्यनुमितिजनकत्व व्यवहारापत्तिरिष्टत्वात् । कार्यत्वेन ज्ञानत्वेन कार्यकारणभावात् अयमतेपि तज्जनकत्वव्यवहारस्याङ्गीकृतत्वात् । नचानुमितित्वावच्छिन्नजनक

रणं किंतु व्याप्तिज्ञानं साध्यज्ञानं वा लिङ्गज्ञानं वा जन्यज्ञानमात्रं वा परामर्शव्यापारकं । न चातिप्रसंगः । व्यापारेण तन्निरासात् । ज्ञानपदं च सविषयकमात्रपरं नातः स्मरणात्मकपरामर्शस्थले व्यभिचारः तत्र व्याप्तिविषयकसंस्कारस्य परामर्शव्यापारकस्य करणत्वात् पूर्वानुभव एव करणमिति संक्षेपः ॥ तच्चानुमानं त्रिविधं । केवलान्वयिकेव-

---

रणव्यवहारो नानुभूयत इति वाच्यं । तावतापि क्षत्यभावादिति । नन्वेतावता परामर्शरूपव्यापारद्वारा ज्ञानमनुमितिकरणमिति सिद्धं तथा च यत्र वह्निव्याप्यधूमवानिति स्मरणात्मकपरामर्शस्तत्रानुमितिर्न स्यात् । परामर्शव्यापारकस्य ज्ञानस्य तत्राभावादित्यत आह । ज्ञानपदमिति । सविषयकेति । तथा च सविषयकत्वेनानुमितिकरणत्वेन संस्कारस्यैव स्मरणात्मकपरामर्शद्वारा करणत्वसंभवान्नानुपपत्तिरिति भावः । ननु सविषयकत्वस्य ज्ञानत्वापेक्षया गुरुत्वेन ज्ञानत्वमेव तज्जनकतावच्छेदकं न चोक्तानुपपत्तिः । तत्रापि स्वजन्यसंस्कारजन्यस्मरणरूपपरामर्शस्यैव व्यापारत्वसंभवादित्यभिप्रेत्याह । पूर्वानुभव एवेति । इयता प्रबन्धेनानुमानस्वरूपं निरूप्य तद्विभागमाह । तच्चेति । अनुमानम् । अनुमितिकरणं । ननु केवलान्वयित्वमत्यन्ताभावाप्रतियोगित्वम् इत्थं च इदं वाच्यं ज्ञेयत्वादित्यत्रोपपत्तावपि इदं वाच्यं घटत्वादित्यादेरतथात्वप्रसङ्गादित्यतः पारिभाषिकं केवलान्वयिपदार्थमाह । तत्रेति । तेषु मध्ये इत्यर्थः । केवलान्वयिसाध्यकेति । केवलान्वयिसाध्यविधेयकानुमितिजनकत्वं तत्त्वमित्यर्थः । इयं च इदं वाच्यं घटत्वादित्यत्रापि केवलान्वयिवाच्यत्वरूपसाध्यकत्वान्नासङ्गतिरिति भावः । साध्यविशेषणीभूतं केवलान्वयित्वं दर्शयति । तत्र यदिति । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमित्यर्थः । नन्वेवमाकाशाभावादीनां केवलान्वयित्वानुपपत्तिः । आकाशादिरूपाभावप्रतियोगित्वादिति चेन्न । वृत्तिमदत्यन्ताभावाप्रतियोगित्वस्य विवक्षितत्वात् । आकाशश्च न वृत्तिमदभाव इति न दोषः । केचित्तु घटाभावो नास्तीति प्रतीत्या घटाभावाभावसिद्धावपि आकाशाभावो नास्तीति प्रतीतेरभावादाकाशाभावाभावे मानाभावः प्रतियोगित्वं च स्वरूपसंबन्धविशेष एव न तु स्वाभावविरहात्मत्वमिति आकाशे नाकाशाभावप्रतियोगित्वानुपपत्तिः एवं च वृत्तिमत्त्वविशेष-

व्यतिरेक्यन्वयिव्यतिरेकिभेदात् तत्र केवलान्वयिसाध्यकमनुमानं केवलान्वयि तत्र यो धर्मः सर्वत्रैव वर्तते

---

यानुपादानेपि न क्षतिरित्याहुः । यस्मात्तस्मात् अत्यन्ताभावाप्रतियोगित्वं तत्त्वं ।

संयोगाभावादीनां केवलान्वयित्वोपपत्तये प्रतियोगिवैयधिकरण्यमप्यत्र निवेशनीयं । प्रतियोगिवैयधिकरण्यं चात्र प्रतियोग्यनधिकरणवृत्तित्वं न तु प्रतियोग्यधिकरणावृत्तित्वं तथासति अधिकरणभेदेन अभावभेदे मानाभावात्संयोगाभावस्य संयोगाधिकरणवृत्तित्वाभावेन तादृशाभावान्तराप्रतियोगित्वात्संयोगस्यापि केवलान्वयित्वापत्तेः तथा विवक्षिते तु संयोगानधिकरणवृत्तित्वविशिष्टसंयोगाभावप्रतियोगित्वान्नोक्तानुपपत्तिः इत्थं चाकाशरूपाभावस्य निरुक्तप्रतियोगिवैयधिकरण्याभावेनैवाकाशाभावस्य केवलान्वयित्वोपपत्तेर्वृत्तिमत्त्वमत्यन्ताभावे न देयम् न चैवमप्याकाशाभावस्य प्रतियोगिवैयधिकरण्याप्रसिद्ध्या तादृशाभावान्तराप्रतियोगित्वात् आकाशेऽतिव्याप्तिरिति वाच्यम् यादृशप्रतियोगितावच्छेदकसंबन्धसामान्ये यत्प्रतियोगिप्रतियोगिकत्वयादृशाभावाधिकरणयत्किञ्चिद्वृत्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगिताशून्यत्वस्य विवक्षितत्वात् तत्र चाकाशाभावसाधारणतया वृत्तिनियामकसंयोगादिरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताक एवाकाशाभावः केवलान्वयी तथा च वृत्तिनियामकसंयोगे आकाशप्रतियोगिप्रतियोगिकत्वाभावेनोभयाभावसत्त्वात् सोऽपि प्रतियोगिव्यधिकरण एवेति नातिव्याप्तिः इत्थं च वृत्तिमत्त्वमत्यन्ताभावे न देयमेव आकाशाभावाभावस्याकाशस्य निरुक्तप्रतियोगिवैयधिकरण्याभावेनाकाशाभावस्य केवलान्वयित्वोपपत्तिरिति । अन्योन्याभावप्रतियोगितानवच्छेदकत्वे सति वृत्तिमत्त्वं वा तत्त्वमितिदिक् ॥

साध्यं दर्शयति । यथेति । सर्वाभिधाविषयत्वमभिधेयत्वम् अभिधा चास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिकेच्छा सा चास्माकीनैव तथा चास्माकीनयावत्तादृशेच्छाविषयत्वं वा यत्किञ्चित्तादृशेच्छाविषयत्वं वा तत्त्वं तच्च नाद्यः यावदिच्छाविषयत्वस्य कुत्राप्यसंभवात् । नाप्यन्त्यः अस्मदीययत्किञ्चिदिच्छाविषयत्वस्य सर्वत्रासत्त्वादत आह । अभिधेयत्वमिति । भगवदिच्छायाः सर्वविषयकत्वेन तद्विषयत्वस्य सर्वत्र सत्त्वादिति भावः । एतदेवा-

स केवलान्वयी यथा अभिधेयत्वज्ञेयत्वप्रमेयत्वादि अभिधेयत्वं च भगवदिच्छारूपशब्दशक्तिविषयत्वं तच्च सर्वत्रैव वर्तते सर्वस्यैव भगवदिच्छारूपशब्दशक्तिविषयत्वात् वस्तुपदशक्यत्वाच्च एवं ज्ञेयत्वं ज्ञानविषयत्वं तच्च सर्वत्रैवास्ति सर्वस्यैव भगवज्ज्ञानविषयत्वात् एवं प्रमेयत्वं प्रमाविषयत्वं तच्च सर्वत्रैवास्ति सर्वस्यैव भगव-

---

पपादयति । तच्चेति । तादृशशक्तिविषयत्वं चेत्यर्थः । अभिधेयत्वस्य तादृशेच्छारूपशब्दशक्तिरूपत्वे विषयतासंबन्धस्य वृत्त्यनियामकत्वेन इदमभिधेयमित्यभिधेयत्ववत्ताप्रतीत्यनुपपत्तेः । तादृशशब्दशक्तिविषयत्वरूपत्वमेव तस्याभिहितमिति ध्येयम् । ननु सामान्यतस्तत्पदजन्यत्वप्रकारकतद्बोधविशेष्येच्छाविषयत्वमेको धर्मो नास्त्येव सर्वसाधारणतत्त्वस्याभावात् किंतु विशिष्य घटपदजन्यत्वप्रकारकघटबोधविशेष्येच्छाविषयत्वादिकमेव तत्त्वं तच्च न प्रत्येकं केवलान्वयि इत्यत आह । वस्तुपदेति । तथाच वस्तुपदजन्यत्वप्रकारकवस्तुबोधविशेष्येच्छाविषयत्वं सर्वसाधारणं संभवत्येवेति नोक्तानुपपत्तिरित्यर्थः । भगवज्ज्ञानविषयत्वादिति । प्रमेयत्वादिसामान्यलक्षणाप्रत्यासत्तिगम्यास्मदादिज्ञानविषयत्वस्यापि केवलान्वयित्वमित्यपि बोध्यम् । अनुमितिं प्रति साध्यसन्देहरूपपक्षतायाः कारणतया केवलान्वयिसाध्यकस्थले साध्यसन्देहाभावेनानुमितिसामग्र्यभावात् नेदमनुमानमिति मीमांसकमतं दर्शयति । अन्ये केचिदिति । पक्षतायाः हेतुत्वे युक्तिमाह । यत इति । साध्यवत्त्वेनेति । सन्दिग्धसाध्यवत्त्वं पक्षत्वमिति प्राचीनमतेन लक्षणस्य यदि सन्देहविषयीभूतसाध्यवत्त्वमर्थः तदातीतानागतसाध्यकानुमितेरव्याप्तेरिति साध्यप्रकारकसन्देहविषयत्वमेव पक्षत्वमिति भावः । अतः कथमिति । तथाच न पूर्वोक्तो विभाग इत्यर्थः । सिषाधयिषेति । अत्र साध्यनिश्चयस्य सिषाधयिषाविरहवैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्वम् अतो विभिन्नकालीनपुरुषान्तरीयसिषाधयिषाविरहसत्त्वेपि न सिषाधयिषाधीनानुमित्यनुपपत्तिः केवलान्वयिनि पक्षतामुपपादयति । साचेति ॥

इहापि । केवलान्वयिसाध्यकस्थलेपि ॥ संशय इत्यनन्तरं पक्षतेति शेषः संशयं विनेति । घनगर्जितेन मेघानुमानस्थले इत्यादिः । यत्र च संशयोस्ति तत्रापि लिङ्गदर्शनव्याप्तिस्मरणादिना तन्नाशात् तस्यानुमित्यव्यवहि-

त्वमाविश्रत्वात्। अत्र केचित् यत्र साध्यनिश्चयोऽस्ति तत्रानुमितेरनुत्पत्तेः पक्षतानुमितिरङ्गम्। सा च साध्यवत्त्वेन सन्दिह्यमानत्वं न च निश्चयत्वे न संशयो भवितुमर्हति व्यतिरेककोटेरप्रसिद्धेः। अतः कथमिदमनुमानमिति। तन्न। सिषाधयिषाविरह-विशिष्टसाध्यनिश्चयाभावो हि पक्षता सा चेहाप्यस्ति न-तु संशयः संशयं विनाप्यनुमितेरानुभविकत्वात्। साध्य-निश्चये सत्यपि अनुमित्सायां सत्यामनुमितेरुत्पत्तेस्तत्र प-

---

क्षपूर्वकत्वमिति भावः। ननु साध्यनिश्चयेऽनुमित्यनुत्पत्त्या साध्यनिश्चयाभावस्यैव पक्षतात्वमस्तु कृतं विशिष्टान्तेनेत्यत आह। साध्येति। विशिष्टान्तमिति। सिषाधयिषाविरहविशिष्टत्वं साध्यनिश्चयविशेषणमित्यर्थः तथा विवक्षिते तु न दोष इत्याह। तच्चेति। विशेषणाभावप्रयुक्तो विशिष्टाभावस्तत्राप्यस्त्येवेति भावः सिषाधयिषाविरहाभावस्य सिषाधयिषाया एव पक्षतात्वे सिषाधयिषाशून्यकाले ऽसति च साध्यनिश्चयेऽनुमित्यनुत्पत्त्या-विशेष्यनिवेशेन विशिष्टाभावस्यैव पक्षतात्वमवश्येयम् नतु पर्वतोद्देश्यक वह्निविधेयकानुमितिं प्रति सिषाधयिषाविरहविशिष्टवह्निप्रकारकपर्वतविशेष्यकनिश्चयत्वावच्छिन्नाभावरूपपक्षतायाः हेतुत्वे पाषाणमयो वह्निमान्पर्वतस्तेजस्वीत्यादिवह्निप्रकारकपर्वतविशेष्यकनिश्चयसत्त्वे पर्वतो वह्निमानित्यनुमित्यनुपपत्तिः। एवं पर्वतो वह्निमानिति सिद्धिसत्त्वे द्रव्यं वह्निमत् पर्वतो द्रव्यवानित्यनुमित्यनुदयापत्तिरत आह। संक्षेप इति। पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशालि संयोगसंसर्गकानुमितिं प्रति पर्वतोद्देश्यकवह्निविधेयकानुमितिगोचरेच्छाविरहविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्न प्रकारतानिरूपितसंयोगनिष्ठसांसर्गिकविषयताशालिनिश्चयत्वावच्छिन्नाभावत्वेन हेतुत्वान्नोक्तानुपपत्तिरिति भावः। अत्र च घटानुमितीच्छासत्त्वे पर्वतो वह्निमानित्यनुमितिवारणाय पर्वतोद्देश्यकवह्निविधेयकानुमितिगोचरेच्छात्वेनेच्छायाः निवेशः अनुमितिर्जायतामित्याद्यननुगतेच्छानां तु तत्तद्व्यक्तित्वेन पर्वते वह्निमनुमिनुयामित्यनुगतेच्छानां तु पर्वतोद्देश्यकत्वप्रकारतानिरूपितवह्निविधेयकत्वप्रकारतानिरूपितसंयोगादिनिष्ठसांसर्गिकविषयकत्वप्रकारतानिरूपितधूमलिङ्गकत्वप्रकारताकानुमितिगोचरेच्छात्वेनोक्तं नवत्वं बोध्यं नतु-सर्वसाधारणपर्वतोद्देश्यकवह्निविधेयकानुमितिगोचरेच्छात्वेन तथासति च

क्षतासंपत्तये विशिष्टान्तमादाय सिषाधयिषासहितसाध्यनिश्चयोऽस्ति नतु तद्विरहसहित इति संक्षेपः । असत्पक्षः केवलव्य

---

टानुमितिसामग्रीसत्वे पर्वतो वह्निमानिति सिद्धिसत्वेऽनुमितिर्जायतामितीच्छासत्वे वह्न्यनुमित्यापत्तेः । सिद्धिप्रतिबध्यीभूतघटानुमित्युत्पत्त्यापि इच्छायाः विषयसिद्ध्या इष्टापत्तेरयोगात् । तासां तत्तद्व्यक्तित्वेन उत्तेजकत्वे तु अन्यानुमितिसामग्रीसमवधानकालीनानामेव तथाविधेच्छानामुत्तेजकतया घटानुमितिसामग्रीकालीनायास्तस्या अनुत्तेजकत्वात् । अनुगतेच्छानां तु बाधकाभावात् पूर्वोक्तानुगतरूपेणैवोत्तेजकत्वमिति । ननु धूमपरामर्शसत्वे पर्वतो वह्निमानिति सिद्धिसत्वे स्वतन्त्राचालोकेन वह्निमनुयामिति इच्छायां पर्वतो वह्निमानित्यनुमित्यापत्तिरिति चेन्न । धूमलिङ्गकानुमितिं प्रति धूमलिङ्गकत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावत्वेन हेतुत्वात् । एवं आलोकादिस्थलेपि । तदुक्तं दीधितिकृता । "लिङ्गविशेषेणापि नियन्त्रितं पक्षत्वमिति" अथ वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवांश्च पर्वत इति समूहालम्बनात्मकपरामर्शकाले सिद्धिसत्वे आलोकेन वह्निमनुमिनुयामितीच्छाकाले आलोकलिङ्गकानुमित्युत्पत्त्या तस्याश्च धूमपरामर्शजन्यत्वेन धूमलिङ्गकत्वात् पूर्वं धूमलिङ्गकत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावरूपकारणाभावाद्व्यभिचार इति आलोकलिङ्गकपरामर्शविशिष्टालोकलिङ्गकेच्छाया अपि तत्रोत्तेजकत्वमावश्यकम् एवं रूपलिङ्गकपरामर्शविशिष्टरूपलिङ्गकेच्छाया अपि एवं च धूमलिङ्गकेच्छाया अपि धूमपरामर्शविशिष्टाया एव लाघवेनोत्तेजकत्वेन एकधानुमितिपक्षतयोः कार्यकारणभाव इति लिङ्गभेदेन पक्षतायाः कारणत्वे मानाभाव इति चेन्न । स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टं यत्तदन्यानुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य हेतुत्वोपगमात् । उक्तसमूहालम्बनस्थले च धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टानुमितेरुत्पत्त्या व्यभिचाराभावात् । नचोक्तस्थले धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावं विनापि यादृशसामग्रीबलाद् धूमलिङ्गकानुमितिरुत्पन्ना तादृशसामग्रीबलाद् धूमलिङ्गकपरामर्शकाले सिद्धिसत्वेप्यनुमित्यापत्तिरिति वाच्यं धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावधूमपरामर्शोभयघटितसामग्र्यां आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावघा-

तिरेकी तत्त्वं च पक्षातिरिक्तेऽनिश्चितसाध्यसाधनसहचारकत्वं तथाहि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथा जलं नचेयं पृथिवी तथा तस्मादितरेभ्यो भिद्यत इति व्यतिरेकिणमुदाहरन्ति नच पक्षातिरिक्ते जलादौ साध्यसाधनयोः साहचर्यमस्ति निश्चीयते वा नचानिश्चितसाध्यकत्वमेवसम्यक् घटादौ सा-

---

लोकपरामर्शे। अयघटितसाध्ययोरन्यतरस्यैव तत्र नियामकत्वात् अन्यथा तत्तल्लिङ्गकपरामर्शविशिष्टतत्तल्लिङ्गकेच्छानासुत्तेजकत्वे तादृशाभावकूटस्यैकत्र निवेशे तेषां मिथो विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गात्। ननु पर्वतादेश्यकवह्निविधेयकानुमितिं प्रति व्याप्यव्याप्तिप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधर्मवल्लिङ्गकत्वप्रकारकत्वसमानाधिकरणस्योभयसम्बन्धेन वह्निव्याप्यवत्तानिर्णयविशिष्टा या सिषाधयिषा तद्भिन्नविशिष्टसिध्यभावत्वेन कारणत्वे एकरूपेणैवेच्छाया उत्तेजकत्वं। ननु लिङ्गभेदेन समूहालम्बनस्थले चालोकलिङ्गकपरामर्शविशिष्टालोकलिङ्गकेच्छाया एव तथात्वेन व्यभिचारानवकाशादिति चेन्न। तथापि अनुमितिर्जायतामित्यननुगतेच्छानामनुगमकरूपाभावेन तत्तदिच्छाभावकूटस्यैव एकत्र निवेशनीयतया तेषां मिथो विशेषणविशेष्यभावे कामचारात्। अवच्छेदकताया व्यासज्यवृत्तित्वस्य निरस्तत्वात्। तत्तल्लिङ्गकपरामर्शकालीनतत्तदिच्छाभावं निवेश्य तत्तल्लिङ्गभेदेन पक्षतायाः हेतुत्वमेवोचितमितिदिक्॥ ॥ ॥

केवलव्यतिरेकिणं लक्षयति। असत्सपक्ष इति। सिद्धासिद्धिव्याघातादाह। तत्त्वं चेति। असत्सपक्षत्वं चेत्यर्थः। पक्षातिरिक्ते इति। अनिश्चितसाध्यसाधनसहचारकत्वमिति स्वरूपकीर्त्तनं नतु विवक्षितं तथा निवेशे प्रयोजनाभावात्। किंतु अनिश्चितसाध्यकत्वं तत्त्वं। साध्यसाधनयोः। इतरभेदपृथिवीत्वयोः। ननु साहचर्यासत्त्वेऽपि भ्रमात्मकतन्निश्चयसत्त्वात् नानिश्चितसाध्यकत्वमत आह। निश्चीयतेवेति। साधनसहचारनिवेशे प्रयोजनाभावेन तदनिवेशादनिश्चितसाध्यकत्वमेव तदस्तु अतं पक्षतातिरिक्ते

घटादावितरभेदस्य प्रत्यक्षत एव निश्चितत्वात् । अन्यथा सा-
ध्याप्रसिद्धौ तद्घटितव्याप्तिनिरूपणानापत्तेः । नच घटे
साध्यनिश्चये तस्य कथं पक्षत्वमिति वाच्यं । पृथिवीत्वावच्छेदेन
साध्यनिश्चयस्यैव तदवच्छेदेन पक्षताविरोधित्वात् । नचे इ-

---

इति विशेषणेनेतिशङ्कते । नचेति । एवकारेण पक्षातिरिक्त इत्यस्य व्य-
वच्छेदः । उत्तरयति । घटादाविति । प्रत्यक्षत एवेति । घटो न जला-
दिरितिप्रतीतेः । नच परमाणुसंसर्गाभाववत् अतीन्द्रियप्रतियोगिकत्वेन
कथञ्चितरभेदः प्रत्यक्षः योग्यानुपलब्धिविरहात् एवं पिशाचान्योन्या-
भावोपि न प्रत्यक्षः किंतु वायुर्वातीतिवत् तस्य लिङ्गग्रहोपक्षीणत्वात्
इति वाच्यं । तर्कितं यत्सत्वमनुपलब्धिविरोधि तदभावस्यैव योग्यत्वात् ।
नत्वैन्द्रियकप्रतियोगिकभावत्वम् । अन्यथा जलपरमाणौ पृथिवीत्वप्र-
त्यक्षापत्तेः । इत्थं च पिशाचभेदस्येवेतरभेदस्यापि प्रत्यक्षत्वोपपत्तिः । नि-
श्चितत्वादिति । तदुपादाने च घटस्य पक्षत्वात्तत्र तन्निश्चयेपि पक्षाति-
रिक्ते निश्चितसाध्यकत्वमस्त्येवेति भावः । पक्षतावच्छेदकावच्छिन्नातिरि-
क्तत्वं बोध्यं । नातो घटादेरपि यत्किञ्चित्पक्षातिरिक्तत्वादुक्तदोषः । अ-
न्यथेति । घटादावितरभेदानिश्चये इत्यर्थः । तद्घटितेति । साध्यघटि-
तेत्यर्थः । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुतया साध्यज्ञानं विना
साध्यघटितव्याप्तिज्ञानासम्भवादितिभावः । साध्यनिश्चये । इतरभेदत्व-
निश्चये । तस्य । घटस्य । पक्षत्वमिति । सिद्ध्यभाववत्त्वादिरूपंपक्षत्वमित्यर्थः
घटे इतरभेदनिश्चयेनेतरभेदनिश्चयाभावरूपपक्षत्वाभावात् कथं पृथिवीसा
मान्यस्य पक्षत्वमिति भावः । पृथिवीत्वेति । पक्षतावच्छेदकावच्छेदेन
अनुमितौ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरेव प्रतिबन्धकतया प्रकृते
पृथिवीत्वसामानाधिकरण्येन घटादावितरभेदनिश्चयोपि पृथिवीत्वाव-
च्छेदेनानुमितौ न क्षतिरिति भावः । नचैवमंशतः सिद्धसाधनस्य दूष-
कत्वविलोपप्रसंगइति वाच्यं । पक्षतावच्छेदकस्यैक्ये तद्दूषकत्वस्येष्टत्वा-
त् । पक्षतावच्छेदकनानात्वे एव तद्दूषकत्वाङ्गीकारात् । यथा वाङ्मनसे
ऽनित्ये मूर्त्तत्वादित्यत्रानित्यतायागिति बुद्धेरुद्देश्यायाः सिद्धसाध्योभयधर्मा-

सोऽस्ति सर्वत्र पृथिव्यां तन्निश्चयाभावात् अत्र च व्यतिरेकयोः सहचारात् उक्ताव्याप्तिर्गृह्यत इति प्राञ्चः । साध्याभावहेत्वभावयो र्व्याप्तिग्रहादनुमितिः न चान्वयव्याप्तिग्रहात् कथ-

---

वच्छेदेनानित्यत्वानुमितिरिति । तदवच्छेदेन । पृथिवीत्वावच्छेदेन । पक्षतेति । इतरभेदनिश्चयाभावरूपपक्षताविरोधित्वादित्यर्थः । विरोधित्वं च सहानवस्थानरूपं बोध्यम् । इह । घटे । सः । पृथिवीत्वावच्छेदेन इतरभेदनिश्चयः । सर्वत्रेति । परमाण्वादिरूपपृथिव्यामित्यर्थः । तन्निश्चयेति इतरभेदनिश्चयाभावादित्यर्थः । परमाण्वादेरयोग्यतया प्रत्यक्षेण तत्र तस्य निश्चेतुमशक्यत्वात् । तथा च पृथिवीत्वसामानाधिकरण्येन निश्चयसत्त्वेऽपि अवच्छेदकावच्छेदेन निश्चयाभावसत्त्वात् घटादेः पक्षत्वमव्याहतमेवेति भावः । इदं च घटादौ पृथिवीत्वेनेतरभेदनिश्चयमभिप्रेत्य । वस्तुतस्तु घटत्वेनैव तत्रेतरभेदनिश्चयेन पृथिवीत्वेन तदनिश्चयात् पृथिवीत्वधर्मितावच्छेदककानुमित्युत्पत्तौ बाधकाभावः तद्धर्मधर्मितावच्छेदककानुमितौ तद्धर्मधर्मितावच्छेदककसिद्धेरेव प्रतिबन्धकत्वादिति ध्येयम् । अत्रेति । व्यतिरेकयोः । साध्याभावहेत्वभावयोः । सहचारात् । उक्तेति । अन्वयव्याप्तिर्गृह्यत इत्यर्थः । लाघवेनानुमितिसामान्येऽन्वयव्याप्तिज्ञानस्यैव हेतुत्वादिति भावः । न चैवमितरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीति परामर्शात् इतरभेदज्ञानशून्यकाले पृथिव्यामितरभेद इति इतरभेदविशेष्यकानुमितेरुच्छेदः । एवं स्वातन्त्र्येणेतरभेदज्ञानसत्त्वे तादृशपरामर्शात् पृथिवी इतरभेदवतीत्यनुमितेरप्यनुदयप्रसङ्ग इति वाच्यम् । अन्वयव्याप्तिज्ञानस्यैवानुमितिहेतुत्ववादिनामाचार्याणां तदनुत्पादे इष्टापत्तेः । प्राञ्च इत्यनेनाऽस्वरसः सूचितः स च विशेषणज्ञानविधया सहचारज्ञानस्यान्वयव्याप्तिग्रहे हेतुतया साध्याभावहेत्वभावयोः सामानाधिकरण्यस्यान्वयव्याप्त्यघटकतया विशेषणत्वाभावेन तज्ज्ञानस्य कथं तादृशव्याप्तिग्रहे हेतुत्वमिति । न च व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनोभयसहचारज्ञानयोरपि हेतुत्वमिति वाच्यं । साध्याभावानवगाहितया व्यतिरेकसहचारज्ञानस्य व्यभिचारज्ञानविरोधित्वाभा-

वात् । अत्र केचित् प्राचीनमतेऽन्वयव्याप्तिज्ञाने विभिन्नधर्मिकत्वेऽपि व्यतिरेकसहचारज्ञानस्यान्वयव्यतिरेकाभ्यां यथा हेतुत्वं अन्वयव्याप्तिज्ञानस्येव चानुमितिसामान्ये हेतुरिति उपेयते तथा अन्वयसहचारज्ञानं व्यतिरेकव्याप्तिज्ञाने हेतुः तज्ज्ञानमेव चानुमितिसामान्ये हेतुरित्युच्यतां विनिगमकाभावात् । नचैवमन्वयव्याप्त्यवगाहिवह्निव्याप्यधूमवत्तापरामर्शादनुमितेरनुदयापत्तिरिति वाच्यं । भवतामितरभेदाभावव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीति व्यतिरेकव्याप्त्यवगाहिपरामर्शादनुमितेरनुदये इष्टापत्तिरिव ममापि तत्र तदनुत्पादस्येष्टत्वादिति । तन्न । अन्वयव्याप्तिज्ञानस्य हेतुत्वे लाघवस्यैव विनिगमकत्वात् । तथाहि व्यतिरेकयोर्व्याप्तिरभावनिष्ठा धूमे तद्वत्ता च स्वाश्रयव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन स्वनिरूपकाभावप्रतियोगित्वसम्बन्धेन वा । तथा चेदृशगुरुतरसम्बन्धेन व्याप्तिविशिष्टधूमवत्तावगाहिपरामर्शत्वेन हेतुत्वे गौरवं । सामानाधिकरण्यादिरूपान्वयव्याप्तिज्ञानस्यानुमिति । हेतुत्वे स्वरूपसम्बन्धेन वह्निनिरूपितव्याप्तिविशिष्टहेतुमत्तानिश्चयस्यैव तत्त्वमिति लाघवं । किञ्चैवं साध्याभावाप्रसिद्धा व्यतिरेकव्याप्तिज्ञानासम्भवेन केवलान्वय्यनुमानमात्रोच्छेदप्रसङ्ग इति दिक् ॥

अन्वयव्याप्तिज्ञानमिव व्यतिरेकव्याप्तिज्ञानमप्यनुमितिहेतुः । नच केवलान्वय्यनुमित्यनुरोधेन आवश्यकहेतुभावेनान्वयव्याप्तिज्ञानेनैवोपपत्तौ तस्य पृथक्कारणत्वकल्पने गौरवमिति वाच्यम् । इतरभेदज्ञानशून्यकाले इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिपरामर्शादितरभेदविधेयकानुमितेः स्वातन्त्र्येण इतरभेदज्ञानसत्त्वे तादृशपरामर्शात् इतरभेदविशेषणकानुमितेरपलापप्रसङ्गेन तद्धेतुत्वस्य न्याय्यत्वात् । प्रामाणिकगौरवस्यादोषत्वात् । नचैवं परस्परव्यतिरेकेऽपि रस्परेण कार्योत्पादनात् परस्परजन्यानुमितौ तयोर्व्यभिचार इति वाच्यं । भवन्मतेऽन्वयसहचारज्ञानव्यतिरेकसहचारज्ञानयोरन्वयव्याप्तिज्ञानहेतुत्वे तत्र व्यभिचारवारणायाव्यवहितोत्तरत्वनिवेश इव मन्मतेऽपि परस्परजन्यानुमितौ व्यभिचारवारणायाव्यवहितोत्तरत्वस्य निवेशनीयत्वादिति । अन्वयव्यतिरेकाभ्यामुभयविधव्याप्तिज्ञानस्यानुमितिहेतुत्वमिति मणिकारमतमा-

अन्यानुमितिरतिप्रसङ्गादिति वाच्यं । साध्याभावव्यापकाभा-
वप्रतियोगित्वेन पक्षधर्मतानिश्चयः साध्यानुमापक इत्यभ्युपग
मात् इत्यन्ये उभयान्योऽन्वयव्यतिरेकी यथाप्रसिद्धानुमान-
मिति संक्षेपः ॥ एवं हेतावभिहिते तदाभासा निरूप्यंते । तत्र

---

दर्शयति । साध्याभावेत्यादिना । अनुमितिः । साध्यविधेयानुमितिः ।
ननु हेत्वाभावनिरूपितसाध्याभावनिष्ठव्याप्तिज्ञानं हेत्वभावविधेयकानुमितिं
जनयतु नतु साध्यविधेयकानुमितिम् । अनुमितौ व्यापकतावच्छेदक-
रूपेणैव व्यापकस्यैवाभावनियमात् । अन्यथा वह्निव्याप्तिज्ञानाद् घटानु-
मित्यापत्तिरित्याशङ्कते । नचेति । अन्यव्याप्तिग्रहात् । अन्यनिरूपितव्या-
प्तिज्ञानात् । हेत्वभावनिरूपितव्याप्तिज्ञानादिति यावत् । अन्यानुमितिः ।
साध्यविधेयकानुमितिः । नन्वन्यव्याप्तिज्ञानस्यान्यविधेयकानुमितिजनकत्वे
बाधकाभाव इत्यांह । अतिप्रसङ्गादिति । घटनिरूपितव्याप्तिज्ञानात्
पटविधेयकानुमितिप्रसङ्गादिति भावः । पक्षधर्मतेति । स्वाश्रयव्यापकी-
भूताभावप्रतियोगित्वसम्बन्धेन साध्याभावनिष्ठव्याप्तिविशिष्टहेतुमत्ताव-
गाहिनिश्चय इत्यर्थः । साध्यानुमापक इति । साध्यविधेयकानुमितिविशेषे हे-
तुरित्यर्थः । व्यतिरेकव्याप्त्यवगाहिपरामर्शाव्यवहितोत्तरानुमितिजनक
इति यावत् । व्यापकतावच्छेदकरूपेण व्यापकस्य भानमिति नियमस्तु अन्व
यव्याप्त्यवगाहिपरामर्शाव्यवहितोत्तरजन्यानुमितिस्थले एवेति द्रष्टव्यं ।
ननु घटादावितरभेदस्य निश्चितत्वेन पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वा-
द् घटवदित्यन्वय्येवास्तु नतु व्यतिरेकीति निश्चितसाध्यवत्त्वमेव दृष्टान्तत्वे
प्रयोजकं नतु पक्षान्यत्वमिति चेन्न । अन्वयसहचाराग्रहदशायां व्यति-
रेकसहचारेणैव व्याप्तिग्रहोदयात् । तदुक्तमाचार्यैः "अस्तु तावदयं सु-
कृदुपदेशः केवलव्यतिरेकिलक्षणं नार्थासिद्धमिति" । अन्वयव्यतिरेकिणं
लक्षयति । उभयान्य इति । केवलान्वयि केवलव्यतिरेक्यन्य इत्यर्थः । प्रसि-
द्धानुमानमिति । वह्निमान्धूमादित्यादावित्यर्थः । केचित्तु । अन्वयस-
हचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वं व्यतिरेकसहचारमात्रगृही-
तव्याप्तिकत्वं केवलव्यतिरेकित्वम् । उभयसहचारगृहीतव्याप्तिकत्वम् अ-
न्वयव्यतिरेकित्वं । दशाविशेषे धूमस्यापि केवलान्वयित्वव्यतिरेकि-

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।

त्वे इष्ट एव। नचैवं विभागव्याघातः उपधेयसंकरेऽपि उपाधेरसंकरा-दिति अतएवाह संक्षेप इत्यत्याहुः। नन्विदं ज्ञायमानलिङ्गस्यानुमान-त्ववादिनये उपपद्यते नतु लिङ्गज्ञानस्यानुमानत्ववादिनये अतएवा-नुपदमेव एवं हेत्वाभिहितेइति वक्ष्यतीति चेन्न। तच्चानुमानं त्रिविध-मित्यस्य अनुमितिजनके लिङ्गज्ञानविषयीभूतं लिङ्गं त्रिविधमित्यर्थः। न-चानुमितिकरणस्यैव विभागौचित्यात् लिङ्गस्य त्रिविधत्वोत्कीर्त्तनमस-सङ्गतमिति वाच्य। केवलान्वयिसाध्यकानुमितिजनकत्वकेवलव्यतिरेकि-साध्यकानुमितिजनकत्वअन्वयव्यतिरेक्युभयसाध्यकानुमितिजन कत्वभेदेन-लिङ्गज्ञानस्यत्रिविधत्वेन लिङ्गस्यापि त्रिविधत्वसंभवात् वस्तुतो लिङ्ग-ज्ञानस्यैव त्रिविधत्वं लिङ्गस्य तुतद्विषयत्वेन तत्वं। केवलान्वयिसाध्य-कानुमानमित्यस्य केवलान्वयिसाध्यकानुमितिजनकज्ञानविषयइत्यर्थः। एवं पक्षातिरिक्तेऽनिश्चितसाध्यकत्वमित्यस्य पक्षातिरिक्ते अनिश्चितसाध्यविधेय-कानुमितिजनकविषयइत्यर्थः। उभयान्यइत्यस्य च केवलान्वयिकेवलव्यति-रेकिसाध्यभिन्नसाध्यविधेयकानुमितिजनकज्ञानविषयइत्यर्थः। एवं हेता-वभिहिते इत्यस्य तादृशज्ञानविषयीभूते हेतावभिहिते इत्यर्थः इति ना-शङ्कापङ्ककलङ्कलेशोऽपीति। तत्त्वनिर्णयविजयरूपैककार्यकारित्वात् प्र-सङ्गाच्च हेत्वाभासान्निरूपयति। एवमिति। तदाभासाः। हेत्वाभासाः। हेतुवदाभासंते इति हेत्वाभासा इति योगाद्दुष्टो धर्म्यैव हेत्वाभासपदवाच्य इति ध्येयम्। अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वंबाधतदभावव्याप्यवत्ताज्ञानादीनां साक्षादेवानुमितिप्रतिब-न्धकत्वात् बाधसत्प्रतिपक्षयोर्लक्षणसमन्वयः व्यभिचारज्ञानादीनामनु-मितिकरणव्याप्तिज्ञानादिप्रतिबन्धकत्वेन तद्विषयत्वेन व्यभिचारादेर्हे-त्वाभासत्वोपपत्तेः। अतएव व्यभिचारादिसङ्ग्रहाय अनुमितिप्रतिबन्धके-ति विहायानुमितितत्करणान्यतरेत्युक्तं। नच तद्धेतोरेव तदस्तु तत्धेतुत्वं किं तेनेति न्यायेन व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वमेवास्त्विति वाच्यं। धूमपरामर्शकाले आलोके वह्निव्यभिचारीति व्यभिचारज्ञानकाले अनुमित्यनुदयप्रसङ्गात्। नच तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्न-विशेष्यकव्यभिचारज्ञानस्यैव प्रतिबन्धकत्वमिति वाच्यं। गौरवात्। सा-क्षादविरोधिनो ज्ञानस्य तत् जनकज्ञानविघटकं तनैव विरोधित्वाच्च।

स व्यभिचारस्त्रिविधः । साधारणासाधारणानुपसंहारभेदात् तत्र साधारणत्वं साध्यवदन्यवृत्तित्वं । यथा धूमवान्वह्नेरित्यत्र धूमवदन्यस्मिन् तप्तायःपिण्डे वह्निसत्त्वात् । साध्यासमा-

नचैवं धूमो वह्निव्याप्य इति ज्ञानकाले भिन्नेन्द्रियादिजन्यव्यभिचारज्ञानकालेप्यनुमित्युदयापत्तिरिति वाच्यम् इष्टत्वात् । तदुक्तं । "करणे पूर्णे किं असिद्धेरिति" । व्यभिचारभ्रमसमादायातिप्रसङ्गभङ्गाय यथार्थेति । विभजते । तत्रेति । तत्र त्रिविधव्यभिचारे निरूपणीये । साध्यवदन्येति । साध्याभाववद्वृत्तित्वमिति कृते धूमाभाववदयोगोलकवृत्तित्वेन धूमवान् वह्नेरित्यादौ लक्षणसम्भवेपि कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववद्वृत्तित्वादेतद्वृक्षत्वस्यापि तत्त्वापत्तिः । प्रतियोगिवैयधिकरण्यादिनिवेशे चातिगौरवमिति तत्परित्यागः । अन्योन्याभावस्य च व्याप्यवृत्तित्वान्नदोषः । नच कपिसंयोगी घटोभयभेदवारणाय प्रतियोगिवैयधिकरण्यनिवेश आवश्यक इति वाच्यम् । साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवत् वृत्तित्वस्य विवक्षणात् । नहि कपिसंयोगनिष्ठावच्छेदकतानिरूपितकपिसंयोगवत्त्वावच्छिन्नकपिसंयोगवदन्यत्वस्यैतद्वृक्षेसत्त्वमिति । यदि चान्योन्याभावस्याप्याव्याप्यवृत्तित्वं विभाव्यते तथापि प्रतियोग्यवृत्तित्वस्यैव लाघवेन निवेशनीयत्वात् । प्रतियोगिवैयधिकरण्यापेक्षया लाघवस्य अति स्फुटत्वात् । नच द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तानतिरिक्तत्वेन सत्तायाः द्रव्यभिन्नगुणादिवृत्तित्वादतिप्रसङ्ग इति वाच्यं । साध्यवदन्यनिष्ठाधिकरणतानिरूपकतावच्छेदकहेतुतावच्छेदकावच्छिन्नत्वस्य तदर्थत्वात् । लक्ष्ये लक्षणं योजयति । यथेत्यादिना । यद्यन्योन्याभावोप्यव्याप्यवृत्तिः तदा कपिसंयोगी एतद्वृक्षत्वादित्यत्रातिव्याप्तिः प्रतियोग्यवृत्तित्वनिवेशे त्वौचगरवमित आह । साध्यसमानाधिकरणसामानाधिकरण्येति । साध्याधिकरणावृत्तित्वमत्र साध्यासामानाधिकरण्यं नतु साध्यानधिकरणवृत्तित्वमन्यथा वह्न्यधिकरणवृत्तिद्रव्यत्वादिसामानाधिकरण्यस्य धूमसत्त्वेन वह्निमान्धूमादित्यादावतिप्रसंगापत्तेः । अत्र च साध्याधिकरणेऽवृत्तित्वं येनसंबंधेनतेन संबंधेन तदधिकरणत्वं, विशेषणताविशेषेणयाऽवृत्तित्वं तदधिकरणत्वंच बोध्यम् । एतेनयत्किंचित्संबंधेन वृत्तित्वोक्तौतु-

नाधिकरणसमानाधिकरणत्वं वा । भवति हि धूमासमानाधिकरणं यत् धूमवदन्यत्वं तत्समानाधिकरणो वह्निः । साध्यव्यापकीभूताभावप्रतियोगित्वम् असाधारणत्वम् । इदमेव सपक्षव्यावृत्तत्वं गायन्ति । उदाहरणं तु शब्दो नित्यः शब्दत्वादिति शब्दत्वं हि नित्यत्वव्यापको यः शब्दत्वाभावः तत्प्रतियोगि । नचाऽनित्यः शब्दः शब्दत्वादित्यत्राव्याप्तिः । तस्य सद्धेतुत्वात् एतज्ज्ञानं चानुमिति

---

संयोगादिना अवृत्तिपर्वतत्वसामानाधिकरण्यमादाय धूमादावतिव्याप्तिः । संबंधसामान्येनावृत्तित्वोक्तौ धूमवदन्यत्वादेरपि कालिकसंबन्धेन धूमवृत्तितया तदवृत्तिर्गगनादिरेव तत्सामानाधिकरण्यस्य च वह्नावसंभवात् असंभवापत्तेरिति परास्तं तत्समानाधिकरण्यं च तदधिकरणे हेतुतावच्छेदकसंबंधेन संबंधित्वं नातः कालिकादिसंबंधमादाय धूमादावतिव्याप्तिः । यद्यप्यसाधारणादिसाधारणमेतत्तथापि उपधेयसंकरेप्युपाधेरसंकरात् इतिन्यायेन तत्साधारण्येपि नक्षतिविरहः । असाधारणत्वाद्यज्ञानेपि एतज्ज्ञानेनानुमितिप्रतिबन्धादिति सपक्षविपक्षव्यावृत्तत्वमसाधारणत्वं । निश्चितसाध्यवद्व्यावृत्तत्वे सति निश्चितसाध्याभाववद्व्यावृत्तत्वमिति यावत् यथा शब्दो नित्यः शब्दत्वादित्यादौ सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च शब्दत्वस्य व्यावृत्तत्वात् लक्षणसमन्वयः । नच शब्दोऽनित्यः शब्दत्वादिति सद्धेतौ शब्देऽनित्यत्वानिश्चयदशायां निश्चितसाध्यवद्व्यावृत्तत्वादसाधारण्यापत्तिः । इष्टत्वात् । असाधारणसत्प्रतिपक्षयोरनित्यदोषत्ववादिनां प्राचां मतेनैतल्लक्षणादिति तन्मतं दूषयितुं स्वयं लक्षणमाह । साध्येति । ननु सपक्षव्यावृत्तत्वमसाधारणत्वमित्यस्य का गतिरित्यत आह । इदमेवेति । पूर्वनिरुक्तार्थकमेव न तु निश्चितसाध्यवद्व्यावृत्तत्वं तत् येन शब्दोऽनित्यः शब्दत्वादित्यस्य संग्रहः स्यादिति ।

अव्याप्तिरिति । अनित्ये शब्दे शब्दत्वस्य सत्त्वेनाऽनित्यत्वव्यापकाभावप्रतियोगित्वस्य शब्दत्वेऽसत्त्वादिति भावः । सद्धेतुत्वादिति । ननु असाधारणसत्प्रतिपक्षयोरनित्यदोषत्ववादिप्राचीनमते सद्धेतावपि तत् सत्त्वमेव इति चेन्न । बाधभ्रमेणानुमितिप्रतिबन्धाद्बाधस्यापि अनित्यदोषतापत्तेः । यदि च

साध्याप्रतिबन्धकं । व्यतिरेकिसत्प्रतिपक्षरूपत्वात् । न-
चैवं सत्प्रतिपक्षत्वमिति वाच्यम् । हेतुभेद एव तदङ्गी-
कारात् । कथमस्य व्यतिरेकिसत्प्रपक्षरूपतेति चेदाकाश-
स्य शब्दत्वं तु नान्वयहेतुः क्वचिदपि शब्दे नित्यत्ववत्याऽदृ-
ष्टेः किन्तु व्यतिरेकि । तथा चानित्यत्वाभावव्यापको यः
शब्दत्वाभावस्तत्प्रतियोगितया यथा साध्यं साधयेत् । तथा
नित्यत्वव्यापकीभूताभावप्रतियोगितया साध्याभावमपि सा-
धयेत् । नच द्वयोर्विरुद्धयोरेकत्र निर्णयः । किन्तु पर-
स्परप्रतिबन्धकत्वात् द्वयोरनिर्णय इति ध्येयम् । सदोषसा-

---

बाधबुद्धा प्रतिबन्धस्तानुमितिः तत्र हेतुस्तु न दुष्ट इति विभावनीयं तदा प्र-
सन्नेष्वसाधारणसत्प्रतिपक्षस्थले तदभाववद्व्याप्यवत्ताज्ञानेनानुमितिप्रतिब-
न्धात्तु नतु तत्र हेतुरपि दुष्ट इति तुल्यत्वादिति भावः । एतज्ज्ञानम् ।
असाधारणत्वज्ञानं । सा च तु । साध्याभावव्याप्यावगाहित्वात् । व्यतिरे-
कीति । व्यतिरेकव्याप्तिमत्सत्प्रतिपक्षरूपत्वात् । तथा च तदभाववद्व्याप्यव-
त्ताज्ञानमुद्रया अनुमितिविरोधित्वमिति भावः । ननु साध्यव्याप्यव-
त्ताज्ञानं साध्याभावव्याप्यवत्ताज्ञानं चात्र संवृत्तमिति सत्प्रतिपक्षाभेदप्र-
सङ्ग इत्यत आह । नचैवमिति । एवं । सत्प्रतिपक्षरूपत्वे । सत्प्रतिपक्षत्व-
मिति । तथा चैतस्य तदन्तर्गतत्वेन सत्प्रतिपक्षातिरिक्तविध इति विभागव्या-
घात इति भावः । हेत्विति । साध्यव्याप्यहेतुसाध्याभावव्याप्यहेत्वोर्भेद-
एव सत्प्रतिपक्षत्वं । यथा ह्रदो वह्निमान्धूमात् ह्रदो वह्न्यभाववान्
जलत्वादित्यादौ प्रकृते चैकस्य शब्दत्वस्योभयसाधकत्वेन न तस्योभय
लिङ्गकत्वघटितसत्प्रतिपक्षत्वमिति भावः । अदृष्टेरिति । तथा च साध्य-
साधनयोः सहचाराऽग्रहेणान्वयव्याप्त्यग्रहान्नान्वयित्वमिति भावः । त-
थाचेति । नित्यत्वाभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्या-
प्त्यवगाहिनित्यत्वव्याप्यशब्दत्ववत्तापरामर्शात् साध्यमिवानित्यत्वाभावः नि-
त्यत्वं तथा च नित्यत्वव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्त्यवगा-
ह्यनित्यत्वव्याप्यशब्दत्ववत्तापरामर्शात् साध्याभावोऽपि साधनीयः नच वि-
रुद्धोभयसाधनं सम्भवतीति परस्परानुमितिप्रतिबन्ध एव फलमित्याशयः-

**व्यतिरेकव्यतिरेकत्वं अव्याप्तिसाध्यकत्वं वा अनुपसंहारित्वं**

---

र्थः । विरुद्धयोः । साध्यसाध्याभावयोः । अनिर्णयइति । अनुत्पत्तिरित्यर्थः । अनिर्णयइत्यनेन सत्प्रतिपक्षस्थले संशयात्मकानुमित्यङ्गीकर्तृ दशनीशकरमतमादर्शितं । तदभावव्याप्यवत्ताज्ञानस्य तत्प्रकारकविशिष्टबुद्धिसामान्ये विरोधितया सत्प्रतिपक्षस्थले न संशयाकारानुमितिः किंतु परस्परानुमितिप्रतिबन्धएवेति सिद्धान्तिमतं तत्र प्रत्यक्षस्थले तदभाववाप्यवत्ताज्ञानस्य प्रतिबन्धकत्वेप्यनुमितौ तत्प्रतिबन्धकत्वाकल्पनेन संशयानुमितौ बाधकाभावः संशयस्थलेसमानस्थलेपि साध्यतदभाववव्याप्यवत्तापरामर्शाभ्यां साध्यतदभावानुमितौ जायमानायां फलतः संशयानुमितेरुपपत्तिः प्रत्यक्षस्थले तदभाववव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे कल्पनीये प्रत्यक्षत्वसंनिवेश्य तत्प्रकारकबुद्धित्वमेव तत्प्रतिबध्यतावच्छेदकं तच्चानुमितिसाधारणमिति कथमनुमित्यनुत्पत्तिरितितु नाशङ्कनीयम् । इच्छाया उत्तेजकत्वानुरोधेन विशिष्यैव अनाहार्यप्रत्यक्षत्वं निवेश्य प्रतिबध्यप्रतिबन्धकभावस्यावश्यकत्वात् । नच शाब्दस्थले इच्छाया अनुत्तेजकत्वात्तत्रैव प्रत्यक्षान्यज्ञानत्वं तत्प्रतिबध्यतावच्छेदकं तच्चानुमितिसाधारणमिति वाच्यं । प्रत्यक्षान्यत्वज्ञानत्वयोरुभयोः विशेषणविशेष्यभावे विनिगमनाविरहेण तदंशेच शाब्दत्वस्य तत्प्रतिबध्यतावच्छेदकत्वात् । परोक्षत्वजातेरनुभवत्वेन संकरात् न तस्यापि तत्वमित्यनुमितौ तत्प्रतिबन्धकत्वस्य क्लृप्ततया संशयानुमितौ नकिंचिद्बाधकमित्याहुः । तदभाववव्याप्यवत्ताज्ञानविशिष्टान्यज्ञानत्वावच्छिन्नं प्रति तदभाववव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वम् इच्छाविशिष्टत्वावच्छिन्नं प्रति इच्छात्वेन हेतुत्वमित्याहार्यानुमितेरनङ्गीकारेण तदभाववव्याप्यवत्ताज्ञानसत्वे नेच्छावलात् । नापि तदभाववव्याप्यवत्ताज्ञानाभावरूपकारणबलात् संशयानुमित्युत्पत्तिरितिदिक् ।

लाघवादाह । अवृत्तिसाध्यकत्वमिति । नचैवं धूमवानाकाशादित्यादेरसङ्ग्रह इतिवाच्यं । स्वरूपासिद्धावेव तन्निवेशात् । केचित्तु । केवलान्वयिधर्मावच्छिन्नपक्षकत्वमनुपसंहारित्वम् उदाहरणं च सर्वमनित्यं प्रमेयत्वादित्यादौ व्यतिरेकव्याप्तिग्रहप्रतिबन्धस्यात्र दूषकताबीजमित्याहुः । साध्येति । साध्यतावच्छेदकसंबन्धेन साध्याधिकरणे हेतुतावच्छेदकसंबन्धेनाप्राप्तिलमित्यर्थः । तेन समवायेन वह्नेः साध्यतायां संयोगेन धूमहेतोः संयोगे

यथा अयमाकाशवान् धूमादित्यादौ। साध्यासमानाधिकरणत्वं विरुद्धत्वं यथा गौरश्वत्वादिति। यद्यप्यसाधारणत्वमप्यस्ति सधारणत्वं च। तथाप्युपाधिभेदाद्भेदः। यत्र साध्यधीप्रतिबन्धकपरामर्शः सत्प्रतिपक्षः यथा जलमुष्णं स्पर्शवत्वादित्यादौ नेदमुष्णमतैजसत्वादित्यादि च

---

नवच्छिन्नाधिकरणवृत्तित्वेऽपि गोत्वाधिकरणे अश्वत्वस्य कालिकादिसंबन्धेन वृत्तित्वेऽपि न क्षतिः। साध्यतावच्छेदकावच्छिन्नाधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकहेतुतावच्छेदकावच्छिन्नत्वमिति निष्कर्षः। तेन गुणकर्मान्यत्वविशिष्टसत्तावान् गुणत्वात् गुणे गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ यथायथं नाव्याप्तिः। उपाधीति। असाधारणत्वविरुद्धत्वाद्युपाधीनां भेदादित्यर्थः। विरुद्धत्वज्ञानेऽसाधारणत्वाद्यज्ञानेऽप्यनुमितिप्रतिबन्धादिति भावः। सत्प्रतिपक्षः साध्यज्ञानविरोधी परामर्शः तद्वांश्च हेतुः सत्प्रतिपक्षित इति योगार्थमभिप्रेत्याह। पक्ष इति। यत्र साध्यधीप्रतिबन्धकः परामर्शः सत्प्रतिपक्ष इत्येतावतैव सामञ्जस्ये पक्ष इति संपातायातमिति कश्चित्। तन्न। पक्षविशेष्यकसाध्याभावव्याप्यवत्ताज्ञानस्यान्यविशेष्यकसाध्यवत्ताज्ञानविरोधितया पक्षविशेष्यकत्वलाभाय तत्पदस्यावश्यकत्वात्। इदं च सत्प्रतिपक्षस्यानित्यदोषत्वाङ्गीकर्तृप्राचीनमते लक्षणं बोध्यं। बाधभ्रमादनुमितिप्रतिबन्धाद्बाधस्याप्यनित्यदोषतापत्तेः तद्धेतोर्नाभासत्वमिति सत्प्रतिपक्षस्य नानित्यदोषत्वमिति। स्वमते तु पक्षे साध्याभावव्याप्यहेतुत्वं सत्प्रतिपक्षत्वम् अतएव उभयसंमतसाधारण्याय सद्धेतुमेव यथा जलमित्यादिनोदाहृतवान्। नेदमुष्णमिति। उष्णत्वाभावव्याप्यतैजसत्ववदिदमिति ज्ञानमुष्णत्वरूपसाध्यज्ञानप्रतिबन्धकमिति भावः। सत्प्रतिपक्षफलं तु परस्परप्रतिबन्धेन परस्परानुमितिप्रतिबन्ध एव। तथाहि पर्वतो वह्निमान् धूमात् पर्वतो वह्न्यभाववान् पाषाणमयत्वादित्यादौ वह्निव्याप्यवत्तापरामर्शसत्त्वान्न वह्न्यभावानुमितिः वह्न्यभावव्याप्यवत्तापरामर्शसत्त्वाच्च वह्न्यनुमितेरनुत्पत्तिः। तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभाववद्व्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वादिति। निबन्धकृतस्तु प्रकृतसाध्यसाधकहेत्वोः किंतत्त्वमितिजिज्ञासैव सत्प्रतिपक्षफलम्। अतएव संकृतसाध्यसाधकहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका सामिप्रका

सिद्धिस्तु व्यभिचाराद्यंशपरामर्शप्रतिबन्धकतावच्छेदक-

---

रूपपक्षधर्मत्वोपस्थितिः प्रकरणसम इति तल्लक्षणमप्याहुः ॥ रत्नकोशका-
रास्तु । तत्प्रकारकप्रत्यक्षे तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वेऽपि प्र-
योजनाभावेनानुमितौ तत्प्रतिबन्धकत्वस्याकल्पनात् । संशयत्वस्यार्थसमा-
जग्रस्तत्वेऽपि साध्यतदभावव्याप्यवत्तापरामर्शाभ्यां जायमानानुमितिः सं-
शयरूपैव जायते उभयप्रकारकत्वे विरुद्धत्वायोगात् संशयानुमिति-
रेव सत्प्रतिपक्षफलमिति । ननु तदभावव्याप्यवत्ताज्ञानकाले तत्प्रकारको-
पनीतभानाद्यनुदयेन तत्र तत्प्रतिबन्धकत्वे कल्पनीये प्रत्यक्षत्वमनिवेश्य
तत्प्रकारकबुद्धित्वमेव तत्प्रतिबध्यतावच्छेदकं तच्चानुमितिसाधारणमिति
कथमुभयपरामर्शकाले उभयविधेयकानुमितिरिति चेन्न । इच्छाकाले
आहार्यप्रत्यक्षोत्पत्त्या चाक्षुषत्वस्पार्शनत्वादिप्रकारकेच्छानामुत्तेजकत्वा-
नुरोधेन विशिष्य प्रतिबध्यतावच्छेदकस्यावश्यकत्वात् । घटस्पार्शनसामग्रीस-
त्त्वे घटचाक्षुषेच्छायां सत्यामसत्यां च घटचाक्षुषसामग्र्यां घटस्पार्शनापत्तेः
तासामेकत्र निवेशायोगात् । तत्तत्सामग्रीविशिष्टतत्तदिच्छाकूटस्योत्तेजक-
त्वे चातिगौरवमिति । न च शाब्दस्थले इच्छाया अनुत्तेजकत्वात् तत्रैव प्र-
त्यक्षान्यज्ञानत्वं तत्प्रतिबध्यतावच्छेदकं तच्चानुमितिसाधारणमिति वा-
च्यं । प्रत्यक्षान्यत्वज्ञानत्वयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविर-
हेण तदपेक्ष्य शाब्दत्वस्यैव तत्प्रतिबध्यतावच्छेदकत्वात् परोक्षत्वजातेरनु-
भवत्वेन सङ्करान्न तस्या अपि तत्त्वमिति तत्प्रतिबन्धकत्वस्याक्लृप्ततया न
संशयानुमितौ किञ्चिद्बाधकमिति । अत्र केचित् । इच्छाया उत्तेजकत्वा-
नुपगमेन तदभावव्याप्यवत्ताज्ञानविशिष्टान्यज्ञानत्वावच्छिन्नं प्रति तदभा-
वव्याप्यवत्ताज्ञानत्वेनैकमेव प्रतिबन्धकत्वं इच्छाविशिष्टत्वावच्छिन्नं प्रति
इच्छात्वेन हेतुतया एककार्यकारणभावेनैव निर्वाहे तस्यानुमितिसा-
धारणतया न संशयानुमितिरुत्पत्तुमर्हतीति तदभावव्याप्यवत्ताज्ञानस्य वि-
रोधिनः सत्त्वात् । आहार्यानुमितेरङ्गीकारेण इच्छाकालेऽपि तदुत्प-
त्त्यसम्भवादिति निगर्वः । असिद्धिं निरूपयति । असिद्धिस्त्विति । परा-
मर्शेति । व्याप्तिप्रकारकपक्षधर्मिताज्ञानं परामर्शः । तत्प्रतिबन्धकत्वं च
व्याप्यत्वासिद्धेर्व्याप्तिज्ञानविघटकत्वेन स्वरूपासिद्ध्याश्रयासिद्ध्योस्तु पक्षध-
र्मताज्ञानविघटकत्वेन व्यभिचारज्ञानस्यापि व्याप्तिज्ञानविघटकत्वेन तद्वि-
षये व्यभिचारादावतिप्रसङ्गात् व्यभिचाराद्यन्यत्वं प्रतिबन्धकतावच्छेद-

धर्मवत्वं सा च त्रिधा । स्वरूपासिद्धिराश्रयासिद्धिर्व्याप्यत्वा-द्धिश्च । पक्षे हेत्वभावः स्वरूपासिद्धिः यथा घटः पृथिवी पटत्वादित्यत्र घटरूपपक्षे हेत्वभावः पक्षे पक्षतावच्छेदकासिद्धिराश्रयासिद्धिः । गगनकमलं सुरभि कमलत्वादित्यत्र पक्षे कमले गगनीयत्वाभाव एतदुभयाभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । यथा धूलीपटले धूमनिष्ठव्याप्यत्वाभावः । सा-

---

कधर्मविशेषणं । परामर्शप्रतिबन्धकज्ञानविषयत्वमित्युक्तौ घटपटादेरपि समूहालम्बनात्मकज्ञानविषयत्वादतिव्याप्तिरतः प्रतिबन्धकतावच्छेदकपर्यन्तानुधावनम् । अवच्छेदकत्वं च विषयितया तत्प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणत्वं । तेनासिध्यादिघटकैकदेशे नातिव्याप्तिरिति । स्वरूपासिध्याद्यन्यतमत्वमेव तत्त्वमित्यपि केचित् । सा । असिद्धिः । यथा क्रमं लक्षणान्याह । पक्षइत्यादिना । पक्षतावच्छेदकविशिष्टे हेतुतावच्छेदकावच्छिन्नहेतोरभावः स्वरूपासिद्धिरित्यर्थः । तेनोत्पत्तिकालीनो घटः पृथिवी गन्धप्रागभावादित्यादौ नातिप्रसङ्गः । नवा गुणो द्रव्यं सत्वादित्यादौ विशिष्टस्यानतिरिक्ततया द्विशिष्टसत्ताभावप्रतियोगिनि गुणेऽप्यतिव्याप्तिः तत्राप्युत्पत्तिकालीनत्वरूपपक्षतावच्छेदकविशिष्टे गन्धप्रागभावस्य विद्यमानत्वेन हेत्वभावासंभवात् सत्तात्वावच्छिन्नाभावस्य गुणेऽसत्वाच्च यथोक्ते न क्षतिः । पक्षइति । पक्षे पक्षतावच्छेदकस्याभाव इत्यर्थः । गगनीयत्वेनेति । गगनीयकमलाप्रसिद्धेरिति भावः । एतदुभयेति । स्वरूपासिध्याश्रयासिद्धिभिन्नत्वविशिष्टासिद्धित्वं व्याप्यत्वासिद्धित्वमित्यर्थः । एतदुभयवारणायोभयभिन्नेति । घटादिवारणाय विशिष्यदलं । धूलीपटलइति । पर्वतो वह्निमान् धूलीपटलादित्यादौ धूलीपटले वह्निव्याप्यसत्वेन धूमादिनिष्ठवह्निव्याप्यभावकूटस्य सत्वादिति भावः । यथाश्रुते तु धूमनिष्ठव्याप्यभावस्यालोकेऽपि सत्वात्तस्यापि व्याप्यत्वासिद्धिप्रसङ्गः साध्यसाधनभेदेन व्याप्तेर्भिन्नत्वादिति । ननु पर्वतः काञ्चनमयवह्निमान्धूमात् एवं पर्वतो वह्निमान् काञ्चनमयधूमात् इत्यादौ साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः । एवं हेतौ हेतुतावच्छेदकस्याभावो हेत्वप्रसिद्धिरित्येवं रूपयोः साध्याप्रसिद्धिहेत्वप्रसिध्योरपि आश्रयासिद्धिवदतिरिक्तत्वसम्भवेनासिद्धेस्त्रिविधत्वमनुपपन्नमत आह । साध्याप्रसिद्धि-

व्याप्तसिद्धिर्हेत्वप्रसिद्धिर्वा पक्षे साध्यशून्यत्वं बाधः । यथा

रिति । वा शब्दो ऽप्यर्थकः तथाच साध्याप्रसिद्धिर्हेत्वप्रसिद्धिरपि व्याप्यत्वा सिद्धिरित्यर्थः । हेतुतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्ननिरूपितनियतसामानाधिकरण्यमेव व्याप्तिः । साध्यतावच्छेदकहेतुतावच्छेदकयोरप्रसिद्धौ तादृशव्याप्तेरसंभावितत्वेन तयोरपि व्याप्यत्वासिद्ध्यंतर्गतत्वमेव आश्रयासिद्धेस्तु तथात्वासंभवात् अतिरिक्तत्वमेवेति ना सिद्धेस्त्रैविध्यानुपपत्तिरिति भावः । अत्रपर्वतावह्निमान्नीलधूमादित्यादौ नीलरूपविशेषणस्य सङ्कोचाविशेषकत्वेन नीलधूमत्वेन व्याप्यतावच्छेदकं व्यभिचारावारकत्वात् व्याप्तिग्रहानौपयिकत्वाच्च किंतु धूमत्वमेव तथा स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराऽघटितधर्मस्यैव व्याप्यतावच्छेदकत्वनियमात् । धूमप्रागभावत्वशङ्काहाय स्वसमानाधिकरणेति स्वस्यापि स्वघटितत्वादन्तरेति । तद्घटितत्वं च तद्विषयकप्रतीतिविषयत्वमेव । तथाच नीलधूमत्वावच्छिन्ने व्याप्त्यभावाद् व्याप्यत्वासिद्धएवान्तर्भावः अतएव तदुद्भावने वादिनिग्रहोऽपि । ननु व्यापके व्यर्थविशेषणं न दोषाय व्याप्ये तु दोष इति नियमे किंविनिगमकमिति चेत्तदर्थेहि हेतुतावच्छेदकावच्छिन्नहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकाऽभावविशिष्टसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमेव व्याप्तिः । एवं च समनियतलघुधर्मेऽवच्छेदके संभवति गुरौ तदभावादिति न्यायेन स्वरूपसंबन्धरूपावच्छेदकत्वस्य गुरुधर्मेऽनङ्गीकारात् नीलधूमत्वावच्छिन्नसमानाधिकरणाभाव प्रतियोगितावच्छेदकत्वत्वस्य धूमसमानाधिकरणाभाव प्रतियोगितावच्छेदकत्वत्वापेक्षया गुरुत्वेन प्रतियोगितावच्छेदकतया तादृशाभावाप्रसिध्या न तेन रूपेण व्याप्तिर्विति । केचित्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतेरविशेषात् गुरुधर्मोऽपि प्रतियोगितावच्छेदकः । एवं स्वसमानाधिकरणेत्यादृशधर्मान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकत्वमिति नियमस्याप्रयोजकत्वात् नीलधूमत्वमपि व्याप्यतावच्छेदकमेव अतएव नीलधूमत्वादेर्वारणीयत्वमिति दीधितिकारोप्याह । न चैवं तदुद्भावने वादिनिग्रहानुपपत्तिः । मन्मते तेन रूपेण व्याप्यत्वासिध्यैव तन्निग्रहोपपत्तिरितिवाच्यम् । धूमादिति वक्तव्ये नीलधूमादित्युक्तिरनुचितेति अधिकोक्त्या वादिनिग्रहादित्याहुरिति कृतं पल्लवितेन ॥

जलादिपक्षे वह्न्यभावः । नचात्र धूमस्य हेतोरसिद्धिरेवास्तु स एव दोषोऽस्त्विति कृतं बाधेनेति वाच्यम् । असिद्धिर्हि परामर्शप्रतिबन्धकतया दोषः । तथाच यत्र भ्रमात्मकः परामर्शो जातः तत्र बाधे सति अनुमितेरनुत्पत्तेर्बाधस्यानुमितिप्रतिबन्धकतया दोषत्वात् । आद्यकालावच्छिन्नो घटो रूप-

---

बाधं लक्षयति । पक्ष इति । पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववत्त्वमित्यर्थः । तेन रूपकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यादौ आद्यक्षणावच्छेदेन घटे गन्धाभावसत्त्वेऽपि नातिव्याप्तिः । एवं महानसीयवह्न्यभावस्य पर्वते सत्त्वेऽपि न पर्वतो वह्निमान् धूमादित्यादेर्बाधितत्वापत्तिरिति । बाधे अपक्षधर्मत्वहेतुरनैकान्तिकं चेति नियमाद्बाधस्य प्रतिबन्धकत्वे मानाभाव इत्याशङ्कते । नचेति । अत्रेति । ह्रदो वह्निमान् धूमादित्यादावित्यर्थः । असिद्धिरेव । स्वरूपासिद्धिरेव । कृतं । व्यर्थं । बाधेनेति । बाधस्य प्रतिबन्धकत्वेनेत्यर्थः । परामर्शो जातः । वह्निव्याप्यधूमवान् ह्रद इति परामर्शो जातः । बाधे सतीति । वह्न्यभाववान् ह्रद इति बाधे सतीत्यर्थः । तथाच तत्र परामर्शोदयेनासिद्ध्यादेरदूषकतया बाधस्यैव दोषत्वमिति भावः । ननु वह्निव्याप्यवत्ताज्ञानकाले कथं वह्न्यभाववत्ताज्ञानं तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकस्य सत्त्वादिति चेन्न । अलौकिकतद्वत्ताज्ञानं प्रत्येव तदभावव्याप्यवत्ताज्ञानस्य विरोधितया आनुमानिकभिन्नेन्द्रियजन्यवह्निव्याप्यवत्ताज्ञानकाले प्रात्यक्षिकवह्न्यभाववत्ताज्ञानोदये बाधकाभावादिति भावः । असङ्कीर्णबाधस्थलमप्याह । आद्यकालावच्छिन्नेति । दोषान्तरेति । असिद्ध्यादिरूपदोषान्तरेत्यर्थः । दोषान्तराभावमेवोपपादयति । नहीति । व्याप्यसत्त्वे व्यभिचारित्वमेव पक्षधर्मत्वे च स्वरूपासिद्धिरेव दोष इत्यतो व्याप्तिपक्षधर्मत्वयोरुभयोरभावयोर्निराकरणं । यद्यपि धर्मितावच्छेदकसामानाधिकरण्येन तदभाववत्ताज्ञानस्य धर्मितावच्छेदकसामानाधिकरण्येन तत्प्रकारकबुद्धौ न प्रतिबन्धकत्वं । तथाप्यवच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य अवच्छेदकावच्छेदेन तद्वत्ताज्ञानविरोधितयैव तद्दोषत्वं । ननु गन्धव्याप्यपृथिवीत्ववत्तापरामर्शात् जायमानघटो गन्धवानित्यनुमितिः पक्षतावच्छेदकसामानाधिकरण्यावगाहि-

वान् पृथिवीत्वादित्यवाद्यकालावच्छेदेन घटे रूपाभावरूप-
बाधस्थले दोषान्तराभावात् । नहि पृथिवीत्वेन रूपव्या-
प्तिः । पक्षाद्वृत्तितावेति दिक् । ननु उपाधिरपि हेत्वाभा-
सान्तरमस्तीति कथमेत एवेति चेत् । व्यभिचाराद्यन्यतम
त्वं हेत्वाभासत्वं । नचोपाधिस्तदन्यतम इति तस्यानैवंभूत
त्वात् । अतएव सिद्धसाधनमपि न हेत्वाभासान्तरम् ॥ ननु
कोयमुपाधिः । अत्राचार्याः ॥ साध्यव्यापकत्वे सति साधना-
व्यापक उपाधिः । तद्व्यापकत्वं च तत्समानाधिकरणा त्य

---

त्वात् प्रमैव । ननु पक्षतावच्छेदकावच्छेदेन सदनुमितिः । पक्षताव-
च्छेदकव्यापकत्वविशिष्टसम्बन्धघटितव्यापकतायाः गन्धे अग्रहात् व्या-
पकताघटकसम्बन्धेनैव व्यापकस्यानुमितिः तथाच मद्धेतोरस्य कथं बाधि
तत्वमत आह । दिगिति । अवच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेद-
कव्यापकत्वविशिष्टसम्बन्धेन व्यापकत्वावगाहिपरामर्शस्य साध्यतावच्छे-
दकसम्बन्धघटितव्यापकत्वावगाह्यवच्छेदकावच्छेदेन हेतुमत्तावगाहि-
परामर्शयोरन्यतरस्य जनकत्वेन प्रकृते गन्धप्रागभावावच्छिन्नत्वविशि-
ष्टसमवायघटितगन्धनिष्ठव्यापकत्वावगाहिपरामर्शसत्वेपि गन्धप्रागभा-
वकालावच्छिन्नत्वविशिष्टसमवायसम्बन्धेन पृथिवीत्वरूपहेतुमत्तावगाहि-
परामर्शसत्वाद्गन्धप्रागभावकालावच्छेदेन घटे जायमाना गन्धानुमि-
तिर्भ्रम एवेति तस्याभासत्वमक्षतमेवेति भावः । ननु व्यभिचारज्ञान
स्यानुमितिकारणव्याप्तिज्ञानविघटकतया परंपरयाऽनुमितिप्रतिबन्धकज्ञा-
नविषयतया यथा व्यभिचारादेर्हेत्वाभासत्वं तथोपाधेरपि स्यात् । उ-
पाधिज्ञानस्यापि व्यभिचारज्ञानद्वारा व्याप्तिज्ञानविघटकत्वेनानुमितिप्रति
बन्धकज्ञानविषयत्वात् । तथाच पञ्चैव हेत्वाभासा इत्यनुपपन्नमित्यभि-
प्रेत्याशङ्कते । नन्विति । एत एवेति । पञ्चैवेत्यर्थः । तदन्यतम इति । सव्य
भिचाराद्यन्यतमान्तर्गत इत्यर्थः । तस्य । उपाधेः । अनैवंभूतत्वात् । अहेत्वा
भासत्वात् । अतएव । सव्यभिचाराद्यन्यतमान्तर्गतत्वाभावादेव । वस्तुतस्तु
सत्यप्युपाधिज्ञाने उपाधिना व्यभिचाराद्यनुमाने व्याप्तिज्ञानप्रतिब-
न्धकत्वाभावादनुमित्युत्पत्त्या अनुमितिकारणव्याप्तिज्ञानविघटकत्वाभावेन

परमुखनिरीक्षकतया न हेत्वाभासत्वम्। एवं सिद्धसाधनस्यापि पक्षताविघटकतया न तत्त्वमिति। वादिविजयरूपैककार्यकारित्वसङ्गत्या हेत्वाभासनिरूपणानन्तरमुपाधिनिरूपणमारभते। नन्विति। आचार्यैरुपाधिपदं पङ्कजादिपदवद्योगरूढम् उपसमीपवर्तिनि स्वीयं धर्ममादधातीत्युपाधिरिति योगात्स्वनिष्ठव्याप्तिरूपधर्मसङ्क्रामकत्वलब्धा साध्यव्याप्यत्वं न केवलसाध्यव्याप्यतामात्रेण दूषकत्वमिति साध्यव्यापकत्वे रूढिरपि। तथाच साध्यसमव्याप्तत्वघटितमेवोपाधिलक्षणं। नन्वसम्यक् समव्याप्तस्यैवोपाधित्वे विषमव्याप्तेऽपि व्यभिचारोन्नायकत्वसत्प्रतिपक्षोन्नायकत्वादिरूपदूषकताबीजस्य सत्त्वेन तस्याप्युपाधित्वात्तत्राव्याप्त्यापत्तेरिति साध्यव्याप्यत्वांशमपहाय कृत्यर्थं साध्यव्यापकत्वमात्रघटितलक्षणमाह। साध्यव्यापकत्वेसतीति। ननु साध्यव्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वं चाव्यापकत्वं। एवं च साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति साधनसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति स्यात्। तत्र द्रव्यं सत्वादित्यादौ संयोगाद्युपाधावव्याप्तिः अतिव्याप्तिश्च द्रव्यं पृथिवीत्वादित्यादौ संयोगादौ उभयत्र प्रतियोगिवैयधिकरण्यनिवेशे चातिगौरवं। साध्यतत्साधनत्वयोर्व्यापकत्वव्याप्यत्वरूपतया व्यभिचारिणि तदसम्भवस्य साध्यत्वप्रकारकज्ञानविषयतासाधनत्वप्रकारकज्ञानविषयत्वादिना तयोर्निवेशे भ्रमात्मकज्ञानमादाय प्रसिद्धिसम्भवेऽपि यत्र नतादृशो भ्रमः तत्रानुपपत्तिरतोऽगत्यैवेत्ययत्नं आह। तद्व्यापकत्वं चेति। लाघवादभावागर्भव्यापकत्वमाह। तदितीति कश्चित्। तत्समानाधिकरणेति तत्धर्मीयावच्छिन्नसमानाधिकरणायावन्तो यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मवत्त्वं तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नव्यापकत्वम्। अत्र यावत्पदोपादाने च वह्निमान्धूमादित्यादौ साधनाव्यापकस्य रासभादेः वह्निसमानाधिकरणमहानसत्वादिरूपयत्किञ्चित् धर्मनिष्ठसामानाधिकरण्यनिरूपकत्वेऽपि न रासभादावतिव्याप्तिः। यावत्त्वस्य व्यापकत्वादन्यस्य च दुर्वचत्वा तत्समानाधिकरणयावद्व्यापकसामानाधिकरण्यनिरूपकत्वमर्थः पर्यवस्यति। तद्व्यापकत्वं च तत्समानाधिकरणतत्समानाधिकरणाभावाप्रतियोगि सामानाधिकरण्यनिरूपकत्वं। सर्वस्यापि हित्वादिना तादृशाभावप्रतियोगित्वात् असम्भवः तद्वन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तदर्थो वाच्यः। तथाच तादृशप्रतियोगितानवच्छेदकप्रमेयत्वमादाया-

तिप्रसङ्गवारणाय यद्धर्मावच्छिन्नसमानाधिकरणत्वं तद्धर्मावच्छिन्नसमानाधिकरणत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकं तद्वत्त्वमेव तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नव्यापकत्वं एवमव्यापकत्वंतत्समानाधिकरणत्ववन्निष्ठाभावप्रतियोगितावच्छेदकसामानाधिकरण्यत्वकत्वं वो यं तद्धर्मावच्छिन्नसमानाधिकरणधर्मनिष्ठाभावप्रतियोगितानवच्छेदकसामानाधिकरण्यावच्छिन्नसामानाधिकरण्यनिरूपकतावच्छेदकत्वे सति यद्धर्मावच्छिन्नसमानाधिकरणधर्मनिष्ठाभावप्रतियोगितावच्छेदकसामानाधिकरण्यत्वावच्छिन्नसामानाधिकरण्यनिरूपकतावच्छेदकं यद्रूपं तद्धर्मावच्छिन्नसाध्यसमानाधिकरणतद्धर्मावच्छिन्नहेतावुपाधिः। गुणकर्मान्यत्वविशिष्टसत्तावान्जातेरित्यत्र विशिष्टसत्तायाः सत्तानतिरिक्ततया सत्वाद्यव्यापकतया साध्य व्यापकत्वप्रसङ्गेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ सत्वाद्यव्यापकतया साधनाव्यापकत्वप्रसङ्गेन च संयोगादावव्याप्त्यतिव्याप्त्योर्वारणाय लक्षणे तद्धर्मावच्छिन्नत्वयद्धर्मावच्छिन्नत्वयोर्निवेशः। लक्ष्ये लक्षणं सङ्गमयति। यथेति। तत्। आर्द्रेन्धनं तत्समानाधिकरणत्वात्। आर्द्रेन्धनसमानाधिकरणत्वात्। धूमसमानाधिकरणमहानसत्वादिनिष्ठाभावप्रतियोगिसामानाधिकरण्यनिरूपकत्वेन धूमव्यापकत्वमक्षतमिति भावः। अयः पिण्ड इति। वह्निसमानाधिकरणायः पिण्डत्वनिष्ठाभावप्रतियोगिसामानाधिकरण्यनिरूपकत्वेन वह्न्यव्यापकत्वादिति भावः। सद्धेतौ तु। वह्निमान्धूमादित्यादौ तु। नैवं। वह्निव्यापको धूमाव्यापकः कश्चिदित्यर्थः। ननु पक्षेतरत्वे साध्यव्यापकतायाः सद्भावादुपाधेर्दूषकत्वं। तच्च महानसाद्यन्तर्भावेण वह्निव्यापकस्य पर्वते च धूमाव्यापकस्य पक्षेतरत्वस्यैवोपाधेः सम्भवात्कथं नतत्रोपाधिरित्यत आह। सद्धेतौ रिति। हेतौ। धूमस्य। साध्यव्याप्यत्वात्। वह्निव्याप्यत्वात्। ननु ततः किमित्यत आह। साध्याव्याप्याव्यापकस्येति। तथाच पक्षेतरत्वं वह्न्यव्यापकं वह्निव्याप्यधूमाव्यापकत्वादित्यनेन साध्याव्यापकत्वात्र पक्षे तरत्वमुपाधिः। नच धूमो वह्न्यव्याप्यवह्निव्यापकपक्षेतरत्वाव्यापकत्वादित्यनुमानेन धूमे एव वह्न्यव्याप्यत्वं सिध्यतां व्याप्तिग्राहकस्योभयत्रापि सत्वादिति वाच्यम् धूमत्वावच्छिन्नं प्रति वह्नित्वेन हेतुतया कार्यकारणभावरूपानुकूलतर्कसत्वादेव धूमे वह्निव्याप्यत्वसिध्या तदव्यापकत्वेन पक्षेतरत्वे वह्न्यव्यापकत्वनिश्चयादिति भावः। इद-

वस्तोयत्समानाधिकरणत्वं । यथा धूमवान्वह्नेरित्यत्रार्द्रेन्धनं हि भवति तत्साध्यव्यापकं । धूमसमानाधिकरणस्य यावतस्तत्समानाधिकरणत्वात् भवति च साधनाव्यापकं । वह्निमत्ययःपिण्डे तदसत्वात् । सद्धेतौ तु नैवं । तत्र हेतोः साध्यव्याप्यत्वात् । साध्यव्याप्यव्यापकस्य च साध्यव्यापकत्वात् ॥ अपरदक्ति । इदं साधनावच्छिन्नसाध्यव्यापकेऽव्याप्तं । यथा काकः श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्व मुपाधिः नहि तच्छ्यामत्वव्यापकं श्यामत्ववति घटे असत्वात् किंतु मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं यत्र यत्र मित्रातनयत्वावच्छिन्नश्यामत्वं तत्र तत्र शाकपाकजत्वस्य सत्वात् । अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकउपाधिरिति चेन्न । वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ पक्षधर्मवहिर्द्रव्यत्वावच्छिन्न-

---

मुक्तोपाधिलक्षणं । यथा काक इति । मित्रातनयस्य पक्षत्वे साधनावच्छिन्नसाध्यव्यापकपक्षधर्मावच्छिन्नसाध्यव्यापकयोरैक्यप्रसङ्गेन वक्ष्यमाणदोषाऽसङ्गतेरत स्तयोरसङ्करप्रदर्शनाय काकपर्यन्तानुधावनं । तत् । शाकपाकजत्वम् । श्यामत्वेति । शुद्धश्यामत्वव्यापकमित्यर्थः । किन्त्विति । साधनीभूतमित्रातनयत्वावच्छिन्नश्यामत्वव्यापकमित्यर्थः । विवक्षितमिति । मित्रातनयत्वरूपसाधनावच्छिन्नश्यामत्वव्यापकत्वाद्गौरमित्रातनये अवृत्तित्वेन च मित्रातनयत्वरूपसाधनाव्यापकत्वाच्च शाकपाकजत्वे लक्षणसमन्वयः । शुद्धसाध्यव्यापके चार्द्रेन्धनादौ शुद्धसाध्यव्यापकत्वादेव सुतरां साधनावच्छिन्नसाध्यव्यापकत्वमिति भावः । वायुरिति । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादिति कृते प्रत्यक्षस्पर्शाश्रयत्वरूपसाधनावच्छिन्नप्रत्यक्षत्वव्यापकतयाऽव्याप्त्यसङ्गतिरतः प्रमेयत्वपर्यन्तानुधावनं । तत् । रूपवत्वं । ननु शुद्धसाध्यव्यापकसाधनावच्छिन्नसाध्यव्यापकोभयवहिर्भूतस्य नोपाधित्वमित्यत आह । किंत्विति । तथापि साधनाव-

साध्यव्यापके उद्भूतरूपवत्त्वादौ उपाधावव्याप्तेः । नहि प्रमेयत्वरूपसाधनावच्छिन्नसाध्यव्यापकं तदात्मादावसत्वात् । किन्तु बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकं । यावति तद्वति घटादौ रूपसत्वात् । अथ पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं विवक्षितमिति चेन्न । यथोक्तस्थले शाकपाकजत्वे अव्याप्तेः । नहि तत्पक्षधर्मावच्छिन्नश्यामत्वव्यापकं तत् तथाविधश्यामत्ववति पक्षे असत्वात् । अथ यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वं विवक्षितं । सचधर्मः क्वचित्साधनं क्वचित्पक्षधर्मइति चेन्न पर्वतो वह्निमान् धूमादित्यत्र महानसत्वाभावस्योपाधितापत्तेः । भवति हि महानसान्यरूपयत्किञ्चिद्धर्मावच्छिन्नवह्निव्यापको महानसत्वाभावः यावत्तादृशवह्निमति सत्वात् । नच धूमव्यापको म-

---

च्छिन्नसाध्यव्यापकस्येव पक्षधर्मावच्छिन्नसाध्यव्यापकस्यापि व्यभिचारोन्नायकत्वादिरूपदूषकताबीजसाम्येनोपाधितया तचाव्याप्तिरितिभावः । तस्य-तीति । बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्ववतीत्यर्थः । बहिष्ट्वं चात्मान्यत्वंमनसविषयान्यत्वं वा तदवच्छिन्नप्रत्यक्षत्वं रूपादावपि तच च नि-रूपसत्वमिति द्रव्यत्वनिवेशः । द्रव्यत्वावच्छिन्नप्रत्यक्षत्वमात्मादावपीति बहिष्ट्वनिवेशः । यथोक्तस्थले । शाकः श्यामो मित्रातनयत्वादित्यादौ । तथाविधेति । पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नेत्यर्थः । पक्षे । काकादौ । असत्वादिति । इदमुपलक्षणं प्रागभावो विनाशी प्रमेयत्वादित्यादौ जन्यत्वावच्छिन्नविनाशित्वव्यापके भावत्वोपाधौ उदासीनधर्मावच्छिन्नसाध्यव्यापके अव्याप्तिरित्यपि द्रष्टव्या । ननु साधनपक्षधर्मयोर्न तत्वेन निवेशः किंतु यत्किञ्चिद्धर्मत्वेनेति नोक्ताव्याप्तिरित्याशङ्कते । अथेति । क्वचित् काकःश्यामो मित्रातनयत्वादित्यादौ । क्वचित् वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ । धूमवान्वह्नेरित्यत्र शुद्धसाध्यव्यापके आर्द्रेन्धनादौच पक्षधर्मद्रव्यत्वादिकमाद

भवति महानसे ऽसत्वात् । अत्रोच्यते । स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधित्वं । यद्वा स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकधर्मवत्वं तत् तच्च स्वावच्छिन्ना-

---

य सङ्गतिः । उपाधितापत्तेरिति । तथाच सदनुमानमात्रोच्छेदप्रसङ्ग इति भावः । तादृशवह्निमति । महानसान्यत्वावच्छिन्नवह्निमति पर्वतादौ । असत्वादिति । महानसत्वाभावस्येत्यादिः । स्वानधिकरणेति । स्वमुपाधित्वेनाभिमतं धूमवान्वह्नेरित्यादौ च स्वमार्द्रेन्धनं तदनधिकरणं यद्वह्न्यधिकरणमयोगोलकं तद्वृत्तिद्रव्यत्वरूपधर्मावच्छिन्नधूमव्यापकत्वादार्द्रेन्धने लक्षणसमन्वयः एवं सश्यामो मित्रातनयत्वादित्यादौ स्वं शाकपाकजत्वं तदनधिकरणं यन्मित्रातनयत्वाधिकरणं गौरमित्रातनयः तद्वृत्तिमित्रातनयत्वरूपधर्मावच्छिन्नश्यामत्वव्यापकत्वात् शाकपाकजत्वमुपाधिः । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ चोद्भूतरूपवत्वं तदनधिकरणं यत्प्रत्यक्षस्पर्शाश्रयत्वाधिकरणं वायुः तद्वृत्तिवहिर्द्रव्यत्वरूपधर्मावच्छिन्नप्रत्यक्षत्वव्यापकत्वादुद्भूतरूपवत्वे लक्षणसमन्वयः । वह्निमान्धूमादित्यादौ तु महानसत्वाभावो नोपाधिः तत्र हि स्वं महानसत्वाभावः तदनधिकरणं धूमाधिकरणं महानसमेव तद्वृत्तिद्रव्यत्वरूपधर्मावच्छिन्नवह्निमति महानस एव तस्यासत्वान्नातिव्याप्तिरिति ध्येयम् । ननु द्रव्यं सत्वादित्यादौ गुणकर्मान्यत्वविशिष्टसत्वेऽव्याप्तिः विशिष्टसत्तायाः सत्तानतिरिक्ततया स्वानधिकरणसाधनाधिकरणाप्रसिद्धेः । एवं धूमवान्वह्नेरित्यादौ आर्द्रेन्धनादीनां द्रव्यत्वेनोपाधितापत्तेश्चेत्यत आह । यद्वेति । स्वपदमुपाधितावच्छेदकत्वेनाभिमतपरं । इत्थं च विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्टनिरूपिताधिकरणतायाः अतिरिक्तत्वात् गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नानधिकरणं सत्वाधिकरणं गुणाद्येव प्रसिद्धं । तद्वृत्तिसत्वादिरूपधर्मावच्छिन्नद्रव्यत्वादिव्यापकत्वात् गुणकर्मान्यत्वविशिष्टसत्वे लक्षणसमन्वयः धूमवान्वह्नेरित्यादौ स्वपदेन द्रव्यत्वं नोपादातुं शक्यते तत्र द्रव्यत्वावच्छिन्नानधिकरणवह्न्यधिकरणाप्रसिद्धेः किं त्वार्द्रेन्धनत्वाद्येव तथा चार्द्रेन्धन

नधिकरणहेतुमन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नसाध्यसमानाधि-
धिकरणवृत्तियावद्धर्मावच्छिन्नसमानाधिकरणस्तद्वत्त्वं । भ-
वति हि आर्द्रेन्धनत्वावच्छिन्नानधिकरणवह्निमदयःपि-
ण्डनिष्ठद्रव्यत्वावच्छिन्नधूमाधिकरणवृत्तियावद्धर्मा आर्द्रेन्ध-
नत्वावच्छिन्नसमानाधिकरणा अतस्तद्वदार्द्रेन्धनमुपाधिः ।
एवं रूपत्वावच्छिन्नानधिकरणप्रत्यक्षस्पर्शाश्रयत्ववन्निष्ठबहि-
र्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वाधिकरणं यत्तन्निष्ठा यावन्तो ध-
र्माः रूपत्वावच्छिन्नसमानाधिकरणा अतो रूपमुपाधिः ।
एवं शाकपाकजत्वावच्छिन्नानधिकरणं यन्मित्रातनय-
त्ववन्निष्ठमित्रातनयत्वावच्छिन्नश्यामत्वाधिकरणं यत्तन्नि-
ष्ठा यावन्तो धर्माः शाकपाकजत्वावच्छिन्नसमानाधि-
करणा अतस्तद्वच्छाकपाकजत्वमुपाधिः । नचैवं सद्धेतोः
सम्भवति नहि महानसत्वाभावानधिकरणं यद्वत्त्वधिक-

---

त्वेनैवोपाधित्वं नतु द्रव्यत्वेनेति नोक्तदोष इति भावः । व्यापकत्वस्या-
भावादिघटितत्वेन गुरुत्वात् लघुतदाह । तच्चेति । तादृशसाध्यव्यापकत्वं
चेत्यर्थः । धूमवान्वह्नेः वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् स श्यामो मि-
त्रातनयत्वादित्यादौ आर्द्रेन्धनोद्भूतरूपशाकपाकजत्वादिषु यथाक्रमं लक्ष-
णं सङ्गमयति । भवति हीत्यादिना । वह्निमान्धूमादित्यत्र महानसत्वाभावेऽ
तिव्याप्तिं वारयति । नचैवमिति । सद्धेतोः एवं नच संभवतीत्यन्वयः ।
सद्धेतोः । धूमादेः । एवमुक्तधर्माक्रान्तः कश्चिदप्युपाधिर्न संभवतीत्यर्थः ।
तदेवाह । नहीति । वह्निमान्धूमादित्यादौ पर्वतेतरत्वानधिकरणधूमवत्पर्व-
तादिनिष्ठद्रव्यत्वादिरूपधर्मावच्छिन्नवह्निसमानाधिकरणाः पर्वतत्वादयो-
ऽपि तेन पर्वतेतरत्वावच्छिन्नसमानाधिकरणा इति न पर्वतेतरत्वे अ-
तिव्याप्तिरित्याह । अतएवेति । तादृशधर्मावच्छिन्नसाध्यव्यापकत्वाभावा-
देवेत्यर्थः । तदेवाह । यद्वेति । धर्मं । पर्वतत्वादौ । तत्सामानाधिकरण्या-

रणं महानसस्तन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नसाध्यसमानाधिकरणाः वह्न्यधिकरणयावन्तो धर्मा महानसत्वाभावत्वावच्छिन्नसमानाधिकरणाः महानसत्वएवाभावात् अतएव सहेतौ पक्षेतरत्वं नोपाधिः पक्षमात्रवृत्तिधर्मे तत्सामानाधिकरण्याभावात् इति सङ्क्षेपः ॥

तच्चानुमानं परार्थं न्यायपूर्वकं । न्यायश्च क्रमिकप्रतिज्ञादिपञ्चकसमुदायः । यथा पर्वतो वह्निमान् धूमात् योयो धू-

---

भावात् । पर्वतत्वसामानाधिकरण्याभावात् । वह्निरनुष्णः कृतकत्वादित्यादौ पक्षे बाधेन साध्यव्यापकतया अभिमते वह्नितरत्वादौ साधनाव्यापकत्वात् सङ्ग्राह्यत्वमेवेति हृदयम् । उपाधेर्दूषकताबीजं व्यभिचारोन्नायकत्वं सत्प्रतिपक्षोन्नायकत्वं वा । तथाहि धूमवान्वह्नेरित्यत्र वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वात् व्यापकव्यभिचारित्वे व्याप्यव्यभिचारित्वस्यावश्यकत्वात् । एवं वह्निमदयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावात् व्यापकाभावे व्याप्याभावस्यावश्यंभावादिति । व्यभिचारोन्नायकत्वेन सत्प्रतिपक्षोन्नायकत्वेन वा आर्द्रेन्धनस्योपाधित्वात् । नच यथा हेतोः साध्यव्यापकत्वोपाधिव्यभिचारेण साध्यव्यभिचारः साधनीयः तथा साध्यव्याप्यहेत्वव्यापकतयोपाधेः साध्याव्यापकत्वमपि सेत्स्यति विनिगमनाविरहात् व्याप्तिग्राहकस्य चोभयत्रापि सत्त्वादिति वाच्यम् । अनुकूलतर्कादिनोपाधेः साध्यव्यापकतया निश्चय एवोपाधेर्दूषकताबीजचिन्तनमित्यभिसन्धायाह । संक्षेप इति । स्वार्थपरार्थभेदेनानुमानं द्विधा । यत्र स्वयं धूमादग्निमनुमाय तदर्थं प्रवर्तेत तत्स्वार्थानुमानं यत्र स्वयं वह्निमनुमाय तदर्थं परप्रतिपत्त्यर्थं वाक्यं प्रयुङ्क्ते तत्परार्थानुमानं । तत्र स्वार्थानुमानं सुगमत्वादुपेक्ष्य परार्थानुमानप्रकारमेवाह । तच्चानुमानमिति । ननु पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिः अबाधितविषयत्वं असत्प्रतिपक्षत्वं चेत्यादिपञ्चरूपोपपन्नलिङ्गप्रतिपादकवाक्यस्य न न्यायत्वं पञ्चरूपोपपन्नो धूम इति वाक्येऽतिव्याप्तमतो न्यायत्वं निर्वक्ति । न्यायश्चेति । धूमात्पर्वतो वह्निमानित्यादिव्युत्क्रमोक्तप्रतिज्ञादिसमुदायेऽतिव्याप्तिवारणाय । क्रमि-

मवान् सयोऽग्निमान् । वह्निव्याप्यधूमवानयं । तस्माद्वह्निमानिति । तत्र एतन्न्यायघटकपर्वतो वह्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वं प्रतिज्ञात्वं । एतद्धूमादिति शब्दवृत्तितादृशोपाधिमत्त्वं हेतुत्वं । एतद्योयो धूमवान्सोऽग्निमानिति शब्दवृत्तितादृशोपाधिमत्त्वमुदाहरणत्वम् । एतद्वह्निव्याप्यधूमवानयमिति शब्दवृत्तितादृशोपाधि

---

केति । कथकसंप्रदायाविरुद्धेत्यर्थः । न्यायत्वं पञ्चसु पर्याप्तमिति सूचनाय समुदाय इति । तेन पञ्चपदेनैव समुदायलब्धा कृतं समुदाय इत्यनेनेति दूषणमनवकाशं । तथाचायं तस्मात्तथेत्युपनयनिगमने प्राचां नव्यमते मतमाह । वह्निव्याप्येत्यादि । प्रतिज्ञात्वज्ञाने तद्घटितन्यायत्वाज्ञानात् परार्थानुमानासंभव इति प्रतिज्ञात्वादिलक्षयति । तत्रेति । तेषु प्रतिज्ञादिषु मध्ये इत्यर्थः । तत्र सप्तम्यर्थ इति कश्चित् । पर्वतो वह्निमानित्युदासीनवाक्येऽतिव्याप्तिवारणाय न्यायघटकेति । पर्वतो वह्निमानालोकादिति न्यायान्तर्घटकप्रतिज्ञायाः पर्वतो वह्निमान्धूमादिति न्यायघटकप्रतिज्ञात्वापत्तिवारणायैतन्न्यायेति । अवयवेति । अवयवविभाजकाः पञ्चोपाधयः प्रतिज्ञात्वहेतुत्वोदाहरणत्वोपनयत्वनिगमनत्वभेदात् तत्र यथायोगं लक्षणान्यवसेयानि । "पक्षे साध्यनिर्देशः प्रतिज्ञेति सूत्रं" पक्षविशेष्यकसाध्यप्रकारकज्ञानजनकवाक्यं प्रतिज्ञेत्यर्थः । तच्च पर्वतो वह्निमानित्युदासीनवाक्येऽतिप्रसक्तमिति तत्रोट्टङ्कितम् । एतद्धूमादिति । अत्रोदासीनवाक्येऽतिव्याप्तिवारणाय न्यायघटकेति । पर्वतो द्रव्यं धूमादिति हेत्ववयवे पर्वतो वह्निमान्धूमादिति हेत्ववयवत्ववारणाय एतन्न्यायघटकेति तत्र यं तत्राभावोक्तमेतदिति । एतन्न्यायघटकोयो धूमादिति शब्दः तद्वृत्तीत्यर्थः । एवमग्रेऽपि । तादृशेति । अवयवविभाजकेत्यर्थः । प्रतिज्ञादिलक्षणघटकीभूतमवयवत्वं निर्वक्ति । अवयवत्वं चेति । अत्रैव प्राचीनमतसंवादमाह । उक्तं चेति । ननु प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञाभिन्नत्वे सति हेत्वादिभिन्नं यत्तद्भिन्नत्वं तच्च प्रतिज्ञात्वं पर्वतो वह्निमानिति भागयोः प्रत्येकं पर्याप्तं व्यासज्यवृत्ति वा । आद्ये प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदस्य तद्घटके असत्त्वेन तत्प्रतिज्ञैकदेशे अतिव्याप्तिः द्विती-

एवं उपनयत्वम् । एतस्माद्वह्निमानिति यद्दृष्टान्ततादृशोपाधित्वं निगमनत्वम् अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वं । उक्तं च अवयवाः पञ्च प्रतिज्ञादिभेदादिति ॥

---

ये प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकं पर्वतो वह्निमानिति भागयोः सत्वेन प्रतिज्ञादिभिन्नतादृशभागद्वयभेदस्य च प्रतिज्ञायामसंभव इति चेन्न । प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदाधिकरणतावच्छेदकं यत्तदवच्छिन्नप्रतियोगिताकभेदाधिकरणतावच्छेदकं यत्तदवच्छिन्नत्वस्य विवक्षितत्वात् । प्रतिज्ञात्वस्य व्यासज्यवृत्तित्वोपगमेन प्रतिज्ञैकदेशे प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदसत्वात् प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदाधिकरणतावच्छेदकं पर्वत इति भागत्वं तदवच्छिन्नप्रतियोगिताकभेदाधिकरणतावच्छेदकं च प्रतिज्ञात्वं प्रतिज्ञा न प्रतिज्ञैकदेश इति प्रतीतिः । व्यासज्यवृत्त्यधिकरणताकभेदाभ्युपगमात् । प्रतिज्ञाहेतुसमुदायो न प्रतिज्ञेति प्रतीतिः प्रतिज्ञाहेतुसमुदाये प्रतिज्ञाभेदसत्वात् न प्रतिज्ञाहेतुसमुदायेऽप्यतिव्याप्तिः । व्यासज्यवृत्त्यधिकरणताकभेदानङ्गीकारे तु प्रतिज्ञात्वाद्यवच्छिन्नभेदपञ्चकाधिकरणतानवच्छेदकत्वे सति प्रतिज्ञात्वाद्यवच्छिन्नाधिकरणताकभेदप्रतियोगितावच्छेदकं यत्तदवच्छिन्नभेदाधिकरणतावच्छेदकं यत्तदवच्छिन्नत्वमर्थः । एवं च प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय सत्यन्तनिवेशः । पर्वतो वह्निमानिति भागयोः प्रत्येकं प्रतिज्ञाभेदसत्वेन तादृशभागत्वस्य प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदाधिकरणतावच्छेदकत्वात् व्यासज्यवृत्त्यधिकरणताकभेदानभ्युपगमात् प्रतिज्ञाहेतुसमुदाये प्रतिज्ञादिभेदासत्वेन प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणाय विशेष्यदलनिवेशः । तत्र प्रतिज्ञायां प्रतिज्ञाहेतुसमुदायभेदसत्वेन तादृशप्रतियोगितावच्छेदकं तादृशसमुदायत्वं तदवच्छिन्नभेदस्य च तादृशसमुदाये असत्वेनाऽतिव्याप्तिविरहादिति । प्रतिज्ञादीनां न्यायघटकत्वघटितत्वाच्च नोदासीनवाक्येऽतिव्याप्तिरिति ध्येयम् । अत्र च प्रतिज्ञादिवाक्यैः खण्डवाक्यार्थबोधः ततो वाक्यैकवाक्यतया न्यायरूपमहावाक्यार्थबोधः अवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थबोधे हेतुत्वात् । तद्यथा वह्निसंबन्ध्यभिन्नः पर्वतः धूमीयज्ञानज्ञाप्यत्वं वीप्सायास्तात्पर्यग्राहकतया वह्निपदस्य धूमव्यापकवह्नौ लक्षणया धूमसम्बन्ध्यभिन्न धूमव्यापकवह्निसंबन्ध्यभिन्न इति उदाहरणार्थबोधः

**इति श्रीभट्टाचार्यचूडामणिविरचितायां न्यायसिद्धान्तमञ्जर्यामनुमानपरिच्छेदः ॥**

---

वह्निव्याप्यधूमसम्बन्ध्यभिन्नः पर्वतो वह्निव्याप्यपक्षवृत्तिधूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्न इति प्रत्येकं बोधः ततश्च धूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्नपर्वताभिन्नधूमव्यापकवह्निसंबन्ध्यभिन्नधूमसंबन्ध्यभिन्नवह्निव्याप्यधूमसंबन्ध्यभिन्नः पर्वतो वह्निव्याप्यपक्षवृत्तिधूमज्ञानज्ञाप्यवह्निसंबन्ध्यभिन्न इति वाक्यैकवाक्यतया न्यायार्थबोधः ततो न्यायार्थज्ञानसहकृतेन मनसा धूमवान्वह्निमानिति धूमविशिष्टे वह्निवैशिष्ट्यमिति न्यायेन मानसं ज्ञानं जन्यते तेन च परामर्श उत्पाद्यते ततः परस्यानुमितिः । नच न्यायार्थज्ञानेनाहत्यैव परामर्श उत्पाद्यतां ज्ञानमन्तरा विशिष्टवैशिष्ट्यज्ञानजननेनेति वाच्यं । तस्य वादिवाक्यजन्यत्वेनाऽनाप्तोक्तत्वात्प्रामाण्यशङ्काकलङ्कितत्वेनानुमित्युपधायकपरामर्शानुत्पादकत्वात् अन्यथा आप्तवाक्यादिवन्न्यायजन्यज्ञानादेवानुमितिस्वीकारापत्तेः तथाच न्यायजन्यज्ञानेन तत्तत्पदार्थोपस्थापने सति धूमविशिष्टे वह्निवैशिष्ट्यमिति मनसा परिच्छेदानन्तरं परामर्शोत्पाद इत्यङ्गीकरणीयम् । अतएव "चिन्तामणिकारेणानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वं न्यायत्वं । शाब्दप्रमाणज्ञानजनकवाक्यत्वमवयवत्वमिति" तु लक्षणमुपन्यस्तं । यद्यपि विप्रतिपत्तेः पक्षपरिग्रहे हेत्वभिधानस्याकाङ्क्षितत्वेन प्रथमं हेत्वभिधानमेवोचितमिति प्रतिज्ञा न न्यायाङ्गं । तथापि समयबन्धादिना विप्रतिपत्तेरन्तरितत्वेन हेतुवाक्यस्य निष्प्रतियोगिकान्वयबोधासमर्थत्वात् प्रतिज्ञा न्यायाङ्गं । पर्वतो वह्निमान्कुत इत्याकाङ्क्षायां प्रतिज्ञानन्तरं हेतूपन्यासः अत्र च पर्वतो वह्निमानिति प्रतिज्ञायां ज्ञानविषयवह्नौ लक्षणा धूमादित्यत्र हेतुत्वं पञ्चम्यर्थः तस्य च निरूपकतया प्रतिज्ञैकदेशार्थे ज्ञाने अन्वयः । ज्ञायमानलिङ्गस्यानुमानत्वनये धूमपदं यथाश्रुतमेव लिङ्गज्ञानस्यानुमानत्वनये तु धूमपदस्य धूमज्ञानमर्थः एवं च धूमज्ञानजन्यज्ञानविषयवह्निमानिति वाक्यैकवाक्यतया प्रतिज्ञाहेतुभ्यामन्वयबोध इत्यपि कश्चित् । केचित्तु प्रतिज्ञायां ज्ञाने न लक्षणा प्रथममनाकाङ्क्षितत्वात् किंतु धूमपदस्य धूमज्ञाने पञ्चम्याश्च ज्ञाप्यत्वे लक्षणा । सुब्विभक्तावपि लक्षणास्वीकारादित्याहुः । एतन्मते । सर्वत्राप्येकस्थले अन्वयबोधानङ्गीकारेण सिद्धान्तविरोधः । वस्तुतस्तु पञ्चम्याः ज्ञानज्ञाप्यत्वमर्थः धूमस्य च ज्ञाने अन्वयः ससंबन्धिकस्थले एकदेशेऽप्यन्वयस्वीकारादित्यसमग्रतद्विचारेण कथमञ्ज

संसर्गत्वं व्याप्त्या पक्षधर्मतया चेति तत्र व्याप्तिप्रदर्शनायोदाहरणप्रयोगः । तत्र प्रथमयत्पदेन यद्बोध्यते द्वितीययत्पदेन तदन्यद्बोध्यते एवंच धूमवत्त्वज्ञानसं वह्निमत् धूमवत्त्वज्ञानसामान्यं धूमवह्निमदिति बोधे यावत्साधनाश्रयाश्रितसाध्यसंबन्धरूपा व्याप्तिः उदाहरणेन प्रदर्श्यते । तथा च यत्पदे एव वीप्सा न तु तत्पदेऽपि विरूपोपस्थितयोरपि एकेन तत्पदेन परामर्शासंभवात् सर्वनाम्नां बुद्धिस्थवाचकत्वादिति । अतएव "यच्च पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे" इत्युक्तं । ननु "संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः" इत्यत्र सासा ह्रियानम्रमुखी बभूवेत्यादौ च" कथं तत्पदे वीप्सेति चेत् यत्र प्रत्येकं यत्पदोपस्थापितं प्रत्येकरूपेण तत्तत्पदं परामृशति तत्र तत्पदेऽपि वीप्सा यथा स स भूमिपाल इत्यादौ यत्र तु सामान्यरूपेणैव तत्र न तत्पदेऽपि वीप्सा । यथा यद्यत्पापं प्रति जहि जगन्नाथेत्यादाविति न कश्चिद्दोषः । वस्तुतस्तु व्यापकसामानाधिकरण्यरूपव्याप्तिबोधकत्वमुदाहरणस्य पदार्थविधया वाक्यार्थविधया वा न संभवतीति वह्निपदस्य धूमव्यापकवह्नौ लक्षणा वीप्सा च तात्पर्यग्राहिका । यत्र यत्पदसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वं विधेये भासते तत्र तत्पदे न वीप्सा । यथा यो यो धूमवान् सोऽग्निमानित्यत्र यत्पदसमभिव्याहृतधूमवत्पदार्थतावच्छेदकीभूतधूमव्यापकत्वं विधेये वह्नौ भासते । यत्र तु यत्पदसमभिव्याहृतपदार्थतावच्छेदकधर्मसामानाधिकरण्यं विधेये भासते तत्र तत्पदे वीप्सा यथा "स स भूमिपालः,, यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूवेत्यादौ,,च तत्र यत्पदसमभिव्याहृतपदार्थतावच्छेदकीभूतभूमिपालत्वकातराक्षीत्वव्यापकत्वस्य विवर्णभावनम्रमुखीत्वरूपविधेययोर्बाधादन्वयासंभवेन भूमिपालत्वादिसामानाधिकरण्येनैव विधेयभानमावश्यकमिति तत्र तत्पदेऽपि वीप्सेति रहस्यम् । उदाहरणानन्तरं पक्षधर्मताप्रदर्शनायोपनयप्रयोगविशिष्टपरामर्शस्यानुमितिहेतुत्वव्यवस्थापनेनोदाहरणान्तएव न्यायप्रयोग इति मीमांसकमतंनिरस्तं बोध्यम् । उदाहरणोपनयरूपमवयवद्वयमिति बौद्धमतमप्यसमञ्जसं कथायामाकाङ्क्षाक्रमेणैवाभिधानात् प्रतिज्ञाद्युपन्यासस्यावश्यकत्वात् । धूमादित्येव प्रयोगो न तु धूमवत्त्वादिति मतुपो व्यर्थत्वादिति

ये मन्यन्ते तेषां मते अत्र वह्निव्याप्यधूम इत्येवोपन्यासः स्यात् । ननु वह्निव्याप्यधूमवानयमिति मतुपो व्यर्थत्वादित्यवधेयम् । अबाधितत्वासत्प्रतिपक्षितत्वबोधनाय निगमनप्रयोगः । नच बाधाभावस्य तदभावव्याप्यवत्ताज्ञानाभावस्य वा हेतुत्वं न तु तज्ज्ञानस्येति किं तद्बोधनेनेति वाच्यं । यदवगमे सति यन्न भवति तत्तदभावज्ञानसाध्यमिति नियमेन तज्ज्ञानस्य हेतुत्वात् । नच घटाभावज्ञाने घटप्रत्यक्षानुदयेन तत्रापि घटाभावाभावज्ञानस्य कारणत्वापत्तिरिति वाच्यं । परोक्षज्ञाने तादृशनियमाभ्युपगमात् । अत्र केचित् । पक्षे साध्याभावो बाधः तदभावश्च साध्यमेवेति पक्षे साध्यवत्ताज्ञानमनुमितिहेतुरित्यायातं तथाच सिद्धसाधनं यदि च पक्षे साध्याभावप्रमा बाधः तथापि तदभावज्ञानस्य विना पक्षे साध्यनिश्चयमसंभवितया सिद्धसाधनतादवस्थ्यादिति । यदवगमे सति यन्न भवति तत्तदभावज्ञाने सति भवत्येवेति बाधाभावज्ञाने सति बाधज्ञानानुदयेन बाधज्ञानप्रतिबन्धाभिप्रायेण बाधितत्वादिबोधनं नतु तज्ज्ञानस्य हेतुत्वाभिप्रायेणेति वदन्ति । केचित्तु अनुमितिप्रमायां गुणानुरोधेन योग्यतावत् संशयनिश्चयसाधारणमबाधितत्वादिज्ञानमपि हेतुरित्याहुः । नच तथापि निगमनेन कथमबाधितत्वादिबोधनम् अपदार्थत्वादवाक्यार्थत्वादिति वाच्यं । तस्माद्वह्निमानित्यस्यानुवादकत्वेन प्रयोजनजिज्ञासायामबाधितत्वादिज्ञानमेव प्रयोजनतयाऽवसीयते तद्बोधश्च लक्षणया । यदि च मानसबोधादिनापि तात्पर्यनिर्वाहे लक्षणाकल्पनमन्याय्यं । यथा धूमोऽस्तीति वाक्यस्य वह्निपरस्यापि आनुमानिकाद्वह्निबोधमादाय तात्पर्यनिर्वाहः तथा प्रकृतेऽपीति विभाव्यते तदा मानस एव तद्बोध इति रहस्यमत्रानुसन्धेयम् ॥ किञ्चिज्जल्पितमत्र तद्बहुतरं कृत्वा निदिध्यायतां दोषेराहृतमस्ति युक्तिनिवहं वाक्यं मदीयं बुधाः । चन्द्रः किं न कलङ्कितोऽपि भवति श्लाघ्यो ग्रगण्यः सतां बालत्वं यदि तत्र हेतुरधुना बालीयसि मद्वचः ॥ इति श्रीमहिम्नकुटमाणिक्यराजिनीराजननीराजितपदद्वन्द्वन्यायवागीश श्रीदीक्षितश्रीकण्ठशर्मविरचितायां न्यायसिद्धान्तमञ्जरीदीपिकायामनुमानपरिच्छेदः समाप्तः ॥

अथोपमानं निरूप्यते तत्रोपमितिकरणमुपमानम् । उपमितित्वं चोपमिनोमीत्यनुभवसिद्धो जातिविशेषः । शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वं वा । अनुमित्यादिवारणायजातिमदन्तम् । अनुमितित्वादीनां वह्निमानित्यादिज्ञाने शब्दविषयकव्यभिचारित्वात् श्रावणवारणाय परोक्षपदं प्रत्यक्षान्यपरं । ननूपमितित्वमेव कथं श-

---

ओं श्रीगणेशाय नमः । अनुमाननिरूपणेनानुमाननिजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वमुपमानेऽस्तीति अवसरसङ्गत्या उपमानं निरूप्यते । अथेति अनुमाननिरूपणानन्तरमित्यर्थः । निरूप्यते । लक्षणस्वरूपप्रामाण्यादिभिर्निरूप्यते निरूपणप्रतिज्ञा च शिष्यावधानायैव तत्र उपमानं निरूपयति अत्रोपमितिकरणत्वं लक्षणं लक्ष्यतावच्छेदकं चोपमानपदवाच्यत्वं यद्वारा कचिदुपाधिरूपेणान्यत्र च स्वरूपेणोपमितित्वस्य निवेशान्न भेदः अतएवोपमितित्वस्य द्वैविध्येनोत्कीर्त्तनं । ननु उपमितित्वस्यैवोपमितिलक्षणत्वे लक्षणलक्ष्यतावच्छेदकयोरभेदापत्तिरत उपाधिरूपेणापि तदाह । शब्देति । अनुमित्यादिपदात् शाब्दादिपरिग्रहः वह्निमानित्यादीति विशिष्योत्कीर्त्तनं गगनशब्दवदित्यादौ शब्दविषयकत्वसामानाधिकरण्यं सूचितम् अतएव शब्दविषयकत्वसमानाधिकरणजातिमदित्युक्तौ अनुमितित्वशाब्दत्वादेरपि तथात्वात्तद्वारणाय अव्यभिचारीति व्याप्यत्वार्थकं गगनं शब्दवदित्यनुमिति वृत्तितद्वृत्तित्वस्य शब्दविषयकत्वव्याप्यत्वात् तदादायातिव्यास्यापत्या धर्मपदं विहाय जातीति । श्रावणेति । श्रावणप्रत्यक्षस्य शब्दविषयकत्वावश्यंभावेन श्रावणत्वस्य तादृशजातित्वादिति भावः ननु परोक्षत्वं इन्द्रियजन्यभिन्नत्वं तथाचासंभवः ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यतया उपमितेरपि परोक्षत्वाभावादित्यत आह । प्रत्यक्षान्यपरमिति । तथाचनकश्चोक्तं परोक्षत्वं येनासंभवः स्यादिति भावः ननु कीदृश्योषधी ज्वरं हन्तीति पृष्टे मुद्गपर्णसदृश्योषधी ज्वरं हन्तीत्युत्तरिते ज्वरहरणतादृश्योषध्योः कार्यकारणभावउपमानेनावधार्यते एवंचेदृशस्थले उपमितेः शब्दविषयकत्वाभावान्नोपमितित्वं शब्दविषयकत्वाव्यभिचारिणीजातिस्तथाचासंभवइत्याशङ्कते नन्विति । उपमितिश्चेति शक्तिपरिच्छित्तिरेवहि उपमानफलं ज्वरहरणौषध्योः कार्यकारणभावस्तु अनुमानेनैवावधार्यतेतिशब्दविषयकत्व [illegible]

न्दविषयकत्वाव्यभिचारीति चेत्। उच्यते। उपमितिर्हि-पदवाच्यत्वविषयिका। नच पदमविषयीकृत्य तद्वाच्यत्वं विषयीकर्तुमर्हतीति। पदं च शब्दात्मकमित्युपमितेः शब्द-विषयकत्वनियमः कुत इयमुत्पद्यत इतिचेत्। सादृश्या-दिज्ञानादिति गृहाण। तथाहि। सामान्यतो गवयपद-वाच्यत्वेकिञ्चिदस्तीति जानानो विशिष्यापरिचिन्वान: कीदृशो गवयपदवाच्य इति कंचित् पृच्छति तेन गोसदृशो गवयपदवाच्य इत्युक्तः सन् विपिनमनुसरन् यदा गोसदृश पिण्डं पश्यति तदा पूर्वानुभूतातिदेशवाक्यार्थं स्मरन् परिच्छिनत्ति सोयं गवयपदवाच्य इति सेयमुपमितिर्नाम। नह्येतत्प्रत्यक्षं चक्षुरादिव्यापारविरहेपि जायमानत्वा-त्। नच मानसं ततो विलक्षणतया अनुभूयमानत्वा-त्। अन्यथाऽनुमितेरपि मानसत्वापत्तेः। नाप्यनुमितिः।

---

तित्वस्याच्च तमितिनासंभवइतिभाव: अतिदेशवाक्यार्थज्ञानं कारणं सादृ-श्यज्ञानं सहकारि अतिदेशवाक्यार्थस्मृतिर्व्यापार: उपमिति: फलमिति मं प्रदायमतं वक्ष्यति आवश्यकत्वात्सादृश्यज्ञानं करणमतिदेशवाक्या र्थस्मृतिर्व्यापारः उपमिति: फलमिति नवीनमतेनाह। सादृश्यज्ञानादिति। तथाच सादृश्यज्ञानं करणमिति भाव: प्रत्यक्षादावन्तर्भावासंभवात् परि शेषेण तस्या अतिरिक्तत्वं व्यवस्थापयितुं प्रणालीमारभते। नह्येतदिति। प्रत्य क्षमिति। यद्यपि प्रत्यक्षसामान्यमध्ये मानसमपि निविष्टमेव इत्यंच न मानसमिति पृथगुपन्यासोऽयुक्तः तथापि तद्व्यापारविरहेपि जायमा नत्वादिति हेत्वनुपपत्त्या पृथक् मानसं निराकृतं गोबलीवर्दन्यायेन चात्र प्रत्यक्षपदं मानसान्यप्रत्यक्षपरमिति ध्येयम्। तत:। मानसात्। अनुभूयमा नत्वात्। उपमित्यनन्तरं उपमिनोमीत्यनुव्यवसायोदयात् मानसानन्तरं तादृशप्रतीत्यनुदयाच्चमानसत्वं तस्याइत्यर्थः अनुभवानादरेत्वाह। अन्य थेति। अनुभवानादरे इत्यर्थ:। अनुमिनोमीत्यनुव्यवसायस्य मानसानन्त-

व्याप्तिज्ञानाद्यभावाद्युत्पत्तेः । नापि शाब्दं गवयत्ववि-शिष्टोपस्थापकपदाभावात् । उपमितौ अयं गवयपदवाच्य इत्याकारिकायां गवयत्वावच्छेदेन गवयपदवाच्यत्वावगाह-नात् न तु गोसादृश्यावच्छेदेन तस्य गौरवेणानवच्छेद-कत्वात् । अन्यथा प्रतीतिमूलव्यवहारप्रसङ्गः । तथा स्फु-

---

रानुदयेनानुमितेरतिरिक्तत्वसिद्धिः अनुभवापलापे तु तस्या अप्यतिरिक्तत्व विलयेतेति भावः व्याप्तिज्ञानादीत्यादिपदात्पक्षधर्मताज्ञानपरिग्रहः । पदाभावादिति । शाब्दबोधसामान्ये पदजन्यपदार्थोपस्थितेर्हेतुतया तदभावकाले चोपमित्युत्पत्त्या नोपमितेस्तद्रूपत्वमिति भावः ननु गोसदृशो गवयपदवाच्य इत्याकारकं गोसादृश्याश्रये गवयपदवाच्यत्वावगाहि ज्ञानमुपमानं ततश्च गोसादृश्यावच्छिन्ने गवयपदवाच्यत्वावगाहिनी उपमितिरुत्पद्यते तत्र च गवयत्वविशिष्टोपस्थापकपदाभावेपि गोसादृश्यविशिष्टोपस्थापकपदसत्वात् शाब्दत्वे बाधकाभावइत्यत उपमित्याकारं परिच्छिनत्ति । उपमिताविति । अयमिति । गवय इत्यर्थः । तथा चोपमितेर्गोसादृश्यावच्छेदेन गवयपदवाच्यत्वावगाहित्वे गवयत्वावच्छेदेन गवयपदवाच्यत्वावगाहनादित्युक्तिविरोधात् अन्यथा अप्रतीतमूलकव्यवहारापत्तेरिति दोषानुद्धाराच्च नतुवेति । न तु गोसादृश्यावच्छेदेनगवयपदवाच्यत्वावगाहनमिति विभक्तिविपरिणामेनान्वयः । तस्य । गोसादृश्यस्य । गौरवेण । गवयत्वापेक्षया गौरवेण । तदनवच्छेदकत्वात् । गवयपदवाच्यत्वानवच्छेदकत्वात् ननु गवयत्वस्यावच्छेदकत्वे तदवच्छेदेन गवयपदवाच्यत्वस्याप्रतीतया तदुपपत्तये प्रमाणान्तरस्वीकरणीयमिति महद्गौरवमिति तदपेक्षया गोसादृश्यस्य गवयत्वापेक्षया गुरुत्वेपि अवच्छेदकत्वकल्पनं न्याय्यं धर्मिकल्पनातो धर्मकल्पनायां लघीयस्त्वमिति न्यायादित्यत आह । अन्यथेति । गोसादृश्यस्य अवच्छेदकत्वं स्वीकृत्य प्रमाणान्तराकल्पने इत्यर्थः । व्यवहारः । शाब्दबोधः । शब्दप्रयोगो वा । न प्रतीतमस्य शक्तिर्यस्येत्यर्थः शक्तिज्ञानामूलकं एवं स्यादिति यावत् अत्र गोसादृश्यावच्छेदेनैव गवयपदवाच्यत्वावगाहनात् अतिदेशवाक्यार्थज्ञानोत्तरोत्पन्नज्ञानात् गवयइति पदाच्छाब्दबोधोऽनुभवसिद्धो विशेष्यतत्प्रकारकशाब्दबोधे तत्प्रकारकशक्तिग्रहस्यैव हेतुतया गवयत्वप्रकारकशक्तिग्रहाभावात् एवं व्यवहारं प्रति व्यवहर्तव्यज्ञानस्य हे-

तिरियं। पूर्वमननुभवात्। अतो अतिरिक्तैवेयं। तस्याः करणं, सादृश्यविशिष्टे तत्पदवाच्यरूपवाक्यार्थानुभवः। तत्स्मृतिद्वारं गवयत्वादिरूपावच्छेदकविशिष्टे सादृश्यज्ञानं च तत्सहकारीति संप्रदायः। तच्चोपलक्षणं। वैधर्म्यज्ञानादुपमित्युत्पत्तेः। यथा कीदृशी पृथ्वीति शिष्येण पृष्टे ज-

---

नुतया तादृशशब्दबोधाभावात्तदुत्तरतादृशव्यवहारानुपपत्तेश्चेति गवयत्वावच्छेदेनैव गवयपदवाच्यत्वावगाहिज्ञानमुपेयं गवयत्वविशिष्टोपस्थापकपदाभावान्न शाब्दत्वमिति। एतेन शाब्दत्वनिराकरणप्रस्तावे गवयपदवाच्यतावच्छेदकत्वं गवयत्वस्य गोसादृश्यस्य वेति विचारस्य प्रकृतानुपयोगित्व अग्रे च उपमित्याकारप्रदर्शनस्यानौचित्यादि यपास्तम् उक्तमदुक्तव्याख्ययैव सर्वसामञ्जस्यादिति ध्येयम् नापि स्मृतिरित्याह। नवेति। अनुभवागोचरस्य स्मृत्यगोचरत्वादिति भावः तस्याः प्रत्यक्षादिषु अन्तर्भावासंभवादतिरिक्तैव। अनुमित्यादिभ्यो अतिरिक्तैव। इयम्। अयं गवयपदवाच्य इति प्रतीतिः प्रत्यक्षादिप्रतीतिभ्यो भिद्यते तद्विरुद्धधर्मवत्त्वादित्यनुमानं बोध्यम्। संप्रदायमतमाह। तस्याः करणमिति। सादृश्येति। सादृश्यविशिष्टे। सादृश्याश्रये गोसदृशो गवयपदवाच्य इति वाक्यार्थानुभव इत्यर्थः। तत्स्मृतिः। सादृश्यवाक्यार्थस्मृतिः। द्वारं। व्यापारः। गवयत्वेति। अयं। गोसदृश इत्याकारकसादृश्यनिश्चयः। अतिदेशवाक्यार्थानुभवरूपो उपमानसहकारीत्यर्थः। ननु सादृश्यकरणकज्ञानवत् वैधर्म्यकरणकज्ञानस्याप्यतिरिक्तत्वापत्तिरित्यत आह। एतच्चेति। एतत्सादृश्यज्ञानं वैधर्म्यज्ञानजन्योपमिति व्युत्पादयति। यथेति तच्छब्दार्थेति। जलादिविधर्मगुणवती पृथ्वीति गुरुवाक्यार्थस्मरणादित्यर्थः एवं गन्धवतीति पूर्वं जलादिविधर्मगुणत्वेन इदानीं तु गन्धत्वेनेति भेदः। इत्युक्तमिति इति। गुरुणोक्तमिति इत्यर्थः। ननु वैधर्म्यज्ञानजन्यज्ञानस्योपमितित्वस्वीकारे सादृश्यवैधर्म्यज्ञानयोः परस्परजन्योपमितौ व्यभिचारेण कथं करणत्वसंभव इत्यत आह। तस्मादिति। सादृश्यज्ञानजन्योपमितेरिव वैधर्म्यज्ञानजन्योपमितेरप्यनुभवसिद्धतया ऽपलापानर्हत्वादित्यर्थः। यत्किंचिदिति। सादृश्यवैधर्म्यान्यतरविशिष्टे इत्यर्थः। विशिष्य। विशेषधर्मपुरस्कारेण। अपरिचितेति। अनिर्णीतशक्तिकपदवाच्यत्वरूपेऽयमर्थः ग-

त्वादिविधर्मगुणवता गुरुणा उच्चरितः सन् यदा जलादिविधर्मगुणवतीत्यनुभवति तदा तच्छब्दार्थस्मरणादस्य उपमितिः संपद्यते इयं पृथिवी पदवाच्येति । एवं गन्धवती पृथिवीति उच्चरितेपि ज्ञेयं । तस्माद्यत्किञ्चिद्धर्मविशिष्टे विशिष्ट्या विदितसङ्गतिकपदवाच्यतारूपवाक्यानुभवः करणं किञ्चिद्विशिष्टतद्वत्ताधीः सहकारिणी । यदा सत्य-

---

वयपदवाच्यं किञ्चिदस्तीति सामान्यतः शक्तिनिर्णयात् विशिष्येत्युक्तम् अतएव सामान्यधर्मप्रकारकज्ञानस्यावान्तरधर्मप्रकारकजिज्ञासां प्रति हेतुतया विशेषधर्मप्रकारकजिज्ञासाबोधकः कीदृशो गवय इति प्रश्नोप्युपपद्यते इति बोध्यम् । करणमिति । उपमितिसामान्ये सादृश्यवैधर्म्यान्यतरधर्मितावच्छेदकविशिष्यानिर्णीतशक्यतावच्छेदकपदवाच्यत्वरूपवाक्यार्थानुभवः करणमित्यर्थः । विसदृशेप्युपमिति प्रसङ्ग इत्यत आह । किञ्चिद्धर्मविशिष्टे इति । गवयत्वादिरूपधर्मविशिष्टे इत्यर्थः । तद्वत्ताधीरिति । यद्विशिष्टे पदवाच्यत्वानुभवस्तद्वत्ताधीरित्यर्थः । गवयत्वादिविशिष्टे सादृश्यधीरिति यावत् । ननु एकधर्मविशिष्टे सादृश्यज्ञाने धर्मान्तरविशिष्टे पदवाच्यत्वावगाह्युपमित्यनुदयात् यद्धर्मावच्छेदेन सादृश्यज्ञानं तद्धर्मावच्छेदेनैव पदवाच्यत्वावगाहिनी उपमितिरित्युपेयम् एवं च गवयत्वादिरूपलघुधर्मानुपस्थितौ यदा गुरुधर्मविशिष्टे एव सादृश्यज्ञानं तदा तदवच्छेदेनैव पदवाच्यत्वावगाह्युपमितिः स्यादित्यनिष्टापत्तिमाह । यदाचेति । लघुधर्मे । गवयत्वादिरूपजातौ । तदस्फुरणे । गवयत्वास्फुरणे। गुरुधर्मेति । विलक्षणसंस्थानवत्वरूपधर्मविशिष्टे इत्यर्थः । सादृश्यादीत्यादिपदात् वैधर्म्यपरिग्रहः। तदवच्छेदेनैव । विलक्षणसंस्थानवत्वरूपगुरुधर्मावच्छेदेनैव । वाच्यताग्रहः । गवयपदवाच्यताग्रहसगुरुधर्मविशिष्टे पदवाच्यताग्रहः । बाधा- - दिति । लघुधर्मोपस्थितौ लघुधर्मे शक्यतावच्छेदके संभवति गुरुधर्मे तत्स्वीकारस्यान्याय्यतया लघुधर्मविशिष्टएव पदवाच्यत्वावगाहिज्ञानमुत्पद्यते गुरुधर्मविशिष्टविषयकज्ञानेत्वप्रामाण्यज्ञानं तदनन्तरजायतइति भावः । केचित्तु लघुधर्मानुपस्थितौ गोसादृश्याद्यवच्छेदेनापि पदवाच्यत्वावगाहनात् सादृश्यं गौरवेणानवच्छेदकमित्युक्तमयुक्तमित्यत आह । यदाचेति । गुरुधर्मविशिष्टे । सादृश्यादिधर्मविशिष्टे । तदवच्छेदेनैव । साद-

पि लघुधर्मेतदस्फुरणे गुरुधर्मविशिष्ट एव सादृश्यादि-ज्ञानं जायते । तदा तदवच्छेदेनैव वाच्यताग्रहो जायते । स भ्रमो गौरवेण बाधादिति संक्षेपः ॥ इत्युपमानम् ॥

---

श्यावच्छेदेनैवेत्यर्थः । इति व्याचक्षते तदसत् गुरुधर्मविशिष्ट एव सादृश्यज्ञानं जायत इत्यस्यासङ्गत्वापत्तेः गोसदृशो गोसदृश इति सादृश्यज्ञानस्यासंभवित्वादिति दिक् ।

ननु संभवत्येवं यद्यनुमानस्य प्रमाण्यं अनुमानाधीनशक्तिग्रहमूलकत्वाद्वाक्यार्थानुभवरूपोपमानस्य तदेव तु न प्रमाणाभावात् एवं च नोपमानशब्दयोरपीति व्याहत चत्वारि प्रमाणानीति तथाहि वन्ह्यादिगोचरप्रवृत्तेर्वह्निव्याप्यवत्तापरामर्शरूपविशेषदर्शनमूलकप्रत्यक्षादेवोपपत्ते नानुमानस्य प्रमाणत्वं नचान्वयव्याप्तिज्ञानकाले साध्यज्ञानस्यावश्यकत्वात् वन्ह्यादिविषयकोपनीतभानोपपत्तावपि इतरभेदज्ञानशून्यकालीनइतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिव्यतिरेकव्याप्तिज्ञानकाले इतरभेदज्ञानाभावात्तदुपनीतभानासंभवेन तत्र प्रमित्यन्तरस्वीकार आवश्यक इति वाच्यम् अभावत्वादिसामान्यलक्षणसन्निकर्षबलादेवेतरभेदगोचरप्रत्यक्षोपपत्तेः एवं घटमानयेति वाक्यश्रवणानन्तरं घटकर्मत्वानयनकृत्यादीनां परस्परसंसर्गविषयकविलक्षणप्रमितिरसिद्धा शाब्दबोधपूर्वं पदार्थोपस्थितेरावश्यकतया तादृशोपनीतभानेनैव निर्वाहात् नच संसर्गोपस्थितेरनैयत्यात् कथं संसर्गबोध इति वाच्यम् बाधाभावादिबलात् तस्यापि संसर्गतया भाने बाधकाभावात् नच तदुपनीतभानं प्रति तदुपनायकज्ञानत्वेन कार्यकारणभावे व्यभिचार इति वाच्यम् सांसर्गिकविषयताभिन्नाऽलौकिकविषयतायास्तज्जन्यतावच्छेदकत्वेन व्यभिचाराभावात् प्रमित्यन्तरस्वीकारे तन्नियामकबहुतरकार्यकारणभावकल्पनापेक्षया सांसर्गिकविषयताभेदनिवेशे लाघवस्यातिस्फुटत्वात् योग्यताज्ञानस्य शाब्दसामान्यहेतुतया संसर्गविषयकयोग्यताज्ञानस्य सत्त्वात्सांसर्गिकविषयताभेदानिवेशेपि क्षत्यभावाच्च एवं गवयत्वविशिष्टे सादृश्यज्ञानसहकृतगोसदृशो गवयपदवाच्य इति ज्ञानोत्तरोत्पन्नमयं गवयपदवाच्य इति ज्ञानमप्युपनीतभानमेवेति कथमेतदिति चेदत्राहुः लिङ्गपरामर्शोत्तरोत्पन्नप्रमित्युत्तरमनुमिनोमीत्यनुव्यवसाय-

स्ताबदनुभवसिद्धः तद्विषयीभूतानुमितित्वाख्यजातिविशेषावच्छिन्नकरणतयानुमानस्य प्रमाणान्तरत्वम् अथ वह्निमान् पर्वतो घटवान् इत्यनुमित्यनन्तरं पर्वते वह्निमनुमिनोमीत्यनुव्यवसायापत्त्या वह्निनिष्ठविषेयत्वाख्यो विलक्षणविषेयताविशेष उपगन्तव्यः यदभावादनन्तरं न तादृशानुव्यवसायः एवं चानुमिनोमीत्यनुव्यवसायस्य तादृशविषयताविशेषविषयकत्वे नोपपत्तेरतअनुमितित्वजातिस्वीकारेणेति कुतस्तदवच्छिन्नकरणतया प्रमाणान्तरत्वमिति चेन्न। लिङ्गपरामर्शविरहे तादृशविषयताकज्ञानानुत्पत्त्यातदवच्छिन्नकरणतयैव। तस्य प्रमाणान्तरत्वमिति वस्तुतस्तु अनुमिनोमीत्यनुव्यवसायस्य तादृशविषयतामात्रविषयकत्वे आपत्तिशाब्दबोधोत्तरमपि तादृशानुव्यवसायापत्तेः अनुमित्यापत्ति शाब्दबोधादिषु तादृशविषयताऐक्यात् अनुमितित्वजात्यङ्गीकारेतु आपत्यादिषु तादृशजात्यसत्वान्नतादृशानुव्यवसायापत्तिरिति तदवच्छिन्नकरणतया अनुमानस्य प्रमाणान्तरत्वमावश्यकमेव एवं शब्दश्रवणानन्तरंजायमानज्ञानानन्तरं शाब्दयामीत्यनुव्यवसायोत्पत्त्या तद्विषयतया सिद्धशाब्दत्वाख्यजातिविशेषावच्छिन्नकरणतया शाब्दप्रमाणसिद्धिः एवमुपमिनोमीत्यनुव्यवसायबलादुपमानस्यापि प्रमाणान्तरत्वमिति नन्वायात्वनुमितित्वादि तथापि तत्प्रत्यक्षत्वव्याप्यमेवास्तां तदवच्छिन्नकरणस्य च न प्रमाणान्तरत्वं अथानुमित्यादेर्मानसत्वे तदुत्तरं साक्षात्कारोमीत्यनुव्यवसायापत्तिः अनुमित्यादेः साक्षात्कारत्वादिति चेन्न। लौकिकविषयताशालिसाक्षात्कारस्यैव तादृशप्रतीतिविषयत्वात् अत एव सुरभि चन्दनमित्याद्युपनीतभानानन्तरं चन्दनं पश्यामि न सौरभमिति सार्वजनीनः प्रत्ययः सङ्गच्छते तथ च लौकिकविषयतायाः साक्षात्कारत्वव्यञ्जकतया नानुमित्याद्युत्तरं साक्षात्करोमीति प्रत्ययः अथैवं तत्र प्रत्यक्षत्वसत्वे प्रमाणाभावः साक्षात्करोमीति प्रत्ययाभावेन प्रत्यक्षस्याप्रयोजकत्वाच्च अनुमानस्यापि मानत्वेन वक्तुमशक्यत्वात् अत्र कश्चित् अनुमितित्वादेः प्रत्यक्षत्वव्याप्यत्वे लाघवमेव तथाहि अनुमितिसामग्रीकाले प्रत्यक्षसामग्रीकाले प्रत्यक्षवारणायानुमितिसामग्र्याः प्रत्यक्षं प्रति प्रतिबन्धकत्वं कल्पनीयं प्रत्यक्षत्वव्याप्यत्वे त्वनुमित्यात्मकप्रत्यक्षस्यैवोत्पत्तेरत तदकल्पनमयुक्तं लाघवमक्षुण्णमेवेति तदसत् अनुमितित्वस्य चाक्षुषत्वव्याप्यत्वे त्वाचपरामर्शोत्तरोत्पन्नज्ञानेऽनुमितित्वानापत्तेः चाक्षुषत्वस्य तद्व्याप्यत्वमनुपासम्भवि परस्परव्यभिचारिणोस्तयोरेकत्र समावेशो सांकर्यापत्तेरिति चा

क्षुषत्वादिविरुद्धं तदुपगन्तव्यम् एवं चानुमितिसामग्रीकाले चाक्षुषादि वारणाय चाक्षुषादिकं प्रति अनुमितिसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं एवं च सामान्यतः प्रत्यक्षं प्रत्यनुमितिसामग्र्याः प्रतिबन्धकत्वं मयापि न कल्प्यते इति लाघवं ननु अनुमितित्वादेर्मानसत्वव्याप्यत्वमेवास्तां अनुमितिसामग्रीकाले मानसवारणाय मानसं प्रत्यनुमितिसामग्री-प्रतिबन्धकत्वकल्पने गौरवं मन्मते तु अनुमित्यात्मक मानसस्यैवोत्पादेन तदिष्टापत्तेः नच वह्न्यनुमितिसामग्रीकाले घटादिमानसवारणाय घटा-दिमानसे प्रतिबन्धकत्वस्यावश्यकतया घटादिकमनिवेश्य मानसत्वमेव तत्प्रतिबध्यतावच्छेदकमिति वाच्यम् घटादिमानसं जायतामितीच्छा-नामुत्तेजकत्वानुरोधेन विषयं निवेश्यैव प्रतिबन्धकत्वकल्पनस्यावश्यकत्वा-त् एवं शाब्दादिस्थलेपीति मैवं घटादिचाक्षुषसामग्रीकाले वह्निमान-सानुदयेन चाक्षुषसामग्र्याः मानसं प्रति प्रतिबन्धकतायां घटादिचाक्षु-षसामग्रीकाले वह्न्यनुमित्युत्पत्तेरनुमित्यन्यमानसत्वमेव चाक्षुषसामग्री प्रतिबध्यतावच्छेदकं भवतावाच्यमित्यनुमित्यन्यत्वनिवेशे गौरवात् एव-मनुमितिसामग्रीकाले अनुमित्यन्यमानसवारणायानुमित्यन्यमानसत्वमनु-मितिसामग्रीप्रतिबध्यतावच्छेदकमुपेयमित्यनुमितिसामग्र्याः प्रतिबन्धक त्वकल्पनमावश्यकमित्यन्यत्वनिवेशे गौरव पुनरधिकम् एवं शाब्दोपमिति स्थले शाब्दान्यत्वोपमित्यन्यत्वनिवेशे गौरवमिति । तेषां न मानसान्तर्भाव इति सुष्ठूक्तं चत्वारि प्रमाणानीति दिक् ॥

इति श्रीदीक्षितश्रीकण्ठशर्मविरचितायां न्यायसिद्धान्तमञ्जरीदीपिकायामुपमानपरिच्छेदः समाप्तः ॥ ३ ॥

## अथ शब्दो निरूप्यते तत्र शाब्दप्रमितिकरणं शब्दः

श्रीगणेशायनमः ॥ जटाजूटलसद्गाङ्गजलमस्तकभूषितः ॥ पुनातु गिरिजाप्रेमपात्रमेकमनेकधा ॥ १ ॥ उपजीव्योपजीवकभावसङ्गत्या उपमाननिरूपणानन्तरं शब्दं निरूपयन् शिष्यावधानाय प्रतिजानीते । अथेति । अत्र ज्ञायमानपदस्य शब्दप्रमाणतया पदे उपमानोपजीवकत्वाभावात्फलयोः स्वरूपफलयोश्च सङ्गतिर्बोध्या । तस्याश्च फलनिष्ठत्वेऽपि स्वाश्रयकरणत्वात्मकपरंपरासम्बन्धेन करणनिष्ठत्वात्करणयोरानन्तर्यमवसेयं तथाहि शक्तिपरिच्छित्तिरेवोपमितिः तस्याश्च सर्वस्याएव शाब्दबोधजनकत्वेन फलयोरुपजीव्योपजीवकत्वसंभवः । एवं स्वरूपफलयोरप्यतिदेशवाक्यार्थज्ञानरूपोपमानप्रमाणस्योपमितिद्वारा शाब्दबोधोपजीव्यत्वादिति । केचित्तु । ज्ञायमानं पदं करणमित्यस्य शक्तत्वेन ज्ञायमानमित्यर्थात् सविशेषणेहिविधिनिषेधौविशेषणमुपसंक्रामतः सतिविशेष्ये बाधे इति न्यायेन स्वर्गीध्वस्तइतिवद्विशेषणीभूतशक्तिज्ञानमादायोपमानोपजीवकत्वसम्भवेन स्वरूपतउपजीवकत्वमपिसंङ्गतिरित्याहुः ॥ पदज्ञानस्य शब्दप्रमाणत्वाङ्गीकर्तृनवीनमतेतूपमितेः शक्तिमत्पदविषयकत्वेनातिदेशवाक्यार्थज्ञानात्मकोपमानप्रमाणस्योपमित्यात्मकशब्दप्रमाणे उपजीव्यत्वेनस्वरूपतउपजीवकत्वमक्षुस्समेवेति द्रष्टव्यं । नन्वतिदेशवाक्यरूपशब्दप्रमाणस्यापि अतिदेशवाक्यार्थज्ञानरूपोपमानोपजीव्यत्वादुपमानमेवादौ निरूपितं नतु शब्दइत्यत्र किं विनिगमकमिति चेन्न । प्रमाणतावच्छेदकधर्मावच्छिन्नोपजीव्यतानिरूपितोपजीवकताया एवात्र सङ्गतित्वात् । प्रमाणतावच्छेदकधर्मश्चेन्द्रियत्वादिः । अवच्छिन्नत्वं च व्यापकत्वम् । एवंचोपमानस्य सङ्केतमात्रग्राहकतया सर्वस्यैवोपमानस्य शब्दप्रमाणोपजीव्यत्वं शब्दप्रमाणस्य नतु सर्वस्यातिदेशवाक्यार्थज्ञानात्मकोपमानोपजीव्यत्वं घटमानयेति शब्दे तदभावात् । न च पदज्ञानत्वेन शाब्दत्वावच्छिन्नं प्रतिहेतुतया घटमानयेति शब्दनिरूपितशाब्दत्वावच्छिन्नकार्यताया उपमाने सत्त्वादुक्तदोषतादवस्थ्यमिति वाच्यं प्रमाणविभाजकोपाधिनियतधर्मावच्छिन्नाया उपजीवकताया विवक्षितत्वात् । प्रमाणविभाजकोपाधिश्च साक्षात्कारकरणत्वादिः । अवच्छिन्नत्वंचात्र स्वरूपसम्बन्धविशेषः । इत्थं च शाब्दत्वादेरुपमितिकरणत्वनियतत्वादतिदेशवाक्यार्थज्ञानत्वादेव तथात्वेन तस्यच प्रमाणत्वावच्छेदकशब्दप्रमाणत्वस्य व्यापिकोपजीव्यतानिरूपितोपजीवकताया अनवच्छेदकत्वादुक्तदोषाभावात् ॥ केचित्तु । यत्रकीदृग्गवयइति प्रश्नानन्तरं चित्रलेखादिना तादृशपिण्डप्रदर्शनं तत्रातिदेशकवाक्यं विनापि मानसरूपातिदेशवाक्यार्थज्ञानात्मकोपमानोदयेन व्यभिचाराच्छब्दोनोपजीव्यइति उप-

शाब्दत्वं शब्दात्प्रत्येमीत्यनुभवसिद्धो जातिविशेषः जन्य-

सानं शब्दोपजीवकत्वाभावान्नविनिगमइति वदन्ति । तदसत् । शाब्दीह्याकाङ्क्षा शब्देनैवप्रपूर्यतइति न्यायात्तत्रापिद्दृग्गवयइत्यभिप्रायिकशब्दकल्पनाया आवश्यकत्वाच्छाब्दी आकाङ्क्षा शाब्दबोधगोचरेच्छा शब्देनैव विषर्यसन्निधिद्वारा निवर्त्यतइतितदर्थात् यदि च प्रष्टुर्यदाज्ञानमात्रे इच्छा नतुशाब्दबोधेतत्रशब्दकल्पनानवकाशः तत्रशाब्दगोचरेच्छाया अभावेनतादृशन्यायस्यानवतारात् । नचातिदेशवाक्यार्थज्ञानस्याशाब्दत्वेनैवोपमितिकरणतया शब्दकल्पनमावश्यकं पदजन्यपदार्थोपस्थितेरेव शाब्दबोधे हेतुत्वात् । शाब्दी । शाब्दबोधोपयोगिनी । आकाङ्क्षा । अन्वयप्रतियोग्युपस्थितिरूपा । शब्देनैव प्रपूर्यते । संपाद्यते इत्यर्थात् तादृशन्यायस्याप्यनवतारादितिवाच्यम् । अतिदेशवाक्यार्थज्ञानस्य शाब्दत्वेनोपमितिकरणत्वे मानाभावात् । परित्यज्यनिश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनानुदयात् । न च निश्चयत्वमपेक्ष्य शाब्दत्वस्य लघुतया तन्निवेश एव सम्यगिति वाच्यम् । सादृश्यज्ञानस्योपमानत्ववादिमतइवाति देशवाक्यार्थस्मृतिरूपव्यापाराभावेनैवानतिप्रसङ्गेन निश्चयत्वानिवेशे प्रयोजनाभावादिति विभाव्यते तथापि व्यवहारादिनापि शक्तिग्रहाच्छाब्दबोधोदयेन व्यभिचाराच्छब्दप्रमाणेऽपि उपमानोपजीवकत्वव्याघातः । क्वाचित्कोपजीवकत्वस्यच शब्दप्रमाणइवोपमानप्रमाणेऽपि सत्वादविनिगमतादवस्थ्यादिति न किंचिदेतत् । नव्यास्तु स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हत्वादितिन्याय एव विनिगमकः नतुसङ्गतिरिति तस्यास्तुल्यत्वेऽपि नत्वरित्याहुरितिदिक् । निरूप्यतइति । लक्षणस्वरूपप्रामाण्यादिप्रकारकवर्त्तमाननिरूपणविषयः शब्दइत्यर्थः । तत्र । शब्दनिरूपणीये । शाब्देति । अत्र शब्दप्रमितिकरणत्वं लक्षणं प्रमाणपदवाच्यत्वं लक्ष्यतावच्छेदकं प्रमितिकरणत्वमात्रं प्रत्यक्षादावतिव्याप्तमतः शाब्देति । ननु शाब्दत्वं शब्दजन्यत्वं तथाच शब्दजन्यप्रमाकरणत्वं लक्षणं पर्यवस्यति तच्च विषयविधया शब्दजन्यप्रत्यक्षप्रमितिकरणेश्रोत्रेन्द्रियेऽतिव्याप्तमित्यत आह । शाब्दत्वं चेति । तथाच शाब्दत्वरूपजात्यवच्छिन्नप्रमितिकरणत्वं नतच्छ्रोत्रेनातिव्याप्तिरितिभावः ॥ केचित्तु अतीतानागतशब्देऽनुसन्धानादपि शाब्दबोधोदयाच्छब्दो नकरणं किंतुशब्दज्ञानं इत्थं च शब्दजन्यप्रमाकरणत्वस्यलक्षणत्वेऽसम्भवः शब्दज्ञानजन्य प्रमाकरणत्वस्य लक्षणत्वे तु विषयविधया शब्दज्ञानजन्यप्रत्यक्षप्रमाकरणे मनस्यतिव्याप्तिरत आह । शाब्दत्वं चेतीत्याहुः । शाब्दत्वस्यप्रत्यक्षाद्यन्यत्वरूपत्वे गौरवादाह । शाब्दत्वं चेतीदयापिकश्चित् । ननुलक्षणलक्ष्यतावच्छेदकयोरभेदइत्यत आह । जन्येति । केचित्तु ननु शब्दात् घटंप्रत्येमीत्येवानुभ-

पदधीजन्यत्वव्यभिचारी अनुभवत्वाऽव्यापकजातिशून्यत्वे सति पदविषयकत्वाऽव्यभिचारी जातिशून्यधीत्वं वा सत्यन्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय तत्तत्तादृशीनां प्रत्यक्षत्वादिजातीनां सत्वात्। जातिशून्यत्वं अनुभवत्वाऽव्या-

---

वा ननु शब्दात् प्रत्येमीत्यात्मविशेषगुणानां विषयविनिर्मोकेणाभानानुपगमात् तथाच शब्दजन्यघटादिविधेयकज्ञानत्वमेव तद्विषयीनत्वातिरिक्तशाब्दत्व जातिरित्यत आह। जन्यपदधीत्याहुः। तदसत्। शब्दलिङ्गकघटानुमितेरपि शब्दजन्यघटविधेयकज्ञानत्वेन तदुत्तरमपि शाब्दयामीति प्रतीत्यापत्तेः शाब्दत्वजातिस्वीकारस्यावश्यकत्वात् तदस्वीकारमादाय द्वितीयलक्षणप्रणयने तदव्यापकशाब्दत्वस्येत्यग्रिमग्रन्थासङ्गतेश्चेत्यवधेयम्। जन्यपदधीजन्यत्वव्यभिचरिणी अनुभवत्वाव्यापिका च या जातिः प्रत्यक्षत्वादिस्तच्छून्यत्वे सति पदविषयकत्वाव्यभिचारिणीया जातिरूपमितित्व तच्छून्यधीत्वमिति लक्षणार्थः। अतिव्याप्तिं वारयति। तत्रेति। प्रत्यक्षानुमितिस्मृतिष्वित्यर्थः। तादृशीनां। जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वव्यापकानां। सत्वादिति। तथाच तच्छून्यत्वाभावान्नातिव्याप्तिरिति भावः। स्मृतित्वस्य जातित्वमनुभवसामग्रीप्रतिबध्यतावच्छेदकत्वेन। ननु प्रत्यक्षादावतिव्याप्तिवारणाय जातिशून्यत्वे सतीत्यास्तां यदि च शाब्देऽपि ज्ञानत्वादिजातिसत्वादसंभवइति विभाव्यते तदानुभवत्वाव्यापकजातिशून्यत्वे सतीत्येवास्त्वत आह। जातिशून्यमिति। जातिशून्यत्वमात्रमित्यर्थः। अनुभवत्वेति। अनुभवत्वाव्यापकजातिशून्यत्वमात्रमित्यर्थः। अनुभवत्वादीनामिति। आदिना ज्ञानत्वगुणत्वसत्वादिपरिग्रहः। तथाचेदृशजातीनां सत्वाज्जातिशून्यत्वं न वक्तव्यमित्यर्थः। अत्र यद्यपि ज्ञानत्वादीनामित्येव वक्तुमुचितं तथापि तदव्यापकेत्यत्र तच्छब्देनानुभवत्वपरामर्शायानुभवत्वादीनामित्युक्तं। तदव्यापकेति। अनुभवत्वाव्यापकेत्यर्थः। अनुभवत्वाव्यापकेत्यस्य व्यावृत्तिमाह। जन्येति। तथा। असंभवि। तादृगिति। जन्यपदधीजन्यत्वव्यभिचारीत्यर्थः। नन्वनुभवत्ववारणायानुभवत्वान्यत्वमेवोपादीयतामित्यत आह। आदीनामिति। आदिना ज्ञानत्वपरिग्रहः। अनुभवत्वाव्यापकत्वं चानुभवनिष्ठभेदप्रतियोगितावच्छेदकत्वं तेनानुभवत्वादिव्युदासः। नन्वनुभवत्वव्याप्यत्वमेव किं नोपादीयते कृतमव्यापकत्वघटितत्वेनेति चेन्न। व्यापकसामानाधिकरण्यरूपव्याप्यत्वनिवेशे गौरवात्। एवमनुभवत्वस्यापि स्वव्याप्यतया तद्वारणाय

पकजातिशून्यत्वं चाऽसंभवि। अनुभवत्वादीनां तद्व्यापकशाब्दस्य च सत्वात्। जन्यपदधीजन्यत्वव्यभिचारिजातिशून्यत्वमपि तथा। तादृगनुभवत्वादीनां सत्वात्। पदधीजन्यत्वव्यभिचारिअनुभवत्वापरजातिशून्यत्वं चानुमितावपि।

---

भेदघटितव्याप्यत्वस्यावश्यं वाच्यतयातिगौरवाच्च। मन्मतेऽनुभवनिष्ठभेदप्रतियोगितावच्छेदकतत्वस्यानुभवत्वे असत्त्वेनानुपपत्यभावात्। स्मृतावतिव्याप्तिवारणाय चरमधीपदस्यानुभवपरत्वं विनानिर्वाहाच्चेति पदजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वमिति क्वतेऽसंभवः। ज्ञायमानपदस्य करणत्वासंभवेन शाब्दत्वस्यापि पदजन्यत्वव्यभिचारित्वादतःपदधीति। इत्थंचजन्यपदस्यावृत्तिमाह। पदधीति। नन्वनुमितित्वस्यापि तादृशस्य सत्वात्कथमतिव्याप्तिरतआह। अनुमितित्वस्येति। भगवदिति। अनुमितित्वस्येश्वरीयपदधीजन्यत्वव्याप्यत्वेनाखण्डत्वादजातिरेव तच्छून्यत्वंचानुमितावपीत्यतिव्याप्तिः। जन्यपदोपादाने चानुमितित्वस्यापि तथात्वेन तच्छून्यत्वाभावान्न क्षतिरिति भावः। अतः। अतिव्याप्त्यादितः। समुदितमिति। जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वान्तमित्यर्थः। अत्र जन्यत्वव्यभिचारीति जन्यधीत्वव्यभिचारीति धीत्वव्यभिचारीति धिजन्यत्वव्यभिचारीति जन्यजन्यत्वव्यभिचारीति च नोक्तं अनुमितित्वस्य जन्यत्वजन्यज्ञानत्व ज्ञानत्वधीजन्यत्वशाब्दज्ञानजन्यत्वव्याप्यत्वात्तद्व्यभिचारिजातिशून्यत्वस्यानुमितावपि सत्वादतिव्याप्तिः। जन्यपदधीत्वव्यभिचारिजातिशून्यत्वमात्रोक्तौ शाब्दत्वस्यापि तथात्वेनासंभवापत्तिरिति विशिष्टमुपादेयमेव। ननु जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वव्यापकजातिशून्यत्वमेव लक्षणमस्तु कृतं विशेष्यदलेनेत्यत आह। उपमिताविति। उपमितेः पदविषयकातिदेशवाक्यार्थज्ञानजन्यत्वनियमेन जन्यपदधीजन्यत्वव्यभिचारिप्रत्यक्षत्वादिजातिशून्यत्वादितिभावः। शून्यान्तं पदविषयकत्वाव्यभिचारिजातिशून्यत्वमित्यर्थः। पदविषयकशाब्दबोधे पदस्यापि भानात् पदविषयकत्वसमानाधिकरणशाब्दत्वन्यत्वाभावादसंभव इति समानाधिकरणेति विहायाव्यभिचारीति। ननुसर्वत्र शाब्दबोधेपदस्य भानेबाधकाभावात् शाब्दत्वस्यापि पदविषयकत्वव्यभिचारित्वमेवेति चेन्न। वृत्त्या पदजन्यपदार्थोपस्थितितात्पर्यज्ञानादेरेव शाब्दबोधहेतुतया शब्दस्यसर्वत्र भाने मानाभावात् यत्र भिन्नविषयकानुमितिसामग्रीकालेघटमानयेति शाब्देच्छावलात् शाब्दबोधः तत्र शब्दविषयकशाब्दं जायतामितीच्छाविरहविशिष्टानुमितिसामग्र्याः प्रतिबन्धकत्वेन शब्दशाब्दानुपपत्तेश्च घटशाब्दे-

**अनुमितित्वस्य भगवत्पदधीजन्यत्वाव्यभिचारित्वात् अतः स्मृत्यादितमुपात्तम् । उपमितावति व्याप्तिवारणाय शून्यान्तं ॥**

---

च्छाया अपि तन्नोत्तेजकत्वे तत्तदिच्छाभावकूटनिवेशेनातिगौरवात् मिथो विशेषणविशेष्यभावेविनिगमनाविरहेणानन्ततकार्यकारणभावकल्पनापत्तेश्चेति शब्दाविषयकशाब्दस्यैवोत्पत्त्या शाब्दत्वस्य पदविषयकत्वाव्यभिचारित्वाभावेनासंभवाभावादिति नाकिञ्चिदेतत् । जाताविति । जात्यादाविवयर्थः । तत्रजात्यभावादतिभावः । मणिकृतस्तु प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणमिति शब्दलक्षणं । प्रयोगो वाक्यं तद्धेतुभूतं यदर्थतत्त्वज्ञानं तज्जन्यशब्दत्वप्रमाणशब्दत्वमित्यर्थः । वाक्यार्थभ्रममादाय वह्निना सिञ्चतीत्यादावयोग्येऽतिव्याप्तिवारणाय तत्त्वपदं तथापि पदार्थतत्त्वज्ञानमादायायोग्येऽतिव्याप्तेः प्रयोगहेतुभूतेति । इत्थं चार्थपदस्य वाक्यार्थपरत्वपर्यवसानान्न पदार्थतत्त्वज्ञानमादायातिव्याप्तिः । तथाहि हेतुपदसमभिव्याहृतभूतपदस्य भूप्राप्ताविति धात्वनुसारादितरनैरपेक्ष्यव्युत्पन्नतया सजातीयनैरपेक्ष्यस्य विवक्षिततया यत्प्रयोगप्रतिपाद्यज्ञानं प्रयोगि कर्तव्यं प्रयोगप्रतिपाद्यज्ञानान्तरं नापेक्षते तादृशार्थतत्त्वज्ञानजन्यत्वं लब्धं नहि वाक्यार्थज्ञानवत्पदार्थज्ञानमपि अर्थज्ञानानपेक्षप्रयोगहेतुवाक्यार्थज्ञानात्मकार्थतत्त्वज्ञानस्यैवापेक्षणीयत्वादिति अत्रच प्रयोगो वाक्यं तथाच तत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयविषयकप्रमात्मकज्ञानं प्रकृतवाक्ये जननीये प्रयोगप्रतिपाद्यज्ञानान्तरं तत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयविषयकज्ञानान्तरं नापेक्षते तादृशार्थतत्त्वज्ञानजन्यत्वमर्थः । वाक्यार्थज्ञानेन वाक्ये जननीये स्वपूर्ववर्त्तिपदार्थतत्त्वज्ञानस्यापेक्षणादसंभवः अन्यथा तस्याहेतुत्वापत्तेरिति स्वोत्तरोत्पन्नत्वमपि स्वजन्यज्ञानविषयकज्ञानान्तरे विशेषणीयम् । तथाचतत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयविषयकं यत्प्रकृतवाक्यार्थस्यप्रमात्मकज्ञानं स्वस्मिन्जननीये तत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयकस्वोत्तरोत्पन्नज्ञानान्तरं नापेक्षते तादृशज्ञानजन्यशब्दत्वं तत्कालीनतत्पुरुषीयप्रमाणशब्दत्वमितिफलितम् । अत्र स्वोत्तरोत्पन्नेत्यत्र स्वपदमर्थतत्त्वज्ञानपरं स्वपदान्तराणि प्रकृतवाक्यपराणि । पदार्थतत्त्वज्ञानेनवाक्ये जननीये स्वोत्तरोत्पन्नप्रकृतवाक्यजन्यज्ञानविषयविषयकस्य वाक्यार्थज्ञानस्यापेक्षणान्न पदार्थतत्त्वज्ञानजन्यत्वमादायायोग्येऽतिव्याप्तिरिति । संस्कारादावतिव्याप्तिवारणाय लक्षणे शब्दपदं । प्रमाणमात्रस्य लक्ष्यत्वे प्रत्यक्षादावव्याप्तेर्लक्ष्येऽपि शब्दपदमनुषञ्जनीयमिति । ननु तत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयविषयकं प्र

सात्मकं ज्ञानं स्वस्मिन् जननीये तत्कालीनतत्पुरुषीयस्वजन्यज्ञानविषयकप्र
मान्तरं नापेक्षते तादृशप्रमाजन्यशब्दत्वं तत्कालीनतत्पुरुषीयप्रमाणशब्दत्व
मिति फलितं भ्रमात्वं च यावद्भ्रमभिन्नत्वं नात आंशिकप्रमामादायाति-
प्रसङ्गः इत्थं च वह्निना सिञ्चतीत्यादौ पदार्थतत्त्वज्ञानस्य स्वसमानजा
तीयवाक्यार्थज्ञानान्तरापेक्षतया तदादायातिव्याप्त्यभावेऽपि कण्ठाभिघा
तं वाक्यरूपेष्टसाधनताप्रमामादायातिप्रसङ्गः । वह्निकरणसेकानुकूलकृ
तिमानिति प्रकृतवाक्यजन्यज्ञानविषयकरणताघटकाभावादघटकत्वेनेष्ट
साधनताज्ञानस्यापि प्रकृतवाक्यजन्यज्ञानविषयकविषयकार्थतत्त्वज्ञानत्वात्
तेन च वाक्ये जनयितव्ये स्वजातीयज्ञानान्तरानपेक्षणादिति । एवं श
ब्दो द्रव्यमिति वाक्यस्यापि तादृशवाक्यजन्यज्ञानविषयतया तादृशवा
क्यजन्यज्ञानविषयवाक्यविषयकवाक्यरूपेष्टसाधनताप्रमानादाय शब्दो द्र
व्यमित्ययोग्यवाक्येऽतिव्याप्तिः । अपि च पयः करणकसेकानुकूलकृतिमा
न् गुणश्च द्रव्यमित्यांशिकभ्रमात्मकसमूहालम्बनजन्ये पयसासिञ्चतीत्या
दिवाक्येऽव्याप्तिः । तादृशवाक्यार्थज्ञानस्य भ्रमभिन्नत्वाभावात् ईश्वरीय
वाक्यार्थज्ञानस्य च स्वसमानजातीयास्मदीयवाक्यार्थज्ञानसापेक्षतया त
दादाय लक्षणागमनात् । अन्यथा तदीयपदार्थतत्त्वज्ञानमादाया योग्ये
ऽतिप्रसक्तेर्दुर्वारत्वात् इति कथमेतदिति चेन्न । यादृशार्थतत्त्वज्ञानं स्वसमा
नजातीयज्ञानान्तरानपेक्षं सत्प्रयोगहेतुस्तज्जन्यत्वमिति न लक्षणार्थः
किंतु प्रयोगहेतुभूतं पदार्थतत्त्वज्ञानं प्रकृतवाक्यार्थजन्यज्ञानविषयवि-
षयकं तज्जन्यत्वं लक्षणं तत्कालीनतत्पुरुषीयस्वजन्यज्ञानं यद्यत्संसर्गकं
यद्यत्प्रकारकत्वावच्छिन्नयद्यद्विशेष्यताकं तत्संसर्गकतत्प्रकारकतत्तद्विशेष्यत
काभ्रमभिन्नज्ञानजन्यशब्दत्वं तत्कालीनतत्पुरुषीयप्रमाणशब्दत्वमिति पर्य
वसितोऽर्थः । वह्निनासिञ्चतीत्यादौ वह्निकरणकसेकानुकूलकृतिमानिति
बोधोदयेन तद्विषयविषयकज्ञानस्य भ्रमत्वान्न तत्रातिव्याप्तिः । एवं श
ब्दो द्रव्यमित्यादावपि भ्रमात्मकसमूहालम्बनजन्ये पयसासिञ्चतीत्यादौ
तु ईश्वरीयप्रमामादायसङ्गतिः । एवमन्यत्र शुकादीरितवाक्ये मौनिश्लोका
दावपीति । अथ यत्र वह्निना सिञ्चति पयसा सञ्चतीत्यादिवाक्याभ्यां
वह्निकरणकसेकानुकूलकृतिमान् पयः करणकसेकानुकूलकृतिमानिति स
मूहालम्बनशाब्दबोधः तत्र पयसा सिञ्चतीत्यादिवाक्येऽव्याप्तिः । तद्वाक्य
जन्यज्ञानं यद्यद्विशेष्यताकं तद्विशेष्यताकभ्रमभिन्नज्ञानाप्रसिद्धिरिति चे
न्नैवं यद्यद्विशेष्यताकत्वांशे स्वजन्यता तद्विशेष्यताकत्वांशे भ्रमभिन्नज्ञा
नत्वस्याविवक्षितत्वादित्याहुः । इदं च बुबोधयिषा पूर्वकवाक्यत्वावच्छिन्नं
प्रति वाक्यार्थज्ञानं हेतुरिति सम्प्रदायमतेन । वस्तुतस्तु बुबोधयिषया ज

ज्ञात्वादावतिव्याप्तिवारणाय धीपदं। सोयं शाब्दः सकलजनानुभवसिद्धो दुरपन्हवः। तज्जनकत्वमपि तथा। आगोपालाङ्गना माच पण्डितं चैतवाक्यादमुमर्थं प्रत्येमीति प्रतीतेः केवलमनुमानविधयाऽन्यथावेति विप्रतिपद्यन्ते। तत्रानुमानविधयेति वैशेषिकादयः॥ नैयायिकास्तु पृथगेव

---

न्यथासिद्धतया तस्य कारणत्वासम्भवेन तदुपेक्ष्य शाब्दप्रमितिकरणं शब्द इति फलघटितमेव लक्षणमत्र कृतमिति ध्येयं। प्रत्यक्षातिरिक्तप्रमाणसत्त्वे मानाभाव इति शब्दस्याप्रमाणतया व्यर्थं तन्निर्वचनमिति चार्वाकमतं कटाक्षयन् शब्दप्रमाणत्वं साधयति। सोयं शब्दइति। शाब्दप्रमितिकरणं शब्दइत्यर्थः। सकलेति। शब्दं शृणोमीत्यनुभवविषय इत्यर्थः। दुरपन्हव इति। तादृशप्रत्यक्षस्यान्यविषयकत्व बाधाच्छाब्दविषयकत्व एव पर्यवसाने शब्दसिद्धिः प्रतीतेस्तदसाधकत्वे पदार्थमात्रोच्छेद इत्यर्थः। ननु न वयं शब्द एव नास्तीति ब्रूमोऽपितु तस्यातिरिक्तशाब्दप्रमितिकरणत्वमेव नास्तीत्यत आह। तज्जनकत्वमपीति। तस्य। शब्दस्य जनकत्वमपि। शाब्दप्रमितिजनकत्वमपीत्यर्थः। वस्तुतस्तु सोयं शाब्द इति पाठः शाब्दयामीति प्रतीतिसिद्धः शाब्दबोधइत्यर्थः। तज्जनकत्वमपि। शब्दे तादृशशब्दप्रमितिकरणत्वमपीत्यर्थः। तथा। दुरपन्हवः। तत्र हेतुमाह। आगोपेति। प्रतीतेरिति। वाक्यादमुमर्थं प्रत्येमीति ज्ञानस्य प्रत्यक्षविषयत्वासम्भवेन प्रत्यक्षातिरिक्तप्रमितिस्वीकारः शब्दस्य तत्करणस्वीकारश्चावश्यक इति भावः। नन्वस्तु शब्दस्य प्रमाणत्वं आस्तां च तज्जन्यज्ञानस्य प्रत्यक्षातिरिक्तत्वं तथाप्यनुमित्यात्मकत्वमेव तज्जन्यज्ञानस्यास्त्वतोव्यर्थं पृथक्तन्निरूपणमित्यत आह। केवलमिति। अनुमानविधया। अनुमानत्वेन। अन्यथावेति। शब्दविधयावेत्यर्थः। नतु तस्य प्रत्यक्षातिरिक्तप्रमितिजनकत्वमेवनास्तीति विवादइतिभावः। विप्रतिपद्यन्ते। विप्रतिपत्तिश्च शब्दः अनुमितित्वासमानाधिकरणप्रमितिविभाजकोपाध्यवच्छिन्नजन्यतानिरूपितप्रमाणविभाजकोपाधिनियतधर्मावच्छिन्नजनकताश्रयोनवेत्याकारा। अत्र विधिकोटिर्नैयायिकानां निषेधकोटिर्वैशेषिकाणां। विधिकोटिप्रसिद्धिः प्रत्यक्षप्रमाणे। इन्द्रियस्यैव प्रमाणतया प्रत्यक्षं प्रति इन्द्रियत्वेन हेतुत्वेन तादृशजनकताश्रयत्वात्। निषेधप्रसिद्धिश्च घटादावेव सुलभा। अत्र सिद्धसाधनवारणायानुमितित्वासमानाधिकरणत्वनिवेशः। प्रत्यक्षे विषयस्य हेतुतया शब्दस्यापि साक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनक-

**शब्दो मानं नत्वनुमानं। शब्दस्य अर्थाऽव्याप्यत्वात्। नहि-
यत्र शब्दस्तत्र घटानयनादिरूपोऽर्थः शब्दस्याकाशवृत्ति-
त्वात्। घटादेश्च तदवृत्तित्वात्। दृश्यते च व्याप्तिबुद्धिवि-**

---

ताशालित्य।प्रमाणविभाजकोपाधिनियतधर्मावच्छिन्नत.स्य निवेशः। अनु-
मितिभिन्नशब्दाविषयकप्रमितिकरणं नवेति प्रत्यक्षानुमित्यन्यतरत्वव्या-
प्यानुभवनिष्ठजन्यतासामान्यको नवेत्यकारावा। पृथगिति। अनुमितिभि-
न्नशब्दाविषयकप्रमितिकरणमित्यर्थः। अतो न सिद्धसिद्धिव्याघातः। न-
त्वनुमानं। नतु प्रत्यक्षानुमित्यन्यतरत्वव्याप्यानुभवनिष्ठजन्यतासामान्यकम्
अतो न शब्दलिङ्गकानुमानमादाय बाधः। नन्विदं घटानयनादिरूपार्थवत्
शब्दत्वादित्यनुमानंस्यादत आह। शब्दस्येति। अर्थाव्याप्यत्वात्। स्वजन्य
प्रतिपत्तिविषयार्थनिरूपितव्याप्त्यभाववत्त्वादित्यर्थः। अव्याप्यत्वमेव दर्शय
ति। नहीति। तदवृत्तित्वात्। आकाशावृत्तित्वात्। तथाच व्यभिचरित
सामानाधिकरण्यरूपाव्याप्तिः शब्दे न संभवति साध्यहेत्वोर्वैयधिकरण्या
दिति भावः। ननुघटमानयेति पदानि तात्पर्यविषयस्मारितपदार्थसंसर्ग
ज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदंबत्वात् इत्यत्र च नवैयधिकरण्यं। नच
रजतज्ञानवानयमिति ज्ञानात् भ्रान्तिज्ञप्रवृत्त्यापत्तिवारणाय पुरोवर्त्ति वि-
शेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव प्रवर्त्तकतयान तत्सिद्धिरिति वाच्यं
लाघवात्प्रवृत्तिविषयइष्टतावच्छेदवैशिष्ट्यावगाहिज्ञानत्वेनैवप्रवर्त्तकतया
साध्यस्थज्ञानपदस्य प्रमापरत्वेन प्रमात्वघटकतया प्रकृते तस्याप्यवसात्वात्
नचानुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन स्मारितपदार्थत्वेनैवरज-
तादिसिद्ध्येत् न तु रजतत्वादिना प्रमेयत्वादिना तादृशज्ञानस्य प्रवर्त्तक
त्ववारणाय रजतत्वादिप्रकारकज्ञानस्यैव प्रवर्त्तकत्वादिति वाच्यं। पूर्वंर
जतत्वादिनारजतत्वादेरुपस्थितत्वादितरबाधबलात्तेनरूपेणानुमितौभान-
संभवात्। अतएवसकर्तृकत्वानुमाने लाघवोपनीतमेकत्वादिकमपि
भासते लाघवज्ञानेतरबाधातिरिक्तस्थल एवच व्यापकतानवच्छेदकरूपेण
ज्ञानानभ्युपगमादिति। यद्वा। एते पदार्थास्तात्पर्यविषयमिथः संसर्गवन्तः
आकाङ्क्षादिमत्पदस्मारितत्वादित्यनुमानेन विशिष्य रजतत्वादेः पक्षताव-
च्छेदकतयो तत्सिद्धिः। नच नदीजलसंसर्गपरतयोच्चारिते अहो विमलजलं
नद्याः कच्छे माहिषश्चरतीति वाक्ये प्रत्यायके नदीकच्छपदार्थयोर्व्यभि-
चारः तात्पर्यगर्भसाध्यासत्वादिति वाच्यं। तात्पर्यगर्भपरस्परनिरूपिताका-

ङ्गादिमत्त्वाभावे नैवाव्यभिचारात् । ननु तथापि हेतुतावच्छेदकावच्छिन्नहेतुमत्तानिश्चयस्यैवानुमितिहेतुतया यत्र योग्यतासंशयः तत्र योग्यतागर्भहेतुमत्तानिश्चयाभावादन्वयाऽबोधप्रसङ्गः । नच योग्यतासंशयस्य बाधसंशयपर्यवसन्नतया साध्यसन्देहस्य चानुगुणतया पक्षताघटकसंशयातिरिक्तसंशयान्यत्वमेव हेतुमत्तानिश्चयत्वमिति वाच्यं । गौरवात् साध्यव्याप्यसाधनवानवेत्याकारकसंशयादनुमित्यापत्तिश्चेति चेन्न । अयमालोको धूमो वा उभयथापि वह्निव्याप्य इत्यत्र हेतुतावच्छेदकसंदेहेऽपि नैयायिकैरनुमितेरभ्युपगमात् व्याप्यवत्तानिश्चयत्वेनैवानुमितिहेतुत्वं । तस्य च योग्यतारूपहेतुविशेषणसन्देहेऽपि संभवात् न काप्यनुपपत्तिरत आह । इष्यतेचेति । ननु व्याप्तिभ्रमादेरनुमितिरस्तु नच भ्रमात्मकपरामर्शजन्यत्वादनुमितेर्भ्रमत्वापत्तिरिति वाच्यं । विषयबाधस्यैव भ्रमत्वनियामकत्वेन दोषाभावादित्यत आह । इष्यतेचेत्यपि कश्चित् । व्याप्तीति । पदनिष्ठव्याप्तिज्ञानशून्यानामित्यर्थः । नचेति । नहीत्यर्थः । अयं । व्याप्तिज्ञानशून्यकालीनः शब्दप्रयोज्योऽनुभवः । तस्या । अनुमितेः । ननु इयं व्याप्तिज्ञानजन्या विलक्षणैवानुमितिः । नच तत्रानुमितित्वसत्त्वे मानाभावः समाने विषये शाब्दसामग्र्या बलवत्त्वात् अनुमितिं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवं । मन्मते तत्र शाब्दात्मिकानुमितिस्वीकारेण तत्र तदप्रतिबन्धकत्वात् एवं भिन्ने विषयेऽनुमितिसामग्र्याः शाब्दसामग्र्याश्च प्रतिबन्धकताद्वयकल्पने गौरवं मन्मतेऽनुमितिसामग्र्योः प्रतिबन्धकतयैवोपपत्तेरित्यत आह ॥ प्रतियंतिचेति ॥ अनुमितमिति । नच व्याप्तिज्ञानादिघटितसामग्रीजन्यानुमितित्वाभावात् तद्विषय इति वाच्यम् ॥ व्याप्त्याद्यप्रतिसन्धानेऽपि तस्यानुभवसिद्धत्वात् । असाक्षात्कृतमिति ॥ यद्यपि नोपमितमितिवक्तुमुचितं तथाप्युपमितेः शक्तिमात्रविषयकतया घटादिविषयकज्ञानस्य ततोऽसंभवेन तन्निराकरणस्याऽनिष्प्रयोजनकत्वान्नोपमितिग्रहणमिति कश्चित् । तथाच शब्दजन्यज्ञानेऽनुमितित्वाद्यभावेन विलक्षणप्रमित्यङ्गीकरणस्यावश्यकतया तत्करणस्य प्रमाणान्तरत्वमावश्यकमिति भावः ॥ श्रुतमिति ॥ नैयायिकशब्दजन्यशाब्दबोधविषयइत्यर्थः ॥ श्रुधातोर्नानार्थत्वेन शाब्दत्वविशिष्टशक्तत्वात् "अतएवात्मावारे द्रष्टव्यः श्रोतव्य" इत्यादिश्रुतिरप्युपपद्यते । इदं । घटकर्मकानयनादि ॥ नैयायिकेभ्य इति ॥ वैशेषिकस्य शब्दोच्चारपिद्धत्वे लिङ्गविधयैव तद्बोधकत्वान्नैयायिकेभ्य इत्युक्तं ॥ नैयायिकानां शाब्देच्छयैव पदोच्चारणात् शाब्दतात्पर्यज्ञानसंभवात् शाब्दबोध एव श्रोतुरितिभावः ॥ जरन्मीमांसकास्तु ॥ लौकिकवाक्यस्थले शाब्दबोधात्पूर्वं प्रकृतवाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूपाप्तोक्तत्वानुमिति

सामग्रीसत्त्वेनाप्तोक्तत्वानुमितिसंभवात वाक्यार्थज्ञानस्य वश्यकत्वात् तदुत्तरं चवेदस्थले क्लृप्तशाब्दसामग्रीतः शाब्दोत्पत्तेः लौकिकशब्दोऽनुवादकः अनुवादकत्वस्य गृहीतग्राह्यनुभवमात्रजनकत्वरूपत्वात् । स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारनिश्चयविषयविषयकतद्विशेष्यक तत्प्रकारकानुभवमात्रजनकत्वरूपत्वादिति यावत्। स्वपदमनुभवपरं वेदत्वस्य पौरुषेयत्वे नाप्तोक्तत्वानुमानासंभवात् अननुवादकत्वादप्रामाण्यम्। अनधिगतार्थानुभवकरणत्वस्यैव प्रामाण्यरूपत्वात् । तच्च गृहीतग्राहीतरानुभवकरणत्वं । स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्त्ति स्वसमानाकारनिश्चयविषयविषयकेतरतद्विशेष्यकतत्प्रकारकानुभवकरणत्वमिति यावत्। स्वसमानाकारत्वं च स्वस्मिन्याद्दशो तद्विशेष्यताकत्वावच्छिन्नतत्प्रकारताताद्दशतद्विशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वमित्यूचुः ॥ तदसत् ॥ व्याप्तिस्मृतिविलंबेनाप्तोक्तत्वानुमितिसामग्र्यभावेन प्रथमत एव शाब्दबोधादननुवादकत्वेन प्रमाणत्वात् । ननु लौकिकवाक्ये इदमाप्तोक्तं नवेति संशये शाब्दबोधानुदयात् यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र हेतुरनुमितौ व्याप्तेरिवेति नियमेनाप्तोक्तत्वनिश्चयस्य हेतुत्वात् शाब्दबोधात्पूर्वं तस्यावश्यकतेतिचेन्न । तत्कार्यतावच्छेदकं हि शाब्दत्वं वा लौकिकवाक्यजन्यशाब्दत्वं वालौकिकत्वे नज्ञातवाक्यजन्यशाब्दत्वं वा । नाद्यः । वेदेतदभावात् ॥ न द्वितीयः॥आप्तोक्तत्वाऽनिश्चयेपि वेदानुकारेण पठ्यमानमन्वादिवाक्ये ऽपौरुषेयत्वाभिमानिनो गौडमीमांसकस्य शाब्दबोधोदयेन व्यभिचारात् । नापि तृतीयःलौकिकत्वेनाज्ञातलौकिकवाक्यस्थले क्लृप्तशाब्दसामान्यसामग्रीत एव लौकिकत्वेन ज्ञातवाक्यादपि शाब्दोत्पत्तिसंभवेन तस्याकारणत्वात् ॥ नच यत्संशयेत्यादिनियमेन तद्धेतुत्वनियम इति वाच्यम् । तत्संशयेपि वाक्यार्थबोधोत्पत्त्या तत्संशयस्याप्रतिबन्धकत्वात् ॥ अव्यभिचारसंशयव्यतिरेकनिश्चयप्रतिबध्ये व्याप्तिज्ञाने व्यभिचारेणाप्रयोजकत्वेन च ताद्दशनियमाभावाच्च । एतेन शाब्दसामान्ये अनाप्तोक्तत्वशङ्काविरहो हेतुः सच लोके आप्तोक्तत्वानुमानात् वेदे त्वपौरुषेयत्वानुमानात् । नचापौरुषेयत्वनिश्चयदशायामेव वेदस्यानुभावकत्वे दोषवत्पुरुषाप्रणीतपदस्मारितत्वरूपहेतुज्ञानसत्वेन पदार्थसंसर्गसिद्धिसंभवाद्वेदस्याप्यनुवादकतापत्तिरिति वाच्यं। व्याप्तिस्मृतिविलंबेन तद्विलंबादिति परास्तम् । अनाप्तोक्तत्वसंशयस्याप्रतिबन्धकत्वात् योग्यतासंशयत्वादिति दिक्॥प्रभाकरास्तु । क्वचित् शाब्दभ्रमः क्वचित्प्रमेति नियमनिर्वाहाय शाब्दप्रमात्वावच्छिन्नं प्रति किञ्चित्कारणमुपेयं ॥ तच्च न योग्यता । अन्वयप्रयोजकरूपवत्त्वरूपयोग्यतायाः कारकाभिप्रायप्रयुक्तपयसासिञ्चतीत्ययोग्यवाक्येपि सत्वात् । अथ दोषाभाव एव तथास्तु

दोषाश्च भ्रमप्रमादविप्रलिप्साकरणापाटवरूपाः वक्तृनिष्ठाः भ्रमश्च उच्चारणीयवाक्यार्थगोचरो भ्रमः । प्रमादोऽनवधानता । सा च वाक्यार्थज्ञानस्वरूपयोग्यस्य वक्तुरुच्चारणीयवाक्यार्थनिश्चयव्यतिरेकः शुकीयवाक्यार्थनिश्चयव्यतिरेकवारणाय यद्यन्तनिवेशः अन्यथाप्रतीतस्यार्थस्य अन्यथाप्रतिपिपादयिषा प्रतारणा । सैव च विप्रलिप्सा । इच्छाविषयीभूतपूर्ववर्णानुकूलकण्ठताल्वभिघातानुत्पादकालीना परवर्णानुकूलकण्ठताल्वाद्यभिघातः करणापाटव करणंकण्ठताल्वाद्यभिघातः तस्यापाटवरूसामर्थ्यं इच्छाविषयीभूतवर्णाननुकूलत्वमिति यावदिति चेन्न । भ्रान्तप्रतारकवाक्ये संवादेन प्रमाणे प्रतारणारूपदोषसत्वेन व्यभिचारात् । अन्यथाप्रतीतस्याविद्यमानार्थस्यान्यथाप्रतिपिपादयिषाया प्रतारणात्वेनोक्तदोषाणामपि सर्वसाधारणदोषत्वस्यैकस्याभावेन तत्तदभावस्य प्रत्येकं कारणत्वे भ्रमसत्वेऽपि अन्यदोषाभावसत्वात्प्रमापत्तिः अभावकूटस्य च कारणत्वकल्पने गौरवात् विसंवादिशुकवाक्यादपि प्रमापत्तेश्च । तस्माद्यथार्थतात्पर्यकत्वमेव लोकवेदसाधारणं शाब्दप्रमाप्रयोजकं ॥ यथार्थतात्पर्यकत्वं चयथार्थवाक्यार्थप्रतीतीच्छयोच्चारितत्वं । एकपदार्थवदपरपदार्थप्रतीतीच्छयोच्चारितत्वमिति यावत् ॥ उच्चारितत्वं चानुसन्धीयमानत्वं तेन तन्मते वर्णानां नित्यैकत्वरूपत्वेऽपि नासंभवः न वा मौनिश्लोकादावव्याप्तिः । वेदे तु पूर्वपूर्वाध्यापकेच्छामादाय सङ्गतिः मूर्खपठ्यमानवेदस्तु पण्डितपठ्यमानवेदादभिन्न एव वेदस्य नित्यत्वात् नित्यानुमेये वेदे तु तदर्थज्ञापकत्वेन ज्ञानमन्वेव सामग्रीति न व्यभिचारः । शुकवाक्येऽपि शिक्षकवाक्यमादायोपपत्तिः ॥ वर्णानां तन्मते नित्यैकत्वरूपत्वात् । नच दैववशसंपन्नशुकबालादिवाक्ये गत्यभाव इति वाच्यं । तस्याप्रमाणत्वात् । व्यवहारस्तु प्रत्यक्षादसंसर्गाग्रहादेति । केचित्तु शुकबालादिभिन्नलौकिकवाक्ये यथार्थवाक्यार्थप्रतीतीच्छयोच्चरितत्वं वदे वेदत्वेऽशुकादिवाक्ये ऽबाधितार्थकत्वं नानेव शाब्दप्रमाप्रयोजकं एकशक्तिमत्वेन तेषां कारणत्वमितिनाननुगमः ॥ नचसर्वत्राबाधितार्थकत्वमेव प्रयोजकमस्त्विति वाच्यं । यत्रान्यघटाभिप्रायेण गेहे घटोऽस्तीत्युक्ते घटान्तरं दृष्ट्वा तमानयति तत्रान्यपरत्वेनाप्रमाणेऽपि प्रामाण्यापत्तेः तदुक्तं ॥ “यत्परः शब्दः स शब्दार्थो” शतद्द्रतीत्याहुरिति दिक् ॥ तच्च ज्ञातमुपयुज्यते ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यत्वात् व्याप्तिवच्छब्दशक्तिवच्चेति तज्ज्ञानंहेतुः । ज्ञातमुपयुज्यते । शाब्दबोधनिरूपितज्ञाननिष्ठकारणतायां विषयतासम्बन्धवच्छेदकं शाब्दबोधनिरूपितज्ञानावच्छिन्नकरणताश्रयस्य शब्दस्य शाब्दबोधे जननीये उपयोगित्वे सति सहकारित्वे सति व्यभिचारिवैलक्षण्यत्वादिति तदर्थः ॥ सामान्यमुखीय

व्याप्तिः। यद्यज्ज्ञाननिरूपितज्ञानावच्छिन्नकरणताश्रयस्य यज्ज्ञाने जननीये सहकारित्वे सति व्यभिचारिवैलक्षण्यं भवति तत्तज्ज्ञाननिरूपितज्ञाननिष्ठकरणतायां विषयतासंबन्धेनावच्छेदकं भवति यथा व्याप्तिः शब्दशक्तिश्चेति। अत्र भूयोवयवेन्द्रियसन्निकर्षे व्यभिचारवारणाय ज्ञायमानकरण इति। शाब्दबोधं प्रति ज्ञायमानकरणस्य शब्दस्य स्वप्रत्यक्षे जननीये उपयोगिनि शब्दनिष्ठश्रोत्रसमवाये व्यभिचार इति ज्ञानोपयोगीति। तथाच यज्ज्ञानं प्रति ज्ञायमानं करणं तज्ज्ञाने जननीये सहकारीत्यर्थान्नदोषः॥ नच सल्लिङ्गपरामर्शे व्यभिचारः ज्ञायमान इत्यस्य ज्ञानविशिष्टेत्यर्थात् सल्लिङ्गपरामर्शस्य ज्ञानविशिष्टज्ञायमानकरणासहकारित्वात्। यस्मिन्सति यदभावात्कार्याभावस्तस्यैव तत्सहकारित्वात्। स्वविशिष्टे स्वासहकारित्वात् तथाच तज्ज्ञाननिरूपितकरणतावच्छेदकज्ञानविशिष्टकरणस्य ज्ञायमानत्वघटितधर्मावच्छिन्नकरणताकज्ञाने जननीये सहकारित्वमर्थः पर्यवस्यति परामृश्यमाणलिङ्गत्वेनैवानुमितिकरणतया परामर्शविशिष्टसत्वे परामर्शाभावासंभवान्न व्यभिचारः ह्रदो वह्निमान्ह्रदत्वादित्यादौ परामृश्यमाणलिङ्गसत्वेपि व्याप्त्यभावेन प्रमानुमित्यभावात् व्याप्तिवदिति दृष्टान्तासङ्गतिः व्याप्तिपक्षधर्मतावल्लिङ्गत्वेन प्रमानुमितिकरणत्वात् ज्ञायमानशब्दत्वे शब्दसमवायाभावसंभवेनैवैतादृशसहकारित्वस्य शब्दसमवायेऽभावेपि अःव्यक्षणि धूमत्वसामान्यलक्षणाजन्यपरामर्शविशिष्टः धूमसत्वेपि धूमनिष्ठरूपाभावेन धूमचाक्षुषानुदयात् परामृश्यमाणधूमस्य प्रत्यक्षे जननीये सहकारिभूते धूमनिष्ठरूपादौ व्यभिचारवारणाय ज्ञानोपयोगिनीत्यत्र ज्ञायमानत्वघटितधर्मावच्छिन्नकरणताकज्ञानपदस्य निवेशः॥ अत्रेदं चिन्त्यम्॥ परामृश्यमाणलिङ्गसत्वेपि सल्लिङ्गपरामर्शाभावात्कथं सल्लिङ्गपरामर्शे व्यभिचारनिरासः। नच यज्ज्ञानं प्रत्युपयोगिता तज्ज्ञानकरणतावच्छेदकज्ञानविशिष्टकरणे तत्सहकारित्वं विवक्षितं सत्परामृश्यमानलिङ्गत्वेन प्रमानुमितिहेतुत्वेन सल्लिङ्गपरामर्शस्य प्रमानुमितिं प्रत्येवोपयोगितया प्रमानुमितिकरणतावच्छेदकसत्परामर्शविशिष्टलिङ्गसत्वे सत्परामर्शाभावासंभव इति वाच्यं॥ तथासति व्याप्तिवदिति दृष्टान्तासङ्गतेः॥ व्याप्तिपक्षधर्मतावल्लिङ्गत्वेन प्रमानुमितिं प्रत्येवोपयोगितया सत्परामर्शविशिष्टलिङ्गसत्वे व्याप्त्यभावासंभवेन तादृशसहकारित्वस्य व्याप्तावभावादिति। आत्ममनोयोगबाधाभावादिवारणाय व्यभिचारिवैलक्षण्यादिति। तच्च प्रमित्यजनकव्यावृत्तत्वं प्रमित्यजनकज्ञानजनकसामग्र्यप्रविष्टत्वमिति यावत्। नच सर्वांशे भ्रमाभावेन प्रमित्यजनिका ज्ञानजनिका सामग्र्येवाप्रसिद्धा प्रमितिपदेन भ्रमभिन्नत्वविवक्षणे च तन्मते

भ्रमाप्रसिद्ध्या ऽप्रसिद्धिरिति वाच्यं। स्वव्यधिकरणधर्मप्रकारकत्वानवच्छिन्नविशेष्यताशाल्यनुभवत्वस्य प्रमितिपदेन विवक्षणात्। तादृशी स्मृतिसामग्र्येव प्रसिद्धा। अथानुभवस्य स्मृतिकरणतया लिङ्गपरामर्शस्याप्यनेनैव ज्ञानविशिष्टसहकारित्वेत्यत्र ज्ञानविशिष्टेत्यस्य वैयर्थ्यमिति चेन्न। करणतातिरिक्तज्ञानजनकताश्रयकारणकलापस्यैव ज्ञानजनकसामग्रीपदेन विवक्षितत्वात्। अन्यथा स्वात्मककूटलिङ्गकानुमितिस्थानाभिषिक्तसाध्यस्मृतिमादाय स्मृतिसामग्रयप्रविष्टत्वस्य व्याप्यतावच्छेदकत्वेन दृष्टान्तासिद्ध्या पत्तेः॥ अखण्डाभावसंपादकत्वाच्चासिद्धिवारकत्वेपि करणतातिरिक्तेत्यस्य न वैयर्थ्यं वस्तुमात्रस्यैव स्वात्मककूटलिङ्गकानुमितिस्थानाभिषिक्तसाध्यस्मृतिजनकतया प्रसिद्धिवारकत्वाच्च। जनकताकरणतोभयसाधारणस्य जनकतात्वस्यैकस्याभावादिदानीमेव निवेशे करणत्वात्मकजनकताव्यक्तेन प्रवेशः। ननु करणतातिरिक्तजनकतात्वेन प्रवेश इति व्यर्थत्वशङ्काया अनवकाशाच्च उद्बोधकव्यावृत्ता च स्मृतिजनकता निवेशनीया नातः उद्बोधकतया जनकताभादायासिद्धिः प्रागभावस्य तत्तद्व्यक्तित्वेनाहेतुत्वाच्च नप्रमानुमितिप्रागभावे व्यभिचार इति दिक्॥ केचित्तु। इष्टप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानमेव प्रकृते प्रमितिशब्दार्थइत्याहुः। अथवा ज्ञायमानकरणइत्यत्राधेयत्वं सप्तम्यर्थः। तथाच यज्ज्ञानीयज्ञायमानकरणनिष्ठत्वेसति यज्ज्ञानोपयोगित्वे सति व्यभिचारिवैलक्षण्यं भवति तज्ज्ञाननिरूपिततज्ज्ञाननिष्ठकरणताया विषयतासंबन्धेनावच्छेदकं भवतीति व्याप्त्यर्थः सल्लिङ्गपरामर्शस्तु न ज्ञायमानकरणधूमादिनिष्ठः। अथात्मलिङ्गकानुमितिज्ञायमानकरणे आत्मनि तस्य वृत्तेस्तदवारणमिति चेन्न। तत्तज्ज्ञानानधिकरणत्वस्य ज्ञायमानकरणे निवेशात्। अतएव प्रागभावस्य तत्तद्व्यक्तित्वेन हेतुत्वेपि न प्रमानुमितिप्रागभावे व्यभिचारः धूमनिष्ठानोपाधिकत्वादिवारणाय ज्ञानोपयोगित्वे सतीति। बाधाभावादिवारणाय व्यभिचारिवैलक्षण्यत्वादिति। तदर्थस्त्वाभासव्यावृत्तत्वं। भ्रमजनकभिन्नत्वमिति यावत्। वस्तुमात्रस्यैव लिङ्गविधया भ्रमजनकतया ज्ञायमानलिङ्गत्वातिरिक्तरूपेण भ्रमजनकभिन्नत्वं विवक्षणीयं। नच तन्मते तदप्रसिद्धिःविसंवादिप्रवृत्त्यादजनकज्ञानमात्रस्यैव तन्मते तथात्वात्। नचाबाधितत्वादि तथाबाधस्यविपरीतनिश्चयस्य सद्भावेन ज्ञानमात्राभावेन तदभावस्य ज्ञानमात्रप्रयोजकत्वात् इति। ननु तन्मते ऽगृहीतासंसर्गकग्रहणस्मरणात्मकज्ञानद्वयस्यैव भ्रमतया विसंवादिप्रवृत्तिजनकत्वेन तस्य च निर्धर्मितावच्छेदकतया बाधाभावस्य न तत्र हेतुत्वमिति कथमेतत्॥ अत्र केचित्। विसंवादिप्रवृत्तिजनकत्वेन न ज्ञानस्य प्रवेशः अपितु स्व-

तित्वेन । तथाच स्मृतिजनकतावच्छेदकावच्छिन्नान्यत्वादिति तदर्थः ॥ जनकताघटकबाधकव्याहत्ता । तेन नासिद्धिरिति । असंसर्गाग्रहविशिष्टज्ञानद्वयेऽन्वयव्यतिरेकाभ्यां बाधस्य विरोधित्वक्लृप्तित एवेत्यपि कश्चिदिति दिक् ॥ तच्च तात्पर्यं सामान्यतः तत्तत्पदार्थत्वेन रूपेण तत्पदार्थघटितं विशिष्य तत्तत्पदार्थघटितं च । तत्र च वेदस्थले घटपदार्थविशिष्टाम् पदार्थविशेष्यकघटपदार्थप्रतीतीच्छयोच्चारितत्वरूपतात्पर्यज्ञानं हेतुः नतु विशिष्य । लोके तु घटविशिष्टकर्मताविशेष्यकघटप्रकारकप्रतीतीच्छयोच्चारितत्वरूपतात्पर्यज्ञानमेव हेतुः । तत्र सामान्यतः घटपदार्थत्वादिना तात्पर्यग्रहेऽपि पटादेरपि लक्षणादिना घटपदार्थसंभवेन घटविशिष्टकर्मताविशेष्यकप्रतीतीच्छयोच्चारितं नवेति विशिष्य सन्देहेऽपि शाब्दबोधापत्तेः। वेदे तु लक्षणादिनाऽन्यार्थासंभवेन एकपदार्थत्वज्ञानेऽपि विशिष्य सन्देहाभावात् । यथा कपिञ्जलानालभेतेत्यादौ प्रथमोपस्थितत्वरूपलाघवतर्कनिर्णीतत्रित्वविशिष्टकपिञ्जलपदार्थपरं बहुवचनान्तकपिञ्जलपदमिति सामान्यतः कपिञ्जलपदार्थत्वेन रूपेण तात्पर्यनिर्णयेऽपि विशेष्यकपिञ्जलत्वादिरूपेण तात्पर्यसंशयाऽसंभवात् । लोके तु गुरुभूतेऽप्यर्थे तात्पर्यसंभवेन लाघवतर्कानवतारात् विशिष्य सन्देहसंभवेन घटविशिष्टकर्मत्वविशेष्यकघटप्रकारकप्रतीतीच्छयोच्चारितमिदमिति तात्पर्यनिर्णयस्य शाब्दबोधात्पूर्वमवश्यापेक्षिततया लौकिकवाक्यमनुवादकं । तस्माल्लौकिकं वाक्यं सर्वमेवानुवादकत्वादप्रमाणं । वेदे तु तदभावात्प्रामाण्यमित्याहुः ॥ तदसत् ॥ एकपदार्थविशिष्टापरपदार्थविशेष्यकएकपदार्थप्रकारकप्रतीतीच्छयोच्चारितत्वरूपयथार्थतात्पर्यनिश्चयस्यैव हेतुत्वे याथार्थ्यनिवेशे गौरवात् । किंतु नानार्थानुरोधेन शाब्दसामान्ये एकपदार्थप्रकारकापरपदार्थविशेष्यकप्रतीतीच्छयोच्चारितत्वरूपतात्पर्यज्ञानस्यैव । नचैवं वह्निना सिञ्चतीत्यादावपि प्रमापत्तिरिति वाच्यम् । एकपदार्थेऽपरपदार्थवत्त्वरूपयोग्यताप्रमाया एव संशयनिश्चयसाधारणरूपेण कारणत्वात् । अपि च इदं वाक्यं भ्रमादिविशिष्टज्ञानयोरन्यतरजन्यं वाक्यार्थज्ञानजन्यवाक्यत्वात् । ततश्च भ्रमादेर्बाधेऽयं वक्ता स्वप्रयुक्तवाक्यार्थगोचरयथार्थज्ञानवान् भ्रमाद्यवाक्यार्थज्ञानजन्य जन्यवाक्यप्रयोक्तृत्वात् अहमिवेति वक्तृयथार्थवाक्यार्थज्ञानानुमानपूर्वक एव यथार्थवाक्यार्थप्रतीतिपरत्वनिश्चयो हेतुर्वाच्यः तच्च न संभवति । भ्रान्तेः पुरुषधर्मत्वेन भ्रमाद्यजन्यनिर्णयासंभवात् । संवादिप्रवृत्तिजनकत्वादेश्च तद्ग्राहकलिङ्गस्य शाब्दबोधोत्तरकालीनत्वादित्यास्तां विस्तरः ॥ ननु शब्दस्यानुमानान्तर्गतत्वेन घटमानयेति शब्दाद्घटादिपदे शक्तिमविदुषोऽपि शाब्दबोधापत्तिः मम तु तत्र व्याप्तिज्ञानाभावादेव

भुराणामपि शब्दादन्वयानुभवः । नचायमनुमितिरूपः । तस्याव्याप्तिधीजन्यत्वात् । प्रतियन्ति च लौकिकाः ॥ अननुमितमसाक्षात्कृतं ज्ञातमिदं नैयायिकैश्च इत्यलं विस्तरेण ॥ ननु यदि स्वातन्त्र्येणैव शब्दो मानं तदा घटमानयेत्यतः शब्दात्पामराणामपि अर्थप्रत्ययः स्यादिति चेन्न ॥ शक्तिग्रहस्यापि सहकारित्वात् पामराणां च घटादिशब्दे शक्त्यग्रहात् । अथ केयं शक्तिः । अभिधानाम पदार्थान्तरं सङ्केतग्राह्यमिति मीमांसकाः ॥ नैयायिकास्तु आवश्यकत्वात्सङ्केत एवाऽभिधा नतु पदार्थान्तरं मानाभावात् । स च सङ्केतो अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिकेच्छा । हन्तैवं पामरादिसङ्केतिता अपि शब्दा अभिधायकाः स्युरिति चेन्न । नहि सङ्केतमात्रमभिधा किन्त्वीश्वर-

---

तदसंभव इत्याशयेनाशङ्कते । नन्विति । स्वातन्त्र्येण । शब्दत्वेन । पामराणां घटादिपदे गृहीतशक्तिकानां । सहकारित्वादिति । इतरकारणचक्रसमवहितकारणस्यैव फलोपधायकत्वेन केवलशब्दसत्वेपि शक्तिज्ञानरूपसहकारिविरहान्न तत्र फलोपधानमिति भावः । उपोद्घातसङ्गत्या शक्तिं निरूपयितुमाशङ्कते । अथेति । इयं । शब्दसहकारिग्रहविषयः । पदार्थान्तरमिति । तत्तत्पदार्थतावच्छेदकाभावकूटवदित्यर्थः । तेन नसिद्धासिद्धिव्याघातः । संकेतग्राह्यमिति । वक्ष्यमाणसङ्केतजन्यग्रहविषय इत्यर्थः । आवश्यकत्वात् अभिधाज्ञाने भवतामवश्यमपेक्षणीयत्वात् । संकेतं निरूपयति । सचेति अस्मादिति । एतत्पदजन्यत्वप्रकारतानिरूपितएतदर्थबोध्यविशेष्यताशालीच्छेत्यर्थः । हन्तैवमिति । एवम् । इच्छामात्रस्यैवाभिधारूपत्वे । पामरादीति । गगरीत्यादिशब्दा इत्यर्थः । अभिधायकाःस्युरिति । तथाच "नापभ्रंशितवै" इत्यादिश्रुतिविरोधः शक्त्याप्रतिपादकत्वस्यापभ्रंशानपभ्रंशसाधारण्यात् । अतिरिक्तशक्तिस्वीकारे तु तत्रसङ्केतसत्वेपि अतिरिक्ताभिधायास्तत्रानङ्गीकारात् न तादृशश्रुतिविरोध इति भावः । संकेतमात्रं ।

सङ्केतः। न चापभाषिते सोऽस्ति मानाभावात्। कथं तर्हि ततोऽन्वयबोध इति चेत्। शक्तिभ्रमादिति गृहाण। कथं तर्हि पामरादीनामीश्वरमविदुषां मीमांसकानां चार्थप्रत्ययः शब्दादिति चेन्न। उच्यते। न तावदीश्वरसङ्केतत्वेन तद्ग्रहः कारणं किं तु सङ्केतत्वेन। अस्ति च तेषामपि तथात्वेन ज्ञानं। आधुनिकसङ्केतानां चैत्रादिशब्दानां कागतिरिति चेत्। द्वादशेऽहनि पिता नाम कुर्यादिति

---

तादृशेच्छामात्रं। अपभाषितं। गगर्यादिशब्दे। सोऽस्ति। ईश्वरसंकेतोऽस्ति॥ मानाभावादिति। शास्त्रनिष्णातबुद्धीनां गगर्यादिशब्दाच्छाब्दरूपफलाभावेनापभ्रंशेन तादृशेश्वरसंकेत इत्यर्थः। "नापभ्रंशितवै" इति श्रुतिविरोधश्च बाधकोऽवसेयः। ननु शाब्दसामान्ये शक्तिज्ञानस्य हेतुतयाऽपभाषिते शक्त्यभावे कथं शाब्दबोध इति तटस्थः शङ्कते कथं। तर्हीति। शक्तिभ्रमादिति। भ्रमप्रमासाधारणशक्तिज्ञानस्य हेतुत्वादिति भावः। ननु प्रमेयत्वादिनाशक्तिज्ञानेपि शाब्दबोधानुदयात् शक्तित्वेन तज्ज्ञानं हेतुः। शक्तित्वं च तादृशेश्वरसंकेतत्वं पामराणामीश्वराज्ञानात् संकेतस्येश्वरसंकेतत्वेनाज्ञानात् कथं शाब्दबोध इत्याशङ्कते। कथं तर्हीति। ईश्वरमविदुषामिति॥ पामराणां मीमांसकानां चेत्युभयत्रान्वेति। तथेति। संकेतत्वेनेत्यर्थः। तेषामपि सङ्केतत्वप्रकारकज्ञानसत्वादित्यर्थः। चैत्रशब्दादयमर्थो बोद्धव्य इत्याधुनिकेच्छाविषयाणां चैत्रादिशब्दानामशक्तत्वापत्तिः। तत्रेश्वरसङ्केताभावादित्याशङ्कते। आधुनिकेति। कागतिरिति। तत्रेश्वरेच्छारूपसङ्केतज्ञानाभावादिति भावः। तस्यापि। आधुनिकसङ्केतितचैत्रादिशब्दस्यापि॥ ईश्वरेति। द्वादशाहकालीनपित्रुच्चारितनामत्वादिना नामपदवाच्यः शिशुरित्याकारकेच्छया ईश्वरेण तादृशश्रुतिप्रणयनात्तत्रापीश्वरसङ्केतोऽस्तीति भावः॥ ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमित्यविनिगमनाविरहादिति रित्तैव शक्तिरिति नव्याः॥ सङ्केतग्राहकप्रमाणाभावेन सङ्केतग्रहासम्भवात् कथं शक्तिज्ञानं हेतुरित्याशङ्कते। स्यादेतदिति॥ कथं ग्राह्यः केन प्रमाणेन ग्राह्यः शङ्कते। उपमानादितीति। तस्य। अतिदेशवाक्यार्थज्ञानरूपोपमानस्य। वाक्यार्थज्ञानेति॥ गोसदृशो गवयपद-

सामान्यतस्तस्यापि ईश्वरसंकेतितत्वमिति गृहाण । स्यादेतत् । सोयं सङ्केतः कथं ग्राह्यः उपमानादिति चेन्न । तस्य वाक्यार्थज्ञानमूलकत्वात् । तस्य शक्तिग्रहमूलकत्वात् उच्यते । प्रथमं शक्तिग्रहो व्यवहारात् । तथाहि घटमानयेति केनचिदुक्तः कश्चन तदर्थं प्रतीत्य घटमानयति । तच्चोपलभमानो बालः तया क्रियया तस्य प्रयत्नमनुमिनोति । तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानमनुमि-

---

वाच्यइत्यतिदेशवाक्यार्थज्ञानं तावत् शाब्दं । तच्च गोसदृश इति खण्डवाक्यार्थज्ञानेसति स्यादित्यर्थः । तस्य । गोसदृशो गवयपदवाच्यइति वाक्यार्थज्ञानस्य । शक्तिग्रहमूलकत्वात् । गोपदं गविशक्तमितिशक्तिज्ञानमूलकत्वादित्यर्थः तथा च तच्छक्तेरुपमानान्तरग्रहे ऽनवस्थापत्तिरिति भावः । व्यवहारादिति ॥ प्रयोज्यप्रयोज्यकव्यवहारादित्यर्थः ॥ व्यवहारश्च घटानयनक्रियारूपः । केनचित्प्रयोजकवृद्धेन । कश्चन । प्रयोज्यवृद्धः । तदर्थं ॥ प्रयोजकवृद्धवाक्यार्थं घटमानयति घटानयनानुकूलचेष्टावान्भवति । तया क्रियया । घटानयनक्रियया ॥ तस्य । पयोज्यवृद्धस्य । प्रयत्नमिति ॥ इयं क्रियाप्रयत्नपूर्विका विलक्षणक्रियात्वात् । मत्क्रियावत् इत्यनुमिनोतीत्यर्थः । ज्ञानं । घटानयनगोचरं ज्ञानं ॥ अयं घटानयनगोचरप्रयत्नः घटानयनज्ञानजन्यः घटानयनगोचरप्रयत्नत्वात् स्वीयस्तनपानगोचरप्रयत्नवत् । यो यद्गोचरप्रयत्नः सतज्ज्ञानजन्यइति सामान्यमुखीव्याप्तिः ॥ अतो न दृष्टान्तासङ्गतिः । दृष्टान्तमेवाह । स्वप्रयत्नेति । स्वीयस्तनपानगोचरप्रयत्न इत्यर्थः । तेन । बालेन । तथानिश्चयात् । ज्ञानजन्यत्वनिश्चयात् ॥ तद्हेत्वाकांक्षायां । घटानयनगोचरज्ञानहेत्वाकांक्षायां ॥ शब्दमेव । घटमानयेति शब्दमेव ॥ आवापोद्वापाभ्यामिति ॥ आवापः संग्रहः उद्वापस्त्यागः यथा घटमानय पटं नये,त्यादि ॥ क्लृप्ते च तस्मिन्निति ॥ घटपदे घटधीजनकत्वे क्लृप्तेचेत्यर्थः ॥ अतिप्रसङ्गभङ्गाय । घटपदं घटधीजनकमिव पटधीजनकमपि स्यादित्यतिप्रसङ्गभङ्गायेत्यर्थः । वस्तुतस्तु अतिप्रसङ्गाय अगृहीतशक्तिकानामपि घटशाब्दबोधापत्तिरित्यतिप्रसङ्गभङ्गायेत्यर्थः ॥ तज्जननानुकूलं ॥ घटधीजननाकूलं ॥ किमनुपपन्नमिति ॥ तदर्थविषयकाश-

नोति । स्वप्रयत्नेन तथानिश्चयात् । ततस्तद्वेलाकांक्षा-यामुपस्थितत्वाच्छब्दमेव कल्पयति तदनन्तरं च घटादिप-दानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटबोधजनकमिति कल्पयते लघ्ने च तस्मिन्नतिप्रसङ्गभङ्गाय तज्जननानुकूलं सङ्केतरूपं सम्बन्धकं कल्पयति इति किमनुपपन्नं । तद-नन्तरं च क्वचिद्व्यवहारात्क्वचिदुपमानात्क्वचिच्छब्दात्क्वचिद्व्याकरणकोशादेरिति संक्षेपः । स्यादेतत् । तयोर्व्यवहारं

---

त्वावच्छिन्नं प्रति ज्ञायमानतच्छक्तपदत्वेन कारणत्वान्नातिप्रसङ्ग इति भावः । नकैवं व्यवहारएव शक्तिग्राहक इ यायातं । इत्थं च शक्तिग्रहं व्या-करणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्नि ध्यतः सिद्धपदस्य वृद्धा इति प्राचीनगाथाविरोधइ.यतआह । तदनन्तर-मिति । आद्यशक्तिग्रहानन्तरमित्यर्थः ॥ व्यवहारात् । गवानयनगोचरप्रयो-ज्यप्रयोजकवृद्धव्यवहारात् । पूर्वं तु घटानयनगोचरव्यवहारउक्त इति ना-भेदः । अनवस्थाभिया पूर्वं व्यवहारएव शक्तिग्राहकः ततश्च व्यवहारेणोप-मानेन वा शक्तिग्रहो जायते इत्यचनास्माकमाग्रहइति न प्राचीनगाथा विरोध इति भावः ॥ उपमानादिति ॥ गोसदृशो गवयपदवाच्य इत्युपमा-नात् गवयो गवयपदवाच्यइति शक्तिग्रहोदयादित्यर्थः ॥ शब्दादिति ॥ आ-प्तवाक्यादित्यर्थः ॥ कोकिलः पिकपदवाच्य इत्याप्तवाक्यात् पिकपदस्य को-किले शक्तिग्रहादिति भावः । व्याकरणादिति । प्रकृतिप्रत्ययादीनां शक्ति ग्रहो व्याकरणादित्यर्थः ॥ कोशादेरिति । अथैकदन्तहेरम्बलम्बोदरगजान-ना इत्यत्र गणेशत्वविशिष्टे शक्तिग्रहादित्यर्थः ॥ नन्वत्र गणेशत्वविशिष्टस्य पदार्थतया पदार्थस्य पदार्थतावच्छेदकस्य च भेदाभावात्कथं द्वन्द्व इति चेन्न । कोशस्य शक्तिग्राहकतया इदं पदमत्र शक्तमिति शक्तिग्रहस्यैव तस्मा-दुदयेन तत्र पदानामेव पदार्थतया तद्भेदसत्वात् । आदिपदाद्वाक्यशेषविव-रणप्रसिद्धपदसामानाधिकरण्यपरिग्रहः । वाक्यशेषाद्यथा । यवमयश्चरुर्भ-वतीत्यत्र यवशब्दः म्लेच्छप्रसिद्धिवशात्क गोर्वाचकः ॥ आर्यव्यवहारदर्शनात् दीर्घशूकविशिष्टस्य वयवहारस्योभयत्राविशेषादिति सन्देहे "वसन्ते सर्वसस्या नां जायते पत्रशातनं ॥ मोदमानाश्चतिष्ठंतियवाः कणिशशालिन" इति

वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः ॥ नच वेदे न दीर्घशूकविशिष्टे शक्तिर्वोधेऽपि कंग्वादौ शक्तिमत्त्वे बाधकाभावः नानार्थत्वेनापि वेदोपपत्तेरिति वाच्यम् ॥ अन्याय्यश्चानेकार्थत्वमिति न्यायेन वेदस्य बलत्त्वात्तत्रैव शक्तिपरिच्छेदात् ॥ एवं यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरं अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदमित्यत्र वेदादेव स्वःपदशक्तिग्रहः ॥ ननु दुःखासंभिन्नत्वं न दुःखसमानाधिकरणत्वं आद्यावन्ते च दुःखसत्त्वेनासम्भवात् । नापि दुःखासमानकालिकत्वं । अस्मदादिसुखे तथात्वात् । नचानन्तरमित्यस्याविरललग्नप्रवाहेत्यर्थकतया विरललग्नप्रवाहस्य दुःखासम्भिन्नत्वप्राप्त्यानातिव्याप्तिरिति वाच्यम् । अस्मदादिसुखस्यापि कतिपयकालावच्छेदेन तथात्वसम्भवात् । चक्रवर्त्तिसुखे तथात्वसम्भवेनाभिलाषोपनीतमित्यनेनापि तन्निरासासम्भवात् । अन्यथा विशेषणान्तरवैयर्थ्यापातादिति चेत् ॥ अत्र केचित् । एकजन्मावच्छेदेन दुःखासंभिन्नत्वं नानैव शक्यतावच्छेदकमित्याहुः । तन्न । नानार्थत्वकल्पने गौरवात् तथातात्पर्यग्राहकस्याभावाच्च केचित्तु यावति नवैयर्थ्यं तदेव शक्यतावच्छेदकमित्याहुः । अपरे तु दुःखासम्भिन्नत्वादिकम् न शक्यतावच्छेदकं किन्त्वधर्माजन्यशरीरजन्यसुखत्वोपलक्षकमिदं योगिना तु नाधर्माजन्यशरीरं तत्र दुःखोत्पत्तेरधर्मजन्यत्वात् सुखमात्रावच्छेदकेतच्छरीरे मानाभावात् । अथ मरणस्य दुःखनियतत्वात्स्वर्गशरीरेऽपि मरणजन्यदुःखसम्भवादसम्भवः नच ते नराः सुखमत्यन्तमश्नुवते इत्यनेन विरोधः । तस्य दुःखाल्पत्वपरत्वादिति चेन्न ॥ अनुकूलतर्काभावेन मरणस्य दुःखनियतत्वे मानाभावात् । भावे वा मरणजन्यदुःखजनकाधर्मान्याधर्माजन्यशरीरजन्यसुखत्वस्य प्रवृत्तिनिमित्तत्वात् । एतेन स्वर्गेऽपि पातभीतस्येति श्रवणात् स्वर्गयोनिपुण्यक्षयशङ्कया स्वर्गे दुःखोत्पत्तेरसम्भव इति निरस्तं । तदन्यत्वेनाप्य धर्मस्य विशेषणीयत्वात् । स्वर्गिशरीरस्य सुखमात्रावच्छेदकत्वेन तत्र दुःखधीर्भ्रान्तिरेव । अतएव तद्धर्ममात्रजन्यमेवेति तदविशेषणेऽपि क्षतिविरहश्चेत्याहुः ॥ अविरललग्नप्रवाहश्चिरस्थायीच्छामात्रयोनिदुःखासम्भिन्नसुखत्वं शक्यतावच्छेदकं तत्प्रकारकबोधस्यानुभवसिद्धत्वादित्याहुः । नच ग्रस्तमिति अग्रस्तत्वं चिरस्थायित्वं प्रवाहस्येति बोध्यम् । विवरणाद्यथा । पचति पाकं करोति यत्नार्थककरोतिनासमानार्थकतद्विवरणात् आख्यातस्य यत्नत्वविशिष्टे शक्तिः यद्यपि पूर्वोच्चरितवाक्यस्य स्वसमानार्थकोच्चरितवाक्येनार्थकथनरूपविवरणस्य शक्तिग्राहकता नशब्दविधया । इदं पदमत्र शक्तमिति शक्तिबोधपदाभावात् तथाप्याख्यातपदं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तकरोतिधातुप्रतिपादितार्थकत्वात् पाकत्वविशिष्टशक्तपाकपदप्रतिपादितार्थकपचधातुवत् । यद्यद्धर्मविशिष्टश-

पश्यता सङ्केतो ग्राह्यः। कथं तयोरेव सङ्केतग्रहः। अन्ययोर्व्यवहारादिति चेन्न। अनवस्थापत्तेः। अनादित्वादिदमिष्टमेवेति चेन्न। सर्गादौ तदसत्वात्। प्रलये माना-

---

त्वप्रतिपादितार्थकम् भवति तत्तद्धर्मविशिष्टे शक्तं भवतीति सामान्यमुखी व्याप्तिस्त्वाभिमता। इह सहकारतरौ मधुरं पिकोरौतीत्यत्र सहकारतरुरूपप्रसिद्धपदसमभिव्याहारेण पिकपदं कोकिले शक्तमितिप्रसिद्धपदसमभिव्याहारेण शक्तिग्रह इति ध्येयं। ननु कोशस्य शक्तिग्राहकत्वे "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतौ"त्यनेन शुक्लादिपदानां गुणिगुणविशिष्टे च शक्तिप्रतिपादनाद्गुणविशिष्टेऽपि शक्तिः स्यादितिचेन्न। अनन्यलभ्यस्यैव शब्दार्थतया शुक्लादिपदानां गुणविशिष्टे लक्षणयैवोपपत्तौ न तत्र शक्तिः कल्प्यते। अस्ति बाधके एव कोशस्य शक्तिग्राहकत्वात्। अतएव व्याकरणेनाख्यातस्य कर्त्तरि शक्तिप्रतिपादनेऽपि लाघवात्कृतावेव शक्तिरिति वक्ष्यत इति दिक्। तयोः। प्रयोज्यप्रयोजकवृद्धयोः। पश्यता। बालेन। अन्ययोः। स्वपूर्वकालिकप्रयोज्यप्रयोजकवृद्धयोः। अनवस्थेति। तयोर्व्यवहारोऽप्यन्यव्यवहारपूर्वक एवेत्यनवस्थापत्तेरित्यर्थः। इदं। अनवस्था। बीजाङ्कुरवत् अनाद्यनवस्था न दोषाय प्रामाणिकत्वादिति भावः। तदसम्भवादिति। तत्राद्योत्पन्नबालस्य स्वपूर्वकालिकप्रयोज्यप्रयोजकवृद्धव्यवहारदर्शनाच्छक्तिग्रहासम्भवादित्यर्थः। ननु संसारस्यानादित्वात्खण्डप्रलयाद्यभावेन सर्गाद्यकालाभावात्कथं तदभाव इत्याशङ्कते। प्रलयइति। खण्डप्रलयइत्यर्थः। कार्यद्रव्येति। सृष्टिकालवारणाय कार्यद्रव्यानधिकरणेति। कालिकसम्बन्धेन चाधिकरणत्वम् बोध्यं। कार्यानधिकरणेत्युक्तावसम्भवः। खण्डप्रलयेऽपि परमाण्वादौ रूपसत्वादतः कार्यद्रव्येति। द्रव्यानधिकरणेत्युक्तावपि तथापरमाण्वादेः सत्त्वादतः कार्येति। कार्यद्रव्यानधिकरणेत्युक्तौ महाप्रलयेऽतिव्याप्तिः। अतः कार्याधिकरणेति। कार्यत्वं चात्र ध्वंसप्रतियोगित्वम्। तेन महाप्रलये ध्वंसरूपकार्याधिकरणत्वेऽपि नातिव्याप्तिः। अभावातिरिक्तकार्यपरं कार्यपदं सामान्यपदस्य विशेषपरत्वादित्यपि कश्चित्। महाप्रलयस्य चरमदुःखध्वंसादिरूपतया प्रतियोगितासम्बन्धेन कार्याधिकरणत्वात् कालेति कालिकसम्बन्धेनाधिकरणत्वाभिप्रायकं। भिन्नकालीनयोर्नाधाराधेयभाव इति भावः। वस्तुतस्तु शब्दादिरूपकार्याधिकरणत्वाद्गगनेऽतिव्याप्तिरतः कालेति। आगमेति। "धातायथापूर्वमकल्पयदिति"वेदसिद्धत्वादित्यर्थः। तथाच संसारस्य प्रवाहो

भावात्सर्गादिरेवासिद्धेदिति चेन्न । कार्यद्रव्यानधिकरणका-
र्याधिकरणकालस्य खण्डप्रलयतया प्रसिद्धस्यागमसिद्धत्वात्
ततस्तद्व्यवहरति । उच्यते सर्गादौ भगवानीश्वरः शरीरद्वयं प
रिगृह्य तथा व्यवहाराद्बालः पूर्ववत् संकेतं गृह्णातीति कि
मनुपपन्नम् । ईश्वरे एव किं मान मिति चेत् । सर्गादौ व्यवहा-
रान्यथानुपपत्तिरेव । ननु पूर्वसर्गसिद्धसर्वज्ञत्वान्मन्वादय एव
व्यवहारप्रवृत्तिहेतवः सन्त्विति चेन्न । तेषां सर्वज्ञत्वे माना-
भावात् । व्यवहारान्यथानुपपत्तिरेव मानमिति चेन्न । पूर्वसर्गव्य-
वहारस्यैव मप्यनुपपत्तेः । तत्राप्यन्य एव कल्प्यतामिति चेन्न ।

---

अनादित्वं नत्वनादिमेवेति भावः ॥ कालकपालान्यावृत्तिघटप्रागभावः का-
र्यद्रव्यानधिकरणकार्याधिकरणवृत्तिरभावत्वात् गगनवृत्तिघटात्यन्ताभाववत्
पक्ष धर्मतावलाच्च घटप्रागभावे ईदृशकालवृत्तित्वं सिद्ध्यत् खण्डप्रलयवृत्ति-
त्वमादाय पर्यवस्यतीत्यनुमानमपि तत्साधकं बोध्यं ॥ शरीरद्वयं । प्रयो-
ज्यप्रयोजकवृद्धशरीरद्वयं । तथा । पूर्ववत्संकेतं । घटपटादिपदसंकेतं । नन्वेवं
संभवतीश्वरे मानसत्त्वे तदेव तु नेत्याशंकते ॥ ईश्वरएवेति । व्यवहारइ-
ति । शक्तिग्राहकाभावाच्छक्त्यग्रहे घटादिगोचरप्रवृत्त्यनुपपत्तिरेवेश्वरे मा-
नमित्यर्थः ॥ यद्यप्यर्थापत्तेर्नास्मन्मतेप्रमाणान्तरत्वं तथापि सर्गाद्यकाली-
नशक्तिग्रहः प्रयोज्यप्रयोजकवृद्धव्यवहारप्रयोज्यः प्रयोज्यप्रयोजकवृद्धव्य-
वहारान्याप्रयोज्यत्वेसति प्रयोज्यत्वात् यन्नैवं तन्नैवं यथा गगनादीतिव्य-
तिरेक्यनुमानमेव तदानीमन्यवृद्धासंभवादीश्वरसाधकमिति हृदयं ॥ म-
न्वादयइति ॥ तथाच नेश्वरसिद्धिरिति भावः ॥ यद्यप्येतावतापिन सं-
केतग्रहानुपपत्तिस्तथापीश्वरोपि प्रसङ्गात्साध्यत इतिभावः । तेषामिति ॥
कपिलमन्वादीनां सर्वज्ञत्वे भवतु व्यवहारहेतुत्वं परंतु तेषां तत्त्व एववि-
वाद इति भावः ॥ ननु व्यवहारान्यथानुपपत्तिर्भवन्मते ईश्वरइव मन्मते-
पि तेषु सर्वज्ञत्वे मानं स्यात् धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वं चेत्या-
ह । व्यवहारेति ॥ एवमपि । पूर्वसर्गसिद्धसर्वज्ञमन्वादिस्वीकारेपि । अनुपपत्ते-

प्रतिसर्गभूयसां तथाकल्पनाया गौरवात्। अस्त्वेक एव मूलमिति चेत्स एवास्माकमीश्वर इति दिक्। स्यादेतत् यदि शक्तिग्रहः सहकारी तदा घटशब्दात्पटप्रत्ययः किं न स्यात् अस्ति च तस्य शक्तिग्रहो घटे। अथ यः शब्दो यत्र गृहीतशक्तिकः स तदर्थं प्रत्याययतीति चेत्तर्हि काश्यां गौरस्तीति वाक्याद्देशान्तरीयस्य गोः प्रत्ययो न स्यात् नहि तस्य काश्यां स्थितायां गवि शक्तिग्रहोऽस्ति तस्या एवाप्रतीतेः। अत्र गौ

---

रिति। पूर्वसर्गात् पूर्वसर्गसिद्धसर्वज्ञत्वकः कश्चिद्यदि स्यात्तदा ततो व्यवहारप्रवर्त्तना तत्रस्यात् स एव तु नास्तीति भावः॥ तत्रापि। पूर्वसर्गेऽपि। अन्य एवेति। स्वपूर्वसर्गसिद्धसर्वज्ञत्वक अन्य एवेत्यर्थः॥ तथाभावेति। व्यवहारप्रवर्त्तकत्वं। ननु सर्वदा सर्वज्ञादि शाली एको मनुरेव सर्वत्रमूलमित्याशङ्कते। अस्त्वेक एवेति॥ सार्वज्ञादिशालीमनुत्वेन भवदभिमत इत्यर्थः॥ तथाच नाम्न्येव भेदो न तु नामवतीति भावः। दिगिति॥ स्वोपादानगोचरजन्यापरोक्षज्ञानचिकीर्षाकृतिजन्यानि सकर्त्तृकाणि कार्यत्वात् घटवदित्यनुमानमपीश्वरसाधकमवसेयं॥ ननु शाब्दबोधे शक्तिज्ञानस्य हेतुत्वेऽपि घटपदं घटे शक्तमिति शक्तिज्ञानकाले पटशाब्दबोधापत्तिः। नच तदा घटशाब्दबोधोत्पत्त्या शाब्दत्वावच्छिन्नं जायत एव पटशाब्दत्वावच्छिन्नस्य चापादकाभाव एवेति वाच्यं॥ योग्यताज्ञानादेरेव तदवच्छिन्नापादकत्वादित्याशंकते॥ स्यादेतदिति। ननु तदर्थविषयकशाब्दत्वावच्छिन्नं प्रति तच्छक्तपदज्ञानत्वेन हेतुत्वकल्पनान्नोक्तापत्तिरित्याशङ्कते। अथेति॥ तस्य। देशांतरस्थपुंसः॥ तस्या एव। काशीस्थगौरेव॥ अप्रतीतेरिति। असंनिकृष्टत्वादितिभावः।। गौः काशीवृत्तिरिति वाक्यजन्यशाब्दबोधे काशीस्थगौरेव विशेष्या एवं च देशांतरीयपुंसः तादृशगोरसंनिकृष्टत्वेन तत्र शक्तेरग्रहात् शाब्दबोधानुपपत्तिरिति। तद्विशेष्यकशाब्दत्वावच्छिन्नं प्रति तद्विशेष्यकशक्तिग्रहत्वेन कारणता दुर्वचेति शाब्दत्वशक्तिज्ञानत्वाभ्यामेव कार्यकारणभावो वाच्यः योग्यताबलाच्चागृहीतशक्तिकव्यक्तेरपि भानमुपेयम् एवं च घटपदात्पटशाब्दबोधापत्तिर्जागरूके-

मांसकाः गवादिपदानां गोत्वे एव शक्तिः कथं तर्हि व्यक्ति-
लाभ इति चेत् । तदाक्षेपादित्याहुः । ननु कोयमाक्षेपः त-
स्यार्थापत्तिरेवाक्षेपः गोत्वं हि स्वाश्रयं विनाऽनुपपन्नं त-
माक्षिपतीति भट्टाः । तच्च अनुपपत्तिज्ञानमंतरेणापि गौर-

---

वेत्यनुपपत्त्या शाब्दप्रमितिरनुमित्यन्तर्गतैव एवं च घटपदात् पटस्या
प्यबोधापत्तिः ॥ तन्निरूपितव्याप्तिज्ञानादेरभावादित्यखण्ड लभावर-
र्थोऽवसेयः ॥ अत्र । शब्दत्वशक्तिज्ञानत्वाभ्यां कार्यकारणभावविचारे ।
गोत्वएवेति । गोत्वविशिष्टे शक्तिस्वीकारे आवश्यकत्वाद्गृहीतविशेषण-
न्यायेन गोत्वे एव शक्तिः विशिष्टे शक्तिस्वीकारमपेक्ष्य विशेषणे शक्तिस्वी-
कारे लाघवात् ॥ तदिदमुक्तं "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"
इति । कथंतर्हीति ॥ व्यक्तेरशक्यत्व इत्यर्थः । लाभे । बोधविषयता ।
अशक्यस्यापि शाब्दबोधविषयत्वोपगमे पटादेरपि बोधापत्तेरिति भावः
नचाक्षेपोऽनुमानं तच्च न संभवति पक्षसाध्यहेतुप्रयोगासंभवात् तथाहि
इयंगौर्गोत्वादिति तावदनुमानं न संभवति शाब्दात्पक्षाज्ञानात् नापि गोत्वं
गवाश्रितं गोत्वादिति पक्षतावच्छेदकहेत्वोरैक्येन सिद्धसाधनात् । अथ गोत्वं
व्यक्त्याश्रितं जातित्वादित्यनुमानेन पक्षधर्मताबलाद् गोत्वाश्रयव्यक्तिसि-
द्धिरिति चेन्न ॥ जातित्वादेर्लिङ्गस्य पदादनुपस्थितेः । व्याप्त्यादिप्रतिसंधा-
नमंतरापि व्यक्तिबोधस्यानुभवसिद्धत्वाच्चेति कथमाक्षेपाद् व्यक्तिलाभ इ-
त्याशंकते । ननु कोयमिति ॥ समाधत्ते । तस्येति । गवादिधर्मिण इत्यर्थः ॥
अर्थापत्तिमेवाह ॥ गोत्वं हीति । अनुपपन्नमिति ॥ आनयनाद्यन्वयेऽनुपप-
न्नमित्यर्थः ॥ तं । स्वाश्रयम् । आक्षिपतीति ॥ अनुपपत्तिज्ञानजन्यार्थाप-
त्त्यात्मकज्ञाने व्याप्त्यादिज्ञानस्यानपेक्षितत्वात् अतएव शतवर्षजीविनो गृहे-
ऽभावः बहिः सत्त्वं विनाऽनुपपन्न इत्यनुपपत्तिज्ञानाद्व्यधिकरणेनापि शतवर्ष-
जीविनो गृहाभावेन बहिः सत्त्वसिद्धिरिति भावः ॥ तथाच गोशब्दाद्गोत्वस्य
शाब्दबोधः व्यक्तेस्त्वनुमितिविषयत्वमर्थापत्तिविषयत्वं वा न तु शाब्दबोधे
तस्याः प्रवेशः भट्टमते पदोपस्थिता एव शाब्दबोधे भासते यथा गामानये-
त्यादौ पदानुपस्थिता एव वा ॥ पश्यतः श्वेतरूपं हेषाशब्दं च शृण्वतः

स्तीति वाक्याङ्गोत्वविशिष्टव्यक्तिप्रतीतेः। तस्मात्समानवित्तिवेद्यत्वमाक्षेप इति गुरवः। यावती हि जातिधीर्व्यक्तिं विषयीकरो

खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीरित्यत्र पदानुपस्थितानामिव शाब्दबोधविषयता तत्र शाब्दयामीत्यनुभवात् नतु केचित्पदोपस्थिताः पदानुपस्थिता इति अर्द्धजरतीयन्यायस्य भट्टैरनङ्गीकारात्। नच गौरितिपदात् युगपदेव जातिव्यक्त्योः प्रतीतिर्व्याहन्येत एवं गोपदाद् गोत्वधीस्ततोऽनुपपत्तिज्ञानं ततश्च व्यक्तिधीरिति ज्ञानधाराकल्पनंचेति गौरवमिति वाच्यं॥ गोपदस्य जातिमात्रवाचकत्वे सिद्धे युगपत्प्रतीतेरप्रसिद्धेः ज्ञानधाराकल्पनस्य च फलमुखगौरवत्वेनादोषत्वात् यथा पचतीत्यत्र कृतिमात्रशक्ताख्यातेन कृतिमात्रप्रतीतिः कर्त्तुर्लाभस्त्वाक्षेपादितः अन्यथा सकर्त्तृकक्रियाया एवावगतस्तत्रापि कर्त्तरि शक्तिः प्रसज्येत। अन्यलभ्यत्वात्तत्र न शक्तिरिति चेत् । अत्रापि तुल्यत्वादिति ध्येयम् ॥ अनुपपत्तीति॥ गामानयेत्यादौ गोत्वस्यानयनेऽन्वयानुपपत्त्या व्यक्तेराक्षेपसम्भवेपि गौरस्तीत्यत्र गोत्वस्याखिलेऽन्वयसम्भवेनानुपपत्तिज्ञानस्यैवासम्भावितया न तेन व्यक्तेर्लाभसम्भव इत्यर्थः न त्वनुपपत्तिज्ञानं विनापि व्यक्तिभानस्यानुभविकतया तदनुपपत्तेरित्यर्थः॥ तथासति पचतीत्यत्रापि आख्यातस्य कर्त्तरि शक्त्यापत्तेः अनुभवस्य तुल्यत्वात् अतएव गामानयेति विहाय गौरस्तीत्येवोक्तमिति ॥ चिन्तामणिमतस्तु व्यक्तेरपदार्थत्वे सुवर्थसंख्यादीनां तत्रान्वयासम्भवः सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियतत्वात् तिङर्थसंख्यादीनां कर्त्तर्येवान्वयात्सुप्त्वनिवेशः॥ जाताविव शक्तिस्वीकारेपि पश्वादिपदे उपाधिविशिष्टव्यक्तौ तैरपि शक्तिस्वीकारेण तत्रैव तन्नियमावधारणात् । नच प्रकृतिपदतात्पर्यविषयएव तदन्वय इति नियमः॥ लक्षणोच्छेदापत्तेः। गौरवाच्च॥ ननु पचतीत्यत्र यथाक्षेपलभ्येन कर्त्रा संख्यान्वयः तथाक्षेपलभ्यव्यक्त्यापि तदन्वयः स्यात् तादृशनियमस्य च तत्रैवात्रापि सङ्कोचादिति चेन्न। तत्रापि चैत्र इति पदसध्याहृत्यैवान्वयबोधस्वीकारात् तदिदमुक्तम्॥ अयमेव ह्याक्षेपो यत्प्रथमान्तपदोपस्थाप्यत्वं नान्येति॥ असंकोचेनोपपत्तौ व्युत्पत्तिसंकोचे मानाभावाच्च॥ नह्येकत्र संकोच इत्यन्यत्रापि सः व्युत्पत्तिमात्रोच्छेदापत्तेरिति॥ यत्तु गोपदस्य गोत्वे शक्तिर्व्यक्तौ लक्षणेति मण्डनमिश्राः॥ त-

तीति व्यक्तेर्लाभः। इदमेवकथमिति चेत् जातिभानसामग्र्या एव तद्बोधकत्वमिति गृहाण। यद्वा जातिशक्तिरेव व्यक्तिं बो-

द्धुमं "जातावस्तित्वनास्तित्वे नहि कश्चिद्विवक्षति। नित्यत्वाल्लक्षमाणाया व्यक्तेस्तेहि विशेषणे" इति॥ अस्तित्वनास्तित्वे उत्पत्तिविनाशौ गौरुत्पन्ना गौर्नष्टा इत्यादौ गोत्वस्य नित्यत्वेनोत्पादविनाशयोरसम्भवाद् व्यक्तौ लक्षणा तात्पर्यज्ञानसत्त्वे गङ्गायां घोषमत्स्यौ स्त इत्यत्रेव युगपद्वृत्तिद्वयविरोधे मानाभावादिति॥ तन्न॥ शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति यथा गङ्गायां घोषइत्यत्र तीरत्वेन ज्ञाते तीरे। नह्यत्र व्यक्तिर्गोत्वातिरिक्तेन सा-स्नादिमत्त्वेन वा ज्ञाने च तेनैव शाब्दबोधापत्तिः लक्ष्यतावच्छेदकरूपेणैव लक्ष्यस्य भाननियमात्॥ किंच। जातिमात्रे शक्तिर्व्यक्तौ लक्षणेति तदा स्या-द्यदि जातिमात्रे मुख्यप्रयोगः। नचैवं किंच। गां पश्य गौरस्तीत्यादौ मुख्या-र्थान्वयानुपपत्त्यभावेन लक्षणायां मानाभावाद् व्यक्तिबोधानुपपत्तिश्चेतिध्येयं। तस्मादिति॥ अन्यविधाक्षेपस्य दुर्वचत्वादित्यर्थः॥ समानेति॥ एकज्ञानवि-षयत्वमेवेत्यर्थः। इदमेव विशदयति॥ यावतीहीति। व्यक्तिप्रत्यक्षं विना जाति प्रत्यक्षस्याभावेन तत्रैव तन्नियमावधारणादित्यर्थः। ननु प्रत्यक्षस्थले संयुक्तस-मवायादिरूपजातिप्रत्यक्षसामग्रीसत्त्वे संयोगादिरूपव्यक्तिभासकस्य सत्त्वा-दस्तु तथा शाब्दे तु कथमेवमित्याशङ्कते॥ इदमेवेति। समानवित्तिवेद्य-त्वमेवेत्यर्थः॥ जातिभानेति॥ जातिविषयकशाब्दबोधे जातिशक्तिज्ञानस्य हेतुतया तद्बलाज्जातिशाब्दबोधे जायमाने व्यक्तिरपि भासते तत्पदशक्यवि-षयकशाब्दबोधे तत्पदनिरूपितजातिशक्तिज्ञानस्य हेतुत्वादित्यर्थः। इदंतु गुरुमते कुब्जशक्तिस्वीकारे बोध्यं। तथाहि तन्मते जातौ व्यक्तौ च शक्तिः परंतु जातिविषयकशक्तिज्ञानमेव जातिविशिष्टव्यक्तिविषयकशाब्दबोधे का-रणं व्यक्तिशक्तिस्तु स्वरूपत्युपयुज्यते॥ नच जातिविशिष्टव्यक्तिशाब्दबोधे व्यक्तिशक्तिज्ञानमेव। कारणं जातिशक्तिस्तु स्वरूपसत्युपयुज्यते इत्येव किं न स्यादिति वाच्यं॥ तथासति देशान्तरस्थगोविशेष्यकशक्तिज्ञानाभावेन तद्बो-धानापत्तेः एवं च घटादिबोधापत्तिरपि न तत्पदशक्यविषयकशाब्दबोधं प्रति तत्पदनिरूपितजातिशक्तिज्ञानत्वेन कारणत्वादिति कुब्जशक्तिवादिम-तनिष्कर्षः। ननु कुब्जशक्तिवादिमते व्यक्तिशक्तिज्ञानस्याहेतुतया तत्स्वीकारे

भयति । नचान्यशब्दशक्त्या अन्यबोधनेऽतिप्रसङ्गः गोत्वशक्तं पदं गोत्वविशिष्टं बोधयतीत्यनतिप्रसङ्गात् अन्यथानुपपत्त्या

---

प्रयोजनाभावः । नच तथासतिजातिविषयकशाब्दत्वमेव जातिशक्तिज्ञानस्य कार्यतावच्छेदकं योग्यताबलाच्च व्यक्तिरपि भासतइत्वेवोपेयं तथाच घटादेरपि भानापत्तिः अशक्यत्वाविशेषात् मन्मते च तत्पदशक्यविषयकशाब्दत्वस्यैव कार्यतावच्छेदकत्वेऽनुपपत्त्यभावादिति वाच्यं ॥ जातिप्रकारकव्यक्तिविशेष्यकशाब्दबोधं प्रति जातिविषयकज्ञानत्वेन कारणत्वे क्षतिविरहादित्यलं कुब्जशक्तिवादिमतेनेत्यत आह ॥ यद्वेति ॥ तथाचेष्टापत्तिः कुब्जशक्ति वादस्यैकदेशिमतेनेति न तदस्वीकारे तेषां सिद्धान्तविरोध इति भावः ॥ जातिशक्तिरेवेत्येवकारेण व्यक्तौ कुब्जशक्तेः स्वरूपसदुपयोगित्वव्यवच्छेदः ॥ अन्यशक्त्या । जातिशक्त्या । अन्यबोधने । तत्पदाशक्यव्यक्तिबोधने । अतिप्रसंगः । घटादिबोधन प्रसङ्गः । तत्पदाशक्यत्वाविशेषात् । मन्मते च व्यक्तेरपि तत्पदशक्यतया न व्यक्तिबोधने कापि क्षतिरिति भावः । उत्तरयति ॥ गोत्वशक्तमिति ॥ गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वशक्तिज्ञानत्वेन कारणतया न घटादिबोधापत्तिरित्यर्थः ः ननु गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रत्येव गोत्वशक्तिज्ञानस्य कारणत्वमुपेयते नतु घटत्वविशिष्टशाब्दबोधं प्रतीत्यत्र विनिगमकाभावः अशक्यत्वाविशेषादित्यत आह । अन्यथानुपपत्त्येति ॥ गोपदाद्गोत्वविशिष्टस्यैव बोधो नतु घटत्वादिविशिष्टस्येति फलानुपपत्त्येत्यर्थः ॥ तथैव । गोत्वविशिष्टशाब्दबोधं प्रत्येव । कल्पनात् । गोत्वशक्तिज्ञानस्य हेतुत्वकल्पनात् । एवकारेण घटादिशब्दबोधं प्रति तु न तथा हेतुत्वकल्पनं फलाभावादिति सूचितम् ॥ अथवा पूर्वोक्तकुब्जशक्तिवादिमतेऽस्वरसं प्रकाशयति ॥ अन्यथेति । अन्यथा । कुब्जशक्तिं स्वीकृत्य व्यक्तिबोधोपपादने ॥ अनुपपत्त्या । उपपत्त्यभावेन ॥ व्यक्तौ कुब्जशक्तिस्वीकारे प्रयोजनविरहेण तन्मते प्रमाणाभावेनेति यावत् । तथैव । गोत्वविशिष्टबोधं प्रत्येव । कल्पनात् । गोत्वशक्तिज्ञानस्य हेतुत्वकल्पनादित्यर्थ इति ॥ वस्तुतस्तु जातिभासकसामग्र्या एव व्यक्तिभासकत्वादिति अग्रे च जातिशक्तिरेव व्यक्तिबोधिकेति ग्रन्थपर्यालोचनया कुब्जशक्तिवादमादाय यद्वा पूर्वग्रन्थसंगमने गोत्वपदस्य व्यक्तौ शक्त्यभावेन तथा सतीत्यग्रिमदूषणदानस्य यद्वा पूर्वकल्पेऽसम्भवितया नैवं व्याख्येयं । नच

तथैव कल्पनादिति तदपरे न क्षमन्ते । तथासति गोत्वमस्ती-

यद्देति निष्कृष्टमते एव तथासतीति दूषणदानमिति वाच्यं । संदर्भाशुद्धेरपरिहारात् । 'किंत्वन्यथैव । तथाहि ॥ जातिभानेति ॥ जातिशाब्दत्वमेव जातिशक्तिज्ञानकार्यतावच्छेदकं जातिभाने च जायमाने व्यक्त्यविषयकस्य तस्याभावाच्छक्तिरपि भासते यद्येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमात् जातिभासकसामग्र्या एव व्यक्तिबोधोपधायकत्वादित्यर्थ: । ननु जातिविषयतां विनापि व्यक्तिप्रत्यक्षोदयाज्जातिभासकसामग्र्यतिरिक्ता व्यक्तिभासकसामग्र्यवश्यमुपेया । नच शाब्दस्थले तथानियम: तथापि जातिभासकसामग्र्याव्यक्तिबोधोपधायकत्वे ततो घटादेरपि कुतो न बोध: । नच व्यक्तिबोधे समानवित्तिवेद्यत्वमेव नियामकमिति वाच्यं । नहि व्यक्तिबोधे समानवित्तिवेद्यत्वेन कारणता तथाच व्यक्तिविषयताया: कारणनियम्यत्वावश्यकत्वे व्यक्तिशक्तिज्ञानमेव कारणं स्यादित्यस्वरसादाह ॥ यद्देति ॥ जातिशक्तिरेवेत्येवकारेण व्यक्तिशक्तिव्यवच्छेद: ॥ तथाच व्यक्तिविषयताया जातिशक्तिज्ञानकार्यतावच्छेदककोटौ निवेशान्न तस्या: कारणानियम्यत्वमिति भाव: ॥ गोत्वशक्तिज्ञानस्य घटबोधं प्रत्येव हेतुत्वमास्तामित्यत आह ॥ अन्यथेति ॥ गोपदाद्गोरेव बोधो नतु घटादेरतो गोशाब्दं प्रत्येव हेतुत्वकल्पनादित्यर्थ: ॥ ननु व्यक्तिशक्तेरेव जातिविशिष्टबोधिकेत्येव किं न स्यात् भवन्मते तत्पदाशक्याया व्यक्तेरिव मन्मतेपि जातेर्भाने बाधकाभावादित्यत आह ॥ अन्यथेति । अथवा ननु तत्पदाशक्यबोधनेऽति प्रसङ्गाज्जातिविशिष्टशक्तेरेव व्यक्तिबोधिकेत्येवास्तामित्यत आह ॥ अन्यथेति ॥ व्यक्तिशक्तिज्ञानस्य कारणत्वे देशान्तरस्थगोबोधानुपपत्त्या जातिशक्तिज्ञानत्वेनैव हेतुत्वकल्पनादिति ध्येयं ॥ तथासतीति । जातावेव शक्तिस्वीकारेण गोत्वविशिष्टविषयकशाब्दं प्रति गोत्वविषयकशक्तिज्ञानत्वेन हेतुत्वस्वीकारे इत्यर्थ: ॥ गोत्वमस्तीति । गोत्वपदस्यापि गोत्वशक्तत्वेन गोपदगोत्वपदयोरविशेषात् गोत्वविशिष्टशाब्दबोधापत्तेरित्यर्थ: ॥ नच गोत्वं गोपदशक्यमिति निर्धर्मितावच्छेदककं गोपदशक्तिज्ञानं गोत्वविशिष्टशाब्दबोधे हेतु: । गोत्वत्वधर्मितावच्छेदकक गोत्वपदशक्तिज्ञानं गोत्वत्वरूपेण गोत्वशाब्दबोधे हेतुरिति नातिप्रसङ्ग इति वाच्यं ॥ गोत्वं न गोपदशक्यमिति बाधका-

त्वेपि निर्धर्मितावच्छेदकशक्तिज्ञानसम्भवेन गोत्वविशिष्टशाब्दबोधापत्तिरि-ति गोत्वत्वधर्मितावच्छेदकशक्तिज्ञानहेतुताया आवश्यकत्वात् ॥ एवं च गोत्वत्वस्य शक्यतावच्छेदकत्वावश्यकतया तदपेक्ष्य गोत्वजातेरेव तथात्वमु-चितमित्यपि लाघवमवसेयम् ॥ अथ गोत्वे निरवच्छिन्नैव शक्तिः गोपदं गौरि-त्याकारकं शक्तिसम्बधेन स्वरूपतः गोत्वप्रकारकगोपदत्वावच्छिन्नविशेष्यक-शक्तिज्ञानं गोत्वविशिष्टशाब्दबोधहेतुरिति न बाधकाले शाब्दबोधापत्तिः गोत्वपदं गोत्ववदिति गोत्वप्रकारकगोपदत्वावच्छिन्नाविशेष्यत्वेन रूपेण गो-त्वप्रकारकशक्तिज्ञानं च गोत्वशाब्दबोधे हेतुरिति न गोत्वमस्तीत्यतो गो-त्वविशिष्टबोधापत्तिरिति चेन्न। तथापि गोपदात्कदाचित्समवायेन गोत्व-विशिष्टबोधः कदाचित्कालिकादिसम्बधेन तद्विशिष्टबोध इति नियमानुप-पपत्तिः । गोत्वविषयकशक्तिज्ञानस्याविशिष्टत्वात् अस्मन्मते समवायेन गो-त्वविशिष्टशाब्दबोधं प्रति समवायेन गोत्वविशिष्टशक्तिज्ञानस्य हेतुत्वेनानु-पपत्त्यभावात् । नच तात्पर्यज्ञाननियमात्तथानियमः । तथासति जातावपि शक्तिस्वीकारे प्रयोजनविरहात् । एवं गोत्वं गोपदशक्यमित्याकारकस्यैव शक्तिज्ञानस्य तैर्हेतुत्वोपगमेन तत्सिद्धान्तभङ्गाच्चेति । एवमुपाधिप्रवृत्तिनि-मित्तस्थले तैरप्युपाधिविशिष्टे शक्तिस्वीकारात् यथा पशुपदस्य लोमवल्लांगू-लविशिष्टे शक्तिस्तथा जातिविशिष्टेपि अनुभवस्य तुल्यत्वात् । नच जातेर्व्य-क्तिवित्तिवेद्यत्वनियमाद्व्यक्तेर्लाभः उपाधौ तु तादृशानियमाभावाद्व्यक्ति-बोधार्थमुपाधिविशिष्टे शक्तिरिति वाच्यम् ॥ नहि नियमबलादेव व्यक्तेर्लाभं उपाधौ तु तादृशकारणनियम्यत्वात्कार्यस्य तथाच जातिविशिष्टबोधे जा-तिशक्तिज्ञानस्य कारणत्ववदुपाधिविशिष्टबोधे उपाधिशक्तिज्ञानस्यापि का-रणत्वस्य सुवचत्वात् इति दिक् । कुजशक्तिवादिनस्तु जातौ च व्यक्तौ च श-क्तिः परन्तु जातिविषयकत्वेनैव ज्ञाता शक्तिर्व्यक्तिविषयकशाब्दबोधे कारणं व्यक्तिशक्तिस्तु स्वरूपसत्युपयुज्यते नचैवं व्यक्तिशक्तिस्वीकारवैयर्थ्यमिति वाच्यं तत्पदाशक्यस्यापि भाने घटादेरपि भानप्रसङ्गेन व्यक्तिशक्तिस्वीकारस्याव-श्यकत्वात् । तथाच गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रतिगोत्वविषयक-गोपदशक्तिमती गौरित्याकारकं शक्तिज्ञानं हेतुः न तु गोत्वविशिष्टविष-यकगोपदशक्तिमती गौरित्याकारकं गोत्वमस्तीत्यादौ तु तादृशगोत्वप्रका-

अतोपि गोत्वविशिष्टप्रत्ययापत्तेः तस्माद्गोत्वविशिष्ट एव शक्तिः नचोक्तदोषः गोत्वसामान्यलक्षणया सकलस्य गोरुपस्थितौ

---

एकशक्तिज्ञानाभावाच्च गोत्वविशिष्टबोधापत्तिरित्याहुः ॥ तदसत् ॥ गोत्वविषयकगोपदशक्तिमती गौरित्याकारकस्य गोत्वविषयकशक्तिज्ञानस्य हेतुत्वे गोत्वविषयकत्वस्य कारणतावच्छेदककोटौ निवेशे गौरवात् । अथ मास्तु गोत्वविषयकत्वनिवेशः तथापि गोपदशक्तिमती गौरिति गोत्वप्रकारकशक्तिज्ञानत्वेनैव गोत्वविशिष्टशाब्दबोधं प्रति हेतुता । नचैवमविशेषादिति वाच्यं । व्यक्तिविषयतायाः कारणतावच्छेदककोटौ न निवेश इत्येव तन्मत निष्कर्षात् देशान्तरस्थगोबोधानुपपत्त्या समानविशेष्यकत्वेन कार्यकारणभावासंभवेन लाघवेन च समानप्रकारकत्वेन कार्यकारणभावोपगमादिति चेन्न । व्यक्तिविषयतायाः कारणतावच्छेदककोटावनिवेशे व्यक्तौ शक्तिस्वीकारवैयर्थ्यात् ॥ नच तदस्वीकारे गोत्वप्रकारकशक्तिज्ञानत्वेन हेतुत्वासंभवः व्यक्तौ शक्त्यभावेन शक्तिज्ञानस्य भ्रमत्वापत्तेरिति वाच्यं ॥ शक्तिर्न स्वरूपसती शाब्दहेतुः अपभ्रंशादपि शाब्दबोधोदयात् किंतु ज्ञाता तथाच यदंशे शक्तिज्ञानहेतुस्तदेव शक्यमिति जातिवद्व्यक्तिवैशिष्ट्यं च शक्यमेव अन्यथा व्यक्तावेव शक्तिः शक्तिज्ञाने च जातेरपि प्रकारत्वात् समानप्रकारकत्वेनैव कार्यकारणभाव इति जातावपि शक्तिरुच्छिद्येत । नच यद्विषयकत्वेन शक्तिज्ञानं हेतुस्तदेवावश्यं शक्यमिति नियमाज्जातावपि शक्तिरिति वाच्यं । तर्हि यद्विषयकत्वेन शक्तिज्ञानस्य हेतुता तदेव शक्यमिति नियमेन व्यक्तिविषयकत्वेन शक्तिज्ञानस्य हेतुत्वादेव व्यक्तिशक्तिस्वीकारस्यौचित्यादितिदिक् ॥ नैयायिकमतं दर्शयति ॥ तस्मादिति ॥ गोत्वविशिष्ट इति ॥ जातौ व्यक्तौ वैशिष्ट्ये च शक्तिरित्यर्थः ॥ तृतीयोपस्थाप्यकरणत्वैकत्वयोरिव जातौ व्यक्तौ च विशकलिततया शक्तौ गोत्वं व्यक्तिश्चेति बोधप्रसङ्गान्नतु गौरिति तथाच वैशिष्ट्येऽपि शक्तिः एवमवयवसंयोगविशेषरूपाकृतौ तद्वैशिष्ट्ये च गोपदशक्तिः गोपदाज्जात्याकृतिविशिष्टस्यैव प्रतीतेः तथाच तदुक्तं ॥ "जात्याकृतिव्यक्तयः पदार्थ इति„ ॥ एकशक्तिसूचनाय पदार्थ इत्येकवचनं ॥ ननु तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानत्वेन हेतुत्वमित्यायातं तच्च काशीस्थायां गवि शक्त्यग्रहाद् बोधानापत्तिरूपवा

सर्वत्रैव गवि शक्तिग्रहसम्भवात् अस्तु वा एकत्रैव गवि शक्तिग्रहः। नचान्यगोबोधानापत्तिः अन्यशक्तिग्रहादन्यव्यक्तिबोधनेऽतिप्रसङ्ग इति वाच्यं। गोत्वविशिष्टशक्तिग्रहो गोत्वविशिष्टप्रत्यायक इत्येवमनतिप्रसङ्गादिति संप्रदायविदः। नव्यास्तु गव्येव शक्तिर्न तु गोत्वेपि गौरवात्। नचैवं गोत्वप्रत्ययानापत्तिः गोत्वावच्छिन्नशक्तिग्रहस्य गोत्वविशिष्टप्रत्यायकत्वादिति

---

धकमस्तमित्याशंकते ॥ नचेति ॥ उक्तदोषः। शक्तिग्रहाविषयभूतव्यक्तिबोधानापत्तिरूपदोषः॥ समाधत्ते॥ गोत्वेति ॥ तथाच सर्वत्रापि शक्तिग्रहाच्छक्तिग्रहाविषयकव्यक्तेरलीकतया न तद्बोधानुपपत्तिरिति भावः॥ सामान्यलक्षणानङ्गीकारेप्याह ॥ अस्तुवेति ॥ एकत्रैव। लौकिकसाक्षात्कारविषय एव। अन्यगवीति ॥ शक्तिग्रहाविषयगवीत्यर्थः॥ ननु योग्यताबलाच्छक्तिग्रहाविषयकव्यक्तेरपि भाने बाधकाभाव इत्यत आह। अन्येति ॥ अतिप्रसङ्गः ॥ गोपदाद्घटादेरपि बोधापत्तिः॥ शक्तिग्रहाविषयत्वस्याविशेषादिति भावः॥ प्रत्यायक इति। गोत्वप्रकारकगोविशेष्यकशक्तिज्ञानत्वेन हेतुतया न घटादिबोधापत्तिः॥ पूर्वं तु तत्तद्व्यक्तित्वेनापि गोर्निवेशः। इह तु गोत्वेनैव निवेश इति द्रष्टव्यं॥ ननु एकस्य प्रवाहसंबन्धस्य तीरतीरत्वयोरभावाच्छक्यसंबंधरूपाया लक्षणाया एकस्यालक्ष्यतावच्छेदकलक्ष्ययोरसंभवितया लक्ष्यतावच्छेदकविशिष्टे लक्षणाया अनङ्गीकारेण गङ्गायां घोष इत्यादौ स्ववृत्त्यनुपस्थापितस्यापि तीरत्वस्य शाब्दबोधे भानवत् शक्यतावच्छेदके शक्त्यभावेपि तादृशकार्यकारणभावबलादेव गोत्वभाननिर्वाहेऽलं तत्र शक्तिकल्पनेनेति संप्रदायमतेऽस्वरसं प्रकाशयन्नव्यमतमाह ॥ गव्येवेति ॥ गौरवात्। केवलव्यक्तौ शक्तिस्वीकारेणैवोपपत्तौ जातिविशिष्टव्यक्तौ शक्तिकल्पने गौरवादित्यर्थः। नचैवमिति। एवं। गोत्वे शक्त्यस्वीकारे घटादेरपि बोधापत्त्याऽशक्यस्य शाब्दाविषयतया गोत्वबोधानापत्तिरित्यर्थः। गोत्वेति ॥ गोत्वविशिष्टशाब्दबोधं प्रति गोत्वधर्मितावच्छेदकशक्तिग्रहस्य हेतुत्वेनानतिप्रसङ्गादित्यर्थः॥ गोत्वे एव शक्तिस्वीकारे च गोत्वत्वधर्मितावच्छेदकशक्तिग्रहस्य हेतुतया गौरवाद्व्यक्तावेव शक्तिरिति ध्येयं॥

लभ्यं । स्यादेतत् यदि गोत्वविशिष्टे शक्तिस्तदा गौः शुक्ला इत्यतो गोशुक्लयोरभेदप्रत्ययो न स्यात् तस्यान्वयरूपस्याशक्यत्वात् । नच शब्दादशक्यमपि भासतेति प्रसङ्गात् । उच्यते गोशक्तं पदमेव गवान्वयं बोधयति । नचाशक्यबोधने घटमपि बोधयेदिति वाच्यं । गोशक्तं पदं गवान्वयबोधजनकं नच घटो गवान्वयो येनाति प्रसङ्गः स्यात् । भट्टास्तु अन्वयविशिष्टे शक्तिग्रहादन्वयेपि शक्तिरेवेत्याहुस्तन्न अन्वयस्यान्यलभ्यत्वात् अनन्यलभ्यस्य च शब्दार्थत्वात् अन्यथा ल-

---

ननु जातिविशिष्टे शक्तिस्वीकारेण शाब्दे व्यक्तिभानोपपत्तावपि वाक्यार्थरूपान्वयस्यापि शाब्दविषयतया तत्रापि शक्तिरास्तां ॥ नचेष्टापत्तिः ॥ "जात्याकृतिव्यक्तयः पदार्थ,, इति अक्षपादीयसूत्रविरोधादिति संप्रदायकमते शंकते ॥ स्यादेतदिति ॥ नन्वभेदोपि शक्यएवेत्यत आह ॥ तस्येति ॥ जातिविशिष्टएव शक्तिस्वीकारादिति भावः ॥ ननु योग्यतादिबलादशक्योपि भासत इत्याह । नचेति ॥ अतिप्रसङ्गात् ॥ घटादेरपि बोधप्रसङ्गात् । गोशक्त इति । इतरपदसमभिव्याहृतं गोपदमित्यर्थः ॥ गवान्वयेति ॥ नच गौः शुक्ल इत्यत्राभेदः गामानयेत्यत्रान्यविधः संसर्गोभासते इत्यत्र किंनियामकमिति वाच्यम् ॥ भेदान्वयबोधे समानविभक्तिकतत्तत्पदसमभिव्याहाररूपानुपूर्वीज्ञानस्य अन्यत्रच तत्तदानुपूर्वीज्ञानस्य हेतुत्वादिति भावः ॥ पदानां जातावभिधारूपाशक्तिराक्षेपेणैव व्यक्तेर्लाभः अन्वयस्य चाक्षेपेण लाभासंभवादशक्यबोधने चातिप्रसङ्गादन्वयेपिशक्तिः इत्थं च जातौ अन्वये चाभिधारूपा शक्तिरिति भट्टमतं दर्शयति ॥ भट्टास्त्विति ॥ अन्वयविशिष्टे शक्तिग्रहात् । अभिधारूपशक्तिग्रहात् ॥ अन्वयेपि । वाक्यार्थरूपे ऽन्वयेपि ॥ शक्तिरेव । अभिधारूपा शक्तिरेव । अन्वयस्येति । गौः शुक्ल इत्यत्र वाक्यार्थरूपान्वयस्य स्वयं अन्यलभ्यत्वात् । अन्वयविषयकशाब्दबोधे तत्तदानुपूर्वीज्ञानत्वेन हेतुतया तत्तदानुपूर्वीबलादेवान्वयभानोपपत्तिरित्यर्थः ॥ अन्वयविशेषभानार्थं तत्तदानुपूर्वीज्ञानहेतुतायास्तवाप्यावश्यकत्वादिति भावः । नन्वन्यलभ्यत्वेपि शक्तौ बाधकाभाव इत्यत आह । अनन्येति ॥ शब्दार्थत्वात् । शब्दशक्यत्वादित्यर्थः ।

लक्षणोच्छेदापत्तिः। प्राभाकरास्तु कार्यान्विते शक्तिः पदानां तथाहि प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यस्य प्रवृत्तिमुपलभमानो बालस्तत्प्रयोज्यकृतया कार्यताविशिष्टज्ञानमनुमिनोति स्वप्रवृत्तौ तेन कार्यत्वविशिष्टज्ञानस्य हेतुत्वावधारणा

---

ननु शक्यस्यैव शाब्दविषयत्वमिति नियमादन्यलभ्यत्वेपि तत्र शक्तिराव-श्यकीत्यत आह ॥ अन्यथेति । अन्यथा । शक्यस्यैव शाब्दविषयत्वमिति नियमात्तत्र शक्तिकल्पने।लक्षणेति।लक्षणया तीरबोधोपपत्तिरित्यन्यलभ्यत्वात्तत्र नशक्तिः शक्यस्यैवशाब्दविषयत्वनियमेतु तीरेपि गङ्गापदशक्यत्वप्रसङ्गेन लक्ष-णोच्छेदापत्तेरित्यर्थः।इदमुपलक्षणम् अन्वितेशक्तिस्वीकारेऽन्वितत्वेन पदार्थो-पस्थितिः अन्वयप्रकारकशाब्दबोधश्चस्यात् नत्वेतदनुभवसिद्धं। ननु अन्विते श-क्तिःस्वरूपसत्युपयुज्यतेनतुज्ञाता जातौतुज्ञातैवोपयुज्यतइति तन्मतनिष्कर्षइ-तिचेन्न। यद्विषयकत्वेनैव ज्ञाताशक्ति रनुभवहेतुस्तत्रैव शक्तिरित्यन्वये शक्ति-स्वीकारवैयर्थ्यात् शक्यस्यैवशाब्दविषयत्वमितिनियमस्यचलक्ष्ये व्यभिचारादि-ति रहस्यमनुसन्धेयं। केचित्तु भट्टमते जातावेवाभिधारूपा शक्तिः अन्वितवि-षयकशाब्दत्वाच्छिन्नं प्रति घटपदशक्तिज्ञानत्वेन कारणतेति घटपदादावन्विते आनुभाविका शक्तिः नैयायिकमते आनुपूर्वीज्ञानस्यैवान्वितशाब्दत्वं कार्यता-वच्छेदकं भट्टमते घटपद शक्तिज्ञानस्येति मतभेदः। अन्वयविशिष्टे शक्तिग्र-हात्। बालेनघटपदादेरानुभाविकशक्तिग्रहात्।शक्तिरेव। आनुभावकशक्तिरेव। अन्वितविषयकशाब्दत्वं घटपदशक्तिज्ञानकार्यतावच्छेदक मित्यर्थः। अन्यलभ्य-त्वात्।अन्वितशाब्दत्वस्यानुपूर्वीज्ञानकार्यतावच्छेदकतया तत्कोटिप्रविष्टत्वादि-त्यर्थः।अनन्यलभ्यस्यच।आनुपूर्वीज्ञानादिरूपप्रकरांतरालभ्यस्य च।शब्दार्थत्वात्। घटपदशक्तिज्ञानकार्यतावच्छेदककोटिप्रविष्टत्वादित्यर्थः। तथाचान्वय विशि-ष्टे शाब्दत्वस्यानुपूर्वीज्ञानकार्यतावच्छेदकत्वावश्यकत्वे अन्वयविषयकशाब्दत्व-स्य घटपदशक्तिज्ञानकार्यतावच्छेदकत्वे मानाभाव इति भावः। ननु शक्ति-ज्ञानकार्यतावच्छेदककोटिप्रविष्टस्यैव शाब्दविषयत्वमिति नियमात्तथेत्यत आह।अन्यथेति। तादृशनियममभ्युपेत्य तथा कल्पने। लक्षणेति। तादृशनियमा-भ्युपगमे तीरविषयतायां अपि गङ्गापदशक्तिज्ञानकार्यतावच्छेदककोटिनिवेशे-

न् अतस्तद्देत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव तथावधारय ति अतस्तन्निर्वाहिकां शक्तिं कार्यान्विते शब्दत्वावच्छेदेन कल्पयति तदनु चावापोद्वापाभ्यां घटादिपदे शक्तिं गृह्णा ण प्रथमकल्पनानुरोधात् कार्यतान्विते घटादौ शक्तिं क

तत एव तोरभानोपपत्ते स्तच लक्षणास्वीकारो व्यर्थः इतिर्हि न स्वरूपसत्यु पयुज्यते किंतु ज्ञातेवेति व्याचक्षुः। तत्संदर्भविरोधादुपेक्षणीयं। प्राभाकरास्त्वि ति। कार्यान्वितइति। कृतिसाध्यानयनाद्यन्वित इत्यर्थः। तत्प्रयोजकतया। प्रवृ त्तिप्रयोजकतया। कार्यताविशिष्टज्ञानमिति। कार्यताकृतिसाध्यतातद्विशिष्टवि षयकं ज्ञानमित्यर्थः। अनुमिनोति। प्रयोज्यस्येति शेषः। अयं घटानयनगोचर कार्यताविशिष्टज्ञानवान् घटानयनगोचरप्रवृत्तिमत्त्वादित्यनुमानाकारोबोध्यः। अप्रयोजकत्वमाशंक्याह। स्वप्रवृत्ताविति। स्वप्रवृत्तौ। स्वीयस्तनपानगोचरप्रवृत्तौ। तेन। बालेन। कार्यताविशिष्टज्ञानस्य। कृतिसाध्यत्वविशिष्टज्ञानस्य। हेतुत्वावधारणा दिति। तथाच कार्यकारणभाव एवानुकूलस्तर्क इति भावः। तद्देत्वाकाङ्क्षायां। कार्यताविशिष्टज्ञानकारणजिज्ञासायां। शब्दमेव। घटमानयेति शब्दमेव। तथा कार्यत्वविशिष्टज्ञानहेतुत्वे। तन्निर्वाहिकां। शब्दे कार्यत्वविशिष्टविषयकज्ञा नोपधायकत्वनिर्वाहिकां। कार्यान्विते इति। यद्यपि घटानयनगोचरप्रवृत्तौ घटानयनगोचरकार्यताविशिष्टज्ञानत्वेन हेतुत्वं नतु कार्यान्वितज्ञानत्वेने ति कार्यान्विते शक्तौ बीजाभाव स्तथापि न केवलं कार्यमिति ज्ञानात्प्रवृत्तिः किंतु घटानयनं कार्यमिति ज्ञानात् तच्च कार्यताविशिष्टज्ञानं कार्यान्वितज्ञा नमेवेति तत्र शक्तिः एवमनाकलितपदविभागस्य घटमानयेति वाक्यस्य का र्यताविशिष्टज्ञानजनकत्वं कार्यान्वितशक्त्यैव निर्वहति अन्यथैकपदस्यैव का र्यताविशिष्टे शक्तौ इतरपदस्य वैयर्थ्यात् कार्यान्विते शक्तौ सर्वेषामपि का र्यताविशिष्टज्ञानजनकत्वं संभवति कार्यताविशिष्टज्ञानस्य प्रयोजकत्वे च कार्यान्वितज्ञानस्यापि प्रवृत्तिप्रयोजकत्वानपायात् कार्यान्वित एव शक्तिः। नच कार्यतावाचकलिङादीनां कार्यान्वितशक्तत्वासंभव इति वाच्यं। सर्वपदा नां कार्यान्वयमात्रगोचरज्ञानजनकत्वात् तच्च कार्यान्वितस्वार्थप्रतिपाद कतया इतरान्वितकार्यरूपस्वार्थप्रतिपादकतयावेति तथाच कार्यान्वयमा

[illegible]यति ननु केवलघटादौ आद्यव्युत्पत्तिविरोधात् इत्थंच तत्र कार्यतावाचकपदसमभिव्याहारो नास्ति तद्वाक्यमर्थवादरूपं मूकमेव व्यवहारस्त्वसंसर्गाग्रहात्। ननु सर्वेषां पदानां कार्यान्वितवाचकत्वात्तद्वाचकपदसमभिव्याहारो नास्तीत्यसङ्गतम्। असङ्गतं चार्थवादस्याप्रामाण्यमिति चेत्।

---

लित्वं कार्यं तद्भिन्नं चाविशिष्टमिति सर्वत्र कार्यान्वित एव शक्तिरित्याखण्डलार्थः। आवापोद्वापाभ्यां संग्रहत्यागाभ्याम्। प्रथमेति। शब्दसामान्ये कार्यान्वितशक्तिकल्पनानुरोधादित्यर्थः। ननु लाघवात्तथास्त्वित्यत आह। आद्येति। शब्दसामान्ये कार्यान्वितशक्तिकल्पनायाः विरोधापत्तेरित्यर्थः। शब्दसामान्यस्य कार्यान्वित एव शक्तत्वेऽवधृते विधेरेव प्रामाण्यं नत्वर्थवादस्येति दर्शयति। इत्थं चेति। शब्दसामान्यस्य कार्यान्वितशक्तत्वे चेत्यर्थः। यत्र। भूतले घटो नास्तीत्यादौ। कार्यतावाचकेति। कार्यतावाचका लिङ्लोट्तव्यप्रत्ययः पञ्चमलकारः कृत्यश्चेति विधिप्रत्ययास्तत्समभिव्याहारो नास्तीत्यर्थः। विध्यसमभिव्याहृतं वैदिकवाक्यमर्थवादः। मूकमेव। शाब्दबोधानुपधायकमेव। ननु तर्हि प्रवर्तकज्ञानाभावात्प्रवृत्त्याद्यनुपपत्तिरित आह। व्यवहारस्त्विति। प्रवृत्तिस्त्वित्यर्थः। असंसर्गेति असंसर्गग्रहाभावात्। बाधाभावादिति यावत्। तन्मते सर्वत्र प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वानभ्युपगमादिति भावः। ननु शब्दसामान्यस्यैव कार्यान्वितशक्तत्वात्कार्यान्वितशक्तिज्ञानस्यैव शाब्दबोधहेतुतया विधेरिव शब्दसामान्यस्यैव कार्यतावाचकपदत्वात्कथं सिद्धार्थकार्थवादानामप्रामाण्यमित्याशंकते। नन्विति। कार्यान्वितेति। कार्यताविशिष्टान्विते इत्यर्थः। तद्वाचकेति। कार्यतावाचकपदेत्यर्थः। विधेरिव पदसामान्यस्यैव कार्यतावाचकपदत्वादिति भावः। असङ्गतं चेति। सर्वस्यापि कार्यतावाचकपदत्वात् कार्यतावाचकपदासमभिव्याहारप्रयुक्तमप्रामाण्यं कथमर्थवादस्येत्यर्थः। अत्र यद्यपि पदानां कार्यान्वितेऽभिधारूपैव शक्तिः घटादिपदात्कार्यान्वितघटत्वादिमैव पदार्थोपस्थितिः घटादिपदेन कार्यान्वितविषयकशाब्दबोधे जननीये इतराविशेषणतया कार्यत्वोपस्थापकलिङादिपदस्य सहकारित्वाच्च न सिद्धार्थकार्थवादस्य प्रामाण्यमि-

अत्रोच्यते द्विविधा हि पदशक्तिः आनुभाविका स्मारिका च तत्रानुभाविका कार्यान्विते स्मारिका च जातौ तथा च घटादिपदं घटादिपदात् कार्यत्वस्यानुपस्थितौ कथं तदन्वयबोधं जनयेत् कार्यत्वान्वयबोधे तदुपस्थितेरपि हेतुत्वादिति नार्थवादस्य प्रामाण्यमित्यूचुः। ननु आवापोद्वापाभ्यां लाघवात् घटादिमात्र एव शक्तिग्रहः न तु कार्यतान्वयेऽपि अन्यलभ्यत्वात्

---

ति कार्यान्वितेऽभिधारूपशक्तिमादायार्थवादस्याप्रामाण्यमुपपादयितुं शक्यते तथापि कार्यत्वोपस्थित्यर्थं हि घटादिपदानां कार्यान्विते शक्तिः सा चावश्यापेक्षणीयलिङादिपदादेव। जातेति। अथ घटादिपदानां कार्यान्वितेऽभिधारूपशक्तिकल्पनेन एवं कार्यान्वितत्वेन शाब्दबोधेऽनुभवबाधस्तु अत अभिधारूपशक्तिमुपेक्ष्यानुभाविकशक्तिमादाय समाधत्ते। अत्रोच्यत इति। आनुभाविका। शाब्दानुभवजनिका। स्मारिका। पदार्थस्मृतिजनिका। तत्रेति। कार्यान्वितविषयकशाब्दत्वावच्छिन्नं प्रति घटपदज्ञानत्वेन हेतुत्वे इत्यर्थः। स्मारिका चेति। जातिशक्तिज्ञानात्केवलघटत्वजातिस्मृतिः शक्तिज्ञानस्योद्बोधकविधया पदार्थस्मृतिहेतुत्वादिति भावः। ननु कार्यान्वितबोधे घटादिपदज्ञानस्य हेतुत्वादिति भावः। ननु कार्यान्वितबोधे घटादिपदज्ञानस्य हेतुतया तत्सत्त्वे कथं नानुभवजनकत्वमत आह। कार्यत्वान्वबोध इति। घटादिपदेन कार्यत्वान्वयविषयकशाब्दबोधजननीये कार्यतावाचकलिङादिपदजन्योपस्थितेः सहकारित्वादित्यर्थः। नार्थवादस्येति। विशेषसामग्रीसहकृताया एव सामान्यसामग्र्याः फलोपधाने तत्तया कार्यत्वोपस्थापकलिङादिपदाभावेन तज्जन्यकार्यत्वोपस्थितेः सहकारिणां अभावात् शाब्दानुभवजनकत्वरूपं प्रामाण्यं नार्थवादस्येत्यर्थः। लाघवात्। कार्यान्वितघटविषयकशाब्दत्वापेक्षया लाघवात्। घटादिमात्र इति। घटविषयकशाब्दत्वावच्छिन्नं प्रत्येव। घटपदज्ञानत्वेन कारणत्वग्रह इति भावः। नत्विति। ननु घटपदादेः कार्यान्वितघटविषयकशाब्दत्वं कार्यतावच्छेदकमित्यर्थः। अन्यलभ्यत्वादिति। कार्यतावाचकपदजन्यबोधविषयत्वादित्यर्थः। घटविषयकशाब्दत्वावच्छिन्नं प्रति घटपदज्ञानत्वेन कार्यत्वविषयकशाब्दत्वावच्छिन्नं प्रति लिङादिपदज्ञानत्वेन हेतु-

प्रथममन्यलभ्यत्वं बालस्य नोपस्थितमिति चेत् प्रथमं तर्हि कार्यतान्वये शक्तिग्रहोऽस्तु यदा च तदुपस्थितं तदा घटमात्रे शक्तिग्रहो स्तु सा बाध्यतां गौरवात् । अथैवं चरमप्रवृत्तौ घटमात्रशक्तिकल्पना कथं प्रथमप्रवृत्तां बलवतीं कार्यान्विते शक्तिकल्पनां बाधयितुमीष्टे इति चेन्न । प्रथमकल्पनाया बलवत्त्वासिद्धेः नहि प्रथमप्रवृत्तमेव बलवत् चन्द्रतारादिस्वल्पताया

---

ता यत्र च लिङादिपदसमभिव्याहारस्तत्र तादृशसमभिव्याहारादेव कार्यत्वबोधः यत्र तु न तत् समभिव्याहारस्तत्र केवलघटादेर्बोध इत्यर्थवादस्यापि प्रामाण्यमिति भावः । नन्वन्यलभ्यत्वं न स्वरूपसत्प्रतिबंधकं किंतु ज्ञातं यदि शक्यं स्यात्तदान्यलभ्यं न स्यादिति तर्कस्य तेनोत्पादनात् तथाच यत्र तन्नोपस्थितं तत्र कार्यान्विते शक्तिग्रहे बाधकाभाव इत्याशंकते । प्रथममिति । प्रथमं लिङादिपदस्य कार्ये शक्तिग्रहात्पूर्वं । कार्यान्विते शक्तिग्रहोऽस्तु । घटपदज्ञानस्य कार्यान्वितविषयकशाब्दत्वं कार्यतावच्छेदकमस्त्वित्यर्थः । तत् । अन्यलभ्यत्वं । घटमात्रइति घटविषयकशाब्दत्वं कार्यतावच्छेदकमित्यर्थः सा।कार्यान्विते शक्तिकल्पना।बाध्यताम्।अप्रामाण्यग्रहविषयीक्रियतां।गौरवात्। घटमात्रशक्तिकल्पनापेक्षया । गौरवात् ननु समान्यतः प्रथमप्रवृत्तकल्पनाया बलवत्त्वेन कथं तद्बाध इत्याह । अथैवमिति । ननु प्रथमप्रवृत्तत्वस्य बलवत्त्वप्रयोजकतया कथं न बलवत्त्वमत आह । नहीति । शास्त्रादिति । शतयोजनश्चन्द्र इति।चन्द्रपरिमाणबोधकज्योतिःशास्त्रादित्यर्थः । तथाच चक्षुरादिना ज्ञातस्वल्पताया अप्रामाण्यज्ञानवदत्रापि घटपदादेः कार्यान्वितघटादौ शक्तिज्ञाने प्रामाण्यं कल्प्यतइति भावः । ननु चन्द्रादौ शास्त्रजन्यमहत्परिमाणज्ञानेन बाधात् तत्र स्वल्पपरिमाणज्ञानेऽप्रामाण्यं कल्प्यते प्रकृते च प्रथमं कार्यान्वितघटादिपदशक्तिकल्पने बाधकाभावान्न तद्बाधः असति बाधके प्रथमप्रवृत्तत्वस्यैव बलवत्त्वे तन्त्रत्वादित्यत आह । चरमकल्पनायाइति । लाघवेति । पूर्वान्वितघटादौ शक्ते बाधेऽपि कार्यान्वितत्वविशिष्टघटत्वस्य घटत्वापेक्ष

प्रथमप्रतीतायाः शाक्तात् तन्महत्त्वप्रतीत्या बाधानापत्तेः चरमकल्पना लाघवसाहायतया बलवत्त्वाच्च किंचैवं काव्यादिष्वऽनुभवसिद्धो ल्वया नुभवो न स्यात् । नचासंसर्गाग्रहमात्रं न तु संसर्गानुभव इति वाच्यं । घटमानयेत्यत्रापि तदापत्तेः तथाच गतं शब्दप्रामाण्यप्रत्याशयापि किंचैवमर्थवादरूपाणां श्रुतिस्मृतीतिहासपुराणादीनामप्रामाण्यं स्यात् तथा च गुरूपहसितं मिश्रैः । प्रसिद्ध एव लोकेऽस्मिन्बुद्धबन्धुः प्रभाकर इति तस्मादेवं वदन् प्रतारकः कश्चिद्वर्णव्यत्यासाल्लिपि सादृश्याभ्यां प्रभाकार इति मनुग्रहीतो लोकैरिति युक्तमुत्पश्या-

---

या गुरुतया शक्यतावच्छेदकत्वासम्भवेन कार्यान्वितघटत्वावच्छेदेन शक्त्यभावेन तेन रूपेण तत्र शक्तिकल्पने बाधः स्यादेव तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकज्ञानत्वमेव हि भ्रमत्वमिति भावः । ननु कम्बुग्रीवादिमत्त्वं घटत्वापेक्षया गुर्विति गौरवज्ञानसत्त्वेऽपि कम्बुग्रीवादिमान्नास्तीति प्रतीत्युदयाद्यथा गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमुपेयते तथा गौरवेऽपि प्रथमप्रवृत्तत्वात्कार्यान्वितघटे शक्तिः स्यादेवेत्यतस्तुष्यतु दुर्जनन्यायेनाह । किंचैवमिति । एवं । कार्यान्वितघटादौ शक्तिकल्पने । शक्तिज्ञानेन च शाब्दसामान्ये जननीये कार्यतावाचकपदजन्योपस्थितेः सहकारित्वेचेत्यर्थः । अनुभवसिद्ध इत्यनेन दुरपह्नवत्वं सूचितं । न स्यादिति । लिङादिपदरूपकारणाभावादिति भावः । नचेति । पदार्थोपस्थितिबाधाभावमात्रादेव व्यवहारादिति भावः । तदापत्तेः । असंसर्गाग्रहापत्तेः । काव्यादावनुभवसिद्धस्यापि संसर्गानुभवस्यापलापे लिङसमभिव्याहारेऽप्यपलाप एव स्यादिति भावः । नन्विष्टापत्ति रतआह । तथाचेति । ननु प्रथमं कार्यान्वित एव शक्त्यवधारणात् तत्सहकारिकार्यतावाचकपदरूपकारणाभावाद्विध्यसमभिव्याहारस्थलेऽसंसर्गाग्रह एवोपेयते कारणाभावे कार्याभावस्यावश्यकत्वात् विधिसमभिव्याहारस्थले तु बाधकाभावेन शाब्दानुभव एवोपेयते अतएव शब्दप्रामाण्यमपीत्यत आह । किंचैवमिति । एवं । कार्यतावाचकपद-

न्तः। ननु यदि शक्तिग्रहः सहकारि तदा गङ्गापदात्तीरप्रत्ययो नस्यादिति चेन्न। शक्तिर्हि न तत्वेनप्रयोजिका किंतु वृत्तित्वेन

---

समभिव्याहारस्थले शाब्दानुभवस्वीकारे। स्यादिति। तादृशपदसमभिव्याहाराभावादिति भावः। ननु केषांचिदप्रामाण्येपि लिङ्गसमभिव्याहृततत् पदमादायैव शब्दप्रामाण्यं स्यादेवेति तेषामप्रामाण्ये इष्टापत्तिरित्यत आह। तथाचेति। पुराणादीनामप्रामाण्याङ्गीकारे चेत्यर्थः। मिश्रैः।वाचस्पतिमिश्रैः। बुद्धबन्धुरिति। बुद्धैर्न कस्यापि शब्दस्य प्रामाण्यमुपेयते प्राभाकरैस्तु कस्यचिच्छब्दस्य प्रमाणत्वाङ्गीकारान्न तदन्तर्भूतत्वमित्यत उक्तं बन्धुरिति। यथा तैरनुभवसिद्धोप्यनुभवोपलप्यत इति वेदस्याप्रामाण्यमुच्यते तथा पुराणादेरप्रामाण्यं तवेति साम्यं बोध्यम्। एवं वदन्। अनुभवसिद्धेप्यसंसर्गाग्रहमात्रं वदन्। वर्णव्यात्यासः रक इत्यत्र कर इति लिपिसादृश्यं तकारभकारयोर्गौडलिप्या सादृश्येन ताभाऽनयोः सादृश्यं बोध्यं। युक्तमुत्पश्याम इति। अनुभवानुरोधेनैव सर्वकल्पना। तथाच लिङाद्यसमभिव्याहारस्थलेप्यनुभवस्यापलापानर्हत्वेन लाघवेन च घटत्वविशिष्ट एव शक्तिस्वीकरणमुचितमिति भावः। वस्तुतस्त्विति। प्रसक्तधर्ममादायान्वयव्यतिरेकग्रहासम्भवाप्रत्यक्षस्थले कार्यत्वकारणत्वावच्छेदकधर्मग्रहमन्तरा कारणत्वग्रहासम्भवेपि शब्दे अतिप्रसक्त धर्मसामानाधिकरण्येनापि तद्ग्रहः यथा "स्वर्गकामो यजेतेत्यादौ" गङ्गास्नानादितोपि स्वर्गोदयात्स्वर्गत्वावच्छेदेन यागजन्यत्वासम्भवेन वैजात्यस्य च प्रथममनुपस्थितेः स्वर्गत्वयागत्वसामानाधिकरण्येन कार्यकारणभावग्रहः; तथा प्रकृतेपि शब्दे कार्यान्वितज्ञानजनकत्वं गृहीतं नतु कार्यान्वितज्ञानत्वावच्छिन्नं प्रति तच्चेतरपदसमभिव्याहारादेवोपपन्नमिति न कार्यान्विते शक्तिरिति। पदं तावच्चतुर्विधं रूढं यौगिकं यौगिकरूढं योगरूढं च यत्रावयवशक्तिनिरपेक्षेण समुदायशक्तिमात्रेण बोधस्तद्रूढं यथा गोपदं यत्रावयवार्थ एव बुध्यते तद्यौगिकं यथा पाचकादिपदं यत्र यौगिकरूढयर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढं यथोद्भिदादिपदं यौगिकं खनित्रे रूढं यागविशेषे योगरूढं पंकजादिपदं तत्र पंकजपदसमुदायः पद्मत्वविशिष्टे रूढौ नवेति योग-

रूढौ विप्रतिपत्तिः पंकजपदात्पद्मत्वविशिष्टप्रतीतये पद्मत्वविशिष्टे पंकजसमुदायस्य रूढिरावश्यकी पदान्नियतोपस्थितेर्वृत्तिसाध्यत्वात् पंकजपदाद्योगेन कुसुदस्यापि बोध प्रसङ्गाच्च मन्मते कदाचित् कुमुदबोधस्तु लक्षणयैव। ननु रूढिस्वीकारेप्युक्तिपदेन स्थानिचमिव पंकजपदात्कुमुदमपि बोध्येत योगसत्त्वात् अत्र प्राञ्चः यत्र योगरूढिभ्यामेकार्थबोधस्तत्र केवलयौगिकार्थबोधे रूढेः प्रतिबंधकत्वान्न कुसुदबोध इति तन्न मणिकृतः रूढ्या नियमतः स्मृतं पद्ममेव कर्तृरूपव्यक्तिवाचकड प्रत्ययेन पंकजनिकर्तृतयाऽनुभाव्यते "बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात्" व्यक्तिवचनानां किञ्चिद्धर्मान्नितात्पर्यकारणं। सन्निहितः। प्रथमसुपस्थित इत्यर्थः। तथाच पद्मे तात्पर्यसत्त्वेन पंकजनिकर्तृतया तदेव योगेनापि प्रतीयते नतु कुसुदमिति रूढेर्न प्रतिबन्धकत्वं ग्राह्याभावानवगाहित्वात् जनकज्ञानाविरोधित्वाच्च सिद्धेरनुमितिप्रतिबन्धकत्वस्यानापत्त्या स्वीकारेप्यत्र ज्ञानस्य मणिमन्त्रादि न्यायेन प्रतिबन्धकत्वे मानाभावात् इत्थं च पद्मानुभवसामग्री सत्त्वात् पद्मस्यैव बोधो नतु कुसुदस्य सामग्र्यांसत्यां हि फलाभावेन प्रतिबन्धकत्वकल्पनादिति वदंति । अत्रेदं चिंत्यते । पंकजं कुसुदमानयेत्यादौ यत्र पंकजपदस्य पद्मे तात्पर्याभावः कुमुदे च तात्पर्यग्रहः तत्र लक्षणां विनैव कुसुदबोधापत्तेः पद्मानुभवसामग्रीविरहात् पद्मे तात्पर्याभावनिश्चयस्यैव तत्र बाधकत्वेन बाधकं विना व्यक्तिवचनानां संनिहितविशेषपरत्वादिति न्यायस्य तत्रानवतारात् घटेन जलमाहरेत्यत्र सच्छिद्रघटस्य प्रथमोपस्थितत्वादन्वयवारणाय बाधकं विनेत्यस्यावश्यकत्वात् तथाच गृहीतपद्मप्रयोगस्य पद्मान्वयानुपपत्ति पुरःसरैव कुसुदधीरिति न स्यात् कुसुदं पंकजमित्यत्र कुसुदस्यैव प्रथमसंनिहितत्वसम्भवाच्च कुसुदस्य भिन्नपदोपस्थाप्यत्वेपि प्रथमोपस्थितिमात्रस्यैवापेक्षणीयत्वात् अवयवापेक्षया समुदायस्य भिन्नत्वेन पद्मस्यापि भिन्नपदोपस्थाप्यत्वाच्च । अथ कुसुदबोधस्तत्र भ्रान्त्यैवास्तां पंकजपदस्य कुसुदलक्षणेति प्रवादस्तु क्वाचित्काभिप्रायेण यत्र योगरूढिभ्यां पद्मानुभवस्तदनंतरं कुसुदे तात्पर्यज्ञानं तत्र स्वतन्त्रोपस्थितये कुसुदे लक्षणोदयात् परं विशेषो यत्संप्रदायमते सर्वत्र लक्षणा मणिकृन्मते क्वाचित्कीति चेन्न। तत्रापि पंकजनिकर्तृत्वस्य कुसुदे तात्पर्यग्रहकाले पुनः स्मृतपंकजपदेन शक्त्यैव कुसुदोपस्थापनसम्भवात् पद्मे ता-

त्पर्याभावनिश्चयेन कुमुदे तात्पर्यनिश्चयसत्त्वेन च पद्मेऽन्वयासम्भवात् अन्यथा लक्षणानापत्तेरिति। यत्तु शक्त्या कुमुदे नानापदतदर्थानुसन्धानपक्षे वाक्यार्थविधया गुरूपस्थितिकत्वं लक्षणया पंकजनिकर्तृत्वस्य पदार्थतया लघूपस्थितिकत्वमिति तन्न। पंकजन्मकर्तारमानयेत्यादौ वाक्यमात्रे एव लक्षणापत्तेः प्रत्येकशक्त्यैव योग्यतादिबलाद्विशिष्टबोधान्न लक्षणेति चेत्। प्रकृतेऽपि समानं तस्माद्रूढिज्ञानप्रतिबन्धकत्वकल्प एव लक्षणासम्भवः विरोध्यविषयकत्वेऽपि सिद्धेरनुमिताविव रूढिज्ञानस्य प्रतिबन्धकत्वमिति स्मृतपद्मान्वयानुपपत्त्यनन्तरं कुमुदधीरिति लक्षणाव्यवहारो वस्तुतो मुख्यतयैवेति तु मणिकृन्मते गतिरिति। ननु पंकजपदस्य पद्मे लक्षणैवास्तां वाक्ये शक्त्यभावेऽपि तद्घटके तत्सम्भवात्। न च शक्यलक्ष्यसाधारणैकरूपाभावेनाजहत्स्वार्थायास्तस्या अभावात् युगपद्द्वयविरोधापत्तिरिति वाच्यं। सति तात्पर्ये गङ्गायां घोषमत्स्यौ स्त इत्यत्रैव मणिकृन्मते तस्यादोषत्वादिति चेन्न। शक्ये बाधके सत्येव लक्षणेति मुख्ये बाधकाभावेन लक्षणोपनीतानपेक्षणे कुमुदसाधारणबोधापत्तेः तात्पर्यानुपपत्त्या यष्टीः प्रवेशयेत्यत्रेव लक्षणोपपादनेऽपि पद्मकुमुदयोस्तुल्यत्वापत्तेः लक्ष्यत्वाविशेषात् तथाच पद्मान्वयानुपपत्तिप्रतिसन्धानानन्तरं कुमुदधीरिति सिद्धान्तव्याकोपः एवं धेनुपदमपि योगरूढमेव। ननु पद्मत्वमेव प्रयोगोपाधिरस्त्विति चेन्न पद्मत्वज्ञानं न प्रतिबन्धकं अगृहीतनियतपद्मप्रयोगस्य कुमुदसाधारणबोधदर्शनात् रूढिज्ञानमेव स्वाभाववत्त्वसम्बन्धेन प्रतिबन्धकमिति। नन्वयोग्यतया पद्मत्वमपहाय केवलावयवशक्त्या कुमुदबोधोऽस्तु किं लक्षणया रूढेर्योगप्रतिबन्धकत्वमते तथा सम्भवेऽपि मणिकृन्मते रूढेरप्रतिबन्धकत्वादिति चेन्न। पद्मान्वितत्वेनोपस्थितस्य पंकजनिकर्तृत्वस्याश्रयनिराकाङ्क्षतया स्वतन्त्रोपस्थितये लक्षणाङ्गीकारात् एवं पंकजपदात्स्थलपद्मबोधो लक्षणयैव स्थलपद्मं हि विजातीयमेवेति पद्माकृतिसदृशाकृतौ स्थलपद्मत्वविशिष्टे वा पंकजपदस्य लक्षणा। यदि चानुगतप्रतीत्या तत्रापि पद्मत्वजातिस्तथापि स्वतन्त्रोपस्थितये लक्षणा। अथायोग्यतया योगार्थानन्वयेऽपि योग्यतया रूढ्यर्थः पद्ममेव बुद्ध्यत इति चेन्न। योगार्थगतपद्मत्वेन पद्मस्यैवोपस्थित्या निराकाङ्क्षत्वात् स्वतन्त्रोपस्थितये तदावश्यकत्वात् यद्यपि "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति" न्यायात्समुदायस्य पद्मत्वे लक्षणा नयु-

त्ता तथापि कर्तृवाचकपद एव सा बोध्या। अत्रेदं चिन्त्यं स्थले पंकजमित्यत्र पंकजनिकर्तृत्वस्य पद्मे तात्पर्याभावग्रहे तदनन्वितपद्मत्वस्य साकांक्षत्वमेव यत्र वा प्रथममन्वयस्तत्रापि स्थलपद्मे तात्पर्यग्रहानन्तरं पुनः स्मृत पंकजपदात्स्वतन्त्रोपस्थितिर्लक्षणयैवोपेया एवं त्वशक्त्यै वतदा तदुपस्थितिरास्ताम्। अयोग्यत्वेन योगार्थस्यानन्वयादिति। अपिच "श्येनेनाभिचरन्य जेतेत्यत्र" बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपविध्यर्थे विशेषणांशमपहाय यथाविशेष्यान्वयः तथाऽयोग्यतया विशेषणानन्वयेपि विशेष्यान्वयबोधे बाधकाभावः योगार्थस्यैव विशेष्यत्वे च पंकजं कुसुदमित्यत्र तस्य साकांक्षतया लक्षणानुपपत्तेरितिदिक्। इदं तु बोध्यम् आकाशपदे निरवच्छिन्नैव शक्तिः व्यक्तीनामानन्त्याभावेनानुगमकधर्मानपेक्षणात्। नच वृत्त्युपस्थापितस्यैव शाब्दबोधविषयत्वाच्छब्दाश्रयत्वं ततः कथं भासेतेति। वाच्यं नियमतो यद्धर्मविशिष्टत्वेनोपस्थिते यत्र शक्तिग्रहस्तत्स्मरणजनकसंस्कारस्य तद्धर्मविषयतानियमेन तदुद्बोधकादेव तदंशेप्युद्बोधनियमेनाकाशपदादशक्यस्यापि तस्य भानात् तथाहि शक्तिर्हि एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिरीत्या पदार्थस्मारिका येन रूपेण चोपस्थितयोः पदार्थयोः सम्बन्धज्ञानं तद्रूपावच्छिन्नज्ञानात्सम्बन्धांशे उद्बुद्धसंस्कारसहकृतता तद्रूपावच्छिन्नस्मरणं तत्र च सम्बन्धितावच्छेदकस्यापि जन्यताजनकतावच्छेदककोटिनिवेश आवश्यकः अन्यथा हस्तिपके चैत्रत्वेनोपस्थिते भद्रत्वेन चोपस्थिते हस्तिनि सम्बन्धग्रहे मनुष्यत्वेन हस्तिपकज्ञानाद्गजत्वेन हस्तिस्मरणापत्तेः तथाच यद्धर्मविशिष्टे शक्तिग्रहस्तद्धर्मविशिष्टमेव तत्स्मारयतीत्याकाशमात्रे शक्तावपि शब्दाश्रयत्वस्य स्मृतिसम्भवः वृत्त्युपस्थाप्यत्वस्यैव शाब्दविषयत्वे तन्त्रत्वं नतु स्ववृत्त्युपस्थाप्यत्वस्येति लक्ष्यतावच्छेदकवच्छाब्दबोधविषयत्वमपि। अथैवं गोत्वमपि शक्यं न स्यात् यदि च विशेष्यवृत्त्यैव संस्कारवशाद्विशेषणस्मरणे लक्ष्यतावच्छेदकवन्नियतस्मृतेरनुपपत्तिः रूपान्तरेण शक्तिग्रहे संस्कारविषयत्वाभावात्। किं चान्यसम्बन्धेनाप्यन्यत्र संस्कारोद्बोधे पदात्प्रमुष्टतत्ताकस्मरणानुपपत्तिः अनुभवविषयतत्ताया अपि नियमेन भानसम्भवात् घटशक्तेरेव तदंशेप्युद्बोधकत्वसम्भवात् उद्बोधकान्तरानुसारेण च लक्ष्यतावच्छेदकवन्नियतस्मरणानापत्तेः तस्मात्पदान्नियतोपस्थितिः स्वसम्बन्धः परिशेषा-

वृत्तिरेव पर्यवस्यतीति पदान्नियतोपस्थितिवृत्तिसाध्येति नियमाङ्गीत्वं शक्य मिति विभाव्यते तदा शब्दाश्रयत्वेपि तुल्यमिति चेदास्तां तदपि शक्यं यदि नियमेन तदुपस्थितिः आकाशः शब्दाश्रय इत्यस्य चाकाशपदवाच्य इत्यर्थेनैवोपपन्नत्वान्न पर्यायत्वेपि सह प्रयोगानुपपत्तिः । वस्तुतस्तु कदाचिच्छब्दाश्रयत्वेन कदाचिन्नाष्टद्रव्यातिरिक्तद्रव्यत्वेनाप्युपस्थितेर्न नियता तदुपस्थितिरिति न तच्छक्यं धर्म्यंशोद्बोधकादेव तदंशेप्युद्बोधसम्भवात्तत्स्मृतेः शाब्दबोधस्य चोपपन्नत्वात् यदिच संस्कारस्य कदाचित्तदंशेनोद्बोधस्तदाऽस्तु वा पदादपि निर्विकल्पकं आकाशपदान्निष्प्रकारकमेव स्मरणं शाब्दबोधस्य पदार्थान्तरमादाय सविकल्पक एव आकाशोद्रव्यमित्यत्र भिन्नविभक्त्युपनीतसंख्यामादाय भिन्नप्रकारकोपस्थितिसत्त्वादभेदान्वयो नानुपपन्नइति द्रष्टव्यम् अत्राहुः नियतानुपस्थितावपि विनिगमकाभावान्न तदशक्यं अत्रादिपदवन्नानार्थत्वेनाप्युपपत्तेः एकत्र धर्मिण्यपि प्रवृत्तिनिमित्तद्वये बाधकाभावात् वस्तुतस्तु शब्दाश्रयत्वमेव शक्यतावच्छेदकं लाघवात् घटत्ववद्रूपान्तरेण बोधस्तु शक्तिभ्रमात्कम्बुग्रीवादिमत्त्वेनेव घटस्य अतएवानियतोपस्थितिरपि शक्तिभ्रमात्कम्बुग्रीवादिमत्त्वोपस्थितिवदुपपन्नैवेति न नानार्थत्वमपीति । केचित्तु व्यक्तेरेवानुगतानतिप्रसक्ततया प्रयोजनाभावेन धर्मे न शक्तिकल्पनमित्याहुः । निर्विकल्पकोपस्थिताकाशे आकांक्षादिज्ञानासम्भवेन शाब्दबोधानुपपत्तिः एकस्यैवैकत्वस्योभयपदार्थत्वात्तदविवक्षाया विभक्त्यर्थसंख्यामादाय भिन्नप्रकारकोपस्थित्यभावेनाकाशो द्रव्यमित्यत्राभेदान्वयानुपपत्तिश्चेति । पदान्निर्विकल्पकस्मृति स्वीकारोऽनुचित इत्यन्ये इति दिक् । नन्वियताप्रबन्धेन पदज्ञानेन शाब्दसामान्ये जननीये शक्तिग्रहः सहकारी पामराणां च तदभावान्न शाब्दबोध इति विवेचितं । नचेदं सम्भवति गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरे शक्त्यभावेपि शाब्दबोधोदयादित्याशंकते ॥ नन्विति । तीरइति । तीरे गंगापदस्य शक्त्यभावादिति भावः ।तत्वेन। शक्तित्वेन । प्रयोजिका।ज्ञाता-सती शाब्दबोधोपयोगिनी । किंतु वृत्तित्वेनेति । प्रयोजिकेति । पूर्वेणान्वितं वृत्तित्वं च शक्तिलक्षणान्यतरत्वं ।लक्षणेवेति । शाब्दसामान्ये वृत्तिज्ञानत्वेन हेतुतया गङ्गापदस्य तीरे लक्षणारूपवृत्ति ज्ञानसत्त्वात्तीरे शाब्दबोधो नानुपपन्न इति भावः ।ननु गङ्गायां घोषः प्रतिवसतीति व्यवहारदर्शनाद्गङ्गापदस्य तीरे

कथं न शक्तिरिति चेन्न। लक्षणीयपदार्थानामनन्ततया सर्वत्र शक्तिकल्पने गौरवात् शक्यसम्बन्धरूपा लक्षणा तु क्लृप्तैव एवमेकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया गङ्गापदजन्योपस्थितेः शक्यसम्बन्धरूपलक्षणाजन्यत्वमपि क्लृप्तमेव लक्षणाजन्योपस्थितेः शाब्दबोधानुकूलत्वमात्रं कल्प्यते शक्तिस्वीकारे त्वतिरिक्तधर्मिकल्पनमिति धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायेन तीरे लक्षणैव। अथ शक्तिर्नातिरिक्ता किन्त्वीश्वरेच्छारूपा सा तु क्लृप्ततया तज्जन्योपस्थितेः शाब्दबोधानुकूलत्वमात्रं मयापि कल्प्यते इति न धर्मिकल्पनाया इति न्यायावतारः। नचास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिकेश्वरेच्छाऽक्लृप्तैवेति वाच्यं। गङ्गापदात्तीरबोधोदयेनेश्वरेच्छायास्तादृशाकारत्वावश्यकत्वात्तस्याः सर्वविषयकत्वात्। नच लाक्षणिकं पदं नानुभावकमिति गङ्गापदात्तीरबोधानुदयात्तादृशाकारत्वमक्लृप्तमेवेति वाच्यं। तथासति गङ्गापदस्यानुभावकत्वे तादृशाकारकशक्त्यभावः शक्त्यभावे चाननुभावकत्वमित्यन्योन्याश्रयादिति। अथ तादृशेच्छयेश्वरोच्चरितत्वं शक्तिः सा च न तीर इति तत्र लक्षणैव अतएवापभ्रंशेपि शक्तिभ्रम इति चेन्न। ईश्वरोच्चरितत्वं न तज्जन्यत्वं अपभ्रंशादिसाधारणत्वात् न तत्कण्ठताल्वाद्युच्चरितत्वं आधुनिकचैत्रादिपदे ऽभावात्। द्वादशे हनि पितानामकुर्यादित्यादिना सामान्यतो नामत्वेन तदुच्चारणोपपादनं "नापभ्रंशितवै" इत्यादिनाऽपभ्रंशत्वेन तदुच्चारणस्यापभ्रंशेपि सत्त्वात् वैदिकपदस्यापि लाक्षणिकतया तादृशेच्छयेश्वरोच्चरितत्वसत्त्वाल्लक्ष्येपि शक्तत्वापत्तेश्चेति चेत्। अत्राहुः . अपभ्रंशादपि शाब्दबोधोदयेनास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिकेश्वरेच्छायास्तत्रापि सत्त्वान्न तादृशाकारिकेच्छामात्रं शक्तिः किंतु पदपदार्थसम्बन्धत्वविशेषिता तथाच तस्या नानातीरादिसम्बन्धत्वकल्पने गौरवादिच्छायाः सम्बन्धत्वग्राहकस्य भूरिप्रयोगस्याभावाच्चन गङ्गापदतीरयोः सम्बन्धत्वं किन्तु प्रवाहसामीप्यस्यैवेति तीरे शक्तिरक्लृप्तैवेति । किंच पिधेह्योत्यत्र द्वारोपस्थापकपदानामनन्ततया विशिष्यानुपस्थितेर्यथेतरपदमेवानुभावकं नत्वध्याहृतं पदं तथा घोषपदादेव तीरान्वयबोधोपपत्तेर्न गङ्गापदं तीरानुभावकमिति तथाच गङ्गापदात्तीरबोधो जायतामित्याकारकत्वमप्यसिद्धमेवेति दिक् । लक्षणां निरूपयितुं पृच्छति। अथ केयमिति। शक्यात्। गङ्गापदशक्यात्प्रवाहात्। स-

अस्तिच तीरे गङ्गापदस्यापि वृत्तिर्लक्षणैव अथ केयंलक्षणा-शक्यादशक्योपस्थितिर्लक्षणेत्येके तन्न उपस्थितिहेतुर्हि वृत्तिः नतुसैव। अशक्ये तात्पर्यं लक्षणेत्यपरे तन्न अन्वये तात्पर्यस्य लक्षणात्वापत्तेः किंचतात्पर्यनिर्वाहिकाहि वृत्तिर्नतु तदात्मिकैव शक्तेरपि तत्त्वापत्तेः। उच्यते स्वशक्यसंबंधो

---

शक्यस्य। गङ्गापदाशक्यस्य। तीरस्योपस्थितिर्लक्षणेत्यर्थः। गङ्गापदेन शक्त्या-प्रवाहोपस्थितौ तत्र चान्वयानुपपत्तिप्रतिसंधानानन्तरं गङ्गापदात्पुनः स्मृ-तेन प्रवाहेणैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतयास्वतीरमुपस्थाप्यते त-थाच सैवोपस्थितिर्लक्षणेति भावः। उपस्थितीति। पदज्ञानस्य पदार्थस्मा-रकता एकसम्बन्धिस्मारकमिति रीत्या सच सम्बन्धो वृत्तिरेव नतु तस्या उपस्थितिरूपत्वमित्यर्थः। सैवेति। उपस्थितगङ्गापदतात्पर्यतिरेवे त्यर्थः। अश-क्ये इति। गङ्गायां घोष इत्यत्र गङ्गापदाशक्येतीरे। तात्पर्यं। गंङ्गापदात्तीरबो-धो जायतामितीच्छाविषयत्वं चतीरे तदेव लक्षणेत्यर्थः। शक्ततात्पर्यस्य लक्षणात्ववारणायाशक्तइति। अन्वये इति। घटमानयेत्यादौ घटकर्मत्वयो राधाराधेयत्वरूपसंसर्गे तात्पर्यसत्त्वात्तत्तात्पर्यस्य लक्षणात्वं स्यादित्यर्थः। नचेष्टापत्तिः अन्वयेन शक्तिर्नवा लक्षणेति सिद्धान्तव्याघातात्। नच शक्य स-म्बन्धस्य लक्षणात्व स्वीकारेप्ययंदोष इति वाच्यम्। अन्वये शक्यसम्बन्धस्य स-त्वेपि तस्य तच्छाब्दबोधानुकूललक्षणयास्तत्राभावात् अन्यथा गङ्गापदस्य मुख्यपरत्वेपि शक्यसम्बन्धस्य तीरे सत्त्वाल्लक्षणिकत्वापत्तिरिति लक्षणाया-स्तत्र मूकत्वमेवोपेयमिति तात्पर्यस्य लक्षणात्वे चान्वये तात्पर्यस्य शाब्द-बोधानुकूलत्वं न तत्र तच्छाब्दबोधोपयोगिलक्षणाया दुर्वारत्वादिति ध्येयं नन्वशक्ये पदार्थे तात्पर्यं लक्षणा पदार्थत्वं च पदजन्यप्रतीतिविषयत्वं विष-यता च प्रकारताविशेष्यतान्यतररूपा इत्थं च संसर्गस्य पदार्थत्वाभावादेव न दोष इत्यत आह। किंचेति। तात्पर्येति। वृत्त्या पदार्थोपस्थितौ सत्यां शाब्द बोधे जाते तत्प्रतीतीच्छयोच्चारितत्वरूपतात्पर्यं निर्वाह्यो भवतीति तात्पर्या-तिरिक्तावृत्तिरवश्य मुपेया नहि स्वयमेव स्वनिर्वाहकमिति भावः। ननु वृत्तेः

लक्षणा अस्ति हि गङ्गापदशक्य: प्रवाहविशेष: तत्सम्बन्धस्तीरे इति सा च लक्षणा द्विविधा गौणी शुद्धा च साद्दश्यात्मक: शक्यसम्बन्धो गौणी यथा गौर्वाहीक इति तदन्या शुद्धा यथा

बोधजनकत्वप्रतीतोच्छ्रेयोच्चारितत्व रूपतात्पर्यनिर्वाहो भवतीति तात्पर्यातिरिक्तापत्तिरवश्यमुपेया । नहि स्वयमेवस्व निर्वाहकमितिभावः । ननुवृत्तेः शाब्दबोधनिर्वाहकत्वमेवापेयते नतु तात्पर्यनिर्वाहकत्वमत आह । शक्तेरपीति । तथात्वापत्तेः । तात्पर्यात्मकत्वापत्तेरित्यर्थः । तथासति शक्तिलक्षणयोरभेदापत्तिः यदि च तात्पर्याद्वृत्तिरिति प्रवादात्तच्च पञ्चम्यर्थान्वयानुपपत्त्या तन्निर्वाहकतया शक्तिस्तदतिरिक्ता तदा लक्षणायामपि तुल्यमिति भावः । अत्र यद्यपीश्वरेच्छारूप शक्तेस्तात्पर्यात्मकत्वे इष्टापत्तिरेव । तथापि वक्तृसामान्यतात्पर्यात्मकत्वापत्तिरिति बोध्यम् । स्वशक्येति । स्वं लाक्षणिकं पदं तस्य यच्छक्यं तत्सम्बन्धो लक्षणेत्यर्थः । इदमेवोपपादयति । अस्तिहीति। गङ्गायां घोषइत्यादौ स्वं गङ्गापदं तच्छक्यप्रवाहस्तत्सम्बन्धः संयोगादिरूपस्तीरेस्तीति गङ्गापदस्य तीरे लक्षणेत्यर्थः । गौण्या वृत्त्यन्तरत्वादिमतव्यवच्छेदाय लक्षणायामेव तदन्तर्भावं दर्शयितुं लक्षणां विभजते । साचेति । शक्यसम्बन्धरूपा लक्षणाचेत्यर्थः । तत्र गौणीं लक्षयति । साद्दश्येति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं साद्दश्यं तदात्मकः शक्यसम्बन्धो गौणीत्यर्थः । गौणीमुदाहरति । यथेति । वाहीको वाहीको वाहीकदेशोद्भवः गौर्बलीवर्दइत्यर्थः । अत्र वाहीके गवाभेदस्य बाधाद्गोपदेन गोसद्दशो लक्ष्यते गोसाद्दश्यं च गोगतजाड्यमान्द्यादिकमेव तथा च जडोमन्दश्च वाहीक इति शाब्दबोधः । एवं सिंहो माणवक इत्यत्रापि गौण्या सिंहसद्दशोपस्थितौ सिंहसद्दशाभिन्नो माणवकइत्यन्वयबोधोऽवसेयः । एवं शुद्धां लक्षयति । तदन्येति । तदन्या साद्दश्यान्य शक्यसम्बन्धरूपेत्यर्थः । शुद्धामुदाहरति । यथा आयुरिति । आयुः पदस्यायुर्जनके लक्षणा तत्रायुः पदशक्यसम्बन्धो जनकत्वरूपो ग्राह्यः तथा चायुर्जनकाभिन्नं घृतमित्यन्वयबोधः । ननु शक्यादशक्योपस्थितिर्लक्षणेति प्राचीनमते लाक्षणिकं पदं नानुभावकमिति प्रवादः सङ्गच्छते । स्वजन्योपस्थितिसम्बन्धेन पदस्यानुभावकतया गङ्गापदजन्यतीरोपस्थितेरभावाद्गङ्गापदस्य तीराननुभावकत्वात् किन्तु घोषपदस्यैव तच्छाब्दं प्रति तदन्वयप्रतियोग्युपस्थापकपदत्वेन कारणत्वात् । नच तच्छाब्दं प्रति वृत्त्या तत्पदा-

र्थोपस्थितेर्हेतुत्वात्कथमेतदिति वाच्यं । तदर्थवाचकतत्पदनिरूपितशक्तिज्ञानजन्यतच्छाब्दबोधं प्रति तत्पदनिरूपितशक्तिज्ञानत्वेन हेतुत्वं लक्षणाजन्यशाब्दबोधं प्रति तादृशस्वरूपसत्पदार्थोपस्थितित्वेनैव हेतुत्वं नतूक्तरूपेण हेतुहेतुमद्भाव: शक्यसम्बन्धस्य लक्षणात्वे तु तीरोपस्थितेर्गङ्गापदजन्यत्वादन्वयप्रतियोग्युपस्थापकतयानुभावकत्वं सम्भवत्येवेति तादृशप्रवादविरोध: । अथ मन्यसे गङ्गापदात्स्वशक्यसम्बन्धेन प्रथममेव तीरोपस्थितिस्तव मते तु पुन: शक्यस्मरणात्तत्स्मृतौ गौरवमिति चेन्न । पदस्य स्वशक्यसम्बन्धेनान्वयप्रतियोगिस्मारकत्वस्याक्लृप्तत्वेन तत्कल्पने गौरवात्स्मृतेन प्रवाहेण स्वसम्बन्धितीरस्मृतेरेवौचित्यादिति चेन्नैवम् । गङ्गापदात्तीरानुपस्थितौ प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थोपस्थाप्येपि विभक्त्यर्थान्वयेऽतिप्रसङ्गादननुभवाच्च । प्रकृतितात्पर्यविषयेण स्वार्थान्वयबोधकत्वेपि तथा धूमोस्तीति वाक्यतात्पर्यविषयेण वह्निना धूमपदोत्तरविभक्त्यर्थान्वयापत्ते: । तस्माद्गङ्गापदस्यापि तीरस्मारकत्वमश्यमुपेयम् । एवं च क्लृप्तशक्यसम्बन्ध एव तीरस्मारकत्वेन कल्प्यतें नतु शक्ति: तां विनाप्युपपत्ते: तथा चान्वयप्रतियोग्युपस्थापकत्वाल्लाक्षणिकस्याप्यनुभावकत्वापत्तिरवशिष्टते सापि पदस्यानानुभावकमिति वारणीयेति । वस्तुतस्तु उद्देश्यविधेयभावेन लाक्षणिकं नानुभावकमित्येव तदर्थ: । उद्देश्यविधेयभावेनान्वये शक्तिमत्त्वस्यैव प्रयोजकत्वादतएव लक्ष्यार्थस्य विधेयतया भानाद्विभ्यर्थस्य च विधेयतयैव भानान्न "विधौपर: शब्दार्थ" इति सङ्गच्छते । किञ्च तन्तुसंयोगस्य पटसंयोगहेतुत्वतात्पर्यके तन्तु: पटं करोतीति सर्वलाक्षणिकस्थलेऽन्वयानुभवापलापापत्ते र्लाक्षणिकमप्यनुभावकमिति तादृशप्रवादो ऽकिञ्चित्कर: । यत्तु शक्यादशक्योपस्थितिर्लक्षणेति मते लक्ष्यतावच्छेदके लक्षणा नास्तीति प्रवादव्याघात: । शक्यसम्बन्धस्य लक्षणात्वमते तु शक्यसम्बन्धस्य लक्ष्यतावच्छेदकोभयसाधारणस्यैकस्याभावात्तदुपपत्तेरिति । तन्न । भवन्मतेपि यत्र लक्ष्यतावच्छेदकलक्ष्योभयसाधारण: शक्यसम्बन्धस्तत्रागते: तत्रलक्ष्यमात्रवृत्तितानियामकसम्बन्धेन तस्य लक्षणात्वोपगमे ममापि लक्ष्यमात्रवृत्तिविषयतासम्बन्धेन तथोपस्थितेर्लक्षणात्वोपगमादिति । एतेन लक्ष्यतावच्छेदके लक्षणा नास्तीत्यस्य लक्ष्यतावच्छेदकग्रहे शक्यसम्बन्धरूपलक्षणाग्रहो नापेक्षित इत्यर्थ: । यत्र चोभयसाधारण: शक्यसम्बन्धस्तत्र लक्ष्यवृत्तित्वेनैव तत्सम्बन्धग्रहापेक्षा न-

तु लक्ष्यतावच्छेदकवृत्तित्वेनापि शक्यतावच्छेदकविशिष्टे शक्तिग्रहाच्छक्यतावच्छेदकेपि विशेषणविधया शक्तिज्ञानमपेक्षितमिति परास्तं। लक्ष्यमात्रवृत्तिविषयतासम्बन्धेनोपस्थितेः विशिष्टबोधप्रयोजकत्वस्य ममापि सुवचत्वादिति। इदं चात्रबोध्यं। शक्तिलक्षणाज्ञानयोरेक एव कार्यकारणभाव:। तथाहि शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताकज्ञानत्वेन शाब्दबुद्धिं प्रति कारणत्वं शक्तिसम्बन्धेन शक्यसम्बन्धेन वा पदप्रकारकज्ञाने शक्ते: संसर्गत्वाच्छक्तित्वनिष्ठावच्छेदकतायां पर्याप्ति: परं न निवेश्यते तेन शक्यसम्बन्धेन पदप्रकारतानिरूपिता शक्तिनिष्ठा सांसर्गिकविषयता नार्थविशेष्यतानिरूपिता तेन शक्ति सम्बन्धेन पदाभावप्रकारकबाधबुद्धिप्रतिबध्यत्वं न लक्षणाज्ञानस्येति बोध्यं। शक्यसम्बन्धश्चाविनाभावइति प्राञ्च:। तन्न मञ्चा: क्रोशंतीत्यत्राभावात्। तत्रापि यत्समयमादायाविनाभावोपपादनेपि किमतेन शक्यसम्बन्धमात्रस्यैव लक्षणात्वौचित्यात्। विनाभूतबोधश्च तात्पर्यज्ञानाभावेनैव वारणीय:। अनेकाविनाभूतसत्त्वेप्येकतरभानं तात्पर्यज्ञानबलादेवेति भवतापि वाच्यत्वात्। मण्डपं भोजयेत्यादौ रूढि पूर्विका लक्षणेति मीमांसका: मण्डपपदस्य गृहविशेषे रूढिर्मण्डपानकर्त्तरिच योगरूढि: समुदाय शक्तिर्योगोऽवयवशक्तिस्तत्र रूढेर्योगापहारितेति प्रवादादवयवशक्त्या मण्डपानकर्तुर्बोधासम्भवेन मण्डपपदस्य मण्डपानकर्त्तरि लक्षणा। इत्थंच रूढ्यर्थगृहसम्बन्धितावच्छेदकतया गृहीतचैत्रत्वेन कर्त्तुर्बोधो नतु मण्डपानकत्वेनेति। पङ्कजमित्यादौ तु पद्मस्य रूढ्यर्थस्य पङ्कजनिकर्त्तुश्च योगार्थस्याविरोधादवयवशक्त्यैव पङ्कजनिकर्त्तुर्बोध:। ननु शक्यार्थपरत्वे सम्भवति लक्षणाकल्पनमन्याय्यं। नच रूढेर्योगोपहारान्न तथेति वाच्यं। कोयमपहार: न तावद्यौगिकार्थास्मृति: रूढ्यर्थइव यौगिकेपि स्मारकसम्बन्धस्य शक्तेस्तुल्यत्वात्। नच योगार्थस्य प्रथममस्मृति: सइति वाच्यं। मण्डपसमुदायेन यदा स्वार्थस्मरणं तदावयवार्थस्मरणे बाधकाभावात्। लक्षणापक्षेपि रूढ्यर्थेन यदा स्वसम्बन्धिस्मरणं तदा पदार्थस्मरणसम्भवेन यौगिकार्थान्वयबोधसम्भवाच्च। नच स्मृतस्याप्यवयवार्थस्यान्वयबोधबहिर्भूतत्वमेव स इति वाच्यम्। अयोग्यतया रूढ्यर्थस्यान्वयबोधाभावेपि यौगिकार्थबोधे बाधकाभावात्। अथ मण्डपपदस्य सत्यत्रियोगे प्रयोगप्राचुर्याभावादव-

यवशब्दः कुण्ठनं कल्पयते अन्यथाऽनेकार्थात्वादिपदादिव मण्डपानकर्तृत्वग-
मोपि कदाचित्स्यादिति चेन्न । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा-
वाजिभ्यो वाजिन" मित्यत्र वाजमन्नमामिक्षारूपं येषामिति योगाद्वाजिपदेन
विश्वेदेवा उच्यन्ते न तु रूढ्या अश्वाइति सिद्धान्तस्तव न स्यात् नह्यत्र विश्वदे-
वेषु वाजिपदप्रयोगप्राचुर्यमस्ति मण्डपानकर्त्तरि कदाचिदपि मण्डपपदस्य
योगेन प्रयोगो नास्तीति तु तवैवाभिमान इतिचेत् । मैवं । मण्डपपदाद्यदा गृ-
हविशेषस्मृतिस्तदैव मण्डाद्यर्थोपस्थितिस्तदुत्तरं पिबत्यर्थस्य तदनन्तरं प्रत्य-
यार्थस्य ततो मण्डपानकर्तृत्वेन ज्ञानस्येति यौगिकार्थस्मृतिविलयात् तदेव
रूढ्यौगिकयोर्बलाबलं शीघ्रं वितथीकृतमेव तथाच रूढ्यर्थस्य शीघ्रमुपस्थित
त्वाद्बलवत्त्वस्यौत्सर्गिकत्वं यत्र तु यौगिकार्थस्य प्रकरणवशात्प्रथमसुपस्थिति-
स्तत्र रूढेर्योग एव बलीयान् यथाच रूढ्यर्थस्य शीघ्रमुपस्थितत्वाद्बलवत्त्वस्यौ-
"त्वमग्निर्वसुभिः सोमोरुद्रैरिन्द्रो मरुद्भिर्वरुणआदित्यैर्बृहस्पतिर्विश्वेदेवै"रित्यत्र
प्रकरणवशाद्वसुरुद्रमरुदादित्यरूपसर्वदेवानामेव विश्वेदेवपदेन स्मृतिः
ननु रूढ्या पुरूरवो माद्रवः प्रभृतिगणानामुपस्थितिः एवं "तप्ते पयसि दध्या-
नयति सा वैश्वदेव्यामिक्षावाजिभ्यो वाजिन" मित्यत्र वाजमन्नमामिक्षारूपं
येषां ते वाजिन इति योगाद्वाजिनेपि विश्वेदेवदेवताकत्वं प्रकरणेनोपस्थित-
त्वात् । ननु वाजिपदाद्रूढ्याश्वानामुपस्थितिरिति नामिक्षाधिकरणसिद्धान्तवि-
रोधः । नच रूढेर्योगाद्बलीयस्त्वेन रूढ्यर्थधीरेव स्यादिति वाच्यं । रूढ्यर्थयो-
गार्थयोरुपस्थितावनुपस्थितौ वा रूढेर्बलीयस्त्वं प्रकृतेतु प्रकरणवशेन योगा
र्थस्यैव स्मरणान्नतु रूढार्थप्रकरणेनोद्बुद्ध संस्कारस्यैव शब्दादुद्बोध इति शब्दे
न प्रकरणसंवलितेन योगार्थस्मृतिरेव जन्यते नतु रूढ्यर्थस्मृतिरिति । नचैवं-
मण्डपादावपि योगार्थस्यैव प्रथमं स्मृतिसम्भवेन न लक्षणेति वाच्यम् । अत्र
प्रकरणादेरभावाद्रूढ्यर्थस्यैव प्रथमं स्मृतिरिति रूढिपूर्विका लक्षणा यत्र च
योगार्थे प्रकारणाद्यवतारः तत्र योगार्थस्यैव बलवत्त्वान्न लक्षणा । यद्यपि पद-
ज्ञानमेवो द्बोधकं न प्रकरणादिकं तथाप्येकतरप्रकरणमपरस्मृतिप्रतिबन्धक-
मवसेयमितिवदंति । तत्र रूढ्यर्थान्वयबोधो वा तत्स्मृतिर्वा यौगिकार्थान्वय-
बोधे प्रतिबन्धिका । नतावदाद्यः रूढ्यर्थस्य प्रथमसुपस्थितत्वेपि तस्यायोग्य-
तया यौगिकार्थान्वये बाधकाभावात् नद्वितीयः प्रकरणादेव यत्र यौगिका-

र्थान्वयबोधस्तत्र रूढ्यर्थस्मृतेरभावात् तस्याः प्रतिबन्धकत्वोपपत्तावपि तस्या यौगिकार्थस्मृतौ तदन्वयबोधे वा प्रतिबन्धकत्वे मानाभावात् साक्षादविरोधिनो ज्ञानस्य जनकज्ञानविघटकत्वेनैव प्रतिबन्धकत्वात् अनुमितौ तु सिद्धेरगत्या फलबलेन तथात्वकल्पनात् तस्माद्यत्र मण्डपपदस्य गृहपरत्वं तत्र मण्डपानकर्तृत्वरूपयोगार्थस्यायोग्यतया नान्वयबोधो न तु रूढ्यर्थस्मृतिस्तत्र प्रतिबन्धिका योग्यत्वरूपकारणविरहेण च तदबोधोपपत्तेः यत्र तु रूढ्यर्थस्या योग्यता तत्र योग्यतया योगेन यौगिकार्थबोधो भवत्येव रूढेर्योगापहारप्रवादस्तु योग्यत्वात् रूढ्यर्थस्यान्वयबोधो न तु यौगिकार्थस्य अयोग्यत्वादित्येतत्परो न तु योग्यतादिसत्त्वेऽपि यौगिकार्थस्य नान्वयबोध इत्येतत्परः यत्र च रूढ्यर्थग्रहः सम्बन्धिचैत्रे चैत्रत्वादिना तात्पर्यं प्रमाणान्तरादवधार्यते तत्र रूढिपूर्विका लक्षणा न तु सर्वत्रेत्यवधेयम्। लक्षित लक्षणापि वृत्त्यन्तरमिति प्राञ्चः। द्विरेफपदेन द्वौरेफौ यत्रेति व्युत्पत्त्या भ्रमरपदं लक्ष्यते भ्रमरपदेन स्वशक्यसम्बन्धीभ्रमररूपोर्थो लक्ष्यते इति द्विरेफपदस्य भ्रमरे लक्षितलक्षणा। नच द्विरेफपदलक्ष्यभ्रमरपदस्य शक्त्यैव निर्वाहे अलं भ्रमरे लक्षणयेति वाच्यं। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन भ्रमरस्य द्विरेफपदार्थत्वाभावेन तत्र विभक्त्यर्थानन्वयापत्तेः। सम्मते च लक्षित लक्षणा द्विरेफपदस्यैववृत्तित्वेन भ्रमरस्य द्विरेफपदार्थत्वादिति। नच शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति भ्रमरपदस्य शक्यतावच्छेदकभ्रमरत्वस्य कथं लक्ष्यतावच्छेदकत्वं शक्त्यैव तद्बोध सम्भवादिति वाच्यं। शक्येन रूपेण लक्षणानङ्गीकारे शक्त्यैव तद्बोधसम्भवेन लक्षणाकल्पनमफलमित्यस्यैव तद्बीजतया प्रकृते च शक्त्या भ्रमरत्वविशिष्टस्य बोधस्वीकारेण भ्रमरस्य द्विरेफपदार्थत्वाभावेन विभक्त्यर्थान्वयानुपपत्त्या शक्यस्यापि लक्षणयैव भानमुपेयते एतन्मते लक्षितस्य पदस्य लक्षणा लक्षितलक्षणा साच द्विरेफपदस्य वृत्तिरिति तत्र शक्यसम्बन्धो हि लक्षणा न तु शक्यस्य साक्षात्सम्बन्धः गौरवात् एवं च परंपरासम्बन्धेन लक्षणैव लक्षितलक्षणा स्वलक्ष्यपदघटितलक्षणा सेति तु यावत् तथाच परंपरासम्बन्धेन लक्षणाया एव तथात्वेन द्विरेफपदस्य स्वलक्ष्य भ्रमरपदघटितपरंपरासम्बन्धेन भ्रमररूपार्थोपस्थापकत्वसम्भवात् द्विरेफपदलक्षणयैवोपपत्तेर्नातिरिक्तवृत्तिकल्पनेति दिक्। सा च लक्षणा क्वचिज्जहत्स्वार्था क्वचिदजहत्स्वार्था च आद्या गङ्गायां घोषइत्यादौ स्वार्थस्य प्रवाहस्य त्यागात्तीरे-

घोषइत्येवबोधात् यदि च गङ्गासम्बन्धितीरत्वेन बोधः तदा त्वजहत्स्वार्थैव अ-न्याच काकेभ्यो दधिरच्यतां छत्रिणो यांतीत्यादौ दध्युपघातकत्वेन काककुक्कु-टादीनामेकसार्थवाहित्वेन छत्रिछत्रीतराणां बोधात् एवंमञ्चाः क्रोशंति यष्टीः प्रवेशयेत्यादौ मञ्चपदस्य मञ्चस्थपुरुषे यष्टि पदस्य यष्टिधरे लक्षणा जहत्स्वार्थैव स्वार्थपरित्यागेन परार्थलक्षणा जहत्स्वार्थास्वार्थाऽ परित्यागेन परार्थ लक्षणा-जहत्स्वार्थेति तल्लक्षणात्। ननु छत्रिणो यान्तीत्यादौ छत्रिशब्दस्य वाक्यत्वा-त्तत्र न लक्षणा नापि छत्रपदे छत्रपदार्थत्यागेनाजहत्स्वार्थत्वायोगात् किञ्चा-त्र लक्ष्यतावच्छेदकं नैकसार्थवाहित्वं यान्तीत्यस्यानन्वयापत्तेः गन्तृत्वेनोप-स्थितस्य गमनाकाङ्क्षाविरहादिति। अत्राहुः। छत्रपदएव एकसार्थे लक्षणा म-तुबर्थश्च सम्बन्धी तथाचैकसार्थवन्तो यान्तीति वाक्यार्थबोधः। छत्रिवाक्यार्थ-बोधः छत्रिवाक्यलक्षणाभिप्रायेणाजहत्स्वार्थकः। अर्थपदस्य प्रतिपाद्यपर त्वाभिप्रायेणवा। केचित्तु एकसार्थवाहित्वेन छत्रस्याप्यन्वयात्तथात्वम्। अत-एव शक्यलक्ष्यसाधारणमप्युपपद्यत इत्याहुः। अपरेतु प्रकृतावेव एकसार्थ-वति लक्षणा प्रत्ययश्च तात्पर्यग्राहकः। अथवा सम्बन्धिसामान्ये शक्तमतुप्रत्यये-एकसार्थसम्बन्धित्वेन लक्षणा छत्रपदं तात्पर्यग्राहकमित्याहुः। अत्र लक्ष्यसम्ब-न्धस्यैव लक्ष्यतावच्छेदकत्वं यथा दध्युपघातकत्वैकसार्थवाहित्वादीति बोध्यम्। एवं पदानां स्वपरत्वे लक्षणैव न शक्तिः अन्यलभ्यत्वात्। केचित्तु पदानामौ-त्सर्गिकमर्थपरत्वं तदभावे स्वपरत्वं तथाच प्रत्यक्षेण पदजन्योपस्थितिसत्त्वा-च्छाब्दे तद् भानमित्याहुः। तच्च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व-नियमेन तत्र विभक्त्यर्थान्वयानुप पत्तेः वृत्तिस्वीकारस्यावश्यकत्वात् अत एव पदस्य स्वबोधकत्वं वृत्तिं विनैव स्व भावात् अन्यं न हि अन्य बोधने ऽति प्रसङ्गात् वृत्तिः कल्प्या स्वस्य स्वबोधकत्वे तु नैवमित्यादिपदस्य स्वार्थान्व-यानुपपत्तेः सहकारित्वाच्च न सर्वत्र स्वबोधप्रसङ्गः एवं स्वबोधिते स्वस्मिन्वि-भक्त्यर्थान्वयोपीति निरस्तं। प्रत्ययानामिति व्युत्पत्तिभङ्ग प्रसङ्गात्। नचै-वं निरर्थकजबगडदशमाहेत्यादौ स्वशक्त्यभावात् लक्षणानुपपत्तिरिति वा-च्यं। प्रत्येकवर्णेषु इन्द्रोत्तरश्रूयमाणक्रियापदार्थान्वयात्समुदायस्योच्चारणा-सम्भवेन तत्र तदनन्वयात्। तेषां च शक्तत्वेन तत्रैव लक्षणोपगमादिति। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तुतद्वती" त्यादौ कोशस्योभयत्र शक्तिबोधक-त्वेपि नीलादिपदानां धर्मे शक्तिः धर्मिणि लक्षणा तत्परशब्दे तु मात्सर्ये धर्मे

आयुक्तमिति । ननु यद्येते एव वृत्ती कथं तर्हि राजपुरुष इत्यादौ षष्ठ्यर्थलाभः नहि राजपदं सम्बन्धे शक्तम् । अथ सम्बन्धोऽन्वयविधया भासते नीलो घट इत्यत्राभेदवदिति चेन्न । राजपुरु

---

धर्मिणि च शक्तिरिति सम्प्रदायः नीलादिपदवत् मात्सर्ये धर्मे शक्तिः धर्मिणि लक्षणा । नच तत्परशब्दस्य धर्मे धर्मिणि तुल्यं चत प्रयोगात् उभयत्र शक्तिरिति वाच्यं । नीलादिपदस्यापि गुणिनि प्रयोगप्राचुर्याद्धर्मिणि लक्षणयैवोपपत्तौ न तत्र शक्तिरिति तु मत्सरशब्देपि धर्मे शक्तिः धर्मिणि लक्षणैवेत्यन्ये । अत्र सुब्विभक्तौ न लक्षणा सर्वनाम्नि न लक्षणा वादिवाक्ये न लक्षणा विधौन लक्षणा विधेयार्थे न लक्षणा विधेयता शालिशाब्दबोधत्वं शक्तिज्ञानकार्यतावच्छेदकं लक्षणया शाब्दबोधस्तु न विधेयता शालीति न व्यभिचार इति विधेयतया लक्ष्यार्थबोधो नास्तीति प्रवादबीजं लाक्षणिकं पदंनानुभावकमिति प्रवादस्योद्देश्यविधेयभावेनान्वयोनास्तीत्यर्थः एवंविशिष्टवाचकानां पदानां विशेष्यमात्रपरत्वे न लक्षणा शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा लक्ष्यतावच्छेदके न लक्षणेति प्रवादाअनुसन्धेयाः । केचित्तु लक्ष्यतावच्छेदके लक्षणायाकल्पने गोत्वेपि शक्तिविलोपप्रसङ्गः इत्युपस्थापितस्यैव शाब्दबोधविषयत्वात् गोत्वे शक्तिकल्पने लक्ष्यतावच्छेदकेपि तथा । अथ तीरत्वे नोपस्थितिं विना तीरत्वं गङ्गापदसम्बन्धीति सम्बन्धग्रहाभावात्तत्र न लक्षणेति चेन्न । घटोनेत्यादौ यथा प्रतियोगितावच्छेदकत्वं संसर्गमर्यादया भासते तथा गङ्गायास्तीरमित्यत्र तीरत्वे सामीप्यावच्छेदकत्वं सम्बन्धो भासते सम्बन्धग्रहेच यादृशं यस्य भानं तथा घटत्वे तस्यैव स्मरणं तथा च लक्ष्यतावच्छेदकेपि परंपरासम्बन्धात्मिकालक्षणैवेति प्राहुः । राजपुरुष इत्यादौ शक्त्यालक्षणया वा राजसम्बन्धिपुरुषबोधानुपपत्ते रित्यतिरिक्ता वृत्तिरवश्याभ्युपेया तथा च कथं शक्तिलक्षणे एव वृतीत्युक्तमित्यभिप्रायवान् शंकते । नन्विति । एते एव । शक्ति लक्षणेएव । एवकारेण वृत्त्यन्तरव्यवच्छेदः । षष्ठ्यर्थेति । तत्र षष्ठ्याः लुप्तत्वेन राजपदादेश्चसम्बन्धे शक्त्याद्यसंभवात् कथं सम्बन्धलाभइत्यर्थः । तदेवाह । नहीति । ननु प्रकारतया विशेष्यतया वा बोधे वृत्तेरपेक्षा न तु संसर्गमर्यादया भाने तथा च घटमानयेत्यादौ घटक-

ष इत्यत्रापि तद्वापत्तेः । अथ नामार्थयोरभेदेनैवान्वयो न त्व-न्यथा तथैव व्युत्पत्तेः । राज्ञः पुरुष इत्यत्र न नामार्थयोरन्व-यः किन्तु विभक्त्यर्थनामार्थयोरिति चेत् । तर्हि राजपुरुष इ-

---

मत्वयोराधेयत्त्वरूपं संसर्गवद्राजपुरुषइत्यत्रापिस्वस्वामिभावरूपं सम्बन्धभा-नं वृत्तिं विनैव स्यादित्याशंकते । अथेति । नीलइति । नीलपदस्य निरूढल-क्षणया नीलविशिष्टमर्थः तस्यचाभेद संसर्गेण घटे ऽन्वयइत्यर्थः तथा च य-थानीलघटयोरभेदः संसर्गमर्यादया भासते तथा षष्ठीतत्पुरुषेपि सेव्यसेवक भावलक्षणः सम्बन्धः संबधविधयैव भासते इति भावः । तद्दोषेति । ष-ष्ठ्यर्थ सम्बन्धि भानापत्तेरित्यर्थः । राजपुरुष इत्यत्रैवात्रापि सम्बन्ध विधया भानाय राजसम्बन्धी पुरुषइत्यन्वयबोधापत्तेरितिभावः । ननु घटः कर्मत्व-मानयनं कृतिरित्यत्र घटमानयेत्यत्रेवाधेयतासंबंधेन कर्मत्वे घटान्वयबोधा-पत्त्या घटकर्मकानयनानुकूलकृतिमानित्यन्वयबोधापत्तेः नामार्थयोरभेदाति-रिक्त संबंधेनान्वयो न स्वीक्रियत इति व्युत्पत्तिरवश्यमुपेया एवं च रा-जापुरुष इत्यत्र कथमभेदातिरिक्त सम्बन्धे नान्वयबोधमापादयतीत्याशंक-ते । अथेति । अभेदेनैवेत्येवकारेणाभेदातिरिक्त सम्बन्धव्यवच्छेदः । एव कारा-र्थं स्पष्टयति । नत्वन्यथेति । नत्वन्यथा । नत्वभेदातिरिक्त सम्बन्धइत्येव्यवच्छे-दः एवकारार्थं स्पष्टयति । नत्वन्यथेति । नेत्यर्थः । नन्वेवं नियमे मानाभाव इत्यतआह । तथैवेति । अन्यथा घटः कर्मत्वमानयनं कृतिरित्यत्राप्याधेयतां सम्बन्धे न घटोयाकर्मतेत्यन्वयबोधापत्ते रिति भावः । ननु राज्ञः पुरुष इ-त्यत्र राजपुरुषयोरभेदातिरिक्तसम्बन्धे नैवान्वयबोधोदयात्ताद्दशनियम इत्य-तआह । राज्ञइति । नामार्थयोरिव नतथा न्वयः राज्ञपुरुष इत्यत्रषष्ठ्यर्थस्य नामार्थत्वाभावेनाभेदातिरिक्तसम्बन्धे नाप्यन्वयबोधोऽनुपपन्नइत्यर्थः । विभ-क्त्यर्थेति । षष्ठ्यर्थ सम्बन्धनामार्थपुरुष योरित्यर्थः षष्ठ्यास्तु न नामत्वं स्वाद्य न्तमिह नामेष्टमित्यभियुक्त विरुद्धत्वादिति भावः । ननु राज्ञः पुरुष इत्यत्र सेव्यसे वकभावलक्षणसम्बन्धप्रकारकइव सेव्यसेवकभावलक्षणसम्बन्धेन राजप्रका-कपुरुषविशेष्यकोप्यन्वयबोधो भवति यथा घटमानयेत्यत्र कर्मतासम्बन्धे नानयनोपरि घटोप्यन्वेतीति सिद्धान्तात् तथाचैतन्नियमभङ्ग इति चेन्न । त

तथच कथं तयोस्तथान्वय इति स्वयमेव विभावय। अथ सम्बन्धे लक्षणैवेतिचेन्न। तथापि राजसम्बन्धः: पुरुष इति तदन्वयः स्यादिति तद्दोषतादवस्थ्यात्। अथ राजपुरुषात्मकसमुदाय एव राजसम्बन्धिपुरुषरूपलक्षणेति चेन्न। शक्तिविरहे लक्षणायां अयोगात्। शक्यसम्बन्धो हि लक्षणेत्युक्तम्। उच्यते राजपदं राजसम्बन्धि लक्षकं तथाचाभेदेनैव पदार्थद्वयान्वयः। नचैवं कर्मधारयापत्तिः समासपूर्वदशायां पदयोस्तु-

स्यैकदेशिमतत्वात् तन्मतं तु नामार्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयबोधो न स्वीक्रियत इति नियमात् विभक्त्यर्थमद्वारीकृत्याभेदातिरिक्त सम्बन्धेन नान्वय इति यावत् प्रकृते च सम्बन्धस्य विभक्त्यर्थत्वात् तद्द्वारा अन्वबोधोपगमेपि क्षतिविरहादिति ध्येयं। तर्हीति। तादृशनियममभ्युपेत्यराजापुरुष इत्यत्र तथावारणेच्छीत्यर्थ:। तयो:। राजपुरुषयोस्तथान्वय:। अभेदातिरिक्त सम्बन्धेनान्वय:। विभावनीयेति। तादृशनियमानभ्युपगमे राजापुरुष इत्यत्रैव तथान्वयबोधापत्तिः अभ्युपगमे तु अत्रापि न तथास्यादित्यर्थ:। ननु राज पदस्य राज सम्बन्धे लक्षणे वास्तु राजा पुरुषइत्यत्रत्वभेदे एव तात्पर्येण न सम्बन्धे लक्षणेत्याशंकते। अथेति। तथापीति। राजपदस्य राज सम्बन्ध लक्षकत्वेपीत्यर्थ:। इति वदिति। इति वाक्य वदित्यर्थ:। नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नतया राजपदार्थस्य राजसम्बन्धस्याश्रयाश्रयिभावेन पुरुषे ऽन्वयासंभव इति भाव:। तद्दोषेति। एकसम्बन्धी पुरुष इत्यन्वयानुपपत्तिरूपदोषतादवस्थ्यादित्यर्थ:। ननु राजपदस्य राजसम्बन्ध लक्षकतासंभवेपि राजपुरुष इति वाक्यमेव राजसम्बन्धिपुरुष लक्षकमस्त्वित्याशंकते। अथेति। समुदायएव। राजपुरुष इति वाक्यएव। शक्तिविरहे। वाक्ये कुत्रापिशक्तिविरहे। लक्षणायाः। वाक्ये लक्षणायाः। अयोगादित्यर्थ:। ननुगङ्गापदस्यतीरेशक्त्यभावेपि यथातीरेलक्षणा तथावाक्ये कुत्रचिदप्यर्थे शक्त्यभावेपिलक्षणस्यादत आह। शक्येति। तथाच लक्षणायाः शक्तिघटितत्वात्तदभावे तदनुपपत्तिः तीरे गङ्गापदशक्त्यभावेपि गङ्गापदशक्यसम्बन्धसत्त्वात् तत्र लक्षणोपपत्तिः अत्र वाक्ये कुत्राप्यर्थे शक्त्यभावाल्लक्षणानुपपत्तेरिति भाव:। सम्बन्धीति।

त्यार्थत्वाभावात्। अन्येतु लुप्ता षष्ठ्येव सम्बन्धं बोधयति षष्ठी लोपमजानतस्तु तदन्वयबोधशक्तिभ्रमात् राजपदलक्ष-

---

राजसम्बन्धि लक्षकमित्यर्थः। क्वचित्तथैवपाठः। ननु नामार्थयोरन्वयबोधो न स्वीक्रियत इति कथं पुरुषपदार्थे तदन्वय इत्यतआह। तथाचेति। राजपदस्य सम्बन्धि लक्षकत्वेचेत्यर्थः। अभेदेनैवेति। अन्वयः। राजसम्बन्धि पुरुषयोरन्वयबोधः। नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयो न स्वीक्रियते नत्वभेदेनापि तदस्वीकार इति भावः। न चैवमिति। षष्ठी तत्पुरुषेपि विशेषणविशेष्यवाचकपदार्थयोरभेदान्वयस्वीकार इत्यर्थः। अभेदे कर्मधारय इत्यनेनाभेदबोधस्थले कर्मधारयविधानादिति भावः। समाधत्ते।समासेति। लक्षणाहि वाक्यार्थान्वयानुपपत्त्या स्वीक्रियते समासपूर्वं तु न राजपदादौ लक्षणा अनुपपत्तेरभावात् तथा च समासपूर्वं विशेषणविशेष्यवाचकपदयोः समानार्थकयोर्यत्राभेदान्वयबोधकत्वं तत्रैव कर्मधारय इति भावः। पदयोः। राजपुरुषपदयोः। तुल्येति। एकविशेष्यकबोधजनकत्वाभावादित्यर्थः। पदे तुल्याधिकरणे विज्ञेयः। कर्मधारयइत्यनुशासनादिति भावः। ननु राज्ञः पुरुषइत्यत्र सम्बन्धप्रकारकोबोधः राजपुरुषइत्यत्र सम्बन्धिप्रकारकइति विग्रहवाक्यसमासवाक्ययोः समानार्थकत्वभङ्गापत्तिः समानार्थकसमासारंभकवाक्यस्यैव विग्रहवाक्यत्वादिति राजसम्बधी पुरुषइत्येव विग्रहवाक्यं वाच्यमिति कर्मधारयत्वापत्तौ तत्पुरुषोच्छेदः। नच शक्त्याभेदप्रतियोग्युपस्थापने कर्मधारय इति वाच्यं। नोलोत्पलमित्यादौ नीलपदस्य नीलविशिष्टे शक्तिविरहेण कर्मधारयत्वाभावापत्तेः तस्माद्राजपदस्य राजसम्बधे एव लक्षणा स्वीकर्तुमुचिता। न च राजसम्बधी पुरुषइति वत् अनन्वयापत्तिरत्रैव नामार्थयोरिति व्युत्पत्तेरिति वाच्यं। घटोनेत्यादौ नामार्थयोरन्वयस्य दृष्टत्वान्निपातातिरिक्तस्थलएव तादृशनियमाभ्युपगमे च समासातिरिक्तस्थलएव मयापि तादृशनियमाभ्युपगमात्। नचैवं राजसम्बधे लक्षणा वैयर्थ्यमिति वाच्यं। व्याससमासयोः समानप्रकारकबोधजनकत्वरूपसमानार्थकत्वरक्षणायैव लक्षणाया उपगमात् सम्बन्धप्रकारकबोधस्यानुभवसिद्धत्वाच्चेति। मैवं समानविषयकबोधजनकत्वमित्येव हि समानार्थकत्वं नतु समानप्रकारकबोधजनकत्वं तत् आरुढवानरोवृक्ष इत्यत्र आरुढवानरोयमिति विग्रहात्

यथा वेति स्त्रीत्वतुः। वैयाकरणास्तु समासस्थलेशब्दसमुदायस्य विशिष्टार्थे शक्तिरेव। नचैवं राजपदशक्तिमविदुषोपि राजपुरुषादिपदादन्वयप्रत्ययः स्यादिति वाच्यं। समस्तश-

यत्कर्मकारोहणकर्ता वानर इति बोधेन समासाच्च वानरकर्तृकारोहणकर्म वृक्षइति बोधेन भिन्नप्रकारकबोधस्यैवोदयेन व्यभिचारात् एवं प्राप्तोदकोग्राम इत्यादावपि तत्र प्राप्तमुदकंयं इति विग्रहात्। अथ बहुव्रीहेरविग्रहतया नास्य विग्रहवाक्यत्वं चित्रगुरित्यत्र चित्रागौर्यस्येति समासार्थकथनं नतु विग्रहः समस्यमानपदैरेवार्थकथनस्य विग्रहत्वादितिचेन्न। नहि तत्र विग्रहएव नास्तीति समासारम्भकवाक्यस्यैव विग्रहत्वात् किन्तु बहुव्रीहौ तस्यासाधुत्वं समस्यमान पदैरेव विग्रहस्य साधुत्वात् अतएव बहुव्रीहौ विग्रहस्यासाधुत्वज्ञापनाय तत्र नित्यसमासत्वाभिधानम् अतएव चाविग्रहोऽस्वपदविग्रहोवा नित्यसमासइति तल्लक्षणम्। अथ समस्य मानपदैरेवार्थकथनरूपविग्रहस्य साधुविग्रहस्य वा व्याससमासयोः समानार्थकत्वनियमे प्रवेशान्नोक्तस्थले व्यभिचार इति चेन्न। अप्रयोजकत्वात्। वस्तुतस्तु नामार्थयोरभेदेनैव व्युत्पत्तेः संकोचे मानाभावात्सम्बन्धिनि लक्षणाया आवश्यकत्वे समानविषयबोधजनकत्वमित्येव कल्पनात् नतु समानप्रकारकबोधजनकत्वरूपं समानार्थकत्वमितिदिक्। षष्ठ्येवेति। स्मृतासतीति शेषः एवंच षष्ठ्याएव सम्बन्धोर्थः आश्रयाश्रयिभावेन पुरुषे भासते नामार्थयोरेव चाभेदातिरिक्तसम्बन्धेनान्वयबोधनिषेधादिति भावः। ननु यस्य न षष्ठीलोपज्ञानं तस्य लुप्तषष्ठीस्मरणासम्भवेनान्वयबोधानुपपत्तिरित्यत आह। षष्ठीलोपमिति। अजानतस्तु। अननुभवतस्तु। शक्तिभ्रमात् राजपुरुष इति समुदायस्य राजसम्बन्धिनि पुरुषे शक्तिभ्रमात्। नतुराजपदस्य शक्तिभ्रमादित्यर्थः। तथासति राजपदलक्षणयावेति राजपदस्य लक्षणयैव सहान्वयकथनानुपपत्तेरितिध्येयं। नन्वेवं तत्र शक्तिभ्रमाच्छाब्दबोधस्वीकारे तत्र दोषादीनामननुगतानां नियामकत्वकल्पने नियमतस्तत्पूर्वं तादृशदोषकल्पने च गौरवमत आह। राजपदेति। पूर्वकल्पे तु राजसम्बन्धिनि निरूढलक्षणा एतन्मतेतु षष्ठीलोपस्मरणासम्भवस्थले राजपदे स्वारसिकी लक्षणां इदमेव लाघ-

क्तिग्रहोऽप्यनुशासनात्। नचावयवशक्त्यग्रहेऽनुशासनग्रहः सं-
भवतीति तच्छक्तिग्रहस्य समुदायशक्तिग्रहे हेतुत्वादित्याड्ड
स्तन्न। अवयवलक्षणयैवोपपत्तेः समुदायशक्तौ मानाभावात्

---

वमिति भेदः। नच ऋद्धस्य राजमातङ्ग इत्यादौ एतन्मते लुप्तषष्ठीस्मरणस्याव-
श्यकतया समानविभक्तिकत्वेनाभेदेनान्वयबोधापत्तिरिति वाच्यं। नहि स-
मानविभक्तिकत्वाभावनिबन्धनमभेदेनान्वयाननुभावकत्वं किन्तु समासा-
घटकपदसापेक्षतया तदभावेन सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो-
नेति नियमात्। नचैवं शरैः शातितपत्त्रः चैत्रस्य दासभार्या इत्यादौ शरक-
रण त्वचैत्रनिरूपितत्वयोः समासविशेषणीभूतशातनदासत्वयोर्कथमन्वयइ-
ति वाच्यम्। अभेदेनान्वये तथानियमात्। स्तोकं पचतीत्यादावभेदान्वयानु-
रोधेन समानविभक्तिकत्वमित्यस्य विरुद्धविभक्तिराहित्यमित्यर्थकत्वावश्य-
कतया भवन्मतेऽप्यगतेश्च। स्वीचक्रुरित्यस्वरसोद्भावनं तद्बीजंतु क्वचित्समासपूर्वं
विग्रहश्रवणस्य समासार्थकथनपरतया विग्रहश्रवणस्य सर्वत्रानावश्यकत-
या लुप्तषष्ठीस्मरणकल्पने गौरवात्क्वचित् राजसम्बन्धिनि स्वारसिकलक्ष-
णाग्रहस्थलानुरोधेन राजसम्बन्धिप्रकारकबोधे तादृशसमभिव्याहारज्ञान-
स्य कारणत्वकल्पनाया आवश्यकत्वेन तत्र निरूढलक्षणाया एव न्याय्यत्वा-
त्। नच सम्बन्धिनि तात्पर्यस्यानादित्वकल्पनमेव निरूढलक्षणा कल्पने गुरु-
अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वा-
च्यं। नियमतो लुप्तषष्ठीस्मरणकल्पनापेक्षया तात्पर्यानादित्वकल्पनाया एव
युक्तत्वात्। नचैवं दधि पश्यतीत्यादावपि दधिपदस्य दधिकर्मके लक्षणाप-
त्त्यातत्रापि लुप्तविभक्त्यनुसन्धानं बिनापि बोधापत्तिरिति वाच्यं। तत्र दधिप-
दस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां दधिकर्मकः पश्यति दधिकर्मकेण
पश्यतीत्यत्रेवान्वयाबोधेन कर्मत्वार्थकविभक्तिं विना निराकाङ्क्षत्वेन तद-
नुसन्धानस्यावश्यकत्वात्समासस्थले त्वन्यथैवव्युत्पत्तिः अतएवाग्निनौदनं पचे-
तेत्यत्र तान्येव पदानि समर्थानि नतु तदर्थकानि अग्निकरणकौदनकर्म-
कपाककृतिरिष्टसाधनमितितु वाक्यं न पदमित्युक्तमिति। समासस्थइति।
घटमानयेति शब्दसमुदायवारणाय समासस्थइति। राजपुरुषइत्यादि समा-
सवाक्यस्येत्यर्थः। विशिष्टेऽर्थे। राजसम्बन्धिपुरुषादिरूपे विशिष्टेऽर्थे। शक्तिरेवेति

तदुक्तं जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति तस्मादन्यथोपपत्तौ समासे शक्तिरयुक्तेति संक्षेपः। स्यादेतत् मास्तु तत्पुरुषे शक्तिर्बहुव्रीहौ तु चित्रगुपदे चित्रगोस्वामिनि शक्ति-

---

तथाच समासे शक्त्यैव विशिष्टार्थबोधोपपत्तेर्नातिरिक्ता वृत्तिकल्पनमिति भावः एवं। समासे शक्तिस्वीकारे। राजपदेति। राजपुरुषइत्यत्र राजपदं राज्ञि शक्तमिति शक्तिज्ञानशून्यकालेपि राजपुरुषपदं राजसम्बन्धिपुरुषे शक्तमिति शक्तिज्ञानसम्भवेन तादृशबोधापत्तिरित्यर्थः। समस्तेति। समासस्थले विशिष्टार्थे शक्तिग्रहइत्यर्थः। नचेति। नह्नीत्यर्थः। अवयवेशक्त्यग्रहे। राजपदादिशक्त्यग्रहे। अनुशासनग्रहः। अनुशासनजन्यविशिष्टार्थे शक्तिग्रहः। तच्छक्तिग्रहस्य। अवयवशक्तिग्रहस्य। समुदायग्रहे। समुदायशक्ति ग्रहे। हेतुत्वादिति। व्यवहारादिना नात्र शक्तिग्रहः किन्तु व्याकरणादितः व्याकरणेन हि प्रत्येकशक्तराजपदादिसमुदायो विशिष्टार्थे शक्त इति बोधनीयं नतु प्रत्येकशक्त्यग्रहेन सम्भवतीति तज्जन्यसमस्तशक्तिग्रहे अवयवशक्तिग्रहस्य हेतुत्वात् राजपदादिशक्तिग्रहाभावे समुदायशक्तिग्रहस्याप्यभावान्न ततोऽन्वयबोध इति भावः। अवयवेति। राजपदस्य राजसम्बन्धिनि लक्षणयैवेत्यर्थः। समुदायशक्तौ। समास वाक्ये विशिष्टार्थेशक्तौ। मानाभावादिति। अनन्यलभ्योहि शब्दार्थइति न्यायादिति भावः। ननु गङ्गायां घोष इत्यत्रेव जहत्स्वार्थैवात्र लक्षणोपेया सातु न सम्भवतिराजपदस्य राजसम्बन्धिनि लक्षणायां स्वार्थपरित्यागाभावादित्यत आह। तदुक्तमिति। यत्र रूढिः शक्तिः विरोधिनी स्वार्थविषयकविशिष्टार्थबोधस्वरूपायोग्या तत्रैव जहत्स्वार्था नलन्यत्र अन्यत्रतु अजहत्स्वार्था यथा गङ्गायां घोष इत्यत्र तीराधिकरणको घोष इत्येवान्वयबोध उपेयः तत्रच प्रवाहस्य तादृशबोधविषयत्वाभावेन तादृशबोधस्वरूपायोग्यत्वमस्त्येव। गङ्गापदस्येति। गङ्गापदे जहत्स्वार्था लक्षणा मञ्चाः क्रोशंतीत्यत्र तु मञ्चपदस्य मञ्चस्थपुरुषे लक्षणायां मञ्च रूपस्वार्थस्यापि तादृशबोधविषयत्वादजहत्स्वार्थैव लक्षणा एवं च न केवलं जहत्स्वार्थैव लक्षणा येन राजपदस्य राजसम्बन्धिनि लक्षणाकल्पनं नस्यात् किंत्वजहत्स्वार्थापीति साचाङ्गीकार्येति भावः। वस्तुतस्तु नन्वेवंपङ्कजमित्यादावपि समुदाये शक्तिर्न स्यात् अवयवलक्षणयैव पद्मत्वविशिष्टबोधोपपत्तेरित्यत आह।

राऽवश्यकी न हि तत्र लक्षणया निर्वाहः तथा हि गोपदं गो-स्वामिलक्षकं चित्रपदं च चित्रस्वामिलक्षकं नाद्यः न हि चित्रत्वस्य गवान्वयः संभवति तस्य पदार्थैकदेशत्वात् अत-

---

तदुक्तमिति । यत्र रूढिः प्रसिद्धिः योगविरोधिनी तत्रैव जहत्स्वार्था लक्षणा यथा कर्मणि कुशल इत्यादौ दक्षे रूढिः प्रसिद्धिः कुशान्लातीति कुशादा-नकर्त्तुर्योगार्थस्य विरोधिनी दक्षे कुशादानकर्तृत्वबाधादिति कुशलपद-स्य विवेचकत्वरूपशक्यसम्बन्धसत्त्वात् दक्षे लक्षणाबाधेन शक्त्यावयवार्थबो-धाभावात् । नचात्र विवेचकत्वेन लक्षणायामजहत्स्वार्थत्वमिति वाच्यं । यत्र स्वार्थस्य विशेष्यतया क्रियान्वये प्रवेशः साऽजहत्स्वार्था यथा छत्रिणो यान्तीत्यादौ एवं च यष्टीः प्रवेशयेत्यत्रापि जहत्स्वार्थैव प्रकृतेच राजपुरुष-इति समुदायस्य राजसम्बन्धिपुरुषे रूढिः प्रसिद्धिः राजाभिन्नपुरुषस्य योगा-र्थस्य विरोधिनीति तत्र जहत्स्वार्था लक्षणा स्वार्थस्य राज्ञो विशेष्यतया क्रि-यान्वयेप्रवेशाभावात् पङ्कजमित्यादौतु पद्मस्य पङ्कजनिकर्तुश्च योगार्थस्यावि-रोधादवयवशक्त्यैव पङ्कजनिकर्त्तुर्बोधः पद्मत्वविशिष्टबोधार्थं च पङ्कज-पदस्य पद्मत्वविशिष्टे लक्षणा कल्पने तु शक्त्यापङ्कजनिकर्तुर्योगार्थस्य ल-क्षणयाच पद्मत्वविशिष्टस्यबोधो वाच्यः तस्य च युगपद्विरोधेनासम्भवात्पङ्कज-पदस्य पद्मत्वविशिष्टे समुदायशक्तिरावश्यकी तस्माद्युगपद्वृत्तिद्वयविरोधेन शक्त्या लक्षणया च बोधानुपपत्तेः पङ्कजपदे समुदायशक्तिरावश्यकी समासे-तु नैवमिति । अथवा पङ्कजमित्यत्रापि लक्षणयैवोपपत्तेः समुदायशक्तिर्नस्या-दत आह । तदुक्तमिति । यत्ररूढिः । समुदायशक्तिः । योगविरोधिनी । योगः अवयवशक्तिस्तद्विरोधिनी । तत्रैव जहत्स्वार्था लक्षणा यथा मण्डपं भोजये-दित्यत्र तत्रहि मण्डपपदस्य गृहविशेषे रूढिः योगविरोधिनी रूढ्यर्थगृहे म-ण्डपानकर्तृत्वासम्भवात्तत्ररूढेर्योगापहारितेति प्रवादात् अवयवशक्त्या म-ण्डपानकर्तृबोधासम्भवात् मण्डपपदस्य मण्डपानकर्तरि लक्षणा इत्थं च रूढ्य-र्थगृहसम्बन्धितावच्छेदकतया गृहीतचैत्रत्वादिनान्वयबोधो नतु मण्डपा-नकर्तृत्वेन पङ्कजमित्यादौतु रूढ्यर्थस्य पङ्कजनिकर्तुश्च योगार्थस्याविरोधादव-यवशक्त्यैव बोधः पद्मत्वविशिष्टस्य च लक्षणया बोधोपगमे युगपद्वृत्तिद्वय-

एव नान्योऽपि गवान्वयानापत्तेः । अथ गोपदं चित्रगो-स्वामिलक्षकं चित्रपदं तु तात्पर्यग्राहकमिति चेन्न । चित्रप-दं चित्रगोस्वामिलक्षकं गोपदं तु तात्पर्यग्राहकमिति वि-

---

विरोधात्पङ्कजपदे समुदायशक्तिरावश्यकी राजपुरुष इत्यत्र तु राजसम्बन्धि-पुरुषे राजाभिन्नपुरुषस्यावयवार्थस्य विरोधादवयवशक्त्या तद्बोधाभावे युग-पद्वृत्तिद्वयविरोधाभावाल्लक्षणैव स्वार्थस्यावयवार्थस्य त्यागात् जहत्स्वार्थत्वो-क्तिरिति सारं । स्वोक्ते समासेऽवयवलाक्षणिकत्वे उपष्टम्भकमाह । तदुक्तमि-ति। यत्रेति। यत्रानुभूयमानसमुदायार्थोऽवयवार्थविरुद्धस्तत्र पदे जहत्स्वा-र्था लक्षणेति समुदायार्थ इत्यपि कश्चित्। एतन्मते तत्र जहत्स्वार्थैवेत्यन्वयं वि-नाऽगतिरिति ध्येयं। जहत्स्वार्था नतत्रैव यत्र रूढिविरोधिनीति क्वचित्पाठः यत्र लक्षणा रूढिविरोधिनी शक्तिविरोधिनी तत्र जहत्स्वार्था लक्षणा यत्र लक्षणायामङ्गीकृतायां शक्त्यासहान्वयबोधस्तत्र न जहत्स्वार्था लक्षणेति याव-वत् यथापङ्कजमित्यत्र पद्मत्वेन लक्षणायां पङ्कजनिकर्तृत्वेन शक्त्या बोधे यु-गपद्वृत्तिद्वयविरोध प्रसङ्गात् न तत्र लक्षणा किंतु समुदाये शक्तिः राजपुरुष-इत्यत्र तु सम्बन्धिलक्षणायां तथैति न तत्र समासे शक्तिरिति ध्येयम्। उपसं-हरति। तस्मादिति। अन्यथेति। अवयवलक्षणोपपत्तावित्यर्थः। अनन्यलभ्यस्य शब्दार्थत्वात् अन्यथा गङ्गापदस्यापि तीरे शक्त्यापत्त्या लक्षणोच्छेदापत्तेरिति भावः। ननु चित्रगुरित्यादौ चित्रगोस्वामीत्यन्वयोरनुभवसिद्धः तस्यचावयव शक्त्या लक्षणयावोपपत्त्यभावाद्वाक्ये शक्तिरावश्यकीति कथं न समासे शक्ति-रित्याशंकते । स्यादेतदिति । बहुव्रीहौ तु । चित्रगुरित्यादिबहुव्रीहौतु। नन्वत्राप्यवयव लक्षणयैवोपपत्तौ न शक्तिः कल्पनीयेत्यत आह । नहीती-ति । लक्षणया । अवयवलक्षया । निर्वाहः । विशिष्टार्थबोधः । अनिर्वा-हमेवोपपादयति । तथाहीति गोपदस्य गोस्वामि लक्षकत्वे चित्रपदार्थ-स्य गवि अन्वयोवाच्यः सच न सम्भवति पदार्थैकदेशत्वादिति भावः । चि-त्रस्य। चित्रपदार्थस्य चित्रत्वविशिष्टस्य । गवान्वयः । गविअन्वयः । ग-वेती तृतीयान्तंवा गवासहेत्यर्थः। सम्भवतीति। चित्रपदार्थस्य चित्रस्याभेदेन-गवि अन्वयो नसम्भवतीत्यर्थः । तस्य। गोः। नच तच्छब्दस्याव्यवहितपूर्वोप-

स्थितमुख्यविशेष्यपरामर्शकतया गवान्वयोपसर्जनतया कथं तच्छब्देन गोपरामर्श इति वाच्यं। तच्छब्दस्याव्यवहितपूर्वोपस्थितमात्रपरामर्शकतया तात्पर्यबलादन्वयोपसर्जनस्यापि गोबोधने बाधकाभावात्। गवेति तृतीयान्तत्वे दोषास्पर्शाच्च। पदार्थैकदेशत्वात्। गोस्वामिरूपपदार्थैकदेशत्वादित्यर्थः। गौर्नित्येत्यत्र गोत्वे नित्यत्वान्वयवारणाय पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्त्यङ्गीकारस्यावश्यकत्वादिति भावः। केचित्तु चित्रस्य। चित्रविशेषणतयोपस्थितस्य चित्रत्वस्येत्यर्थः। चित्रपदस्योभयत्र प्रयोगात्। तस्य। चित्रत्वस्य। पदार्थैकदेशत्वात्। चित्रपदार्थैकदेशत्वात्। एकविशेषणतयोपस्थितस्यान्यत्र विशेषणत्वेनान्वये निराकांक्षत्वादिति भाव इत्याहुस्तन्न। एवमपि चित्रस्य गविश्रभेदेनान्वये बाधाकानुक्तेः। अतएवेति। चित्रस्य गवान्वयासम्भवादेवेत्यर्थः। गवानन्वयेति। चित्रपदस्य चित्रस्वाम्यर्थकत्वे पदार्थैकदेशतया चित्रे नगोरन्वयः नापि चित्रस्वामिनि नामार्थयोरभेदेनैव व्युत्पत्तेरिति भावः। पदद्वयइति। चित्रपदे गोपदेचेत्यर्थः। ननूभयत्र लक्षणायां गौरवात् तदपेक्ष्य समुदायशक्तिरेवास्तामित्यत आह। नत्विति। अन्येति। अनन्यलभ्यस्यैव शब्दार्थत्वेनोभयत्र लक्षणाया गौरवस्य प्रामाणिकत्वादिति भावः। पदद्वये लक्षणाकल्पनेऽन्यतरपदवैयर्थ्याद्वाक्ये एव लक्षणावादिमीमांसक मतमाह। मीमांसकास्त्विति। समुदायएव। चित्रगुरिति वाक्यएव। लक्षणा। चित्र गोस्वामिनि लक्षणा। समुदायस्य। वाकास्य। शक्त्यभावादिति। वाक्यस्य कुत्रचिदप्यर्थे शक्त्यभावात्स्वशक्यसम्बन्धरूपा लक्षणा दुर्वचेत्यर्थः। स्वबोध्यस्येति। गङ्गापदबोध्यस्य प्रवाहस्यसम्बन्धस्तीरेऽस्तीति तत्र तत्सत्त्वमुपपन्नं परन्तु शक्यत्वेन न तत्प्रवेशः किन्तु बोध्यत्वेनेत्यर्थः। अत्र। चित्रगुरित्यत्र बहुव्रीहावित्यर्थः। वाक्यस्यापि। चित्रगुरितिवाक्यस्यापि। विशिष्टं बोध्यमिति। एकदेशविकृतमनन्यवद्भवतीति न्यायेन चित्रगुरित्यत्र चित्रा गौरिति वाक्यस्यसत्त्वात्तस्य च बोध्यं चित्रागोस्वत्सम्बन्धश्च चित्रगोस्वामिन्यस्तीति भावः। शक्यसम्बन्धस्य लक्षणात्वे दूषणं दर्शयन् स्वबोध्यसम्बन्धस्यैव लक्षणात्वमुपपादयति। अन्यथेति। वाक्ये लक्षणाया अनङ्गीकारेइत्यर्थः। कागतिः। कथमन्वयबोधः। तदेवोपपादयति। नद्यीति। गभीरायामिति। नदीपदस्य नदीतीरत्वेन वात्लक्षणा-

निर्गतुमशक्यत्वात् । तस्माद्विनिगमकाभावात्समुदायशक्तिरेवेति चेत् । अत्रोच्यते । विनिगमकाभावादुक्त पदद्वये लक्षणा । नतु समुदाये शक्तिरन्यलभ्यत्वात् । मीमांसकास्तु । समुदाय एव लक्षणा । न च समुदायस्य शक्यभावाल्लक्षणा नुपपत्तिः । स्वबोध्यसम्बन्धोहि लक्षणा अस्तिच वाक्येऽपि विशिष्टं बोध्यम् । अन्यथा कागतिर्गम्भीरायां नद्यां घोषइत्यादौ । नहि नदीपदं तीरलक्षकं गभीरायामित्यनन्वयापत्तेः । नहि तीरं गभीरं । नापि गभीरपदं तीरलक्षकं । नद्यामित्यनन्वयापत्तेः । नहि तीरं नदी तस्मादनन्यगतिकतया वाक्यमेव गभीरनदीतीरलक्षकमित्याहुः । अत्रोच्यते । वाक्यं न विशिष्टार्थबोधकं तद्बोधकतावच्छेदकशक्तेरभावात् । अतस्तत्र बोध्यसम्बन्धो लक्षणेति रिक्तं वचः । किन्तु

---

यां गभीरस्य पदार्थैकदेशतया नद्यामन्वयासम्भवात् तीरे च विशेष्यवाचकपदयोः समानविभक्तिकत्वस्थलेऽभेदेनान्वयस्यैव व्युत्पन्नतया भेदेनान्वया सम्भवादभेदेनैवान्वयीवाच्यः सतु न सम्भवति बाधादिति भावः । नद्यामित्यस्येति । गभीरपदस्य गभीरसम्बन्धितीरत्वेन च लक्षणायां नद्याः पदार्थैकदेशतया गम्भीरेऽन्वयासम्भवात् तीरे च समानविभक्तिकस्थलेऽभेदेनान्वयस्यैव व्युत्पन्नतया भेदेनान्वयो वाच्यः सतु न सम्भवति बाधादिति भावः । अनन्वयमेवाह । नहि तीरं नदीति । उपसंहरति । तस्मादिति । अनन्येति शक्त्या लक्षणया वा विशिष्टार्थ बोधस्यानुपपत्त्या वाक्यमेव । गम्भीरायां नद्यामिति वाक्यमेव लक्षकमिति पङ्कजपदेरनायत्त्या वाक्ये शक्तिस्वीकारेपि अन्यलभ्यत्वादत्र लक्षणेऽत्रैव एकत्र वाक्ये शक्तिकल्पनादन्यत्रापि तत्कल्पने च गङ्गापदस्य प्रवाहे शक्तेः क्लृप्तत्वेन तीरेपि शक्तिकल्पनापत्त्या लक्षणोच्छेदापत्तेरतः स्वबोध्यसम्बन्धस्य लक्षणात्वमुपगम्यै मारीतिः । वाक्यमिति । चित्रगुरित्यादिवाक्यमित्यर्थः । न विशिष्टार्थेति । चित्राभिन्ना गौरित्यादिविशि-

गभीरायां नद्यामिति विभक्त्यन्तभागस्य न तीरे लक्षणा । तदाधारताप्रत्ययानापत्तेः । नापि गभीरायां नदीति भागस्य तदर्थाबोधकत्वात् । बोधकत्वे वा लक्ष्ये विभक्त्यर्थानन्वयाप-

---

ष्टार्थबोधकं नेत्यर्थः । तद्बोधकतेति । विशिष्टार्थबोधकतावच्छेदकेत्यर्थः । तरसत्त्वे च किं लक्षणयेति भावः । अत इति । शक्तेरभावात् । रिक्तम् । अर्थशून्यं वचइत्यर्थः । अपभ्रंशेऽपि शक्तिभ्रमेण स्वबोध्यसत्त्वात्तत्रापि लक्षणापत्तिः तथाच हरिमत्त्वस्यैव पदसाधुत्वरूपत्वेन अपभ्रंशिनां पदानां यज्ञे प्रयोगापत्तिः साधूनेव प्रयुञ्जीतेत्यनेन विरोधाभावादतः शक्त्या स्वबोध्यसम्बन्धो लक्षणेत्येव वाच्यं नचैतद्वाक्ये सम्भवतीति भावः । ननु वाक्ये समुदायत्वेन शक्त्यभावेऽपि प्रत्येकपदशक्त्या स्वबोध्यसत्त्वेव गभीरपदसमभिव्याहृतनदीपदत्वमेव विशिष्टबोधकतावच्छेदकम् अपभ्रंशे तु नैवमित्यस्वरसादाह । किंचेति । स्वबोध्ये त्वत्र बोधकत्वमात्रविवक्षणे गङ्गायामिति समुदायस्यापि लाक्षणिकत्वापत्तिरतस्तत्त्वेन बोधकत्वं विवक्षणीयं तथासत्याह । गभीरायामिति । तीरे । गभीरनदीतीरे । तदाधारतेति । तीराधारत्वेत्यर्थः । विभक्तेः प्रत्यायिकाया अभावेनाधारत्वबोधकाभावादिति भावः । विभक्तिशून्यभागस्यापि न लक्षणेत्याह । नापीति । सप्तमीशून्यभागस्येत्यर्थः । इह तु सप्तम्या एव बोधकत्वान्नाधारताप्रत्ययानुपपत्तिरिति भावः । तस्य । गभीरायां नदीतिभागस्य । अबोधकत्वादिति । समानविभक्तिकपदस्यैवाभेदान्वयबोधकतया विभक्तिशून्यभागस्याभेदान्वयबोधकत्वाभावादिति भावः । तथाच स्वबोध्यसम्बन्धरूपा लक्षणापि नात्र सम्भवतीति ज्ञेयं । यद्यपि पदानां स्वस्वान्वयबोधकत्वं न समूहत्वेन नवेतरपदावच्छिन्नेतरपदत्वेन स्वरूपयोग्यतेति विभक्त्यन्तभागस्य लक्षकत्वेऽप्ययदोषः । तथापि इतरपदावच्छिन्नेतरपदे फलोपधानरूपं बोधकत्वं सम्भवत्येव गभीराभिन्ना नदीति शाब्दबोधे समानविभक्तिकगभीरपदसमभिव्याहृतनदीपदज्ञानत्वेनानुपूर्वीज्ञानस्य कारणत्वादिति पूर्वंच नायं दोषइतिध्येयं । नन्वभेदान्वये न समानविभक्तिकत्वं तन्त्रं स्तोकं पचतीत्यत्र व्यभिचारात्किन्तु विरुद्धविभक्तिराहित्यमेव तच्च विभक्तिशून्यभागेऽप्यस्तीत्यत आह । बोधकत्वे वेति । लक्ष्ये । तीररूपलक्ष्यार्थे । विभक्त्यर्थेति । आधारत्वानन्वयापत्तेरित्यर्थः । अनन्वयमेवाह । प्रत्ययानामिति । यथा घटमित्यत्र घटरूपप्रकृत्य-

रो: नहिस भाग: प्रकृतिर्येन तदर्थे विभक्त्यर्थान्वय: स्या-त्। गभीरायामिति सप्तम्यनापत्तेश्च । अथ विभक्त्यन्तस्यै-व गभीरनदीतीराधारत्वलक्षकत्वमिति चेन्न । अप्रकृत्य-

---

र्थान्वितकर्मत्वरूपस्वार्थप्रतिपादकत्वं विभक्ते:। नच धवखदिरौ छिन्धी-त्यादौ द्वितीयार्थकर्मत्वस्याप्रकृत्यर्थं धवान्वितत्वात्कथमेतदितिवाच्यं। यादृश समुदायोत्तरं विभक्तिस्तस्यैव प्रकृतित्वेन धवस्यापि प्रकृत्यर्थत्वात्। सभा-ग:। गम्भीरायां नदीति विशिष्टवाक्यात्मकभाग:। प्रकृतिरिति । नदीपदो-त्तरमेव विभक्ते: श्रूयमाणतया नदीपदमेव प्रकृतिस्तदर्थश्च न भवन्मते वि-शिष्टनदीतीरं विशिष्टवाक्योत्तरं च क्वापि विभक्तेरदृष्टत्वेन न वाक्यस्य प्र-कृतित्वमिति भाव:। ननु डित्थडपित्थसमुदायवत् गम्भीरायां नदीति वाक्यो-त्तरमेव विभक्तिरिति तस्याप्रकृतित्वमस्तीत्यत आह। गम्भीरायामिति। ग-म्भीरायां नदीति वाक्योत्तरं यदि विभक्ति स्तदा सुपो धातुप्रातिपदिकयो: ए-तयोरवयवस्य सुपो लुक् स्यादित्यनेन गम्भीरायामिति सप्तम्या लुक् स्यादिति ग-म्भीरायां नद्यामिति न स्यात्किन्तु गम्भीरनद्यामिति स्यादित्यर्थ:। वस्तुतस्तु ननु नीलं घटमानयेत्यत्र विशिष्टे कर्मत्वान्वयो न स्यात् नीलस्याप्रकृत्यर्थत्वा-दित्यत आह ।गभीरायामिति ।विशेषणवाचकपदस्य विशेष्यवाचकपदस-मानवचनत्वानुरोधेन गभीरायामिति सप्तमी भवन्मते च नदीपदस्य वि-शेष्यवाचकपदत्वाभावात् । गभीरायामित्यस्य विशेषणवाचकपदत्वाभा-वाच्च गभीरायामिति सप्तमी न स्यादित्यर्थ इतिसारं। नदीपदोत्तरसप्तम्याए-व लक्ष्यार्थे आधारत्वान्वयसम्भवे गभीरायामित्यत्र विभक्त्यर्थान्वयासम्भवादि-ति भाव इत्यपि कश्चित्। तन्न। वक्ष्यमाणस्वमतेपि तद्वैयर्थ्यं सत्त्वात्। अथेति। विभक्त्यन्तस्यैति। गभीरायां नद्यामिति विभक्त्यन्तभागस्यैवेत्यर्थ:। विभक्त्य-न्तस्य नामत्वाभावेन नामार्थयोरिति व्युत्पत्त्यनवकाशाद्भेदेनैव घोषे तदर्था-न्वय इति भाव:। अशक्तत्वादिति। गङ्गायामिति समुदायस्यापि लाक्षणिक-त्वापत्त्या तत्त्वेन बोधकत्वं वाच्यम् एवमपभ्रंशवारणाय शक्त्येत्यावश्यकम् इ-त्यं च शक्त्यवच्छिन्ना या तत्त्वावच्छिन्ना बोधकता तस्या एव निवेशाद्वाक्यत्वेन बोधकतायां च शक्तेरनवच्छेदकत्वात् न वाक्ये लक्षणा सम्भवइति भाव:। व-

त्वात् । तस्मात्पदद्वय एव विनिगमकाभावाद्विशिष्टनदीतीरे लक्षणा । न चैकपदवैयर्थ्यं परस्परतात्पर्यग्राहकत्वादिति संप्रदायः । विस्तरस्त्वस्माकं मणिमरीचिनिबन्धन

---

स्तुतस्तु अपभ्रंशवारणाय शक्त्या स्वबोध्येत्यस्यावश्यकतया वाक्येन शक्तिरित्याह । वाक्यमित्यादि । नन्वपभ्रंशस्यापि लक्षकत्वे इष्टापत्तिः वृत्तिमत्त्वमेव पदसाधुत्वमित्यत्र शक्यसम्बन्धरूपलक्षणाया एव वृत्तित्वघटकतया तत्र वृत्तिमत्त्वरूप साधुत्वाभावात् प्रमाधीनस्वबोध्यसम्बन्धो लक्षणेत्यस्य वा तल्लक्षणत्वेनापभ्रंशस्य प्रमाधीनबोध्याभावान्नानुपपत्तिरित्यस्वरसात्तत्त्वेन बोधकत्वावश्यकत्वमभिप्रेत्य दोषमाह । किञ्चेति । अशक्तत्वादिति । स्वबोध्यत्वं हि न स्वजन्यबोधविषयत्वं समवायेन घटपदस्मारितगगनादेः सम्बन्धग्रहादुपस्थितस्य शाब्दबोधापत्तेः । नच स्वजन्यशाब्दबोध विषयत्वं तदिति वाच्यं । गङ्गायां घोषइत्यादौ गङ्गापदे लक्षणानापत्तेस्तेन गङ्गापदेन प्रवाहशाब्दबोधाजननात् । तस्माच्छक्त्या स्वजन्यबोध विषयत्वमेव तत्त्वं वाच्यं तच्च शक्यसम्बन्धस्य लक्षणात्वापेक्षया गुरुतरं वाक्ये शक्त्यभावात् प्रकृते चासम्भवादितिभावः । उपसंहरति । तस्मादिति । वाक्ये लक्षणाया असम्भवादित्यर्थः । पदद्वयएव । गभीरपदे नदीपदे च । विनिगमकेति । एकतरपक्षपातिनी युक्तिर्विनिगमना तस्या अभावादित्यर्थः । विशिष्टेति । विशिष्टा गभीरा या नदी तस्यास्तीरे इत्यर्थः । नन्वेकस्यैव लक्षणया विशिष्टार्थबोधसंभवे अपरपदं व्यर्थमित्यत आह । नचेति । एकपदवैयर्थ्यं नचेत्यन्वयः । परस्परेति । नदीपदेन गभीरनदीतीरबोधे जननीये गभीरपदसमभिव्याहारो नियामकः गभीरपदेन वा तादृशबोधे जननीये नदीपदसमभिव्याहारो नियामकइत्यर्थः लक्ष्यार्थबोधे तात्पर्यज्ञानस्य हेतुतया नदीपदं गभीरनदीतीरप्रतीतीच्छयोच्चरितमिति तात्पर्यज्ञानं गभीरपदसमभिव्याहारादेव भवति अन्यथा केवलनद्यामित्युक्तौ गभीरनदीतीरबोधापत्तेरिति भावः । एकत्रैव पदे यदा लक्षणाप्रतिसन्धानं तदा तत्पदएव लक्षणा यदातूभयपदे लक्षणा प्रतिसन्धानं तदोभयपदे लक्षणैव शाब्दबोधप्रयोजिका संभेदेनान्यतरवैयर्थ्यमिति न्यायेन चैकमेव विशिष्टतीरं बुध्यते इति द्रष्टव्यम् । अथैदं बोध्यं गभीरनद्योरन्वयबोधोत्तरं

गभीरनदी सम्बन्धग्रहात् नदीपदेन विशिष्टतीरं लक्ष्यते अन्यथा नदीसम्बन्धग्रहाद्विशिष्टतीरबोधानापत्ते: इत्थं च स्वशक्तिज्ञाप्यसम्बन्धो लक्षणा सा च पद एव न वाक्ये ऽक्लृप्तत्वात् वाक्ये लक्षणा वादिमतेऽपि प्रत्येकं पदद्वये विनिगमकाभावा ल्लक्षणाया दुर्वारत्वाच्च। न चैवं नीलं द्विरेफमानयेत्यत्र विशिष्ट सम्बन्धिनि लक्षणानुपपत्ति: पदद्वयस्यापि लाक्षणिकतयाननु भावकत्वेन स्वज्ञाप्याप्रसिद्धेरिति वाक्ये लक्षणायार्दिना सह तुल्यत्वमिति वाच्यं। लाक्षणिकस्याप्यनुभावकत्वा ङ्गीकारात्। वस्तुतस्तु शक्यसम्बन्धएव लक्षणा नदीपदस्य नद्यादिव गभीरनद्या अपि शक्यत्वात् गभीरपदस्य तात्पर्यग्राहकतया च गभीराभिन्ना नदीति अवान्तरवाक्यार्थबोधं विनापि गभीरनदीतीरलाभसंभवादिति दिक्। संप्रदाय इत्यनेनास्वरस: सूचित: स च गभीरपदस्य गभीरत्वशक्ततया तस्य स्वाश्रयाभिन्ननदीसम्बन्धएव तीरे वाच्य इति परंपरासम्बन्धो गौरवात् साक्षात्सम्बन्ध संभवात् नदीपदएव लक्षणा युक्ता यदि च धीरोदारपदवत् धर्मिण्यपि शक्तिर्नीलादिपदवत् केवलगुणमात्रे गभीरपदाप्रयोगादिति विभाव्यते तथापि शुक्लादि पदानां गुणमात्रवाचकत्वेन शुक्लायां नद्यां घोष इत्यादौ साक्षात्सम्बन्धसंभवात्। विशेष्यवाचकपदे एव लक्षणाया: क्लृप्तत्वात्सर्वत्रोत्तरपदएव लक्षणा एवं चित्रगुरित्यत्रापि गोपदएव सा तथा च सर्वत्रोत्तरपदएव बहुव्रीहौ लक्षणेति। केचित्तु गभीरपदे लक्षणायां नदीपदोत्तरसप्तम्या अन्वयो न स्यात् विशेषणविभक्ते: प्रयोग साधुत्वादिति विशेष्यवाचकपदएव लक्षणा। न च विशेष्य वाचकपदोत्तरविभक्ते रेवात्र शब्दसाधुत्वमास्तामिति वाच्यं। विशेषण विभक्तित्वेन सामान्यत: प्रयोगसाधुत्वकल्पनादित्याहुस्तदसत्। लाक्षणिकार्थानुभावकगभीरपदस्य विशेषणपदत्वाभावेन गभीरपदोत्तरसप्तम्या एवान्वयसंभवादिति। अपरेतु प्रत्ययानां प्रकृत्यर्था न्वितस्वार्थ बोधकत्वव्युत्पत्ते रुत्तरपदएव लक्षणा अव्यवहितपूर्ववर्त्तिन एव प्रकृतित्वात् अन्यथा राजपुरुषमानयेत्यत्र राजानमान येत्यपि बोधापत्ते:। नचैवं सर्वप्रधानद्वन्द्वे पूर्वप्रधानेऽव्ययीभावे घटं भूतलमित्यत्र बहुव्रीहौ नञ् समासेऽद्र्यपिप्पलीत्यादि तत्पुरुषेच विभक्त्यर्थान्वयानुपपत्तिरिति वाच्यम्। तदतिरिक्त स्थलेएव तन्नियमादित्याहु:। ननु चित्रगुरित्यत्र चित्रपदं चित्रगो सम्बन्धिपरं गोपदं च स्वामिपरं चित्रगोसम्बन्धिनश्च तादात्म्येन गोपदार्थ

स्वामिन्यन्वय इति सर्वपदानामेव सार्थक्ये किमिति परस्परतात्पर्यग्राहकत्वम् एवमारूढवानर इत्यत्र धातोर्वानरारोहणे क्तप्रत्ययस्य कर्मत्वे वानरपदस्याश्रये लक्षणा वानरारोहणकर्मत्वाश्रय इति बोधः । चैत्र दत्तधन इत्यत्र चैत्रपदस्य चैत्रकर्तृके दाधातोर्धनदाने क्तप्रत्ययस्य सम्प्रदानत्वे धनपदस्याश्रये लक्षणा चैत्रकर्तृकधनदानसंप्रदानत्वाश्रय इति बोधः । अथवा वानरपदस्य वानरकर्तृकमर्थः तस्य च धात्वर्थे आरोहणे ऽभेदान्वयः क्त प्रत्ययः कर्मपरः एवं धनपदस्य धनकर्मकमर्थः तस्य च चैत्र कर्तृकधनदानेऽन्वयः क्तप्रत्ययस्य संप्रदानमर्थः एवं गभीरायां नद्यामित्यत्र गभीरपदं गभीरनदीपदं च तीरपरमित्यप्याहु । विस्तरस्त्विति । चित्र गुपदात् चित्र गोस्वामीत्यं वानु भवात्रायं प्रकारः साधुः । एवं शोभनचित्रगुरित्यत्र त्रिपदबहुव्रीहौ चित्रपदस्य चित्रगोः सम्बन्धिपरतायां पदार्थैकदेशतया गवि शोभनान्वयानुपपत्तेरगत्या-चित्रपदस्य शोभनचित्रगोसम्बन्धिपरता शोभनपदं च तात्पर्यग्राहकमितिरीतिं विना तवाप्यगतेश्च । केचित्तु, चित्रपदस्य चित्र स्वामी गोपदस्य गोस्वामी अर्थः व्यक्तिवचनानां संनिहितविशेषपरत्वमिति न्यायेन च चित्रत्वेन गोत्वेन चैत्रैव व्यक्तिर्बुध्यते आरूढवानर इत्यत्र क्तप्रत्ययस्य कर्तृसम्बन्धिवानरपदस्य वानरसम्बन्धी अर्थः एकदेशेपि क्तातावारोहणस्यान्वयः पक्षे त्यक्ते वेत्याहुः । तदपि चित्र गोस्वामीत्यनुभवापलापादुपेक्षणीयम् । अन्येतु गोपदं गोस्वामित्वलक्षकं गवि च चित्रस्याभेदेनान्वयः एकदेशेपि व्युत्पत्तिवैचित्र्येणान्वयस्वीकारादित्याहुः । परंतु गोपदेन शक्त्या गौः लक्षणया स्वामी बोध्यते युगपद्वृत्तिद्वयविरोधस्याङ्गीकारात्पङ्कजपदस्य पद्मत्वविशिष्टे लक्षणामङ्गीकारस्तु समुदाये शक्तत्वव्यवहारस्य प्रामाणिकत्वादन्यथा तत्रापीष्टापत्तिरिति वदन्ति । अत्रेदंबोध्यं गोपदस्य चित्रगोस्वामिपरतायां सम्बन्धितावच्छेदकतया गृहीतचैत्रत्वादिना चित्रगोसम्बन्धिचैत्रत्वेनैव वा भानं तीरत्ववत् गङ्गासम्बन्धितीरत्ववद्वा आरूढवानरो वृक्ष इत्यत्रारूढः वानरीयमिति वाक्ये आङ्पूर्वकरुहधातोरूर्ध्वं देशावच्छिन्नसंयोगानुकूलक्रिया क्तप्रत्ययस्याश्रयः द्वितीयायाश्चाधेयत्वमर्थः वृक्षवृत्त्यूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर इत्यन्वयबोधः समासे त्वारोहणकर्तृवानरसम्बन्धी वृक्षइत्यन्वयधीः सम्बन्धः स्वकर्तृकारोहणकर्मत्वम् एवं चैत्रदत्तधन इत्य-

च चैत्रेण दत्तं धनं यस्मै इति वाक्ये चैत्रकर्तृकत्यसम्प्रदानकदानं कर्म धनमित्यन्वयबोधः समासे तु चैत्रकर्तृकदानकर्म धनसम्बन्धीत्यन्वयबोधः सम्बन्धः स्वकर्मकदानसम्प्रदानत्वमिति अत्र च समानाधिकरणबहुव्रीहिः चक्रपाणिरित्यादौतु व्यधिकरणबहुव्रीहिः। चक्रं पाणौयस्येति विग्रहवाक्ये यत्सम्बन्धिपाणिवृत्ति चक्रमित्यन्वयधोः समासेतु चक्रयुक्तपाणिसम्बन्धीति बोधः। सच तद्गुणसंविज्ञान बहुव्रीहिरतद्गुण संविज्ञानबहुव्रीहिश्चेति द्वेधा तत्र भूवादयोधातवः चैत्रादीन् भोजय लम्बकर्णमानयेत्यादावाद्यः। अन्यस्तु चित्रगुरित्यादौ। तथाहि। भूवादयइत्यत्र क्रियावाचित्वेन निमित्तत्वेन लम्बकर्णावयवित्वे नार्थसम्बन्धः तदवच्छिन्नत्वे नान्वयबोधः। लक्षकसम्बन्धस्यैव लक्ष्यतावच्छेदकत्वात् तेन रूपेणैव बोधात्। विशेषणस्यापि भूवादेः क्रियान्वयादजहत्स्वार्थाच लक्षणा तस्य समस्यमानपदार्थस्य गुणीभूतस्यापि सम्यग्विशेष्यविधया ज्ञानं यस्मादिति व्युत्पत्तेरिति सम्प्रदायः। अन्याहुः। यदिलम्बकर्णेत्यादौ अजहत्स्वार्था लक्षणा तदा लम्बकर्णस्यापि विशेष्यत्वेन च अन्वयेऽनुभवबाधस्तस्मादत्रापि जहत्स्वार्थैव विशेष्यत्वेन विधेयान्वये स्वार्थत्यागात्। यत्र विशेषणतया स्वार्थस्य विधेयान्वयः स तद्गुणसंविज्ञानबहुव्रीहिः। उपलक्षणतया यत्र स्वार्थस्य विधेयान्वयः स अतद्गुणसंविज्ञानबहुव्रीहिः। विशेष्यान्वयिनाऽन्वयित्वं विशेषणत्वं। यद्यपि लम्बकर्णेत्यादौ लम्बकर्णसम्बन्धित्वेनोपस्थितिः चित्रगुरित्यादौ च चित्रगोसम्बन्धित्वेनोपस्थितिस्तुल्यैव तथापि लम्बकर्णादेर्विशेष्यान्वयिनान्वयात् विशेषणतया विधेयान्वयः। चित्रगोस्तु उपलक्षणतया तथेति। अत्र शब्दस्वाभाव्यमेव तन्त्रमिति। केचित्तु भूवादिः प्रथमः पठितो येषामिति विग्रहवाक्यात् भूवाभिन्नः प्रथमपठितो यत्सम्बन्धीतिबोधः। समासात्तु भूवाभिन्नप्रथमपठितः सम्बन्धीतिबोधः। एवं चैत्र आदिः प्रधानो येषामिति विग्रहवाक्यात् चैत्राभिन्नः प्रधानोयत्सम्बन्धीतिबोधः। समासात्तु चैत्राभिन्नप्रधानसम्बन्धीत्यन्वयबोधः। सम्बन्धश्च स्वपाठप्राथम्यावधित्वं स्वनिष्ठप्राधान्यवाचित्वं वा। अत्र च भूवाभिन्नप्रथमपठितसम्बन्धित्वचैत्राभिन्नप्रधानसम्बन्धित्वादिनाऽदिशब्दस्य लक्षणा लक्ष्यतावच्छेदकस्यापि भूवादेर्विशेष्यान्वयिधातुत्वादिनाऽन्वयात् तद्गुणत्वं लक्षणाया अजहत्स्वार्थत्वं चेत्याहुः। अपरेतु। लम्बकर्णे-

तात्पर्यदीपिकयोरनुसन्धेयः । उपकुंभमर्धपिप्पलीत्यादाव-
प्युत्तरपदलक्षणयैवोपपत्तौ न शक्तिः कल्प्यते अन्यलभ्यत्वात् ।

---

त्यादौ विशेष्यतया न्वयाननुभवादस्तु जहत्स्वार्था भूवादयइत्यत्र तु गणपठि-
तत्वनिमन्त्रितत्वादिनैव बोधः शक्यलक्ष्ययोर्विधेयान्वयानुभवात् । काकेभ्यो-
दधिरक्ष्यतामित्यत्र त्वशक्यलक्ष्ययो विशेष्यान्वयान्वयमात्रादेवं च लम्बक-
र्णभूवादिसाधारणं तद्गुणत्वादिकमित्याहुः । आदिशब्दगणपठितत्व निम-
न्त्रितत्वादिना लक्षणा भूवादिपदं तात्पर्यग्राहकमित्यन्ये । भूत्ववात्वादिना-
चैत्रचैत्रत्वादिना नानारूपेण लक्षणा । युगपद्वृत्तिद्वयविरोधानुपगमात् ।
तदुपगमेतु पुष्पवन्तादिपदे नानारूपेणैकलक्षणायाया स्वीकारान्न दोष इत्यपरे ।
चैत्रशब्देन शक्त्या चैत्रत्वेनादिशब्दे न च लक्षणया मैत्रत्वादिना बोधः ।
चैत्रपदार्थादिपदार्थयोरभेदेनान्वयबोधस्यापि तात्पर्यविषयत्वात् । द्वन्द्वे वा-
भेदेनान्वये तात्पर्याभावान्न द्वन्द्वतापत्तिरित्यपि केचिदिति स्रतं पल्लवितेन ।
अव्ययीभावसमासे तु शक्त्य भाव सुपपादयति । उपकुंभमिति । उपकुंभ-
मित्यत्राव्ययी भावः । अर्धपिप्पलीति तत्पुरुषः । उपशब्दे निपाते षष्ठ्य-
न्तसाकांक्षत्वाभावात् कुंभस्योपेतिनात्र विग्रहः । किन्तु कुंभस्य समीप इति
उपकुंभमितिद्रष्टव्यम् । उत्तरपदेति । कुम्भपदस्य कुम्भसम्बन्धिनि पिप्पलीप-
दस्य पिप्पलिसम्बन्धिनि लक्षणा तस्य चोपाद्यर्थ सामीप्यादावभेदेनान्वयः ।
वस्तु तस्तु । उपपदार्थ सामीप्यं न तु समीपः तथाचोपपदस्यापि समीपा-
र्थ्यं लक्षणा एकदेशे च सामीप्ये कुम्भादिसम्बन्धिनस्तादात्म्ये नान्वय इति
पदद्वयलक्षणापेक्षया कुम्भपदस्यैव कुम्भसमीपपरता उपपदंच तात्पर्यग्रा-
हकमिति । केचित्तु चन्द्रइव सुखमित्यादौ इवार्थ सादृश्यस्य भेदेन सुखेऽन्व
येनाव्ययनिपातातिरिक्तस्थल एव नामार्थयोर्भेदेनान्वयबोधानङ्गीकारात् ।
उपपदार्थसामीप्ये कुम्भस्यान्वयबोधसम्भवात् सम्बन्धप्रकारकानुभवनुरोधेन
परकुम्भपदस्य कुम्भसम्बन्धे लक्षणा । अनुभवाननुरोधेतु अत्राप्युत्तरपदे न
लक्षणा इत्याहु । अन्येति । उत्तरपदलक्षणादिना लभ्यत्वादित्यर्थः । अन-
न्यलभ्यस्यैव शब्दार्थत्वादितिभावः । एवं निर्मक्षिकमित्यव्ययीभावेप्युत्त-
रपदे मक्षिकाभावे लक्षणा पूर्वपदं तात्पर्यग्राहकमितिध्येयं । समाहारद्व-

समाहारद्वन्द्वे पाणिपादमित्यादौ पाणिपदं पाणिप्रतियोगिकं पादपदं पादसमाहारं लक्षयति न पाणिपादसमाहारे शक्तिः। समाहारश्च तुल्यवदेकक्रियान्वयित्वरूपं साहित्यं सेनावनादिवदपेक्षाबुद्धिविशेषविषयत्वं वा। नन्वेवं पाणिपदं वादय इत्यत्रानन्वयः। समाहारे वादनकर्मत्वा भावादिति चेत्। परंपरया तत्र कर्मत्वान्वयादित्येके। स-

---

न्धेतरेतरद्वन्द्वभेदेन द्वन्द्वो द्वेधा। तत्र समाहारद्वन्द्वे पाणि पादमित्यादौ पाणिपादपदस्य पाणिपादप्रतियोगिकसमाहारशक्तिरितिमतं दूषयति। समाहारेति। पाणिपदस्य पाणिप्रतियोगिके पादपदस्य च पादप्रतियोगिकसमाहारे पदद्वयएव लक्षणा पाणिप्रतियोगिकाभिन्नपादप्रतियोगिकसमाहार वादयेत्यन्वयबोधः। समाहारे च विभक्त्यर्थैकत्वान्वयः। अतएव समाहारस्यैकत्वादेकवचनमेवेति। उत्तरपद एव पाणिपादे प्रतियोगिकसमाहारे लक्षणा पूर्वपदं च तात्पर्यग्राहकमित्यप्याहुः। ननु समाहारे शक्तिरन्यलभ्यत्वादित्याह। न पाणीति। समाहारं लक्षयति। समाहारश्चेति। क्रियाधातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयस्तस्यैकरूपस्तुल्यः सम्बन्धः समाहारः। यथा पाणिंवादयेत्यत्र वादनक्रियाया तुल्यवदेव पाणिपादयोरन्वयः। एवं धवखदिरौ छिंधीत्यत्र छेदन क्रतौ यावान् व्यापारः स धवखदिरयोस्तुल्य एव भासते। ननु एकक्रियान्वयित्वस्य वादनादिरूपैकक्रियान्वयरूपतया तस्य न सम्बन्धिभेदाद्भेदेनाननुगमइत्यत आह। सेनेति। यथा सेनात्वं तत्तदश्वादिविषयक ज्ञानविषयत्वम्। एवं तत्तद्वृक्षादि विषयकज्ञानविषयत्वं वनत्वं तथाऽपेक्षाबुद्धिविषयत्वमेव समाहारः अपेक्षाबुद्धेरव्यासज्यवृत्तेरपि विषयतया व्यासज्यवृत्तित्वोपगमान्नाननुगम इति भावः। ननु समाहारस्य सम्बन्धिभिन्नत्वे क्रियाजन्यफलशालित्वरूपकर्मत्वस्य क्रियायामसंभवेन कथं पाणिपादमित्यत्र कर्मविभक्तिरित्याशंकते। नन्वेवमिति। एवं। समाहारस्य तुल्यवदेकक्रियान्वयित्वरूपत्वे। वस्तुतस्तु एवमित्यस्य पाणिपादसमाहारस्य लक्ष्यत्वेत्यर्थः। अनन्वयः। द्वितीयार्थ

माह्रोत्तरविभक्त्यर्थकर्मत्वादेः समाह्रियमाण एवान्वयः । प्रत्यव्युत्पत्तिवैचित्र्यादित्यन्ये । पाणिपादं वादयेत्यत्र पाणिपादमात्रप्रतीतेर्न समाहारे लक्षणा शक्तिर्वा । नचैवं द्विवचनापत्तिः असाधुत्वात् । इतरेतर समाहारसञ्ज्ञा तु नदीद्व्यादिवत्पारिभाषिकेत्यवेति तु तत्त्वम् । इतरेतरद्वन्द्वे तु

---

कर्मत्वादेरनन्वयः । अननुयमेवाह । समाहारेति । तुल्यवदेक क्रियान्वयित्वरूपत्वे इत्यर्थः । वादनेति । वादनरूप क्रियाजन्यफलशालित्वरूपवादनकर्मत्वस्य तत्राभावादित्यर्थः । तथा च वादनकर्मत्वं पाणिपादयोरेव न तु समाहारे इति भावः । परं परयेति । स्वाश्रयप्रतियोगिकत्वरूपपरंपरयेत्यर्थः । तत्र । समाहारे । एव इत्यनेन साक्षात्सम्बन्धेनानुभूयमानकर्मत्वबोधस्य परंपरयोपपादनमेवास्वरसः सूचितः । समाहारेति । समाहारवाचकपदोत्तरविभक्तिरित्यर्थः । समाह्रियमाण एव । समाहारप्रतियोगिन्येव । एव कारेण न तु समाहारे साक्षात्सम्बन्धाभावादिति पूर्वत्रास्वरसोदर्शितः । ननु प्रत्ययानां प्रकृत्यर्थ गतस्वार्थबोधकत्वनियम भङ्गप्रसङ्ग इत्यत आह । व्युत्पत्तीति । व्युत्पत्तिराकाङ्क्षा तद्वैचित्र्यात् । कार्यकारणभेदेन कार्यकारणभावस्य भिन्नत्वात् प्रकृते भिन्न एव कार्यकारणभावः कल्प्यते । अनुभवानुरोधात्तादृशव्युत्पत्तेश्चात्र संकोच इति भावः । अत्र समाह्रियमाणयोर्द्वित्वात् द्विवचनापत्तिः । प्रत्ययानामिति व्युत्पत्तिसंकोचश्चान्ये इत्यनेनास्वरसः सूचितः । पाणिपादमित्यत्र पाणिपाद समाहारस्यानुभवसिद्धत्वाद्वा पाणिपादाविति द्विवचनापत्तिभिया वा इतरेतरसमाहारसंज्ञानुरोधाद्वा पाणिपादसमाहारे लक्षणा कल्पनमिति तत्र दूषणत्रयमुद्धरन् नव्यमतमुपपादयति । पाणिपादं वादयेत्यत्रेति । पाणिपादमात्रेति । मात्रपदात्समाहार व्यवच्छेदः । अनुभवसिद्धत्वात्समाहारे वृत्ति कल्पनं तदेव तुन अनुभवस्यैवाभावादितिभावः । वैयाकरणप्राचीन नैयायिकभेदेन शक्तिलक्षणयो रुपादानं । ननु पाणिपादमित्यत्र समाहारे वृत्त्यकल्पने पाणिपादयोर्द्वित्वात्पाणिपादाविति द्विवचनापत्तिः । मम तु समाहारस्यैकत्वात्तत्र द्वित्वान्वयासम्भवेन न तदापत्तिरित्यभिप्रेत्याह । नचैवमिति । एवं । पाणिपादयोरेव प्रतीतावित्यर्थः ।

धवखदिराविति स्वरूपद्वयप्रतीतौ न लक्षणा शक्तिर्वा । मीमांसकास्तु । अत्रापि धवखदिरसाहित्याश्रये लक्षणा । तदाहुः । साहित्ये द्विवचनबहुवचने द्वन्द्वसमासोवेति । साहित्यं च तुल्यवदेकक्रियान्वयित्वम् । अतएव यत्कर्तव्यं तदनया सहेत्यत्र पत्न्याः सह भावमात्रं न तु साहित्यं । यागादौ पत्न्याः अनुमति द्वारान्वयेन तुल्यवदनन्वया दित्या-

---

असाधुत्वादिति । व्याकरणप्रतिपन्नत्वादित्यर्थः । प्राणितूर्यसेनाङ्गानामिक वद्भावो वक्तव्यइत्यादि सूत्रेण तत्रैकवचनमेव विहितं । यथा दाराणां बहुत्वाभावेपि बहुवचनमिति भावः । ननु समाहारसंज्ञा अनुपपन्ना समाहारबोधस्य ततोऽनुदयेनान्वर्थसंज्ञाया अभावात् समाहरणं समाहारो नैकस्यैकीकरणम् एकोधर्मइति यावत् । तद्बोधको द्वन्द्वः समाहारद्वन्द्वइति संज्ञेत्यतआह । इतरेतरेति । इतरेतरसंज्ञासमाहारसंज्ञात्वित्यर्थः । नदीति । नदीसंज्ञा वृद्धिसंज्ञा यथा पारिभाषिकी तथा समाहारसंज्ञापीत्यर्थः । अन्वर्थसंज्ञाभावेपि नक्षतिरिति भावः । स्वरूपेति । धवखदिरस्वरूपद्वय प्रतीतिरित्यर्थः । नलक्षणेति । यद्यपि शक्तेर्मुख्यत्वान्न शक्ति लक्षणेत्येवलेखः समुचितस्तथापि प्राचीननैयायिकमते साहारद्वन्द्वे लक्षणायाः प्रक्रान्तत्वेन सैवादौ निराकृतेति । अत्रापि । इतरेतरयोगेपीत्यर्थः । अपिना समाहारद्वन्द्वसमुच्चयः । समाहारे साहित्ये लक्षणा अत्र तु साहित्याश्रयइति परभेदः । धवेति । धवपदस्य खदिरपदस्य च धवखदिरसाहित्याश्रये लक्षणा इतरपदं च तात्पर्यग्राहकं मीमांसकमतत्वाद्वाक्ये एव लक्षणा धवखदिरसाहित्याश्रयौ छिंधीत्यन्वयबोधः । ननु व्यर्थंसाहित्यलक्षणया इत्यतआह । तदाहुरिति । एतत्सूत्रार्थो हि सर्वं वाक्यं सावधारणमिति न्यायेन साहित्यगम्यमान एव द्विवचनबहुवचने भवतः । द्वन्द्वसमासे वा । वाकारस्त्वर्थे द्वन्द्वसमासस्य साहित्ये गम्यमान एव भवतीत्यर्थः । धवत्वेन खदिरत्वेन चोपस्थिते संख्यान्वये धवद्वयधीः खदिरद्वयधीश्च स्यात् ! अन्वयितावच्छेदकव्याप्यसंख्याबोधकत्वाद्विभक्तीनामन्यथा घटपटवृत्तिद्वित्वमादाय एकस्मिन्नपि घटे घटावित्यस्य प्रसङ्गः साहित्ये लक्षणायां तु सहि-

गपत् क्रियान्वये तात्पर्यं तत्र समासः समुच्चये च क्रमेण क्रियान्वयो नतु युगपत् क्रिया च व्यापारमात्रम्। इत्थं च तुल्यवदेकविधक्रियान्वयित्वं तेन धवखदिराविति क्रियारहिते धातूपनीतफलानुकूलव्यापारवत्त्वाप्रतीतौ कथं साहित्यबोध इति निरस्तं। चैत्रमैत्रौ स्थितिगतिमन्ताविति यथा संख्यस्थले अनुभवत इति क्रियाध्याहारादेव द्वन्द्वः। यद्यप्येतावता द्वित्वान्वयार्थमन्वयितावच्छेदकतया साहित्यभानमित्यायातं तच्च घटेन जलमाहरेत्यत्र छिद्रेतरत्वस्येव योग्यतावच्छेदकतयैव भानोपपत्तौ मीमांसकमते साहित्यलक्षणायां न बीजं तथापि पदानुपस्थितस्य न शाब्दे भानमिति मतमङ्गीकृत्येदम्। शाहुरित्यस्वरसोद्भावनं तद्बीजं तु प्रत्येकमुपस्थितयोर्धवखदिरयोर्द्वित्वबोधसम्भवात्साहित्यलक्षणाकल्पनमनर्थकम्। अन्वयितावच्छेदकसमानाधिकरणसङ्ख्याबोधकत्वं विभक्तीनां न तु व्याप्यत्वान्तर्भूतापि गौरवात्। घटौ आनय पटं चेत्यत्र पटमादाय घटे न द्वित्वान्वयः पटस्याप्रकृत्यर्थमात्रवृत्तिसंख्यावाचकत्वाद्विभक्तीनां यादृशसमुदायोत्तरविभक्तिस्तस्यैव प्रकृतित्वेन धवस्यापि प्रकृत्यर्थत्वात्प्रकृते न दोषः। किञ्च धवादिपदात्सहितत्वेनैव यदि बोधः चैत्रमैत्रौ गच्छत इत्यत्र गमनस्याव्यासज्यवृत्तितया तत्रानन्वयप्रसङ्गः। एवं च द्वित्वबोधार्थं सहितत्वेन लक्षणा गमनबोधार्थं च चैत्रत्वादिना बोध इति युगपद्वृत्तिद्वयविरोधः सहितावस्थे गमनकर्तृत्वासम्भवश्च इत्थं च द्वन्द्वे क्रियान्वयात् पूर्वं साहित्यबोधो न भवत्येवोत्तरंतु भवत्येव यत्र युगपदुपस्थिते द्वये युगपत् क्रियान्वयबोधे तात्पर्यं तत्र समासः। समुच्चये तु क्रमेणोपस्थिते क्रमेण क्रियान्वयबोधे तात्पर्यान्न समासः। एवं प्रधानगुणभावविवक्षया विशेषणविशेष्यत्वविवक्षया वा तत्र तत्र समासो भवतीतिदिक्। घटाविति सरूपैकशेषः विरूपैकशेषेतु पितरावित्यत्र जनकशरीरत्वेन लक्षणया मातापित्रोरवगमः। विभक्त्युपनीतं पुंस्त्वं तु पित्रर्थएवान्वेति योग्यत्वाच्छक्त्या पितुः लक्षणया स्वार्थनिरूप्यत्वेन सम्बन्धेन जनकस्त्रीत्वेन रूपेण मातुर्बोधकम् एकयैव लक्षणया वा पितृत्वमातृत्वाभ्यां बोधकमिति तु नव्याः। श्वशुरावित्यत्र पत्नीजनकशरीरत्वेन प्रातिस्विकरूपेण वा बोधः। दंपतीपूजाप्रकरणे ब्राह्मणावानयेत्यत्र पुमांस्त्रियेति विरूपैकशेषत्वात्। ब्राह्मणपदे स्त्रीपुंसलक्षणैव विभक्त्यर्थपुंस्त्वस्य च स्त्रियामनन्वयोऽयोग्यत्वाद्विभक्तिरेव वा श-

ङः । नीलोत्पलमित्यादौ नीलाभेदस्यान्वयविधयैवावभा-
सनोपपत्तेः । कर्मधारये न शक्तिर्नवा लक्षणा । अतएव त-

---

त्या पुंस्त्वस्य लक्षणयाच स्त्रीत्वस्य बोधिका । ननु ब्राह्मणत्वेन शक्त्यैव ब्राह्मणीबोधसम्भवे ब्राह्मणपदे लक्षणाव्यर्थेति चेन्न । आद्यवर्णस्त्रीत्वरूपब्राह्मणीत्वेन बोधार्थं तदादरात् । केचित्तु । विशुद्धमातापित्रयोनिजपुंस्त्वस्य ब्राह्मणत्वव्यंजकतया ब्राह्मण्यां ब्राह्मणत्वाभावेन ब्राह्मणत्वेन शक्त्या तद्बोधाभावाल्लक्षणैव । अतएव ब्राह्मणीवधे प्रायश्चित्तह्रास इत्याहुस्तन्न । पुंस्त्वघटितस्य तद्व्यंजकत्वे गौरवात् । अपकृष्टब्राह्मणवधइव प्रायश्चित्तह्रासस्य अन्यथाप्युपपत्तेरिति शिवौ नमस्कुर्यादित्यत्र शिवपदं शिवदुर्गान्यतरत्वेन बोधकं शक्त्या शिवत्वेन लक्षणाया च शिवाया बोधकमिति तु नव्याः । भ्रातरौ पुत्रावित्यत्र भ्रातृपुत्रौ स्वसृदुहितृभ्या मिति विरूपैकशेषत्वात् भ्रातृपदेन भ्रातृत्वसारौ सोदरत्वेन पुत्रदुहितरौ लक्ष्येते । हरी नमस्यावित्यत्र शक्त्यैव विष्णुत्वादिना बोधकं युगपद्वृत्तिद्वयविरोधस्यास्वीकारात् । एकयैव लक्षणया विष्णुत्वादिना बोधकमित्याहुः । उपपदसमासे कुम्भकारः क्षीरपायीखट्वाशयीत्यादौ धात्वर्थनामार्थयोर्भेदेनान्वयस्याव्युत्पत्त्या लक्षणया कुम्भादिपदानि कुम्भविषयकक्षीरकर्मकखटवाधिकरणपराणि व्युत्पत्ति संकोचे च शक्त्या कुम्भादेर्विषयकत्वादिसम्बन्धेनान्वयबोध इति । कर्मधारये नीलोत्पलमित्यादौ नीलाभिन्नमुत्पलमित्यभेद प्रकारकबोधो अनुभवसिद्धः तत्र वैयाकरणमते कर्मधारये शक्तिकल्पना समासत्वेनैव सा कल्प्या नतु विशेषतः कर्मधारयत्वेनेति सर्वत्र समासे शक्तिः । अन्यमते तु नीलपदस्यैव नीलाभिन्ने लक्षणेति मतद्वयमपि निराचिकीर्षुराह । नीलोत्पलमित्यादाविति । अन्वयविधयैवेति। संसर्गमर्यादयैवेत्यर्थः । एव कारेण प्रकारत्वव्यवच्छेदः । येन तत्प्रकारकबोधोपपत्त्यर्थमभेदेपि वृत्तिरपि कल्प्येतेति भावः । ननु नीलमुत्पलमित्यत्र सम्भवत्यर्थ साधुत्वे शब्दसाधुत्वमन्याय्यमिति न्यायेन न विशेषणभक्तिः प्रयोगसाधुः किंत्वभेदार्थिका युक्तं चैतत् । नीलमुत्पलमिति शाब्दसामग्रीकाले नीलाभेदाभाववदुत्पलमिति मानसप्रत्यक्षादि वारणाय तत्र सामग्र्याः पृथक् प्रतिबन्धकताया भवता वाच्यत्वात् सन्मते च नीलाभेदप्रकारकज्ञानस्य

त्पुरुषात्कर्मधारयो बलीयान्। तत्रहि पूर्वपदे सम्बन्धि ल-
क्षणेत्युक्तं। नञ् त्पुरुषेऽघटः पटइत्यत्र घटपदं घटस-

तत्र योग्यताज्ञानविधया आवश्यकत्वेन विपरीतज्ञानोत्तर प्रत्यक्षनिर्णयं प्रति विशेषदर्शनस्य हेतुतया तदभावादेव मानसवारणात्। विशेषदर्शनसत्त्वे च तदभावव्याप्यवत्तारूपप्रतिबन्धकसत्त्वेन शाब्दबोधस्यैवानुदयात्तादृश-शाब्दसामग्र्या: प्रतिवन्धकत्वाधिक्यं। न च मन्मते नीलस्याभेदस-म्बन्धेनान्वयस्वीकारे तादृशसामग्रीकालेऽभेदसम्बन्धावच्छिन्नप्रतियोगिता-कनीलाभाववदुत्पलमिति प्रत्यक्षादेरनुत्पादस्य विशेषदर्शनाभावादेव निर्वाह इति वाच्यं। तथापि अभेदप्रकारकबोधस्वीकारेऽभेदे नी-लस्य निरूपितत्वसम्बन्धेन भानतया नीलमुत्पलमिति शाब्दसामग्रीकाले निरूपितत्वसम्बन्धेन नीलाभाववानभेदइत्यादिप्रत्यक्षप्रतिबन्धकत्वान्तर-स्याकल्पनादिति विशेषणविभक्तेरभेदोर्थ:। एवंच नीलोत्पलमित्यत्रापि अ-भेदे लक्षणावश्यकी व्याससमासयो: समानप्रकारकज्ञानजनकत्वनियमात् समानार्थसमासारम्भकवाक्यस्यैव विग्रहत्वात्। नचैवं नी"भेदस्य क-थमुत्पलान्वय:। नामार्थयोर्भेदेनान्वयाभावा दितिवाच्यं। समासाति-रिक्तस्थलएव तादृशनियमादित्यत आह। अतएवेति। अतएव कर्म-धारयेन समासत्वेन शक्तिर्नवालक्षणा अतएवेत्यर्थ:। बलीयानिति। कर्म-धारयेन यदि समासत्वेन शक्तिस्तर्हितत्पुरुषेपि शक्तिरेवेति तत्पुरुषाद्बली-यस्त्वव्याघात: यदि च कर्मधारये लक्षणा तर्हि तत्पुरुषेपि सेति उभयथापि बलीयस्त्वव्याघात इति न कर्मधारये वृत्ति: कल्प्या। न च विशेषणविभ-क्ते रभेदार्थकत्वमते व्याससमासयो: समानार्थकत्वानुरोधादभेदे लक्षणा द-श्यकीत्युक्तमिति वाच्यम्। आरूढवानरइत्यत्र व्यभिचारेण तादृशनियमाभा-वात् तदिदमुक्तम् अभेदस्यान्वयविधयैव भानोपपत्तेरिति। ननु राजपु-रुष इत्यत्रापि सम्बन्धलक्षणानुपपत्ति: व्याससमासयो: समानार्थकत्वानु-रोधेनैव तत्कल्पनात्। नामार्थयोरिति व्युत्पत्तिश्च समासातिरिक्तस्थल ए-व अन्यथा सम्बन्धलक्षणयाऽनिर्वाहादित्यत आह। तत्रहीति। तत्पुरु-षेहीत्यर्थ:। पूर्वपदे राजपदे तादृशनियमाभावेपि सम्बन्धप्रकारकबोध-

स्वन्विपरं । नञ्पदं चान्योन्याभावे शक्तमेव संसर्गाभाव वाचकं नञ्पदं नान्योन्याभावशक्तमिति चेन्न । लाघवेन

---

स्वानुभवसिद्धत्वात्सम्बन्धे लक्षणा कर्मधारये तु नैवमिति भावः । ननु सम्बन्धप्रकारकानुभवस्त्वेदुभयत्रापि तुल्यः नास्तिचेदुभयत्रापि मास्तु इत्यनुभवविवादइत्यत आह । सम्बन्धिनि लक्षणेत्युक्तमिति । व्युत्पत्ति-संकोचे मानाभावाद्व्यासस्समासयोः सर्वत्रापि नामार्थयोर्भेदेनानन्वया-द्राजपदस्य राजसम्बन्धिनि लक्षणा नीलस्य चाभेदेनैवोत्पले अन्वया-न्नव्युत्पत्तिविरोध इति न कर्मधारये लक्षणा कल्पनमिति भावः । नच तत्पुरुषात्कर्मधारयस्य बलीयस्त्वमेवासिद्धमिति वाच्यं । निषादस्याधि-करणविरोधापत्तेः । तथाहि । एतयैव निषादस्थपतिंयाजयेदित्यत्र निषा-दः स्थपतिर्यस्येति बहुव्रीहिस्वीकारे उभयपदलाक्षणिकतया गौरवात् । तस्योत्तरपदलाक्षणिकत्वमते पुरः स्फूर्तिकप्रथमपदलाक्षणिकतत्पुरुषस्यैव लघुत्वादिति । निषादानां स्थपतिरिति वा निषादश्चासौ स्थपतिश्चेति वास-मासः । तत्र षष्ठीतत्पुरुषस्वीकारे नामार्थयोर्भेदेनान्वयाभावेन निषाद-पदस्य निषादसम्बन्धिनि लक्षणावश्यकतया गौरवं कर्मधारये तु न त-दिति तदपेक्षया लघुत्वात्कर्मधारय इति सिद्धान्तः तस्य च कर्मधारयेपि लक्षणाकल्पने व्यघातः । ननु निषादस्य सङ्करजतीयत्वेन तस्य यागोपयु-क्तापूर्वविद्याप्रयुक्तिकल्पने गौरवम् । एवं स्त्रीशूद्रौ नाधीयातामित्यत्र सं-कोचकल्पने चेति तदपेक्ष्य तत्पुरुषएव साधुः । नचात्रशूद्रपदस्य निषा-देतरशूद्रपरतया संकोचे निषादस्य वेदान्तराध्ययनप्रसंगः अध्ययनपदस्य यागोपयुक्ताध्ययनेतराध्ययनपरत्वे च शूद्रेतरस्यापि यागोपयुक्ताध्ययनप्रसंग इति वाच्यं । विशेषतः प्राप्तेतराध्ययनपरत्वादध्ययनपदस्य तेन निषादस्य वेदान्तराध्ययनप्रसंगः अध्ययनपदस्य यागपयुक्तेतराध्यनपदस्य तेन निषा-दस्य यागोपयुक्तवेदेतरवेदनिषेधः शूद्रान्तरस्य तु यावद्वेदप्राप्तिरेव तस्य वि-शेषतः प्राप्त्यभावादितिचेन्नैवं । लाघवात्कर्मधारये प्रवृत्तेउत्तरमपूर्वविद्या-प्रयुक्तेः कल्पनस्य फलमुखत्वेन न्याय्यत्वात् । तर्कितगौरवस्य चाप्रतिबन्ध-कत्वात् कर्मधारयेपि लक्षणाकल्पने तु तत्पुरुषापेक्षया लघुत्वाभावेना-

पूर्वविद्याकल्पनप्रयुक्तगौरवग्रस्तत्वेन च तत्र कर्मधारयस्वीकार अनर्थक एव स्यादिति तत्र लक्षणानङ्गीकारएव साधुः। ननु लक्षणाया अभावेपि कर्मधारय एव स्वीक्रियते न तत्पुरुषइत्यत्र बीजाभावः शक्तिलक्षणाज्ञानयोः शाब्दबोधे हेतुतायां विशेषाभावात्। नच मुख्यार्थपरत्वे सम्भवति लक्ष्यार्थपरताया अन्याय्यत्वादिति न्याय एव शरणमिति वाच्यम्। असति विशेषतो बाधके कर्मधारयविधयैव वेदानां प्रामाण्यं न तु तत्पुरुषविधयापीति मन्मतेपि सुवचत्वात् तस्मात्कर्मधारये समासत्वेन शक्तेर्लक्षणाया वा स्वीकारेपि बलीयस्त्वमुपपादयितुं शक्यत एवेति चेन्न। शक्यसम्बन्धरूपलक्षणाज्ञानस्य विना शक्तिज्ञानमसम्भवितया शक्तिज्ञानादेव शाब्दबोधोपपत्तौ लक्षणाज्ञानकल्पने गौरवादिति वैदिकशाब्दबोधस्य शक्तिज्ञानमूलकत्वे लाघवस्यैव सिद्धान्तबीजत्वादित्यलं पल्लवितेन॥ ननु तथापि चित्रगुधनमित्यत्र बहुव्रीहिगर्भतत्पुरुषस्थले बहुव्रीहिलक्षणोत्तरं तत्पुरुषे लक्षणा स्वीकारे लक्षितलक्षणापत्तिः। बहुव्रीहेरन्यपदार्थसम्बन्धिनि अनुशासनाभावात्परंपरासम्बन्धेनैकलक्षणाया अनिर्वाहाद्बहुव्रीहौ शक्तिस्वीकारस्यावश्यकतया समासत्वेन सर्वत्रैव समासे तत्कल्पनमिति चेन्न। चित्रगुपदस्य बहुव्रीहिलक्षणया ऽन्यपदार्थपरत्वे तत्सम्बन्धिनि परंपरासम्बन्धेन तत्पुरुषलक्षणायां च लक्षणाद्वयादेव युगपदन्वयबोधोपपत्तेः। युगपद्वृत्तिद्वयविरोधस्य च मणिकृन्मतेऽनङ्गीकारादिति। अघटः पट इति नञ्तत्पुरुषे घटभिन्नः पट इत्यन्वयबोधस्यानुभविकत्वान्नञश्च संसर्गाभावमात्रवाचकत्वेन ततोऽन्योन्याभावप्रकारकबोधस्यासम्भवितया घटभिन्ने समासे शक्तिरिति मतं दूषयति। नञ्तत्पुरुषेपीति। घटसम्बन्धिपरमिति। घटसम्बन्धिनि लाक्षणिकमित्यर्थः। सम्बन्धश्चात्र प्रतियोगित्वम्। अनन्यलभ्यस्यैव शब्दार्थत्वान्न तत्र शक्तिरिति भावः। कथं तर्ह्यन्योन्याभावप्रकारकबोध इत्यत आह। नञ्पदं चेति। ननु संसर्गाभावोऽन्योन्याभावश्च नञर्थ इति संसर्गाभावत्वमन्योन्याभावत्वं च शक्यतावच्छेदकमिति नञ्पदस्य नानार्थकत्वकल्पनापेक्षयाऽन्योन्याभावे लक्षणैवोचिताऽनन्यलभ्यस्यैव शब्दार्थत्वादित्यभिप्रायेणाह। संसर्गेति। अत्यन्ताभावमात्रवाचकत्वे घटप्रागभावदशायां ध्वंसदशायां च कपाले घटो नास्तीति बुद्धेरनुदयप्रसङ्गः ध्वंसप्रागभावप्रतियोगिभिस्त्रिभिः सहा-

त्यान्ताभावस्य प्राचां मते विरोधादत्यन्ताभावविषयकत्वासम्भवात् अतो ध्वंसादिविषयकत्वमेवोपेयं तथा च तत्साधारण्याय संसर्गाभावेति । संसर्गाभावत्वं च संसर्गारोपजन्यप्रतीतिविषयीभूताभावत्वं ध्वंसप्रागभावदशायां कपाले घटो नास्तीति धीर्ध्वंसादिविषयिणी तत्र चोत्तरकालीनत्वविशिष्टसमवायः प्रागभावस्य पूर्वकालीनत्वविशिष्टसमवायश्च ध्वंसस्य प्रतियोगितावच्छेदकसम्बन्धः प्रसक्तं हि निषिध्यत इति न्यायादुत्पत्तेः पूर्वमुत्तरकालीनत्वविशिष्टसमवायेन कपाले घटस्याभावस्तत्र तेन सम्बन्धेन कपाले घटोऽस्तीति संसर्गारोपानन्तरं घटो नास्तीति बुद्धिः एवं ध्वंसदशायां पूर्वकालीनत्वविशिष्टसमवायेन घटस्याभावात्तेन सम्बन्धेन कपाले घटोऽस्तीति संसर्गारोपानन्तरं घटो नास्तीति बुद्धिः । अत्यन्ताभावे तु संयोगमात्रेणैव घटवत्तारोपादत्यन्ताभावधीः । नचान्योन्याभावप्रत्यये तादात्म्यारोपस्य हेतुतया तादात्म्यस्यापि संसर्गत्वेनान्योन्याभावे ऽतिव्याप्तिरिति वाच्यं । संयोगादिसम्बन्धे एव भूरिप्रयोगात्संयोगादिष्वेव संसर्गव्यवहारात्तादात्म्यातिरिक्तत्वेन संसर्गस्य प्रवेशाद्वा । नच तथापि नेत्याकारकाभावप्रत्ययवारणायाभावलौकिकप्रत्यये प्रतियोगिज्ञानस्य हेतुताया आवश्यकत्वे प्रतियोगिसंसार्गारोपहेतुत्वे मानाभाव इति वाच्यम् । एकदा नानासम्बन्धावच्छिन्नाभावप्रत्ययवारणाय तत्सम्बन्धावच्छिन्नाभावप्रत्यये तत्तत्संसर्गारोपस्यापि हेतुत्वात् । नच ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसम्बन्धे मानाभावेन कथं तत्प्रत्यये प्रतियोगिसंसर्गारोपः कारणमिति वाच्यम् । अनुभवबलेन प्रतिबध्यप्रतिबन्धकभावानुरोधेन चात्यन्ताभावस्येव तयोरपि प्रतियोगितावच्छेदकसम्बन्धाङ्गीकारात् । तथाहि । अत्यन्ताभावस्येव ध्वंसप्रागभावयोरपि ज्ञानदशायां तत्कालावच्छेदेन प्रतियोगिमत्ताज्ञानानुदयात् समवायेन तद्घटवत्ताज्ञानं प्रति तद्घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रागभावादिमत्ताज्ञानत्वादिना प्रतिबन्धकत्वमपेक्ष्य समवायेन तद्घटत्वावच्छिन्न प्रतियोगिताकाभाव वत्ताज्ञानत्वेनैव प्रतिबन्धकतयाऽत्यन्ताभावस्येव तयोरपि सम्बन्धावच्छिन्नविशेषधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारात् । तथाच संसर्गाभावत्वं न शक्यतावच्छेदकं । नचान्योन्याभावत्वमेव तथास्तामिति वाच्यम् । सामान्ये पक्षपात इति न्यायेन ध्वंसप्रागभावादिसाधारणतया संसर्गाभावत्वस्यैव

विनिगमनाविरहेण चाभावमात्र एव तच्छक्यत्वावधारणा-

---

तथात्वात् । न घटः पट इत्यादौ सामानाधिकरण्यानुरोधेनान्योन्याभावव-
ति लक्षणयाऽन्योन्याभावे शक्त्या नञः प्रयोगाभावाच्च चैत्रो न पचति नेदं
चैत्रस्य भूतले न घट इत्यादौ मन्मते नञो मुख्यार्थतासम्भवादित्याशयः । ला-
घवेनेति । संसर्गाभात्वं संसर्गारोपजन्यप्रतीतिविषयाभावत्वमिति तदपेक्षया
वग्रविष्टत्वेनाभावस्यैव लघुत्वेनोभयत्रैव शक्तिरिति भावः । ननु संसर्गा-
भावत्वं न संसर्गारोपजन्यप्रतीतिविषयाभावत्वं संसर्गारोपस्य हि अनाहा-
र्यस्य हेतुत्वे ऽनाहार्यबाधबुद्धेः प्रतिबन्धकतयाऽभावप्रत्यक्षानुपपत्तिः आहा-
र्यस्य च तस्य तदानीं बाधाभावेनासम्भवः बाधकालीनेच्छाजन्यज्ञानस्यैवा-
हार्यत्वात् यदि च बाधसामग्रीकालिकस्याप्याहार्यत्वमिति मन्यते तथाप्य-
भावलौकिकप्रत्यक्षे एव प्रतियोगिसंसर्गारोपस्य हेतुतया ऽतीन्द्रियाभावेऽव्या-
प्तिः। नच संसर्गावच्छिन्नप्रतियोगिताकाभावत्वं तत् । संयोग्यन्योन्याभावेऽति-
व्याप्तेः संयोगितादात्म्यस्य संयोगरूपत्वेन तस्यापि संसर्गापच्छिन्नप्रतियो-
गिताकत्वात् संसर्गतया तादात्म्यतया चावच्छेदकतावैलक्षण्यं दुर्वचम् । एवं
तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वं मान्योन्याभावत्वं संयोगसम्बन्धाव-
च्छिन्नप्रतियोगिताक संयोग्यत्यन्ताभावे ऽतिव्याप्तेः संयोगितादात्म्यस्य सं-
योगरूपतया तादात्म्यावच्छिन्नप्रतियोगिताकत्वात् तादात्म्यत्वेन तादात्म्या-
वच्छिन्नत्वोक्तौ च तादात्म्यत्वस्यातिरिक्तत्वोपगम एव निस्तार इति संसर्गा-
भावत्वमखण्डमेवेति किं तदपेक्षयाभावत्वे लाघवं । न च सामान्यधर्मत्वादभा-
वत्वे लघ्विति वाच्यं । सामान्यधर्मस्यावच्छेदकत्वे नञ्पदाच्छक्त्यैवाभावबो-
धोपपत्तौ लक्षणां विनैवोपपत्तेरित्यस्यैव बीजतया संसर्गाभावत्वादीनामख-
ण्डत्वे नञ्पदाद्यत्र संसर्गाभावत्वप्रकारकबोधस्तत्राभावत्वप्रकारकबोधस्य क-
लहग्रस्तत्वेन प्रकृते तदसम्भवादित्यत आह । विनिगमनेति । संसर्गाभावत्व-
स्यातिरिक्तत्वेऽभावत्वस्याप्यतिरिक्तत्वेन तदपि शक्यतावच्छेदकमित्यर्थः । अ-
भावमात्र एवेति । संसर्गाभावे ऽन्योन्याभावे चेत्यर्थः । तच्छक्यत्वेति । नञ्प-
दशक्यत्वावधारणादित्यर्थ इति सम्प्रदायानुसारिणी व्याख्या । वस्तु तस्तु न-
न्वभावत्वस्य नञ्शक्यतावच्छेदकत्वे घटो नास्तीत्यत्र संसर्गाभावत्वप्रकार-
को बोधः घटो नेत्यादौ अन्योन्याभावत्वप्रकारको बोधः कथं स्यात् । य-

दि च संसर्गावच्छिन्नप्रतियोगिताकसंसर्गाभावविषयकशाब्दत्वादेः कार्यतावच्छेदकतया तादृशानुभवोपपत्तिरिति विभाव्यते । तथा प्यभाव इति प्रतीतेरवश्यकॢप्तात्यन्ताभावत्वध्वंसत्वादिविषयकत्वेनैवोपपत्तौ अतिरिक्ताभावत्वे मानाभाव इति नाभावत्वं शक्यतावच्छेदकमत आह । विनिगमनेति । संसर्गाभावत्वमिवान्योन्याभावत्वमपि शक्यतावच्छेदकं विनिगमनाविरहादिति भावः । भूरिप्रयोगस्य संसर्गाभाव इवान्योन्याभावेपि सत्त्वान्नियमतः प्रतीयमानेप्यर्थे शक्यस्वीकारे नानार्थोच्छेदापत्तेः । चैत्रो न पचतीत्यादौ वैयाकरणमते कर्तुर्वाच्यतयाऽस्माकमपि यदाख्याते कर्तरि लक्षणा तदा शक्यैवान्योन्याभावस्य नञा प्रत्यायनसम्भवादिति व्याख्येयं । यदि च घटो नास्तीत्यत्रात्यन्ताभावत्वप्रकारकएव बोध आनुभविकः ध्वंसप्रागभावयोरत्यंताभावविरोधित्वे मानाभावेन ध्वंसप्रागभावकाले घटो नास्तीति बुद्धेरत्यन्ताभावविषयकत्वेनैवोपपत्तेरिति विभाव्यते । तदात्यन्ताभावत्वमन्योन्याभावत्वं च शक्यतावच्छेदकमिति मन्तव्यम् । अत्र च घटवति भूतले यत्किञ्चिद्घटप्रतियोगिकाभावसत्त्वात् भूतले घटो नास्तीति बुद्ध्यापत्तिवारणायान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं तत्र घटत्वावच्छिन्नप्रतियोगिताकाभावविषयकशाब्दत्वावच्छिन्नं प्रति यत्किञ्चित्पदासमभिव्याहृतघटपदसमभिव्याहृतनञ्पदज्ञानत्वेन कारणता तेन नीलो घटो नास्तीत्यत्र न घटत्वावच्छिन्नाभावधीः । किञ्चित्पदं च नीलादिपदत्वेन विशिष्योपादेयं तेन भूतलादिपदसमभिव्याहारेपि न दोषः ॥ नच तथापि नीले घटो नास्तीत्यत्रानुपपत्तिः । अभेदेन नीलादिसाकांक्षत्वे नाज्ञातमिति तदर्थात् कम्बुग्रीवादिमान्नास्तीत्यादौ तु सम्भवति लघौ गुरौ तदभावादिति न्यायेन कम्बुग्रीवादिमत्त्वस्य घटत्वापेक्षया गुरुत्वेनानवच्छेदकतया कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावबोधो भ्रमात्मक एव । यद्यपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्ध्या तेन सम्बन्धेन कम्बुग्रीवादिमतो नाभावोपरि भ्रमः । तथापि सांसर्गिकविषयतायामपि प्रकारतात्वोपगमेन प्रतियोगितायां कम्बुग्रीवाद्यवच्छिन्नत्वांशे भ्रम इति बोध्यम् । केचित्तु घटो नास्तीत्यादौ प्रतियोगितया घटस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन च घटत्वस्याभावोपरिभानं कम्बुग्रीवादिमान्नास्तीत्यत्र तु घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कम्बुग्रीवादिम-

त्। ननु न घटःपट इति वदभावघटयोरन्वयोपपत्तेर्न घटपदेपि लक्षणा युक्तेति चेन्न। नामार्थयोर्भेदान्वयस्या व्युत्पत्तेः। कथं तर्हि न घटः पट इत्यत्रान्वय इति चेत् घटपदस्य घटप्रतियोगिके लक्षणेति गृहाण। प्रथमाया वा षष्ठ्यर्थे लक्षणा। ननु सुब्विभक्तौ न लक्षणेति चेत्। तर्हि कथं षष्ठीतः कर्मतोप्रत्ययः कथं वा एकस्यां दारा इति बहुवचनम्।

---

त्वस्याभावोपरि भ्रमः स्वावच्छिन्नप्रतियोगिताकत्वस्यैव स्वस्य सम्बन्धत्वादित्याहुः। आशयमविद्वानाशंकते। ननु न घट इति। अभावघटयोरिति। प्रतियोगितया घटस्याभावोपरिबोधोपपत्तेरित्यर्थः। घटपदेपीति। अपिना नञ्पदसमुच्चयः। नामार्थयोरिति। नीलो घट इत्यत्र नीलघटयोरभेदेनान्वयाद्भेदेनेति। अभेदातिरिक्तसम्बन्धेनेत्यर्थः। तथा च नञर्थाभावे प्रतियोगितासम्बन्धेन घटस्यान्वयो न सम्भवति लुप्तसुबन्तत्वेन नञोऽपि नामत्वादिति भावः। कथं तर्हीति। नामार्थयोरिति व्युत्पत्तेः स्वीकारे हीत्यर्थः। न घट इति। प्रथमायाः शब्दसाधुत्वात्प्रतियोगितासम्बन्धेनैव नञर्थान्योन्याभावे घटस्यान्वयइति भावः। अर्थसाधुत्वे सम्भवति शब्दसाधुत्वस्यान्याय्यतया प्रथमायामेव लक्षणामाह। प्रथमायावेति। षष्ठ्यर्थे प्रतियोगित्वे। ननु सुब्विभक्तौ लक्षणा न सम्भवति कर्तृकर्मणोः कृतीति व्यत्ययानुशासनवैयर्थ्यापत्तेः कर्तृत्वकर्मत्वप्रकारकबोधस्य षष्ठ्यास्तद्धर्मविशिष्टे लक्षणयैवोपपादयितुं शक्यत्वादित्यभिप्रायेणाशंकते। नन्विति। तर्हि। सुब्विभक्तौ लक्षणानङ्गीकारे हि। षष्ठीतः। भातरस्य श्रवणं व्यासस्य कृतिरिति कर्तृकर्मकृद्योगविहितषष्ठीतः। कर्मतेति। कर्तृत्वेत्यपि बोध्यम्। शेषे षष्ठीत्यनेन सम्बन्धमात्रशक्तषष्ठीतः सम्बन्धत्वेन बोधसम्भवेपि कर्तृत्वेन कर्मत्वेन बोधो न सम्भवतीति तथा बोधोपपत्तये लक्षणास्वीकार आवश्यकः। नचानुशासनस्य शक्तिनियामकतया कर्तृकर्मकृद्योगविहितषष्ठीत्वेन कर्तृत्वत्वादिना शक्तिरेवास्तामिति वाच्यम्। अनन्यलभ्यस्य शब्दार्थत्वादिति भावः। असन्दिग्धस्थलमुदाहरति। कथंवेति। एकस्यां। स्त्रीव्यक्तौ। दारा इतीति। "दाराः पुंसि च भूम्न्येवेति" बहुवचनान्तएव शब्दः साधुरिति भा-

आनुशासनकीयं लक्षणा दृष्टैवेति चेत्तुल्यं तदिदमाहुः । नियत प्रतियोगा हि केचिदव्यया इति तथापि नञर्थपटयोः कथमाश्रयाश्रयिभावेनान्वयः । नञुत्तरलुप्तषष्ठीस्मरणादि-

वः । यद्यपि प्रकृत्यर्थवृत्ति संख्यावाचकत्वं सुपां नतु तन्मात्रवृत्ति संख्यावाचकत्वमिति तद्गतगुणानादाय बहुत्वान्वयः सम्भवत्येव तथाप्येको घटाइत्यत्राप्यसाधुत्वज्ञानाभावदशायां घटगतगुणानादाय बहुत्वान्वयापत्तिः । नच भवन्मतेपि बहुवचनलक्षणाया एकत्वं बोध्यतामिति वाच्यम् । एक इति पदेनैकत्वबोधसम्भवे घटा इति बहुवचनस्यैकत्वे तात्पर्यग्रहेण लक्षणया एकत्वबोधवारणसम्भवात् प्रकृते च सम्भवत्यर्थसाधुत्वे शब्दसाधुत्वस्यान्याय्यत्वादिति । आनुशासनिकीति । इयं । लक्षणा । षष्ठ्याः कर्मत्वे बहुवचनस्य चैकत्वे लक्षणेत्यर्थः । दृष्टैवेति । कर्तृकर्मणोः कृतीति व्यत्ययानुशासनवैयर्थ्यभिया सुब्विभक्तौ न लक्षणेत्यस्यानुशासितविभक्त्यर्थातिरिक्ते न लक्षणेत्येव तदर्थ इति । भारतस्य श्रवणमित्यादौ विभक्तौ लक्षणोपपत्तावपि न घटः पट इत्यत्र प्रथमायां कथं लक्षणा तथाऽनुशासनाभावादिति भावः । तुल्यमिति । प्रकृतेपि नञ्समभिव्याहृतघटपदोत्तर प्रथमायामप्यानुशासनिकी लक्षणा सम्भवतीति तुल्यमित्यर्थः । अनुशासनमेवाहुः । तदिदमाहुरिति । नियतेति । नियतः प्रतियोगिवाचकपदेन नियतः प्रयोगी येषां ते केचिदव्यया नञादिरूपाः प्रतियोगिवाचकपदार्थान्वितस्वार्थबोधकाः केचिदव्यया इति यावत् । नइति न कदाचिदपि प्रयोगः किंतु न घटः पटइत्यादिरूप एव तथा च स्वार्थे प्रतियोगिवाचकपदार्थान्वितत्वमभेदेन विभक्त्यर्थद्वारा वा तत्र च घटपदस्य घटप्रतियोगिके लक्षणायामभेदेन प्रथमायाः प्रतियोगित्वेन लक्षणायां तु विभक्त्यर्थद्वाराऽन्वयः घटपदे लक्षणायां प्रथमायाः शब्दसाधुत्वमात्रकल्पनापेक्षया प्रथमाया एव प्रतियोगित्वे लक्षणोचितेत्यत्रापि प्रतियोगित्वे लक्षणानुशासनिकीति भावः । यद्यपि प्रतियोगित्वरूपार्थे प्रथमेति न व्याकरणे प्रतिपादितम् । तथापि तादृशानुशासनतात्पर्यं तत्रैवेत्यनुशासितत्वमिति ध्येयम् । शंकते । तथापीति । नञर्थेति । न घटः पटइत्यत्र घटान्योन्याभावस्य पटे कथमन्वयः नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयबोधासम्भवादित्यर्थः । शंकते । नञुत्तरेति । तथा च न नामार्थयोरन्वयः किंतु

ति चेन्न। षष्ठीलोपप्रसञ्जानतोपिततोऽर्थ प्रत्ययात्। नञ्पदम-भाव वल्लक्षकमिति चेन्न। घटस्याभावे अनन्वयापत्तेः। तस्य पदार्थैकदेशत्वात्। मैवं। ससम्बन्धिकस्थले एकदेशेऽप्यन्वय स्वी-कारात्। यथा चैत्रस्य पितेत्यादौ चैत्रस्य जनकत्वेऽन्वयः। अ-

---

विभक्त्यर्थ नामार्थयोरिति भावः। ततइति । न घटः पट इति वाक्यादित्य-र्थः। शंकते। नञ्पदमिति। नञर्थस्याभाववतः पटे भेदेनैवान्वय इति नैतद्व्यु-त्पत्तिविरोध इति भावः। घटस्येति। नञोऽभाववति लक्षणया घटस्य प्र-तियोगितासम्बन्धे नाभावेऽन्वयो वाच्यः स च न सम्भवतीति भावः। तदेवा-ह। तस्येति। अभावस्येत्यर्थः। पदार्थैकदेशेति। नञो ऽभाववदर्थकतयाऽभा-वस्यैकदेशत्वादिति भावः। गौर्नित्यापशुरपशुरित्यादौ सविशेषणेहिविधि-निषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधइतिन्यायेन स्वर्गी ध्वस्त इति वत् नित्यत्वस्य गोत्वे अन्वयापत्त्या पदार्थः पदार्थेनान्वेतिन तु पदार्थैकदेशे-नेति नियमस्यावश्यकतया नञर्थाभाववदेकदेशे ऽभावे घटस्य प्रतियोगित-या ऽन्वयासम्भव इति भावः। तथापीति शंकोपरिसमाधत्ते। नैवमिति। स-सम्बन्धिकेति। नामार्थयोरिति व्युत्पत्त्या नञोऽ भाववति लक्षणैव अभा-ववतस्त्वाभेदेनैव पटे ऽन्वय इति न नामार्थयोरिति व्युत्पत्तिविरोधः पदार्थः पदार्थेनान्वेति ननु पदर्थैकदेशेनेति व्युत्पत्तेश्च ससम्बन्धिकपदार्थातिरि-क्तस्थल एवाभ्युपगमात्। नञर्थाभाववदेकदेशेऽप्यभावे घटस्यान्वये बाध-काभाव इति भावः। ननु व्युत्पत्तिसंकोचे प्रमाणाभाव इत्यत आह। यथे-ति। जनकत्वइति। जनकपुंस्त्वं हि पितृत्वं तत्रैकदेशे जनकत्वे यथा चै-त्रस्य निरूपितत्वसम्बन्धे नान्वय इत्यर्थः। तथाच व्युत्पत्तिसंकोच आवश्यक इति भावः। ननु चैत्रस्य पितेत्यादौ जनकपुंस्त्वरूपपितृत्वैकदेशे जनकत्वे चैत्रस्य नान्वयः किन्तु स्वनिरूपितजनकत्वसम्बन्धेन पितृपदार्थे एवेति न पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिसंकोचः। एवं च प्रकृतेपि घटो नेत्यादौ घटपदस्य घटप्रतियोगिके लक्षणायां घटप्रतियोगिकस्य स्वाभिन्नाभावाश्र-यतासम्बन्धेन प्रथमायाः प्रतियोगित्वे लक्षणायां तु घटस्य स्वप्रतियोगि-काभावाश्रयतासम्बन्धेन पटे ऽन्वये बाधकाभाव इति मतं दर्शयति। अन्ये-

न्येतु समुदाय एवेतरपदार्थान्वयः परंपरासम्बन्धेनेत्याहुः । युक्तं चाभाववल्लक्षकत्वमेव । अन्यथा घटं पट मित्यत्र समानविभक्तिकतानुपपत्तेः । परेतु निपातस्थलेऽन्यैव व्युत्पत्तिरिति घटतदभावयोः प्रतियोग्यनुयोगिभावेनान्वयोपपत्तौ न ष-

---

ष्ठिति । समुदायएव । अभाववत्येव । एवकारेणाभावरूपपदार्थैकदेशव्युदासः । इतरपदार्थेति । घटपदार्थाद्यन्वयः । परंपरासम्बन्धेन । स्वाभिन्नाभावाश्रयतासम्बन्धेन स्वप्रतियोगिकाभावाश्रयतासम्बन्धेन वेत्यर्थः । नच नामार्थयोरिति व्युत्पत्तिभङ्ग इति वाच्यम् । नामार्थयोरभेदाघटित सम्बन्धेन विभक्त्यर्थाघटितसम्बन्धेन च मान्वय इत्येव व्युत्पत्तेरिति भावः । एवं चैत्रस्य पितेत्यादौ चैत्रस्य स्वनिरूपितजनकत्वसम्बन्धेन पितर्येवान्वय इति बोध्यम् । आहुरित्यस्वरसोद्भावनं । तद्बीजं तु घटीयोऽभाववान् पट इत्यन्वये कस्याभाव इत्याकाङ्क्षाया अनिवृत्तिर नमु भवस्येति । नन्वभाववति लक्षणाङ्गीकारे पदार्थ इत्यादेर्भवन्मते सङ्कोचः नञर्थाभावस्याश्रयतासम्बन्धेन पटेऽन्वये नामार्थयोरित्यस्य सङ्कोच इति तुल्यत्वे किमिति अभाववति लक्षणा घटपदस्य घटप्रतियोगिके नञ्भाभाववति लक्षणायां लक्षणाद्वयप्रसङ्गश्चेत्यत आह । युक्तं चेति । व्युत्पत्तिसङ्कोचस्याविशिष्टत्वे पीति शेषः । लक्षकत्वमेव । नञपदस्येतिशेषः । अन्यथा । नञो ऽभाववति लक्षणाऽकल्पने । अघटः पट इति विशेषण विशेष्यवाचकपदयोः समानविभक्तिकत्वस्य विरुद्धविभक्तिराहित्यस्य वा ऽभेदान्वयबोधे हेतुत्वेन भवन्मते ऽभावस्यैवाश्रयतया ऽन्वये ऽभेदेनान्वयबोधाभावेन प्रतियोगिवाचकपदयोः समानविभक्तिकत्वमनुपपन्नं स्यादित्यर्थः । निपातेति । निपातादीत्यर्थः । आदिनाऽव्ययसङ्ग्रहः । अन्यैवेति । अव्ययनिपातातिरिक्तनामार्थयोर्भेदान्वयबोधाभाव इत्यर्थः । नामार्थप्रकारकशाब्दबोधे ऽव्ययनिपात प्रत्ययाद्यन्यतमजन्योपस्थिते र्हेतुत्वादित्यर्थः । नञ्स्थले च प्रत्ययजन्योपस्थितेरसत्त्वे पि निपातजन्योपस्थितेः सत्त्वेन व्यभिचाराभाव इत्यपि कश्चित् । तत्त्वन्यतमत्वनिवेशे गौरवाच्चिन्त्यं । नन्वव्ययातिरिक्तनिवेशे गौरवमत आह । अतएवेति । अव्यायातिरिक्तत्वनिवेशादेवेत्यर्थः । भेदेनेति । इवार्थे सादृश्ये चन्द्रस्य प्रतियोगितया ऽन्वयइत्यर्थः ।

ट इत्यादि लक्षणा। अतएव चन्द्र इव मुखमित्यादौ चन्द्रइवार्थयोर्भेदेनान्वयः। अतएव घटो नास्तीत्यत्रापि घटतद्भावयोरन्वयो निष्कलङ्क इत्याहुस्तन्न। मानाभावात्। चन्द्रइव सुखमित्यादौ तु चन्द्रपदं तत्सदृशलक्षकं। इवपदं च तात्पर्यग्राहकम्। अतएव चन्द्रमिव सुखंपश्यामीत्यत्र द्वितीया।

---

चन्द्ररूपनामार्थस्य सादृश्यरूपेवार्थेऽभेदातिरिक्त प्रतियोगितासम्बन्धेनान्वयो पपादनाय तादृशनियमव्युत्पत्तिसङ्कोचकल्पनस्यावश्यकत्वादिति भावः। अत एव। चन्द्र इव मुखमित्यादौ चन्द्रइवार्थयोर्भेदेनान्वयोपपादनाय नियमसङ्कोचस्यावश्यकत्वादेव। घटेति। घटतद्भावयोः प्रतियोग्यनुयोगिभावस्य संसर्गमर्यादयैव भानाल्लक्षणा कल्पनमन्याय्यमिति भावः। मानाभावादिति। नामार्थयोरित्यादि नियमेऽव्ययनिपातातिरिक्तस्थल इति सङ्कोचे मानाभावादित्यर्थः। नन्वेवं चन्द्र इव मुखमित्यादौ चन्द्र इवार्थयोः कथमन्वयबोध इत्यत आह। चन्द्रइवेति। तत्सदृशेति। चन्द्रसदृशेत्यर्थः। नन्वेवमिव पदमनर्थकमत आह। इवपदंचेति। तात्पर्येति। केवलं चन्द्र इति पदात्र सादृश्यबोध इति चन्द्रपदस्य चन्द्रसदृशे लक्षणायामिवपदसमभिव्याहारस्तन्त्रमित्यर्थः। नन्वेवमनन्तलक्षणा कल्पनमपेक्ष्य इव पदस्य नियतप्रतीयमाने सादृश्ये शक्तिरेवास्तामत आह। अतएवेति। चन्द्रपदस्य चन्द्रसदृशलक्षकत्वादेव। अन्यथा। लक्षणाऽकल्पने। तदनुपपत्तेः। चन्द्रमिवेति द्वितीयानुपपत्तेः। चन्द्रपदस्य चन्द्रसदृशे लक्षणायां तस्याभेदेनान्वयात् अभेदान्वये च विशेषणविशेष्यवाचकपदयोः समानविभक्तिकतायास्तन्त्रतया चन्द्रमिति विशेषणवाचकपदोत्तरं द्वितीया आवश्यकी भवन्तीत्यवार्थ सादृश्यस्याश्रयतया सुखेऽन्वयेनाभेदेनान्वयाभावाद्द्वितीयानुपपन्नैव चन्द्रइव सुखं पश्यामीत्यतोऽपि तादृशबोधोपपत्तेरिति भावः। ननु चन्द्रपदस्य चन्द्रप्रतियोगिकमर्थः सादृश्यशक्तस्य चेवादेः सादृश्याश्रये लक्षणा तस्याभेदेन मुखेऽन्वय इति रीत्या चन्द्रमिव मुखमित्यत्र समानविभक्तिकत्वोपपत्तिः सम्भवत्येव न घटः पट इत्यत्रैव अन्यथा तत्रापि घटपदस्य घटाभाववति लक्षणा नञ्पदं च तात्पर्यग्राहकमित्यपि प्रसज्येतेति चेन्न। भूतले न घट इत्यत्राभावविशेष्यकबोधस्य प्र-

अन्यथा तदनुपपत्तेः। अस्तु वा षष्ठ्यर्थ एव विभक्तौ लक्षणाऽनुशासनानुग्रहात्। घटो नास्तीत्यत्रापि तथेत्यदोषः। अन्ये तु। घटो नास्तीत्यत्र घटस्याभावोऽस्तीति नार्थः। तथासति भूतले घटौ नास्तीत्यस्याप्यापत्तेः। अभावस्यैकत्वादिति।

---

क्त्या नञाजननात् अभावशक्तस्य नञोऽभाववति लक्षणोचिता। केवलं चन्द्र इवेत्यप्रयोगाच्छक्त्या इव पदात्सादृश्यविशेष्यकबोधाभावादिवादेः सादृश्ये शक्तेरेवाकल्पना तेषां निरर्थकत्वमेवेत्याशयात् इवादीनां सादृश्ये शक्त्यभ्युपगमेपि न व्युत्पत्तिसङ्कोच इत्याह। अस्तुवेति। षष्ठ्यर्थे। प्रतियोगित्वे। विभक्तौ। चन्द्रपदोत्तरप्रथमाविभक्तौ। इवपदोत्तरलुप्तविभक्तेरनुसन्धानं तथाच नामार्थयोरिति व्युत्पत्तिसङ्कोचो नेति भावः। ननु सुब्विभक्तौ न लक्षणेत्यत आह। अनुशासनेति। नियतप्रयोगाद्धि केचिदव्यया इत्यनुशासनबलादित्यर्थः। अनुशासितविभक्त्यर्थातिरिक्तस्थले सुब्विभक्तौ लक्षणा नास्तीति भावः। तथेति। घटोनास्तीत्यत्र घटपदोत्तरप्रथमाविभक्तेरपि प्रतियोगित्वे लक्षणे त्यर्थः। भूतले न घटइत्यत्रेव केवलं चन्द्र इवेति न प्रयोगः चन्द्र इव मुखमित्यत्र तु लुप्तविभक्तेरननुसन्धानेपि बोधाच्चन्द्रपदस्य चन्द्रसदृशलक्षकत्वमेवोचितमिति क्वापि इवादिना शक्त्या सादृश्याबोधात्तेषां निरर्थकत्वमेवेत्यस्वरसोऽस्तुवेत्यनेन सूचितः। पृथिव्यां गन्धो न जलइत्यत्र पृथिवीवृत्तिर्गन्धो गन्धाभावो जलवृत्तिरित्यन्वयबोधस्वीकारे समानविशेष्यकत्वानुपपत्तेः। पृथिवीवृत्तिर्गन्धो जलवृत्त्यभावी योगन्ध इत्यन्वयबोधस्वीकार आवश्यक इत्यभिप्रायिणां मतमाह। अन्येत्विति। ननु पृथिव्यां गन्धो न जलइत्यादौ समानविशेष्यकत्वानुरोधेन तथान्वयस्वीकारेपि भूतले घटो नास्तीत्यत्र भूतलवृत्तिर्घटाभाव इत्यन्वयबोधे बाधकाभाव इत्यत आह। घटोनास्तीत्यत्रेति। एकत्वादीति। भावनान्वयिन्येव संख्यान्वयेन घटो नास्तीत्यत्र घटाभावोऽस्तित्वाश्रय इत्यन्वयस्वीकारे भावनाविशेष्ये घटाभावे द्वित्वादेरसम्भवितया घटौ न स्त इति न स्यात् तत्रैकत्वसत्त्वेनैकत्वबोधे बाधकाभावाद्घटो नास्तीति च स्यात् भावनाविशेष्यवृत्ति संख्याबोधकत्वादाख्यातस्येत्यर्थः। तर्हि कीदृशोऽन्वयबोध इत्यत आह। किन्त्विति। भूतले

किन्तु भूतलवृत्त्यभाव प्रतियोगी घटोऽस्तीति तन्न । क्वेत्यधिकरणाकांक्षापत्तेः । कथं तर्हि घटोनास्ति इत्यादीति चेत् । भावनान्वय्यभावप्रतियोगिनि संख्यान्वयात् । कथमिति चेत् । तथैव प्रतीतेरिति गृहाण । परेतु इह भूतलेऽस्तित्वरूपा-

---

घटो नास्तीत्यत्र सप्तम्या निरूपितत्वार्थकतया अस्धातोर्विद्यमानार्थकतया आख्यातस्याश्रयत्वार्थकतया भूतलनिरूपितविद्यमानत्वाश्रयो घटाभाव इत्यन्वयबोधस्वीकारे भावनान्वयिनि संख्यान्वयनियमात् भवन्मते विद्यमानत्वाश्रयत्वरूपाख्यातार्थ भावानाया अभावएवान्वयेनाभावस्यैकत्वाद्घटो नास्तीति स्यात् । मन्मते च सप्तम्या आधेयत्वमर्थः । तथाच भूतलवृत्त्यभावीयो घटोऽस्तित्वाश्रय इति बोधोदयेन भावनाया घटे एवान्विततया घटद्वये एकत्वबोधासंभवाद्घटो नास्तीत्यस्यापत्तिरिति भावः । क्वेति । भूतलवृत्त्यभावप्रतियोगी घटोऽस्तित्वाश्रय एवेत्यन्वयबोधस्वीकारे किंनिरूपितास्तित्वाश्रयो घट इत्याकांक्षाया अनिवृत्तेर्न घटे भावनान्वय इति भावः । कथं तर्हीति । भूतलनिरूपितास्तित्वाश्रयो घटाभाव इत्यन्वयबोधस्विकारे इत्यर्थः । इत्यादीति । भावनान्वयिन्यभावे द्वित्वान्वयाभावाद्घटौ न स्त इति न स्यात् स्याच्च घटो नास्तीत्यर्थः । भावनेति । भावनान्वयी योऽभावस्तत्प्रतियोगिनि संख्यान्वय इत्यर्थः । तथाच भावनान्वयिन्येव संख्यान्वय इति नञसमभिव्याहारे नियमः नञ्समभिव्याहारस्थले तु भावनान्वय्यभावप्रतियोगिनि संख्यान्वय इति व्युत्पत्त्यन्तरकल्पनेनैव घटौ न स्त इत्यत्र घट एव द्वित्वान्वयान्न घटौ न स्त इत्यस्यानुपपत्तिः न वा घटो नास्तीत्यस्यापत्तिरिति भावः । कथमिति । अन्यत्र भावनान्वयिन्येव संख्यान्वयस्य दृष्टत्वात् कथमत्र भावनान्वय्यभावप्रतियोगिनि संख्यान्वय इत्यर्थः । तथैवेति । अभावप्रतियोगिन्येव संख्यान्वयप्रतीतेरित्यर्थः तथाच न नञ्समभिव्याहृताख्यातार्थसंख्याप्रकारकबोधे नञर्थाभावप्रतियोग्युपस्थितित्वेन हेतुत्वं कल्प्यते इति भावः नञ्समभिव्याहारे यद्विशेषणं प्रतीयते नञा तद्विशेष्ये तद्विशेषणाभावः प्रत्याय्यते अन्यथा वचनैक्यनियमानुपपत्तेः इत्थं च भूतलवृत्तित्वाभाववान् घट इत्येवान्वय इति नियमवादिनां मतमाह । परेत्विति । इह । भूतले घटोना-

ख्यातार्थ निषेधएव घटे प्रतीयते। न पचतिचैत्र इत्यत्रेव नात इति द्विवचनानुपपत्तिः। नन्वेवं जातौ सत्तानास्तीत्यत्र का गतिः। जातिवृत्तित्वाभावस्य सत्तायामसत्त्वात्। जातिसमवेतत्वस्य वा प्रसिद्ध्या निषेद्धुमशक्यत्वादिति चेत्। यागति-

स्तीत्यादौ। नन्वाख्यातार्थस्य निषेधे ऽन्वयो न दृष्टचर इत्यत आह। नपचतीति। पाकानुकूलकृत्यभाववान् चैत्रइतिवद्भूतलास्तित्वाभाववानेको घट इत्यन्वयबोधे बाधकाभाव इत्यर्थः। नातइति। घटस्य विशेष्यत्वादित्यर्थः। द्विवचनेति। घटौ न स्त इति द्विवचनानुपपत्तिरित्यर्थः। इदमुपलक्षणं घटो नास्तीत्येकवचनापत्तिरपि नेत्यपि द्रष्टव्यम्। अभावस्य विशेष्यत्वे घटौ न स्त इति द्विवचनादिकं न स्यात् विशेषणपदस्य विशेष्यपदसमानवचनत्वनियमात् परंत्वभावस्यैकत्वाद्घटो नास्तीत्येकवचनमेव स्यात् घटस्य विशेष्यत्वे च तस्य द्वित्वबहुत्वयोः सत्त्वात्क्रियापदस्यापि द्विवचनादिकं साध्विति भावः। घटौ नास्तीत्यत्र घटाविति द्विवचनेन द्वित्वावरुद्धे एकत्वान्वयासंभवादयोग्यत्वं घटौ न स्त इत्यत्र च घट द्वयेऽन्वयसंभवाद्योग्यत्वमिति नात इत्यस्य भावार्थ इति कश्चित्। ननु भूतले घटो नास्तीत्यत्र सप्तम्यानिरूपितत्वार्थकतयाऽस्धातोर्विद्यमानत्वार्थकतयाऽख्यातस्याश्रयत्वार्थकतया भूतलनिरूपितविद्यमानत्वाश्रयत्वाभाववान् घट इत्येव बोधस्तत्र चाख्यातार्थाश्रयत्वस्याभाव एव विशेष्यो नतु घट इति भावनाविशेष्यगतसंख्याबोधस्तत्र चाख्यातार्थाश्रयत्वस्याभाव एव विशेष्यो नतु घट इति भावनाविशेष्य गतसंख्याबोधकत्वाभावात्कथं द्विवचनोपपत्तिरिति चेत् न। साक्षात्परंपरासाधारणभावनाविशेष्ये संख्यान्वयस्वीकारेण प्रकृते परंपरयाभावनाविशेष्यत्वस्य घटे सत्त्वादिति एवं परंपरया विशेषणस्यापि विशेष्यसमानवचनत्वमवसेयम्। चैत्रो न पचतीत्यादौ दृष्टत्वादिति बोध्यं। नच तथापि द्वित्ववद्घटत्वावच्छेदेन भूतलनिरूपितविद्यमानत्वाश्रयत्वाभावस्यान्वये एकघटवति भूतले घटौ न स्त इति न स्यात् घटवृत्तिद्वित्वसामानाधिकरण्येन नञर्थान्वये च घटद्वयवत्यपि घटौ न स्त इति स्यात् अधिकरणान्तरीयघटे भूतलास्तित्वाभावादिति वाच्यं। घटवृत्ति द्वित्वावच्छेदेन नञर्थसामानाधिकरण्यान्वयात् अधिकरणान्तरीयद्वित्वे-

जातिर्नसत्तावृत्तिरिति वाक्यस्य । अयोग्यमेवेदं वाक्यं वृत्तिपदं वा साक्षात्सम्बन्धावच्छिन्नवृत्तिपरमिति तु तुल्यं । तथापि नञर्थनिषेधोघटे कथमन्वेतीति चेन्न । निपातातिरिक्तनामार्थस्य हि नामार्थेनभेदेनान्वयोन नामार्थमात्रस्येति प्रतियन्ति । स्यादेतत् । घटो नास्तीत्यादौ भेदएव प्रतीयते । भूतले न घट इत्यत्रात्यन्ताभाव एवेत्यत्र किं नियामकं ।

---

नञर्थसामानाधिकरण्येऽपि एतद्भूतलवृत्तिघटवृत्तित्वे भूतलास्तित्वाभावसामानाधिकरण्याभावान्न घटद्वयवति घटौ न स्त इत्यस्यापत्तिरितिध्येयम् । नन्वेवमिति । सर्वत्रैवानुयोगिवृत्तित्वाभावस्य प्रतियोग्यन्वयस्वीकारादित्यर्थ: । जातौ सत्तानेत्यस्य जातिवृत्तित्वाभाववतीसत्तेत्यर्थ: । तत्रसंबन्धसामान्यावच्छिन्न जातिवृत्तित्वाभावो वा समवायसंबन्धावच्छिन्नजातिवृत्तित्वाभावो वा बोध्येत तत्राद्ये आह । जातिवृत्तित्वाभावस्येति । एकार्थसमवायेन सत्ताया जातौ सत्वेन तदभावबोधनासंभवादित्यर्थ: । नचैककालीनत्वादिवदेकार्थसमवायस्यापि वृत्त्यनियामकतया तेन संबन्धेन सत्ताया: सत्त्वेपि संबन्धसामान्यावच्छिन्नवृत्तित्वाभावो ऽस्त्येव जन्यमात्रस्य कालोपाधितया मूर्तमात्रस्य दिगुपाधितया कालिकदैशिकविशेषणतयोस्तत्रासंभवितया तदादायापि चरितार्थत्वादितिवाच्यं । जाति: सतीति प्रतीतेस्तस्यापि वृत्तिनियामकत्वात् द्वितीये आह । जातिसमवेतत्वस्येति । प्रतियोग्यप्रसिद्ध्या न समवायसंबन्धावच्छिन्नजातिवृत्तित्वाभाव: प्रत्येतुं शक्यत इति भाव: । यागतिरिति । जातौनसत्तेत्यत्र जातिवृत्ति: सत्ताभाव इत्युपपत्तावपि जातिर्नसत्तावृत्तिरित्यत्र सम्बन्धसामान्यावच्छिन्नसत्तावृत्तित्वाभावस्य जातावसंभवात् समवायसम्बन्धावच्छिन्नसत्तावृत्तित्वस्य चा प्रसिद्ध्या निषेधासंभवात्तुल्यत्वं तवापीत्यर्थ: । अयोग्यमेवेति । निश्चितानन्वयमपार्थकमिति भाव: । इदं वाक्यं । जातिर्न सत्तावृत्तिरिति वाक्यं । यथाकथंचिद्योग्यतयोपपत्तावयोग्यत्वमन्याय्यमत आह । वृत्तिपदंवेति । साक्षादिति । जातिर्नसत्तावृतिरित्यत्र लक्षणया सत्तानिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वाभाव: प्रतीयते सत्तानिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वं च स्वरूपसंम्बन्धमादाय प्रमेयत्वादौ प्रसिद्धमिति नोक्तदोष इति भाव:

अधिकरणवाचकपदं सप्तमीविभक्तिरत्यन्ताभाव बोधे तन्त्र। प्रतियोग्यनुयोगिपदयोः समानविभक्तिरन्योन्याभाव बोध इति चेन्न। न पचति चैत्रश्चैत्रस्य न धनमित्यत्र सप्तम्यभावात्। अलघुपचतीत्यत्र समानविभक्तेरभावाच्च। अत्राहुः। न ञ्त्रिनिर्मीकैत्यत्र प्रतियोग्यनुयोगिपदयोर भेदान्वयबोधे आकांक्षा। तत्रान्योन्याभाव बोधकत्वमन्यत्रान्य

---

तुल्यमिति। जातौ नसत्तेत्यपि वाक्यमयोग्यमेव योग्यत्वे वा जातिनिरूपितसाक्षात्सम्बन्धावच्छिन्नवृत्तित्वाभावः प्रतीयत इति भावः। केचित्तु सत्तापदं सत्तासमवायपरं सप्तम्यर्थश्चानुयोगित्वं तथाच जात्यनुयोगिकत्वाभाववान् सत्तासमवाय इति बोध इत्याहुः। समवैति। इति पदाध्याहारेण तथाबोधइत्यन्ये। शंकते। तथापीति। निषेधः। भूतलास्तित्वनिषेधः। कथमिति। नामार्थयोरभेदेनैव व्युत्पत्तेरिति भावः। निपातेति। निपातातिरिक्तस्थलएव नामार्थयोरिति व्युत्पत्तिरिति भावः। न नामार्थमात्रस्य। न नामार्थसामान्यस्य। प्रतिपंत्तीत्यनेनास्वरसः सूचितः स च व्युत्पत्तिसंकोचे गौरवम्। एवं जातौ न सत्तेत्यत्र जातिवृत्तिः सत्ताभाव इत्येतावतैवोपपत्तौ लक्षणादिकल्पनेऽपि न हि जातिर्न सत्तावृत्तिरित्येकत्र लक्षणाकल्पनादन्यत्रापि तथेत्यत्र प्रमाणमस्ति भावनान्वय्यभावप्रतियोगिवृत्तिसंख्याबोधकत्वेनैव वचनैक्यनियमस्याप्युपपत्तिरिति न किञ्चिदेतत्। किं नियामकमिति। नञोऽभावमात्रवाचकत्वेन घटो नायमित्यत्रात्यन्ताभावः। भूतले न घट इत्यत्र चान्योन्याभावः प्रतीयेतेत्यर्थः। सामग्र्यास्तुल्यत्वादिति भावः। शङ्कते। अधिकरणेति। नञ्जन्यात्यन्ताभावविषयकशाब्दत्वावच्छिन्नं प्रति अनुयोगिवाचकपदसमानविभक्तिकप्रतियोगिवाचकपदजन्योपस्थितित्वेन च कारणत्वान्न पूर्वोक्तदोषापत्तिः सामग्र्याविलक्षणत्वादित्यर्थः। नपचतीति। पाकानुकूलकृत्यभाववांश्चैत्र इत्यत्रानुयोगिवाचकपदसमभिव्याहृतसप्तमीपदस्याभावेन न तस्याः सामग्रीत्वमित्यर्थः। ननु वैयाकरणमते आख्यातस्य कर्त्तरि शक्ततया पाककर्तृभिन्नश्चैत्र इत्येव बोधान्नेदमत्यन्ताभावोदाहरणं घटत इत्यत आह। चैत्रस्येति। चैत्रस्वत्वाभाववद्धनमित्यर्थः। षष्ठ्याःस्वत्वमर्थो नतु स्वामित्वं वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेन निरूपकतासम्बन्धाव-

बोधकत्वमिति व्युत्पत्तिः। अस्ति च न घटः पट इत्यत्र नञ्-सत्त्वे घट पटयोरभेदान्वयबोधे आकाङ्क्षा अतस्तत्रान्योन्या-भाव प्रत्ययः। भूतले न घट इत्यत्र नञ्विनिर्मोकेनाभेदान्वये

---

च्छिन्न प्रतियोगिताकस्वामित्वाभावबोधासंभवादाश्रयतासम्बन्धावच्छिन्नप्रति-योगिताकस्वामित्वाभावबोधस्वीकारे चत्रैत्रोयेऽपि धने नेदं चैत्रस्येति प्रम-ङ्गात् स्वामित्वस्य चैत्रवृत्तित्वेन धने आश्रयतासम्बन्धेनासत्त्वात् यदि च तादात्म्यवृत्त्यनियामकसम्बन्धान्तरस्याभावप्रतियोगितावच्छेदकत्वस्वीकारे स्वामित्वमेव षष्ठ्यर्थस्तदापि विनिगमनाविरहेण स्वत्वमप्यर्थोऽवसेयः अन्यो-न्याभावबोधे समानविभक्तिकत्वस्य नियामकत्वे व्यभिचारमाह। अलघ्विति। क्रियाविशेषणस्थले कर्मविभक्तेर्नपुंसकलिङ्गत्वं विशेषणविभक्तिश्च साधुत्वार्था तथाच लघुभिन्नपाकानुकूलाकृतिरित्यन्वयबोधेऽन्योन्याभावविषयके विशे-षणविशेष्यवाचकपदयोः समानविभक्तिकत्वाभावेन व्यभिचारइत्यर्थः। नञ्वि निर्मोके। नञ् समभिव्याहारस्थले। तत्रेति। यथा भूतलं घट इत्युक्तेऽभेदान्व-यबोधे समानविभक्तिकपदत्वेन कारणतया भूतलघटयोरभेदान्वयबोधे आकांक्षाऽतो नञ्समभिव्याहारे भूतलं न घट इत्युक्ते भूतले घटान्योन्या-भावबोधः। अन्यत्रेति। नञसमभिव्याहारे प्रतियोग्यनुयोगिपदयोरभेदान्वये आकांक्षाशून्यस्थलेइत्यर्थः। अन्येति। अत्यन्ताभावबोधकत्वमित्यर्थः। यथा पचतीत्युक्ते पाकानुकूलकृतिचैत्रयोर्नाभेदे आकांक्षा किंत्वाश्रयतयैवेति न पचतीत्यत्र नान्योन्याभावबोधः किंत्वत्यन्ताभावबोध इति तथाच प्रतियो-ग्यनुयोगिनोरभेदान्वयबोधे यादृशसमभिव्याहारज्ञानं कारणं तयोरन्योन्या-भावबोधे तादृशसमभिव्याहारज्ञानंकारणम् एवमत्यंताभावबोधे भेदान्वये आकाङ्क्षाशून्यप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञ्पदज्ञानं कारणमि-त्यर्थः। तदेवोपपादयति। अस्तिचेति। नञ्सत्वे। नञ्समभिव्याहारे। घट-पटयोरिति। विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वस्य विरुद्धविभ-क्तिराहित्यस्य वाऽभेदान्वयबोधे आकाङ्क्षात्वादिति भावः। तत्र। न घटः पट इत्यत्र। नाभेदेति। भूतले घटइत्यत्र भूतलवृत्तिर्घटइत्येवान्वयबोधादाधारत्वस्य सप्तम्यर्थतया नाभेदान्वयबोधकत्वमिति तत्र संसर्गाभावप्रत्ययएवेति भावः

आकाङ्क्षेति तत्र संसर्गाभाव प्रत्ययएवेति संक्षेपः । व्यंजनाच्च न वृत्त्यन्तरं । लक्षणयैव तदर्थसिद्धेः । तन्चिदमयुक्तं । त-

---

त्र वा न्योन्याभावबोधे विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वस्य तन्त्रत्वे दधि न सुन्दरमित्यत्र लुप्तविभक्त्यनुसन्धानेन शाब्दबोधोपपादनेपि चैत्रो न पचतीत्यत्राख्यातस्य कर्तरि लक्षणायां चैत्रे पाककर्तुर्भेदान्वयात्न स्तोकं पचतीत्यादौ पाके स्तोकस्य भेदप्रतिपादनाच्च तत्र समानविभक्तिकत्वाभावाद् व्यभिचारः विरुद्धविभक्तिराहित्यस्य तन्त्रत्वे च प्रतियोगिपदोत्तरविभक्तिविरुद्धविभक्ति शून्यानुयोगिपदसमभिव्याहृतनञ् पदत्वेनानुयोगिपदोत्तरविभक्तिविरुद्धविभक्ति शून्यप्रतियोगिपदसमभिव्याहृतनञ् पदत्वेन वा हेतुत्वे न पचतीत्यादौ प्रतियोगिपदोत्तरविभक्तेरप्रसिद्धेःन स्तोकंपचतीत्यादौ अनुयोगिक्रियापदोत्तरसुब्विभक्तेश्चाप्रसिद्धतया नानुगतरूपेण हेतुत्वम् अनयोरन्यतरस्य हेतुत्वे चाननुगमः किंतु विशिष्यानुयोगिप्रतियोग्युपस्थापकनामपदयोः समभिव्याहारे समानविभक्तिकत्वं तन्त्रं घटो न नील इत्यत्र घटपदार्थान्वितनीलपदार्थान्योन्याभावबोधे नीलपदसमानविभक्तिकघटपदसमभिव्याहृतनञ्पदत्वेन चैत्रो न पचतीत्यादौ धर्मिपराख्यातसमभिव्याहृतनञ्पदत्वेन न स्तोकं पचतीत्यादौ क्रियाविशेषसमभिव्याहृतद्वितीयातस्तोकादिपदसमभिव्याहृतनञ्पदत्वेन हेतुतेति बोध्यं। ननु पुरुषोत्तमइत्यत्र न तावत्कर्मधारयः कर्मधारये विशेषणवाचकपदस्य पूर्वभावनियमेनोत्तमपदस्य पूर्वनिपातापत्तेः । नच विशेषणविशेष्यभावे कामचार इति वाच्यं । जातिनिमित्तकं गुणनिमित्तकं विशेषणमेवेति नियमात् अतएवोत्पन्ननीलमिति न प्रयोगः नापि षष्ठीसमासः। न निर्धारण इत्यनेन निर्धारणे षष्ठीसमास निषेधादित्यतआह । संक्षेप इति। पुरुषोत्तम इत्यादौ क्वचिद्विशेषणंपरं स्यादित्यनेन परनिपातस्यानुशासनसिद्धत्वात्कर्म धारयस्यैवोपगमात् अथ तथापि विशेषणं विशेष्येण बहुलमिति सूत्रे उभयोपादानबलाद्विशेषणविशेष्यतावच्छेदकयोः परस्परव्यभिचारत्व एव कर्मधारय इति प्राप्तम् एवंचात्रदुःखवद्भिन्नत्वस्य घटादिसाधारण्येन पुरुषावधिकोत्तमत्व रूपत्वासंभवेन सर्वज्ञत्वादिमत्त्वरूपोत्तमत्वस्य पुरुषत्वव्यभिचारित्वाभावात्कथं कर्मधारय

इति चेन्न। उद्देश्यतावच्छेदकविधेययोरन्यतरव्यभिचारित्वे एव कर्मधारयात् अत एव शिंशुपा वृक्षस्येति संगच्छते। एतेनोद्देश्यतावच्छेदके विधेयभिन्नवृत्तित्वमेव तत्त्वमिति संप्रदायमतमपास्तम्। प्रमेयवान्हमानित्यादावगतेः। नच तथापि गुणवद्द्रव्यस्येत्यादावगतिरिति वाच्यं। तत्रानायत्याऽभेदार्थकषष्ठीसमासोपगमात् अन्यथा भवन्मतेप्यगतेः। अथवा षष्ठीसमास एवायम्। नच ननिर्धारणे इत्यनेन निषेधः समुदायापेक्षया जातिगुणक्रियादिभिरेकदेशस्य पृथक्करणं हि निर्धारणं निर्धार्यत्वविशिष्टस्य सामान्यधर्मावच्छिन्नापेक्षया जातिगुणक्रियाद्यवच्छेदेन यत्किञ्चिद्धर्मिणोभेदऽबोधनमिति यावत् नचात्र तत्संभवति। श्रीकृष्णत्वविशिष्टोपस्थापकपदाभावात् पुरुषोत्तमपदस्य योगरूढतया तत्सम्भवेपि समासवाक्यादन्यतस्तदनुपस्थितेः तथा नराणां क्षत्रियः शूरतम इति ननु नरक्षत्रियः शूरतमइति अपिच निर्धारणरूपार्थे षष्ठीसमासनिषेधेपि राज्ञोःशिर इति वदभेदार्थकषष्ठीसमासे बाधकाभावः। अत्रच निर्धारणषष्ठ्या अभेदो भेदश्चार्थः। निर्धार्यपदार्थविशेष्यतया प्रकृत्यर्थविशेषणतया विशेष्यतया च भेदान्वयः नराभिन्नःक्षत्रियः क्षत्रियान्यनरान्यशूरतमाभिन्न इत्यन्वयबोधः शूरतमत्त्वावच्छेदेन च क्षत्रियान्यनरान्यत्वान्वयः नातः क्षत्रियान्यनरस्य शूरता यां तादृशप्रयोगः धनीनां क्षत्रियः शूरतमइति विजातीयापेक्षया निर्धारणापत्तेरभेदोप्यर्थः। अभेदसंसर्गकबोधे विरुद्धविभक्तिराहित्यस्य तन्त्रतया संसर्गमर्यादया तज्ज्ञानासम्भवात्। केचित्तु निर्धारणषष्ठ्या अभेदएवार्थः। न रभिन्न क्षत्रियस्य तादात्म्येन शूरतमत्त्वावच्छेदेनान्वयान्नराज्ञोः शिरइत्यादिनाऽविशेषः शूरतमत्त्वं नरनिष्ठशूरतमताविशेषः तेन देवानामपि शूरत्वात्तादृशप्रयोगानुपपत्तिरित्याहुः। तन्न। चत्रयमुख्यविशेष्यकानुभवापलापापत्तेः। नराणां प्रमेयः शूरइत्यपि प्रयोगापत्तेश्च क्षत्रियनरः शूरत्ववान् क्षत्रियाभिन्ननरः शूरत्वाभाववानिति ऋजुमतमपि प्रशमान्तार्थमुख्यविशेष्यकबोधस्यानुभवापलापापत्तेरनादेयम्। क्षत्रियान्यनरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वविशिष्टतादात्म्यसम्बन्धेन नराभिन्नक्षत्रिये शूरतमस्यान्वय इत्यभेदएव निर्धारणषष्ठ्या अर्थइत्यपरे। अन्येतु निर्धारणाषष्ठ्यास्तादात्म्यव्यवच्छेदश्चार्थः व्यवच्छेदश्च द्विरूपो ऽत्यन्ताभावो ऽन्योन्याभावश्च षष्ठीसमभिव्याहृतप्रातिपदिकस्य च स्वार्थीभूततत्तदन्यस्मिन् लक्षणा षष्ठ्यर्थव्यवच्छेदे चाधिकरणत्वेन लाक्षणिकार्थप्रतियो-

थाऽऽह । लक्षणायां मुख्यार्थे इतरान्वयानुपपत्तिर्बीजं । न-
च व्यञ्जनायांसा सर्वत्रास्ति । गच्छगच्छसीत्यादौ तदभावात् ।

---

गित्वेन च विधेयपदार्थो भासते क्षत्रियाणां कर्णः प्रचुरं ददातीत्यादौ कर्ण पदस्य कर्णः कर्णान्यस्यार्थः । क्षत्रियाभिन्नकर्णः प्रचुरदानकृतिमान्क्षत्रिया-भिन्नः कर्णान्यः प्रचुरदानकृत्यभाववानित्यन्वयबोधः । गवां कृष्णा सम्पन्न-क्षीरेत्यत्र कृष्णापदस्य कृष्णातदन्याचार्थः । गवाभिन्ना कृष्णा सम्पन्न क्षीरा ग-वाभिन्ना कृष्णान्यासम्पन्नक्षीराऽन्येत्यन्वयबोध इत्याहुः । पुरुषेषूत्तम इति सप्त-मीसमासएव । नच नर्निर्धारण इति षष्ठीसमासवत्सप्तमीसमासोऽपि निषिद्ध इति वाच्यं । स्वरविशेषनिषेधस्यैव सूत्रप्रयोजनकत्वात् षष्ठीसमासे उत्तर-पदस्यांतोदात्तत्वं सप्तमीसमासे तु पूर्वपदे प्रकृतिस्वरएवावतिष्ठत इति । स-प्तमीसमासो निर्धारणरूपेऽर्थेऽपि साधुरित्यपि कैश्चिदिति कृतं पल्लवितेन । ननु स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जमहे इति न्यायेन तटे घोष इति विहाय गङ्गायां घोष इति लक्षणा मुख्यप्रयोगे बीजाकांक्षायां शैत्यपावन-त्वादि प्रयोजनत्वेनावसीयते साच कृप्तवृत्त्या नोपपादयितुं शक्येति व्यञ्ज-नाख्यातिरिक्तवृत्ति रुपेया इत्यत आह । व्यञ्जनाचेति । न वृत्यन्तरमिति । शक्ति-लक्षणातिरिक्ता न वृत्तिरित्यर्थः । तथाचेयं यदिशक्ति लक्षणात्मिका तदा श-क्ति लक्षणातिरिक्तत्वाभावः । यदिच न शक्ति लक्षणात्मिका तदा न वृत्तिरि-त्यतिरिक्तवृत्तित्वाभासत्वमव्याहतं तेन न सिद्धसिद्धिव्याघातः । कथं तर्हि-शैत्यपावनत्वादि प्रतीतिरित्यत आह । लक्षणयैवेति । तदर्थेति । व्यंग्यार्थप्र-तीत्युपपत्ते रित्यर्थः । प्रत्यक्षानुमित्योरिव सामग्रीभेदाङ्गे दइत्याशंकते । नन्वि-ति । इदं । लक्षणायैव तदर्थसिद्धिरूपं । मुख्यार्थ इति । गङ्गायांघोषइत्यत्र गङ्गापदमुख्यार्थे प्रवाहे इतरान्वयानुपपत्तिर्घोषाधिकरणत्वानुपपत्तिर्लक्षणा बीजमित्यर्थः । ननु किमेतावतेत्यत आह । नचेति । नहीत्यर्थः । "वापीं स्ना-तुमितोगतासि नपुनस्तस्याधमस्यान्तिकमित्यत्र" गतामपि दूतीं प्रति नगता-सीति मुख्यार्थान्वया नुपपत्तिरस्त्येवेत्यधमपदे लक्षणा सम्भवत्येवेत्यत आह । सर्वत्रेति । तदेवाह । गच्छ गच्छसीति । "गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापिजन्मतत्रैव भूयाद्यत्रगतोभवानित्यत्र" तत्र गमने मम-मरणं भवितेत्यतस्त्वं मागाइति व्यज्यते तत्र च मुख्यार्थान्वयानुपपत्ते र्लक्षणा

अतोऽन्यत्तरसाध्यमिति चेन्न। किमिदं लक्षणाबीजत्वं। न तावज्जनकत्वं। गङ्गातीरयोः सम्बन्धस्यानुपपत्तिज्ञाना-जन्यत्वात्। नापि तज्ज्ञापकत्वम्। अनुपपत्ति ज्ञानमन्तरे-णापि गङ्गातीरयोः सम्बन्धस्य चक्षुरादिनाग्रहात्। नापि-तात्पर्यग्राहकत्वं। तात्पर्यस्याप्यन्यतोऽपि तद्ग्रहात्। अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेन्न। यष्टीः प्रवेशयेत्यत्र व्यभिचारात्। तात्पर्यविषयानुपपत्ति रवास्त्विति चेत्। तर्हि तात्पर्यानुपपत्तिरेव लक्षणा बीजमस्तु।

---

बीजस्याभावान्न लक्षणा सम्भव इति व्यञ्जनाख्यवृत्त्यन्तरमावश्यकमिति भावः। अन्वयानुपपत्तिर्लक्षणा बीजमित्यत्र बीजशब्दार्थं विकल्पय दूषयति। किमिद-मिति। तज्जनकत्वं। लक्षणाजनकत्वं। गङ्गेति। शक्यसम्बन्धो लक्षणा सा च ग-ङ्गायां घोष इत्यत्र गङ्गातीरयोः संयोगस्तत्र च नानुपपत्तिज्ञानं कारणमित्यर्थः तज्ज्ञापकत्वं। लक्षणाज्ञापकत्वं। चक्षुरादिनेति। यत्र गङ्गापदस्य गङ्गातीरे न लक्षणा तत्र तत्सम्बन्धविषयकशाब्दात्मकज्ञानस्यानुपपत्तिज्ञानव्यतिरेकेऽ-नुदयेऽपि चक्षुरादिना तल्लौकिकप्रत्यक्षे जननीये तदनपेक्षणाद्व्यतिरेक-व्यभिचारेण न सामान्यतस्तज्ज्ञापकत्वसम्भव इति भावः। नच लक्ष-णाविषयकशाब्दबोधजनकत्वमेव तत्त्वमिति वाच्यं। यत्र गङ्गापदस्य तीरे ज-हत्स्वार्थालक्षणा तत्र गङ्गातीरसम्बन्धस्य शाब्दबोधाविषयत्वेनान्वयव्यभि-चारेण न तथात्वसम्भव इति। एवमग्रेऽपीति हृदयं। नापीति। तत्ता-त्पर्यग्राहकत्वं। शक्यसम्बन्धरूपलक्षणा तात्पर्यग्राहकत्वं। तात्पर्येति। प्रका-रणादिनापि। तद्ग्रहात्तात्पर्यग्रहादित्यर्थः। तथाच मुख्यार्थानुया नुपपत्ति-ज्ञानस्य व्यभिचारान्न सामान्यतस्तात्पर्यग्रह हेतुत्वमेवं च क्वचित्तदपेक्षणेऽपि सर्वत्रानपेक्षिततया प्रकृते प्रकारान्तरेणैव तात्पर्यग्रह सम्भवेन लक्षणायां बी-जत्वाभाव इति भावः। तत्। लक्षणा बीजत्वं। यष्टीरिति। यष्टीः प्रवेशयेत्यत्र यष्टिपदस्य यष्टिधरे लक्षणा। नच तत्र मुख्यार्थयष्टी प्रवेशनान्वया नुपपत्ति-रिति व्यभिचारादित्यर्थः। ननु मुख्यार्थे इतरान्वयानुपपत्तिर्न लक्षणा बीज-

सा चेहाप्यस्ति। स्यादेतत्। गङ्गायांघोष इत्यादौ लक्षणा प्रयोजनं शैत्यपावनत्वादिप्रतीतिः। नच तत्प्रतीतिर्लक्षणा साध्या। प्रयोजनाभावात्। लक्षणायाश्च प्रयोजनवत्त्वनियमादिति चेन्न। लक्ष्यप्रतीतिरेव प्रयोजनत्वात्। तथापि प्रयोजनान्तरंनास्तीति चेत्। ततः। किं लक्षणाया। प्रयोजनव-

---

मपितु तत्तात्पर्यविषयानुपपत्तिरेवेति क्वाव्यभिचारइत्याशंकते। तात्पर्येति। अत्रापीति। यष्टीः प्रवेशयेत्यत्रापीत्यर्थः। अस्तीति। भोजन प्रयोजनकप्रवेशनमेवात्र तात्पर्यविषयः तदनुपपत्तिर्मुख्यार्थयष्टावस्त्ये वेत्यर्थः। सर्वत्रेति। गङ्गायांघोष इत्यादावपीत्यर्थः। अस्तुवाकोदोषइत्यत आह। साचेहापीति साच। तात्पर्या नुपपत्तिश्च। इहापि। गच्छगच्छसीत्यादि व्यञ्जनास्थलेपि। अस्तीति। अत्र कान्तगमनाभाव एव तात्पर्यविषयः तदन्यथा नुपपत्त्या गमनबोधकपदस्य गमनाभाव लक्षणयैवोपपत्तौनातिरिक्तवृत्तिकल्पनं गौरवादितिभावः। लक्षणा प्रयोजनम्। तीरेलक्षणा प्रयोजनं। शैत्ये ति। स्वायत्ते शब्दप्रयोगे किमित्यं वाचकं प्रयुञ्जामाहे इति न्यायाद्गङ्गातटेघोष इति विहायगङ्गायांघोष इति लक्षणाया प्रयोगस्तच्छैत्यपावनत्वादि प्रतीत्यर्थमेवेत्युन्नीयते लक्षणायाः प्रयोजनत्वनियमादिति भावः। तत्प्रतीतिः। शैत्यपावनत्वादिप्रतीतिः। लक्षणेति-शैत्यपावनत्वादौ लक्षणा साध्येत्यर्थः। प्रयोजनाभावात्। प्रयोजनस्य प्रयोजनान्तराभावोदित्यर्थः। प्रयोजनाभावेपि लक्षणायां कोदोषइत्यत आह। लक्षणायाश्चेति। यथागङ्गापदस्य तीरे लक्षणायां लक्ष्यप्रतीत्यतिरिक्ता शैत्यपावनत्वादिप्रतीतिः प्रयोजनं तथा शैत्यपावनत्वे लक्षणायां तस्याः प्रयोजनान्तराभावाल्लक्षणयानिर्वाहेण प्रयोजनप्रतिपत्तये व्यञ्जनाख्यवृत्तिरादरणीयेति भावः। शैत्यपावनत्वादौ लक्षणैव। नच तस्याः प्रयोजनाभावः शैत्यपावनत्वादि प्रतीतिरेव प्रयोजनत्वादिति समाधत्ते। लक्ष्येति। तथापि। लक्ष्यप्रतीति प्रयोजनकत्वेपि। प्रयोजनान्तरम्। लक्ष्य प्रतीत्यतिरिक्तं। प्रयोजनान्तरं। ततः किं। लक्ष्यप्रतीत्यतिरिक्त प्रयोजनाभावेकिमनिष्टमित्यर्थः। ननु लक्षणाया लक्ष्यप्रतीत्यतिरिक्त प्रयोजनवत्त्वनियमभङ्गएवानिष्टमित्यत आह। लक्षणाया हीति। ननु गौरवेप्यन्यत्र दृष्टत्वात्तथा कल्पनीयं नह्यत्र कार्यकार-

त्वेन नियमोनतु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वेन। गौरवात् अप्रयोजकत्वाच्च। स्यादेतत्। नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादि निर्णायकं। तथाच यत्र प्रकरणादि शून्यार्थान्तरं प्रतीयते तत्र नाभिधामूलं सहकार्यभावात्। नापिलक्षणा। अयोग्यत्वादिति चेन्न। प्रकरणादीनामननुगततया सहकारित्वानुपपत्तेः। तात्पर्यग्राहकत्वे नैषामनुगम इति चेत्। तर्हिलाघवात्तात्पर्यज्ञानमेव हेतु र-

---

णाभावे गौरवमित्यत आह। अप्रयोजकत्वाच्चेति। तर्हियत्र कुत्रचिद्दर्शनमात्रेणैव तादृशनियमावधारणं मानाभावादिति भावः। तथाच लक्षणयैव प्रयोजनप्रतीति निर्वाहेन वृत्त्यन्तरकल्पनमिति। प्रसिद्धतया लक्षणा मूलकां व्यञ्जनां निरस्याभिधामूलां तां निरसितुं शंकते। स्यादेतदि। नानार्थेति। सैंधवमानयेत्यादौ। अर्थविशेषेति। अश्वादिरूपार्थप्रत्यये। प्रकरणादिति। गमनप्रकरणादि। निर्णायकमिति। शक्ततावच्छेदकैक्येसति शक्यतावच्छेदकनानात्वमेव नानात्वं तत्र सैंधवमानयेत्यादौ भोजनप्रकरणे शक्त्य विशेषाल्लवणस्येवाश्वादेरपि प्रतीत्यापत्त्याऽभिधयानानार्थं विषयकशब्दबोधे जननीये प्रकरणादिकं सहकार्यवश्यं वाच्यमिति भावः। प्रकरणादि शून्येति। गमनादिप्रकरणादि शून्याश्वादिरूपार्थान्तरमित्यर्थः। तत्र। अर्थान्तरप्रत्यये। अभिधा। शक्तिः। सहकारीति। गमनादि प्रकरणरूपसहकार्यभावादित्यर्थः। लक्षणा। मूलमित्यनुषज्यते। अयोगात्। लक्षणाया अयोगात्। मुख्यार्थानुपपत्त्याहि लक्षणा कल्प नं प्रकृतं च तदसम्भवेन न लक्षणेति भावः। अतः। अर्थान्तरप्रत्ययानुरोधेन। तथाच तत्प्रतीत्यर्थं व्यञ्जनारूपवृत्त्यन्तरमावश्यकमिति भावः। नानार्थस्थलेऽर्थान्तरप्रतीतिः शक्त्यैव। नच प्रकरणाभावेन सहकार्यभाव इति वाच्यम्। तस्य सहकारित्वासम्भवादिति न वृत्त्यन्तरमिति समाधत्ते। प्रकरणादीनामिति। सहकारित्वेति। नानार्थ विषयक शाब्दत्वावच्छिन्नं प्रतिप्रकरणादीनां न कारणता अननुगमेन व्यभिचारादित्यर्थः। तत्तत्प्रकरणादीनाम ननु गमेपि तात्पर्यग्राहकत्वे नानुगमात्र व्यभिचार इत्याशंकते। तात्पर्येति। लाघवादिति। नानार्थ विषयक शाब्दत्वावच्छिन्नं प्रति तात्पर्य-

स्तु। तत्रेष्टाप्यस्ति। लक्षणा हि पदवृत्तिरियन्तु पदपदैक-देशवाक्यरचनार्थभंग्याद्याकाराश्रिततयाश्रयभेदाद्भेद इति चेन्न। असिद्धेः। तदेकदेशादयोऽप्यर्थविशेषतात्पर्य-ग्राहका नतु तत्प्रतिपादका इति। स्यादेतत्। लक्ष्ये तात्पर्य-ज्ञानं लक्षणा सहकारि। नतु व्यङ्ग्यार्थे तात्पर्यग्रहो नियतः। स्वार्थरचितकाव्यादौ तात्पर्यविषयस्यापि व्यंग्यस्य चम-त्कारादिति चेन्न। व्यंग्यतात्पर्यग्रहस्यानपेक्षायां शक्त-

---

ग्रहजनकत्वेन कारणत्वापेक्षया लाघवात् तात्पर्यग्रहत्वेनैव हेतुतास्तीति न प्रकरणादीनां सहकारितेति भावः। ननुस्तु तात्पर्यग्रह एव सहकारी तथापि तत्स्वरूपसहकार्यभावादेव कथमभिधया परपदार्थ प्रतीतिरित्यत आह। मचेति। तात्पर्यग्रहश्चेत्यर्थः। इष्टापीति। प्रकरणादि शून्यार्थान्तरस्थलेपीत्यर्थः। अस्तीति। नानार्थस्थले शक्त्या एकार्थप्रत्ययानन्तरं पदार्थान्तरप्रतीतिस्तत्रापि तात्पर्यग्रहोऽस्त्येवेत्यर्थः। तात्पर्यग्रहएवार्थ विशेषप्रत्यायकः। परन्तु यत्रार्थे प्रकरणं तत्र प्रथमत एव तात्पर्यग्रहादादावेव तदर्थ प्रतीतिरपरार्थे तु तात्पर्यग्राहकान्तरात्तात्पर्यग्रहे सत्यपरार्थप्रतीतिरिति कृतं वृत्त्यन्तर स्वीकारेणेति हृदयं। लक्षणयैव व्यंग्यत्वेनाभिमततत्तदर्थ प्रतीति निर्वाहेऽलं व्यञ्जनयेत्युक्तं तत्र लक्षणातोभेदं साधयति। स्यादेतदिति।पदवृत्तिः।पदनिष्ठाः। इयन्तु। व्यञ्जनात्वेनाभिमता तु। पदपदैकदेशेति। पदेपदैकदेशेवर्णे क्वचिद्वाक्यरचनाविशेषेक्वचिदर्थ भङ्गीविशेषे आकारे च। क्वचिदाश्रितेति। आश्रयभेदात्। लक्षणाव्यञ्जनयोराश्रयभेदात्। भेदः। लक्षणाव्यञ्जनयोर्भेदइत्यर्थः। असिद्धेरिति। व्यञ्जनात्वेनाभिमतवृत्तेः पदैकदेशाद्याश्रितत्वासिद्धेरित्यर्थः। कथं पदेकदेशादितोऽर्थविशेष प्रतिपत्तिरत आह। तदेकेति। पदैकदेशादयोऽपीत्यर्थः। नतु तत्प्रतिपादकाः। नतु तदर्थप्रतिपादकाः ये। तत्प्रतिपत्त्यनुकूलव्यञ्जनाख्यवृत्ति स्तत्र स्वीकरणीयेति भावः। लक्षणेति। लक्षणा जन्यशाब्दबोधे कारणमित्यर्थः। स्वेति। स्वेनरचितेत्यर्थः। यत्र स्वयं अन्यतात्पर्येण काव्यं रचितं श्रोतुस्तान्यपदार्थ शाब्दबोधस्तत्र। एवं देवताप्रमादादिना रचित

यां घोष इत्यादौ शैत्यादिकमेव प्रतीयते न तु केशवालुकादिक-मिति नियमो न स्यात्। वासनाविशेषपरिपाकान्नियम इति चेत्। तर्हि लक्षणास्थलेऽपि स नियामकोऽस्तु। अतस्तात्पर्यग्रहो नेति। वस्तुतो व्यञ्जनायां गच्छगच्छसीत्यत्र मागा इत्यत्रास्यास्तात्पर्यमुन्नीयते। सम्भाव्यते वा। न तु मा गा इति-निर्णीयते तद्गतिकृतं वृत्त्यन्तरेण। स्यादेतत्। यद्येते एव वृत्ती कथं तर्हि प्रजयतीत्यादौ प्रकर्षबोधः। नहि प्रादेः प्रकर्षादौ शक्तिर्द्योतकत्वात्। न च लक्षणा। अशक्तत्वात्। उच्यते।

---

काव्ये तस्यार्थज्ञानाभावेन तदर्थे तात्पर्याभावेन च तात्पर्यग्रहासम्भवादिति भावः। चमत्कारादिति। चमत्कारिबोधविषयत्वादित्यर्थः। तथाच तात्पर्यज्ञानरूपसहकार्यभावेन लक्षणया तदर्थबोधस्योपपादयितुमशक्यतया व्यञ्जनास्वीकार्येति भावः। व्यंग्य इति। गङ्गायां घोष इत्यादौ व्यञ्जनया हि शैत्यपावनत्वं प्रतीयते इति त्वदभिमतं तत्र यदि न तात्पर्यग्रहापेक्षा तर्हि लक्षणायाः प्रयोजनवत्त्वनियमात् केशवालुकादिप्रतीतिरेव व्यञ्जनया स्यादिति तत्र तात्पर्यग्रहस्यावश्यापेक्षणे कृतं वृत्त्यन्तरेणेति भावः। शंकते। वासनेति। सहृदयानां कश्चिदेव संस्कारविशेषः प्रतिभाव्यपदेश्यो येन शैत्यपावनत्वमेव प्रतीयते न केशवालुकादिकमित्यर्थः। नियम इति। शैत्यपावनत्वादेरेव भाननियमः। स एव। वासनाविशेषपरिपाक एव। नियामकः। तत्तदर्थविशेषबोधनियामकः। ननु तात्पर्यग्रहस्य लक्ष्यार्थबोधेऽनियामकत्वे लक्षणायां मुख्यार्थानुपपत्त्युपयोगो न स्यात् लक्ष्यतात्पर्यग्राहकत्वेनैव तस्या उपयोगात् अत आह। वस्तुत इति। अस्याः। स्त्रियः। उन्नीयते। अनुमीयते। यत्र नानुमितिसामग्री तत्राह। सम्भाव्यते वेति। उत्कटकोटिसंशयरूपसम्भावनाविषयीक्रियते वेत्यर्थः। नत्विति। तथाच मा गा इत्यत्र गमनाभावप्रतीतीच्छयोश्च रितत्वरूपतात्पर्यमात्रमुन्नीयते सम्भाव्यते वा न तु शाब्दात्मकस्तन्निर्णयः येन वृत्त्यन्तरं स्वीकरणीयमिति भावः। एते एवेति। शक्तिलक्षणे एवेत्यर्थः। तर्हीति। प्रजयतीत्यत्र प्रकृष्टो जयो बुध्यते तत्र जिधातोर्जयोऽर्थः प्रकर्षश्च कस्यार्थः प्रादेरुपस-

जातीत्यत्र शक्यत्यजलक्षकः । प्रशब्दस्तत्तात्पर्यग्राहकः । तत्त्वमेव च द्योतकत्वं । नचजयः शक्यएवप्रकर्षोलक्ष्यइतिवाच्यं । जयमात्रं हि शक्यंनतुविशिष्टजयः । तदाहुः । शक्यात्यन्येनरूपेणज्ञाते भवतिलक्षणेति । ननुप्रादेरिव प्रकर्षादौ नकथंशक्तिः कल्पनइति चेन्न । अन्यलभ्यत्वादितिगृहाण ।

---

गंस्य शक्त्य नङ्गीकारात् व्यञ्जनाख्यावृत्तिः स्वीकरणीयेत्याखण्डलार्थः । तस्य । प्रादेरुपसर्गस्य । द्योतकत्वात् । व्यञ्जकत्वाङ्गीकारादित्यर्थः । अशक्तत्वादिति । उपसर्गाणां क्वचिदपि शक्त्यभावे न शक्यसम्बधरूपायालक्षणाया असम्भवादित्यर्थः । तथाच प्रकर्षबोधार्थं व्यञ्जनास्वीकार आवश्यक इति भावः । जयतिः । जीधातुः । जिधातुनैव लक्षणया प्रकर्षबोधे प्रशब्दवैयर्थ्यमत आह । प्रशब्दस्त्विति । तात्पर्येति । प्रकृष्टजयतात्पर्यग्राहकइत्यर्थः । प्रशब्दसमभिव्याहारवत्वतिधातुः प्रकृष्टजयप्रतीतिच्छयोच्चरित इति तात्पर्यग्राहात् । अन्यथा जयतीत्यत्रापि प्रकर्षबोधापत्तेरिति भावः । नन्वेवमुपसर्गाणां द्योतकत्वप्रवादव्याघातइत्यत आह । तत्त्वमेवेति । तात्पर्यग्राहकत्वमेवेत्यर्थः । तटस्थः शंकते । नचेति । जयः शक्यएव । जिधातोः शक्यएव । तथाच शक्त्यैव तदर्थबोधसम्भवे किमर्थंतदंशेऽपि लक्षणेति भावः । प्रकर्षइति । तत्र शक्त्यभावादिति भावः । शक्यं जिधातोः । विशिष्टजय इति । प्रकृष्टजयइत्यर्थः । तथाच जिधातोर्जयत्वं शक्यतावच्छेदकमिति प्रकृष्टजयत्वप्रकारकबोधो विनालक्षणां न सम्भवतीति तेन रूपेणलक्षणा । नच जयस्य शक्त्या प्रकर्षस्य च लक्षणया बोधे बाधकाभाव इति वाच्यं । युगपद्वृत्तिद्वयविरोधेन शक्तिलक्षणाभ्यां युगपद्बोधासम्भवादिति भावः । ननु जयस्य शक्यत्वात्कथं तत्र लक्षणेत्यतः प्राचांसंवादमाह । तदाहुरिति । शक्यादिति । शक्यतावच्छेदकविशिष्टे शक्तिस्वीकारेण शक्यतावच्छेदकस्यापि शक्यत्वात्तदन्येनरूपेण ज्ञाते लक्षणाभवतीत्यर्थः । व्यक्तावेव शक्तिरिति नव्यमतेतु शक्यादित्यस्य शक्यतावच्छेदकादित्यर्थोवसेयः । ननु प्रादेरुपसर्गस्य प्रकर्षेशक्तिः जिधातुनाच जयबोधइत्यस्त्विति उपसर्गे शक्तिवादी शंकते । नन्विति । अन्यलभ्यत्वादिति । धातोर्लक्षणादिना लभ्यत्वादित्यर्थः । अन्यथा गङ्गापदस्यापि तीरे शक्त्यापत्तेरिति भावः । ननु व्यतिसेत्यादौ अस्धातोर्लोपात् कथं व्यत्ययप्रत्ययः । धातोस्त-

व्यतिसेत्यत्र तु लुप्तोधातुरेवार्थं प्रत्याययति। धातुलोपमज्ञान-

च लुप्तत्वेन लक्षणा सम्भवादनाय त्वाउपसर्ग एव शक्तिरत आह। व्यतिस इति। लुप्तोधातुरिति। स्मृतः सन्निहितोवेषः। धातोरप्रतिसन्धाने व्यत्ययबोधाभावे इष्टापत्तिमाह। धातुलोपमिति। ननु उपसर्गएव शक्तिः धातोरेव तात्पर्यग्राहकत्वमित्येव किंन स्यादत आह। संक्षेप इति। उपसर्गं विनापि जयतीत्यत्र धातुप्रयोगात्तत्र शक्तिरावश्यकी केवलस्योपसर्गस्य चाप्रयोगान्न तुल्यत्वम्। एवं धातोरशक्तत्वे प्रजयतीत्यादौ जये आख्यातार्थभावनान्वयोनस्यात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तेरितिध्येयं। नच जीधातोर्जयवत्प्रकर्षेपि शक्तिरेवास्तु किंतत्र लक्षणया एकतिङुपस्थाप्यकृतिवर्तमानत्वयोरिव एकपदार्थयोरपि प्रकर्षजययोः परस्परमन्वयः धातूनामनेकार्थत्वस्य च क्लृप्तत्वादिति वाच्यं। धातूनामनेकार्थत्वं हि न सर्वत्र सर्वार्थकत्वं किन्तु व्याकरणकोशाद्यभियुक्ततत्तदर्थकत्वं तत्तु लक्षणयापि प्रकर्षबोधोपपत्तेर्न शक्तिसाधकमिति। अथैवं प्रत्ययमात्रस्यैव निरर्थकत्वप्रसङ्गः घटमित्यादावपि घटपदस्य घटकर्मत्वे लक्षणयैवोपपत्तेरिति चेन्न। घटमानयेत्यादौ घटपदस्य घटकर्मत्वे लक्षणोपगमे चैत्रः पचतीत्यत्र पचधातोरेव पाककर्तरि लक्षणायां तयोरानयनचैत्रयोरनन्वयापत्तिः। नामार्थयोरपि अभेदातिरिक्तसम्बन्धेन साक्षादन्वयबोधानुपगमात्। नच तथापि द्वितीयादेरेकत्वशक्तौ बीजाभावः। घटपदस्यैकत्वविशिष्टघटे लक्षणयाप्युपपत्तेः। अमः कर्मत्वे शक्तिः एकत्वविशिष्टघटे लक्षणायां तात्पर्यग्राहकत्वाच्च: एवं पचेत्यादौ कार्यत्वेष्टसाधनत्वादेरपि विध्यर्थत्वविलोपः। पचधातोरेवेष्टसाधनत्वविशिष्टपाके लक्षणयाप्युपपत्तेः। विधिः कृतौ शक्तः विशिष्टार्थे तात्पर्यग्राहकश्चेति वाच्यं। घटपदादेर्वा विशिष्टे लक्षणा द्वितीयादेर्वा एकत्वे इत्यत्र विनिगमनाविरहाद्द्वितीयादेरेकत्वबोधकत्वे सिद्धे कर्मत्वत्वं वाशक्यतावच्छेदकं एकत्वादिकंवेत्यत्र विनिगमनाविरहाल्लाघवाच्च तत्र शक्तिः एवं पचेतेत्यत्र धातोर्वा विशिष्टे लक्षणाविधेर्वाकार्यत्वेष्टसाधनत्वे इत्यत्र विनिगमनाविरहेण विधेरपि कार्यत्वं भावाबोधकत्वे सिद्धे लाघवात्तत्र शक्तिरेवेति। एवं च उपसर्गाणां मध्ये यस्य उपसर्गस्य क्वचिदप्यर्थे शक्तिर्न प्रामाणिकी तस्य द्योतकत्वमेव। तथा प्रदीपस्य च शक्तिः प्रामाणिकी तस्य बोधकत्वमेव।

यद्यपि निरुपादेरन्यथा उपकुम्भमित्यव्ययीभाव समासानुपपत्तिः । तस्य नि-रर्थकत्वेन निराकाङ्क्षत्वात् पूर्वं वाच्यं भवद्यस्य सोऽव्ययीभावइष्यते इत्यनुशा-सनात् । नच प्रादेरपि निरर्थकत्वेन तेनसह समासानुपपत्तिः । नाम्नामेव स-मासविधानात् । वस्तुवाचिन एव नामत्वादिति वाच्यं । स्वाद्यन्तमिह नामे-ष्टमित्यनेन स्वाद्यन्तत्वेन तस्यापि नामत्वात् । वस्तुवाचीनि नामानीत्यस्यैक-देशिमतत्वात् । केचित्तु । प्रोत्तरत्वेनप्रकृष्टजयेशक्तिरिति उपसर्गाणां शक्ता तावच्छेदकत्वं मिदमेव द्योतकत्वं तथाचोपसर्गाणामौपसन्धानिकीशक्ति रि-त्याहुः । भुक्त्वा व्रजतीत्यत्र भोजने पूर्वकालीनत्वस्य नियमेन प्रतीतः पूर्वका-लीनत्वं क्त्वाप्रत्ययार्थः । नच मात्यादीनां व्यवधानेपि तथा प्रयोगापत्तिरि-तिवाच्यं । तथाविवक्षायामिष्टत्वात् । अन्ये तु अव्यवहित पूर्वकालीनत्वं वा-च्यम् । अव्यवधानंच क्रियान्तरानुकूलविलम्बाभाववत्त्वमेव तदनुकूलक्रिया या-स्तदव्यवधायकत्वात् इन्द्रियव्यापाराणामित्याहुः । अत्र चक्षुर्विषयांतर-सञ्चारेपि भुक्त्वाव्रजतीति प्रयोगात् क्रियान्तरानुकूलविलम्बाभाववत्त्वरूपा-व्यवधानस्य दुर्वचत्वात् । तदुत्पत्तिक्षणोत्पत्तिकध्वंस प्रतियोगिकालत्वमेव तदव्यवहितपूर्वकालत्वं । कालश्चात्र यावताकालेन भोजनानन्तरं व्रजनव्यव-हारः तावान्स्थूलकालोपाधि र्विशिष्यनिवेशनीयः । तेननासम्भवः । नतु दि-वसादिरूपोपि । तेन नदिवसादिना विलम्बे भुक्त्वाव्रजतीतिप्रयोगापत्तिरि-ति केचित् । तत्तु कालस्य तत्तद्व्यक्तित्वेन निवेशेनाननुगतत्वाद्दुर्ज्ञेयं । तस्मा-त्पूर्वकालत्वमेव क्त्वावाच्यं । ननु मुखं व्यादायस्वपतीत्यादौ ओष्ठपुटविभाग-रूपव्यादानस्य स्वापोत्तरकालीनत्वाद्व्यादानेस्वापपूर्वकालत्वाभावेनकथं क्त्वा-निर्द्देश इतिचेन्न । स्वापपूर्वकालेपि व्यादानसम्भवेन तथा प्रयोगात् । सुप्तव्या-दत्तइत्यत्रैव निरूढ लक्षणया तथा प्रयोगाद्वेति । प्राभाकरास्तु समान-कर्तृकत्वमेव क्त्वावाच्यं । नियमेन तेनरूपेणबोधात्समानकर्तृकक्रियाद्वय-स्यैकदासम्भवाद्भोजनव्रजनयोरैककर्तृकत्वेऽवगतेऽकस्यापरपूर्वकालत्वस्याक्षेपे-णैव लाभान्न पूर्वकालत्वेपि शक्तिः विभिन्नकर्तृकेपि पूर्वकालत्वसम्भ-वेन तेन समानकर्तृकत्वाक्षेपासम्भवात् समानकर्तृकत्वे शक्तिरेव । नच-यज्ञोपवीतं वहन् पन्थानमीक्षमाणोऽधीयानोगच्छतीत्यादौ युगपदनेक क्रि-याकर्तृत्वस्य एकस्मिन्न पि सम्भवान्न ते न पूर्वकालत्वाक्षेपो युक्त इति वाच्यं । तथाप्येककर्तृकप्रधान क्रियाद्वयस्ययुगपदसम्भवेन तयोः पूर्वोत्तरभावनिय-

मात्।" न चाव जानासिमां यस्मादतस्तेन भविष्यन्ति। मत्प्रसूतिमनाराध्य-प्रजेतित्वांशशापसैत्यच" मत्प्रसूतिमनाराध्यते प्रजा नभविष्यतीतिभिन्न कर्तृकेपि क्त्वानिर्देशात्कथं समानकर्तृकत्वं क्त्वावाच्यं। तत्रानाराध्यस्थित स्वेति-क्रियान्तरमध्याहृत्य समाधानस्य सम्मतत्वादित्याहु:। तदसत्। समानकर्तृ-कत्वस्य क्त्वावाच्यत्वे तस्यप्रधान क्रियापेक्षयोत्तरकालत्वेनाप्युपपत्ते:। नच भोजनेनियमेन पूर्वकालत्वाक्षेपसम्भव:। नच भोजनव्रजन क्रिययोरेक: कर्तेति नानुभवोऽपितु भोजन क्रियाव्रजन क्रियाएककर्तृकेति। तथाभुजि क्रिया-या: प्रधानत्वेनोपस्थितेस्तत्रैवपूर्वत्वान्वयइति वाच्यं। प्राधान्येनोपस्थितेर्हि आकांक्षा: प्रयोजकत्वेन शाब्दबोधे कथञ्चिन्नियामकत्वंस्यात्। इह त्वाक्षे-पोत्पत्सानन्तरच व्याप्तिपक्षधर्मतयोरेव प्रयोजकत्वेन पौर्वापर्यावधारणसम्भवे-पि पूर्वत्वमात्राक्षेपे कलिङ्गाभावेन पूर्वत्वाक्षेपासम्भवात्। नचपरमतेशब्दानु-पस्थितस्यापि शाब्दे भानमिति वाच्यं। शाब्दीतिन्यायेन तन्मतस्य दुष्टत्वात्। नच भुक्त्वाव्रजतीत्यत्र आख्यातार्थकालावरुद्धत्वेन व्रजनस्य कालान्वयनिरा-कांक्षतया तदनवरूद्धत्वाद्भुजि क्रियायामेवपूर्वत्वान्वय:। इत्यत्रकालान्तरस-म्बन्धित्वेनानुपस्थितिरेव प्राधान्येनोपस्थिति: सैवचनियामिकेति वाच्यं। प-दानुपस्थितस्य शाब्दबोधाविषयतया कालान्तरासम्बन्धित्वेनोपस्थितेरकिञ्चि-त्करत्वात्। किञ्चित्समानकर्तृकत्वेन न पूर्वत्वाक्षेप:। किन्तुसमानकर्तृकप्र-धान क्रियाद्वयस्यैकज्ञाने सम्भवात्प्रधानसमानकर्तृकत्वेन पूर्वत्वाक्षेप इति वाच्यं। तत्रप्राधानत्वं न तावन्मुख्योद्देश्यत्वं मुख्यत्वञ्च इदम्भवतुमाभवतुवा इदन्तुस्यादेवेत्यनवस्थाविरहरूपंक्रिययोस्तुल्यवदुद्देश्यत्वेपि एकदासम्भवेन-व्यभिचारात्। तयोरुद्देश्यतायाश्चविनिगन्तुमशक्यत्वात्। किञ्चसमानकर्तृक-त्व एव परेण शक्तिरूपेयते नतुप्रधानत्वेपीति कथन्तेनपूर्वत्वाक्षेप:। तदंशेपि-शक्त्यभ्युपगमेतुकिमपराद्धं पूर्वकालीन त्वेनेति नकिञ्चिदेतत्। नच समान-कर्तृकत्वस्य नियमे न प्रतीतिस्तत्रापिशक्तिरिति वाच्यं। अभिन्नकर्तृकत्वरूपे-समानकर्तृकत्वेऽभेदांशे शक्त्यभावेपिकर्तृलकाराभ्यांभोजनकर्त्तरि व्रजन-कर्तुरभेदान्वयबोधसम्भवात्तयो: कृतिमात्रवाचित्वव्रजनपूर्वकालीनभोजनकृ-तिमान्व्रजनकृतिरित्यन्वये भोजनव्रजनकृत्योश्च ऐकाधिकरण्यस्यापि भा-नसम्भवात्। नन्वसमानकर्तृकत्वस्याशक्यत्वेचैत्रो गच्छतिमैत्रो भुङ्क्तेइति

प्रयोगवत् चैत्रो भुक्त्वा मैत्रो गच्छतीति भिन्नकर्तृकेऽपि क्त्वाप्रयोगप्रसङ्ग इति वाच्यं । वस्तुतःसमानकर्तृकक्रियायामेव क्त्वासाधुत्वात् । भोक्तुं व्रजति पश्यन् व्रजतीत्यत्र चैवलट्तुमुनोरपि समानकर्तृकत्वे शक्ति केनाप्यनङ्गीकारात् मणिकृन्मतस्तु । आनन्तर्यमेव क्त्वावाच्यं पूर्वकालत्वस्य शक्यत्वे व्रजनपूर्वकालीनं भोजनमिति भोजनविशेष्यकानुभवः स्यात् जायते तु भोजनानन्तरं व्रजनमिति व्रजनविशेष्यकानुभवस्तथाचानुभवस्यात्र विनिगमकत्वेनानन्तर्यमेव क्त्वावाच्यं । नच पूर्वकालत्वस्य शक्यत्वेऽपि तस्य निरूपकतासम्बन्धेन व्रजनेऽन्वयोपगमे व्रजनविशेष्यकोऽनुभव उपेयत एवेति वाच्यं । नभुक्त्वाव्रजतीत्यत्र व्रजनेस्वरूपसम्बन्धेन पूर्वकालत्वस्याभावबोधने भुक्त्वाव्रजत्यपि न भुक्त्वाव्रजतीति प्रयोगप्रसङ्गात् भोजननिष्ठपूर्वकालत्वस्य व्रजनेऽसत्त्वात् वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया निरूपकतया तदभावबोधासम्भवादित्याहुः । केचित्तु सत्यपिकदाचिदध्ययने अधीत्यतिष्ठतीत्यप्रयोगान्निरन्तराध्ययनशालिन्येवतत्प्रयोगाच्च कदाचित्सामानाधिकरण्यविशिष्टाध्ययनव्याप्यत्वमपि क्त्वा प्रत्ययार्थः व्याप्तिश्चकालिकी । तथाचाध्ययनसामानाधिकरण्यविशिष्टाध्ययनव्याप्यस्थितिमानित्यन्वयधीः । निरन्तराध्ययनविरहिणि अन्यदीयतथाध्ययनमादायातिप्रसङ्गवारणाय सामानाधिकरण्यनिवेशः । नच स्वीयाध्ययनसामानाधिकरण्यविशिष्टपरकीयाध्ययनव्याप्यस्थितिमादाय तथाप्यतिप्रसङ्गोदुर्वारइति वाच्यम् । प्रधानक्रियायांप्रकृत्यर्थीभूते कर्त्तृव्यक्तिनिरूपितयोरिव सामानाधिकरण्यव्याप्यत्वयोः क्त्वाप्रत्ययेनबोध्यत्वस्य व्युत्पत्तिविशेषबलेनकल्पनात् । एतेनपूर्वकालत्वस्यैव क्त्वावाच्यत्वेव्यादानशून्यकालेऽपि मुखं व्यादाय स्वपितीत्यादिप्रयोगापत्तिरित्यपिनिरस्तम् । व्याप्यत्वस्यैव क्त्वाबोध्यत्वात् । तत्स्वापेव्यादाननिरूपि तव्याप्तेरभावादेवतथाप्रयोगापत्त्यसम्भवात् । भुक्त्वा वाहं तृप्तो नतुपीत्वेत्यादौभोजनपानयोस्तृप्तिपूर्वकालत्वस्य तृप्तौतदानन्तर्यस्यवाऽविशेषेऽपि तथा प्रयोगात् जन्यत्वमपिक्वचित् क्त्वाप्रत्ययार्थः । एवं च भुक्त्वाव्रजतीत्यादौ पूर्वकालत्वमानन्तर्यंवा उक्तस्थले च सामानाधिकरण्यविशिष्टव्याप्यत्वंजन्यत्वंचार्थ इति क्त्वाप्रत्ययोनानार्थएवेत्याहुः । अपरेतु क्त्वाप्रत्ययस्य कृत्प्रत्ययान्तर्गतत्वात्सामान्यशक्त्याऽऽश्रयोपस्थिते कृत्प्रत्ययेन सम्भवात् व्यादानाश्रये स्वापाश्रयत्वस्य विशिष्टेवैशिष्ट्यमिति न्यायेनैव बोधः । विशिष्टेवैशिष्ट्यमिति न्यायेन शाब्दबोधे चोद्देश्यतावच्छेदकविधेययोः

प्रयोगवत् चैत्रो भुक्त्वा मैत्रो गच्छतीति भिन्नकर्तृकेऽपि क्त्वाप्रयोगप्रसङ्ग इति वाच्यं । वस्तुतःसमानकर्तृकक्रियायामेव क्त्वासाधुत्वात् । भोक्तुं व्रजतिपश्चान् व्रजतीत्यत्र केवलतुमुनोरपि समानकर्तृकत्वे शक्ति केनाप्यनङ्गीकारात् मणिकृतस्तु । आनन्तर्यमेवक्त्वावाच्यं पूर्वकालत्वस्य शक्यत्वे व्रजनपूर्वकालीनं भोजनमिति भोजनविशेष्यकानुभवः स्यात् जायतेतुभोजनानन्तरं व्रजनमिति व्रजनविशेष्यकानुभवस्तथाचानुभवस्यात्र विनिगमकत्वेनानन्तर्यमेव क्त्वावाच्यं । नच पूर्वकालत्वस्य शक्यत्वेपि तस्य निरूपकतासम्बन्धेन व्रजनेऽन्वयोपगमे व्रजनविशेष्यकोऽनुभव उपेयतएवेति वाच्यं । नभुक्त्वाव्रजतीत्यत्र व्रजनेस्वरूपसम्बन्धेन पूर्वकालत्वस्याभावबोधने भुक्त्वाव्रजत्यपिन भुक्त्वाव्रजतीति प्रयोगप्रसङ्गात् भोजननिष्ठपूर्वकालत्वस्य व्रजनेऽसत्त्वात् वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया निरूपकतया तदभावबोधासम्भवादित्याहुः । केचित्तु सत्यपिकदाचिदध्ययने अधीत्यतिष्ठतीत्यप्रयोगा न्निरन्तराध्ययनशालिन्येवतत्प्रयोगाच्च कदाचित्सामानाधिकरण्यविशिष्टाध्ययनव्याप्यत्वमपि क्त्वा प्रत्ययार्थः व्याप्तिस्त्रैकालिकी । तथाचाध्ययनसामानाधिकरण्यविशिष्टाध्ययनव्याप्यस्थितिमानित्यन्वयधीः । निरन्तराध्ययनविरहिणि अन्यदीयतथाध्ययनमादायातिप्रसङ्गवारणाय सामानाधिकरण्यनिवेशः । नच स्वीयाध्ययनसामानाधिकरण्यविशिष्टपरकीयाध्ययनव्याप्यस्थितिमादाय तथाप्यतिप्रसङ्गोदुर्वारइति वाच्यम् । प्रधानक्रियायांप्रकृत्यर्थीभूते कव्यक्तिनिरूपितयोरिव सामानाधिकरण्यव्याप्यत्वयोः क्त्वाप्रत्ययेनबोध्यत्वस्य व्युत्पत्तिविशेषबलेनकल्पनात् । एतेनपूर्वकालत्वस्यैव क्त्वावाच्यत्वेव्यादानशून्यकालेपि मुखं व्यादाय स्वपितीत्यादिप्रयोगापत्तिरित्यपिनिरस्तम् । आचापिव्याप्यत्वस्यैव क्त्वाबोध्यत्वात् । तत्रापिव्यादानानिरूपि तव्याप्तेरभावादेवतथाप्रयोगापत्त्यसम्भवात् । भुक्त्वैवाहंतृप्तो नतुपीत्वेत्यादौभोजनपानयोस्तृप्तिपूर्वकालत्वस्य तृप्तौतदानन्तर्यस्यवाऽविशेषेपि तथा प्रयोगात् जन्यत्वमपिक्वचित् क्त्वाप्रत्ययार्थः । एवं च भुक्त्वाव्रजतीत्यादौ पूर्वकालत्वमानन्तर्यंवा उक्तस्थले च सामानाधिकरण्यविशिष्टव्याप्यत्वंजन्यत्वंचार्थ इति क्त्वाप्रत्ययोनानार्थएवेत्याहुः । अपरेतु क्त्वाप्रत्ययस्य कृत्प्रत्ययान्तर्गतत्वात्सामान्यशक्त्याऽऽश्रयोपस्थिते कृत्प्रत्ययेन सम्भवात् व्यादानाश्रये स्वापाश्रयत्वस्य विशिष्टेवैशिष्ट्यमिति न्यायेनैव बोधः । विशिष्टेवैशिष्ट्यमिति न्यायेन शाब्दबोधे चोद्देश्यतावच्छेदकविधेययोः

तस्त्वार्थप्रत्ययाभावादितिसंक्षेपः। स्यादेतत्। आख्या-

समानकालीनत्वभानं व्युत्पत्तिसिद्धं। अन्यथा तिलकीकर्मकुर्वीतेत्यादौ तिल-
कविशिष्टे कर्मकरणवैशिष्ट्यलाभेपि तिलकेसत्येवचकर्मकरणमित्यस्या प्राप्त्या-
तिलकशून्यकालेपि कृतस्य कर्मणः नैष्फल्यानापत्तेः। तद्विधायकैतद्वाक्यस्या-
नर्थक्यापाताच्च। तथाचैतादृशव्युत्पत्त्याकर्मकरणे तिलकसमान कालीनत्वस्य
भानेतच्छून्यकाले चतत्समानकालीनत्वस्याभावन्नैष्फल्योपपत्तिरिति प्रकृतेपि
मुखंव्यादाय स्वपतीत्यादौ व्यादानविशिष्टेस्वापाश्रयत्ववैशिष्ट्यभाने व्यादान-
समानकालीनत्वस्यभानात् व्यादानशून्यकाले तथाप्रयोगापत्त्यसम्भवः। एव-
मधीत्यतिष्ठतीत्या दावपीत्याहुरितिदिक्। एवमेवकारस्यान्ययोगव्यवच्छेदः।
अयोगव्यवच्छेदोऽत्यन्तायोगव्यवच्छेदश्चार्थः। तत्र विशेष्यसङ्गतएव कारस्थ-
ले पार्थ एव धनुर्धरइत्यादौ पार्थान्यतादात्म्यव्यवच्छेदोबुध्यते पार्थान्यतादा-
त्म्या भाववद्धनुर्द्धराभिन्नपार्थ इति बोधः। पृथिव्यामेव गन्धइत्यत्र पृथिव्याः
न्यासमवेतत्वाभाववानपृथिवीसमवेतश्चगन्ध इति बोधात्प्रथमेतरविशेषण वि-
भक्ति समभिव्याहृतत्वमपि नियामकमन्न च भावान्वयबोधानुपगमे पृथिव्या-
मेव आकाशमित्यपि प्रसज्येत तथा चान्ययोगव्यवच्छेदबोधे विशेष्यवाच-
कपदप्रथमेतरविशेषण विभक्त्यन्यतर समभिव्याहृतैवकारोहेतुः। विशेषणस-
ङ्गतैवकारस्थले अयोगव्यवच्छेदबोधः यथा शंखः पाण्डुरएवेत्यादौ शंखत्वा-
वच्छेदेन पाण्डुरत्वायोगव्यवच्छेदबोधात्। नीलंसरोजंभवत्येवेत्यादौ क्रि-
यासङ्गतैवकारस्थलेऽत्यन्तायोगव्यवच्छेदबोधः अयोगो आत्यान्तिकत्वस्या-
न्वयितावच्छेदकव्यापकत्वरूपस्य व्यवच्छेदइत्यर्थः। इत्यञ्चान्वयितावच्छेद-
कसामानाधिकरण्येनायोगव्यवच्छेदः अत्यन्तायोगव्यवच्छेदः। अन्वयि-
तावच्छेद कावच्छेदेनायोग व्यवच्छेदोऽयोग व्यवच्छेद इति परिभाषेति-
ध्येयम्। आख्यातस्येति। आख्यातत्वंनजातिः। तिबादिनासाङ्कर्यात्। ना-
पिदशलकारसाधारणं लत्वन्तत् तन्मात्र साधारणस्यैकस्यनित्यादि लादेश-
स्थलेप्याख्यातार्थ कृतिबोधापत्तिरिति विभाव्यते तदभावात्। किन्तु रूढिस-
म्बन्धेनाख्यातपदवत्वं तत्। यदिचलकारेष्वे वाभियुक्तानामाख्यातपदरू-
ढिः तथाच पचत्वंस्यादातिप्त्वत्वादिकमेव विशिष्यशक्ततावच्छेदकम्बो-
ध्यं। नचैवं केवलतिप्पदादपि कृतेर्बोधापत्तिः। आनुपूर्वीज्ञानस्यापि स-

तस्य तावद्यत्न एवार्थः पचतीत्यस्य पाकं करोतीति विवरणात् । व्यवहारवद्विवरणादपि शक्तिनिर्णयात् । तथाच-

---

हकारित्वात् पाकोयत्नश्चेतिमिराकाङ्क्षवाक्यात् । पचतीत्यत्रैव पाकानुकूलयत्नबोधापत्तिवारणायाख्यातपदजन्यपाकानुकूलयत्नविषयकशाब्दबोधं प्रतितिवादिपदनिष्ठपचादिधात्वव्यवहितोत्तरत्वरूपानुपूर्वीज्ञानस्य हेतुत्वकल्पनाया आवश्यकत्वात् । यत्न एवेति । यत्नत्वं शक्यतावच्छेदकमित्यर्थः । नच पाकगोचरनिवृत्तिकालेपचतीति प्रयोगापत्तिरिति वाच्यं । प्रवृत्त्यभावातिरिक्त निवृत्त्याख्ययत्ने मानाभावात् । विलक्षण विषयतासम्बन्धेन वा पाकस्य कृतावन्वयेनादोषत्वाच्च । करोतीति । पूर्वोक्तस्थितवाक्यस्योत्तरवाक्येनार्थ कथनं हि विवरणं । तथाच यत्नत्वविशिष्टे शक्तकृधातुनाऽऽख्यातस्य विवरणादाख्यातस्य यत्नवाचकत्वमिति भावः । कृञश्च यत्नाभिधायकत्वं सिद्धमेव । अन्यथा तस्य व्यापारवाचकत्वे व्यापारजन्यत्व प्रतिसन्धानाविशेषेपि यत्नजन्यत्व प्रतिसन्धाना प्रतिसन्धानाभ्यां पटांकुरयोः कृता कृतव्यवहारानुपपत्तेः । ज्ञातेत्यत्रैव कर्त्तैत्यत्रापि कृत्याश्रयबोधाच्च । तथाख्यातपदं यत्नत्वावच्छिन्ने शक्तं यत्नत्वावच्छिन्नशक्तकरोतिधातु प्रतिपादितार्थकत्वात् । यद्यद्धर्मावच्छिन्नशक्त प्रतिपादितार्थकम्भवति तत्तद्धर्मावच्छिन्ने शक्तं भवतिपाकत्व विशिष्टे शक्त पाकपदप्रतिपादितार्थकपचधातुवदिति सामान्यतोदृष्टानुमानेन विवरणस्य शक्तिग्राहकत्वात् । ननु विवरणस्य शक्तिग्राहकत्वे किं मानमत आह । व्यवहारवदिति । तथा सति तुल्ययुक्त्या व्यवहारस्यापि शक्तिग्राहकत्वानुपपत्तेरिति भावः । तथाचोक्तं । "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाइति" । नच विवरणस्य शक्तिग्राहकत्वेयत्र कर्त्तुरपि विवरणात्तत्रापि शक्तिः स्यादिति वाच्यं । असतिबाधके इत्यनेन विशेषणाद्धर्मिणि अन्यलभ्यत्वस्यैव बाधकत्वात् एवं आख्यातस्य व्यापार वाचकत्वे किं करोतीति यत्नप्रश्ने पचतीत्यस्योत्तरत्वानुपपत्तिरपि । तथाहि । यद्धर्मविशिष्टे यद्धर्मावच्छिन्नस्य सम्बन्धः प्रश्नवाक्यात्प्रतीयते तदुत्तरवाक्यात्तद्धर्म विशिष्ट एव तद्धर्मव्याप्यतद्धर्मावच्छिन्न सम्बन्धश्चेत्प्रतीतो भवति तदैव प्रश्नोत्तरभावनिर्वाहः । यथाकस्माद्घट इति प्रश्ने दण्डाद्घट इति उत्तरं नतु दण्डाद्द्रव्यमिति । एवं च

रथोगच्छतीत्यत्र नमुख्यः प्रयोगः। रथादीनामचेतनतया गमनानुकूलप्रयत्नशून्यत्वात्। नापिलक्षणा। विभक्तौ लक्षणानङ्गीकारात्। अन्यथा व्यत्ययानुशासनवैयर्थ्यात्। अतः सिद्धं त्वत्यंतरेणेति चेन्न। व्यत्ययानुशासनबलाद्विभक्त्यर्थेऽन्यस्मिन्न लक्षणा नत्वन्यत्रापि। इह चन विभक्त्यर्थेलक्ष-

---

कर्त्रोयत्नार्थकत्वात्किंकरोतीति यत्नत्व विशिष्टे प्रश्ने पचतीत्यनेन व्यापारत्व विशिष्टे पाकसम्बन्धबोधेजातेपि नोत्तरत्वनिर्वाह इत्याख्यातस्यापि यत्नत्वविशिष्टवाचकत्वमवसेयमिति निगर्वः। तथा चेति। आख्यतस्य यत्नवाचकत्वेचेत्यर्थः। न मुख्येति। नाख्यातस्य शक्त्या प्रयोगइत्यर्थः। मुख्यार्थबाधमेवाह। रथादीनामिति। नापीति। लक्षणा। गमनानुकूल व्यापारे लक्षणा। अन्यथेति। विभक्तौ लक्षणाङ्गीकार इत्यर्थः। व्यत्ययेति। व्यासस्य कृतिः भारतस्य श्रवणमित्यादौ कर्तृकर्मणोर्योगेषष्ठीतः कर्तृत्वकर्मत्वबोधोऽनुभवसिद्धः। तथाच कर्मणिद्वितीया कर्तृकरणयोस्तृतीयेत्यनेन कर्मत्वकर्तृत्वार्थकत्वेन द्वितीया तृतीये विहितेशेषेषष्ठीत्यनेन च सम्बन्धसामान्ये षष्ठी विहितेति षष्ठीतः कर्तृत्व कर्मत्वबोधः कथ मतः कर्तृकर्मणोः कृतीति व्यत्ययानुशासनेन षष्ठ्याअपि कर्मत्वाद्यर्थकत्वमभिहितं। यदि च विभक्तौ लक्षणाङ्गीकारएव तदातत्सूत्रं विनैव लक्षणया कर्मत्वादिबोधस्योपपादयितुं शक्यतया तत्सूत्रानर्थक्यं स्यादित्यर्थः। अत इति। रथोगच्छतीत्यादौ गमनानुकूलव्यापारबोधस्य शक्तिलक्षणाभ्यामुपपादयितुमशक्यत्वादित्यर्थः। व्यत्ययेति। कर्तृकर्मणोः कृतीतिव्यत्ययानु शासनबलादित्यर्थः। विभक्त्यर्थेऽन्यस्मिन्निति। अनुशासितविभक्त्यर्थातिरिक्त विभक्त्यर्थे इत्यर्थः। नत्वन्यत्रापीति। अनुशासित विभक्त्यर्थातिरिक्त विभक्त्यर्थभिन्नेपि न लक्षणा इत्यर्थः। इह चेति। रथोगच्छतीत्यादौ आख्यातस्थले चेत्यर्थः। किन्तु व्यापार इति। व्यापरस्यनकस्याअपि विभक्तेरर्थ इत्यर्थः। तथाच विभक्तौ लक्षणास्त्येव। व्यत्ययानुशासनभिया विभक्तौ लक्षणा नास्तीति प्रवादस्तु एक विभक्तेरन्य विभक्त्यर्थे लक्षणानास्तीत्यभिप्रायकः। अन्यविभक्त्यर्थोऽनुशासित विभक्त्यर्थातिरिक्तोग्राह्यः। एवं च रथोगच्छतीत्यादौ आख्यातस्यानुकूलव्यापारलक्षणायां बाधकाभा-

णा। किन्तुव्यापारे। दृश्यते च विभक्त्यर्थेष्वानुशासनिकीलक्षणा। यथा कृद्योगे षष्ठ्याः कर्मत्वे। नच कर्मत्वमपि सम्बन्धः सच शक्यएवेति नलक्षणा। कर्मत्वत्वप्रकारकबोधस्य तया विनाऽसम्भवात्। तत्प्रकारकबोधो नभवत्येव किन्तुसम्बन्धत्वप्रकारकइति चेन्न। अनुशासनवैयर्थ्यात्। द्विती-

---

यात्र वृत्त्यन्तर कल्पनमिति भावः। अनुशासित विभक्त्यर्थातिरिक्त विभक्त्यर्थे न लक्षणेत्यत्र अन्यस्मिन्नित्यस्य व्यावृत्तिं प्रदर्शयितुं आनुशासनिक लक्षणास्थलं दर्शयति। दृश्यते चेति। कृद्योगे। कृत्प्रत्यययोगे। कर्मत्वे लक्षणेति पूर्वान्वयि। यथा भारतस्य श्रवणं ग्रामंगन्तेत्यादौ भारतकर्मक श्रवणग्रामकर्मक गमनबोधः। ननु शेषेषष्ठीत्यनेन सम्बन्धमात्रे षष्ठीविधानात्कर्मत्वमपि शक्त्यैव षष्ठ्याबोध्यतां किं तत्र लक्षणयेत्या शंकते। नचेति। सच। सम्बन्धश्च। शक्यएव। षष्ठ्याशक्य एव। न लक्षणा। न कर्मत्वेलक्षणा। कर्मत्वत्वेति। सम्बन्धत्वस्यैव षष्ठीशक्यतावच्छेदकतया ततः कर्मत्वत्वप्रकारकबोधस्य विनालक्षणामुपपादनासम्भवादित्यर्थः। तया। लक्षणया। तत्प्रकारकेति। कर्मत्वत्वप्रकारकेत्यर्थः। किन्त्विति। सचशक्त्यैवेति भावः। अनुशासनेति। कर्तृकर्मणोः कृतीति व्याकरणानुशासनेत्यर्थः। षष्ठीतः कर्मत्वबोधनार्थंहितत्। तच्च शेषे षष्ठीत्यनेनैव सम्बन्धत्वेन कर्मत्वबोधोपपत्तौ निरर्थकंस्यादिति भावः। शंकते। द्वितीयया इति। तृतीया इत्यपि बोध्यं। असाधुत्वं। व्याकरणानिष्पन्नं तत्। अनुशासनं। भारतस्य श्रवणमित्यत्र कर्मणिद्वितीयेति सूत्रेण भारतं श्रवणमिति प्राप्तं तन्निषिध्यते। कर्तृकर्मणोः कृतीत्यनेन कर्तृकर्मबोधार्थं षष्ठेरव साधुनतु द्वितीया तृतीया वेति द्वितीयाया असाधुत्व प्रतिपादकतयैव तत्सार्थकं। षष्ठीतु शेषे षष्ठीतु। शेषे षष्ठीत्यनेनैवेति भावः। निष्ठादीति। कर्तृकर्मणोः कृतीत्यनेन यदि कर्तृकर्मकृद्योगे कर्तृत्वत्वबोधार्थं षष्ठीविहितास्यात्तदानिष्ठा दियोगेपि तस्याः प्रसक्तौ नलोकाव्ययनिष्ठाखलर्थतृणामित्यनेन निष्ठादियोगे षष्ठीनिषेधोयुक्तः स्यात् तच्च न भवन्मत इति भावः। एतत्सूत्रार्थोहि। नलोकेति। एषांयोगे षष्ठीनस्यात्। कर्तृकर्मणोः कृतीत्यनेन प्राप्तषष्ठीनिषिध्यते। लः। लादेशः। यथा ओदनपंचम् पचमान

याऽसाधुत्वज्ञापकमनुयासनमिति चेन्न। निष्ठादिवर्जनवैफल्यात्। तत्र द्वितीयायाः साधुत्वज्ञापकत्वादिति चेन्न। कृत्ययोगे विकल्पविधानवैयर्थ्यात्। अनिषेधेनैव तृतीयोपपत्तेः। पाक्षिकषष्ठ्यर्थत्वादिति चेन्न। सम्बन्धत्वप्रकारकबोधजनिकायाः शेषवचनादेव सिद्धेः। निष्ठादियोगे शेषषष्ठ्याऽसाधुत्वज्ञापकत्वादिति चेन्न। तद्योगेपि तादृशवाक्यदर्शनात्। किञ्च यदि विभक्तौ न लक्षणा कथन्तर्हि भाविनं घटं जानातीति विषयतायां कर्मत्वशक्त्या द्वितीया विषयतैव द्वितीयार्थः। क्रियाजन्यफलशालित्वापेक्षया लघुत्वादिति चेन्न।

---

इति। उत्कटश्चिकीर्षुः। कन्याकगिस्युः। उकः। वाराणस्याःकामुकः। लक्ष्म्याःकामुक इति प्रयोगात्। कर्मभाषायामनिषेधः। अव्ययकट्ंकृत्वा। क्तक्तवतूनिष्ठा। यथा ओदन भुक्तवान् देवदत्तेन कृतमिति। खलर्थः। त्वयासुकरं। तृन्निति प्रत्याहारः तेनशानच् प्रभृतीनांग्रहणं। यथा सोमंपवमान इति। शंकते। तत्रेति। निष्ठादियोगे इत्यर्थः। साधुत्वेति। कर्तृकर्मणयोगे द्वितीयान साधुकिन्तु षष्ठ्येवेति कर्तृकर्मणोः कृतीत्यनेन विहितं तत्र निष्ठादियोगेपि द्वितीयाया असाधुत्वप्राप्तौ अन्नंपक्कमित्यादौ अन्नस्य पक्कमित्यपिप्रसज्येतेति नलोकेत्यादिनानिष्ठादिवर्जनं। तथाच निष्ठादियोगे द्वितीयैवसाधुः। नतु षष्ठीतिन निष्ठादिवर्जनवैफल्यमित्यर्थः। त्पागइति। तव्यत्तव्यानीयर इति कृत्यप्रत्ययाः। तद्योगे कर्तृकर्मणोः कृतीत्यनेन नित्यषष्ठीप्राप्तौ कृत्यानां कर्तरिवाषष्ठीस्यादित्यनेन कर्त्तरिवोध्ये तृतीयावाभवति षष्ठीवा भवतीति षष्ठीविकल्पाते यथा देवदत्तेन कर्त्तव्यः कटः देवदत्तस्य कर्त्तव्यः कट इति। इदन्तु तदा सङ्गच्छते यदि कर्तृकर्मणोः कृतीति सूत्रं षष्ठीविधायकं तदा विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वमिति न्यायेन द्वितीया तृतीय योर्निषेध मुखेनैव नित्यं षष्ठीप्राप्तौ कृत्यानां कर्तरिवेत्यनेन तृतीयावाभवति षष्ठीवाभवतीति षष्ठीनिषेध मुखेनैव तृतीयायां विहितायां षष्ठीप्राप्त्यर्थं विकल्पेन षष्ठीविधानमिति भवन्मते च

कर्तृकर्मणोः कृतीति सूत्रं द्वितीययोरसाधुत्वज्ञापकं। नलो काव्ययनि :खलर्थतृणामिति च तयोः साधुत्वज्ञापकं तदाक्तत्वयोगे तृतीयोपपत्त्यर्थं कृत्यानां कर्त्तरीत्येव सूत्र प्रणयनं स्यात्। नेत्यस्य चानुवृत्तिः। तथाच कृत्यानां योगे षष्ठीनेत्यस्य तृतीया साधुरित्यर्थतयाच सामञ्जस्यं कृत्यानां कर्त्तरीति सूत्रस्य विधायकत्वाभावात् षष्ठ्या अनिषेधमुखेन तृतीयोपपत्त्याविकल्पेन षष्ठीविधानमनर्थकमापद्येतेत्याखण्डलार्थः। ननु कर्तृकर्मणोः कृतीत्यनेन तृतीयायाः असाधुत्वबोधनात्कथं तृतीयास्यादतस्तृतीयाविधानमावश्यकं तृतीयाविधाने च विशेष विधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वमिति न्यायेन षष्ठीनिषेधमुखेनैव तृतीयायाः प्रवृत्त्याषष्ठीप्राप्त्यर्थं विकल्पेन षष्ठीविधानमावश्यकमत आह। अनिषेधेनेवेति। षष्ठ्या अनिषेधमुखेनेवेत्यर्थः। तृतीयोपपत्तेः। कर्तृकरणयो स्तृतीयेत्यनेन तृतीयोपपत्तेः। कृत्यानां कर्त्तरीति सूत्रस्य नेत्यस्यानुवृत्त्यानलोकेत्यादिवत् तृतीयायाः साधुत्वज्ञापकत्वं नतु तृतीयाविधायकत्वेन षष्ठीनिषेधकत्वमिति षष्ठ्या अनिषेध मुखेनैव तृतीयोपपत्तौ षष्ठीविधानमफलमिति भावः। षष्ठीप्राप्त्यर्थमेव विकल्पविधानमावश्यकमित्याशंकते। पाक्षिकेति। कृत्ययोगे षष्ठ्या अनिषेधमुखेनैव तृतीयोपपत्तावपि कृत्ययोगे पक्षे षष्ठ्यपि साधुरिति बोधनाय विकल्पविधानमित्यर्थः। सम्बन्धबोधोवेति। कर्तृत्वबोधार्थंहि तृतीया षष्ठीवाकृत्ययोगेविधीयतेसतुशेषे षष्ठीत्यनेन सम्बन्धत्वेन कर्तृत्वस्यविषयत्वे वेति विकल्पविधानं वृथास्यादिति। मन्मतेतु कर्तृत्वप्रकारकबोधस्य शेष षष्ठ्या अनिर्वाहात् विकल्पविधानसार्थक्यमिति भावः। शेषवचनादिति। ननु शेषे षष्ठीत्यत्र उक्तादन्यः शेषः उक्ताकर्तृत्वकरणत्वादन्यः शेष इत्यर्थः। तथाच कथं कर्तृत्वादेर्बोधः षष्ठ्येति चेन्न। कर्तृत्वत्वकर्मत्वत्वाद्यतिरिक्तरूपेण सम्बन्धे षष्ठीत्यस्य तदर्थत्वात्। शंकते। निष्ठादीति। तदिति। विकल्पविधायकानुशासनमित्यर्थः। कृत्यानां कर्तरीति सूत्रस्य नेत्यनुवृत्त्यात्तृतीयायाः साधुत्वज्ञापकताषष्ठी तु शेषे षष्ठीत्यनेन पाक्षिकषष्ठी उपपन्नेतिविकल्पविधानं वृथेत्युच्यते चेत्तदा नलोकेत्यस्यापि साधुत्वज्ञापकतया कृत्ययोगेइव निष्ठादियोगेपि शेष षष्ठ्या आपत्तिरिति विकल्पविधानं तेन शेष षष्ठ्यपि कृत्ययोगे साधु ननु निष्ठादियोगे इत्यसाधुत्वज्ञापकतया विकल्पविधानं सार्थकमिति भावः। तद्योगेपि। निष्ठादियोगेपि। तादृश्याः। सम्बन्धत्वप्रकारकबोधजनिकायाः शेषषष्ठ्याः। बहुग्रइति दे-

वदत्तस्य कृतमित्यादावित्यर्थः। तदुक्तं नलोकेतिकारकषष्ठ्याः प्रतिषेधः। शेषषष्ठीतुस्यादेव। ब्राह्मणस्य कुर्वन्। सत्यानु रक्षामरकस्य जिष्णवः। छात्रस्य हसितमित्यादि। इक्ष्वाकूणांदुरापेर्थेत्वदधीनाहिसिद्धयः। " अपिवागधिपस्य दुर्वचंवचनं तद्विदधीतविस्मयमित्यादि च "। केचित्तु, इक्ष्वाकूणां सिद्धयइत्यन्वयः। नतु इक्ष्वाकूणां दुरापेर्थेइत्यनेनान्वयः। एवं वागधिपस्य विस्मयमित्यन्वयि। तन्न,वागधिपस्यदुर्वचमित्यनेनान्वयीतिसमादधुः। तस्मात्कर्तृकर्मकृद्योगेषष्ठीतः कर्तृत्वत्व कर्मत्वत्व प्रकारकबोधएवोपेयः। एवंचकर्मणोः कृत्तात्यनेन कर्तृत्वत्व कर्मत्वत्व प्रकारकबोधजनिकायाः षष्ठ्याःनिष्ठादियोगेऽपि प्रसक्तौ न निष्ठादिष्वित्यनेनषष्ठीनिषेधे कृत्यानां कर्तरीत्येवसूत्रस्यनैत्यनुवृत्त्या कृत्ययोगेऽपि षष्ठीनिषेधे प्राप्ते निष्ठादिष्विवकृत्ययोगेऽपि षष्ठीनस्यादिति कृत्यानां कर्तरिवेतितत्रषष्ठ्याविकल्पविधानं सार्थकमिति शेषषष्ठ्यास्तु प्रसक्तिरेव न तस्याःकर्मत्वत्वादि प्रकारकबोधजननेऽसामर्थ्यादितिषष्ठ्याः कर्मत्वत्वादि प्रकारकबोधजनकत्वं कर्तृकर्मकृद्योगे आवश्यकं तच्च नशक्त्या अनन्यलभ्यस्यैव शब्दार्थत्वादिति कर्मत्वत्वप्रकारकबोधोलक्षणयैवेति विभक्तौवाऽऽनुशासनिकीलक्षणेतिध्येयं। कर्मकृद्योगे षष्ठीतःकर्मत्वत्व प्रकारकबोधस्यविवादेऽपि विभक्तौलक्षणास्थलान्तरमाह। किञ्चेति। कर्मत्वेक्रियाजन्यफलशालित्वरूपे। कर्मत्वेशक्ताद्वितीयाकथं विषयतायामित्यन्वयः। विषयतायामिति विषयसप्तमीविषयताचव्यापारानुबन्धिनी तथा च विषयताबोधिका कथमित्यर्थः। तथा च शक्त्याविषयतायाः बोधासम्भवात्तत्रद्वितीयायालक्षणाऽवश्यकीतिविभक्ता वपि लक्षणास्वीकार इति भावः। विद्यमानघटस्थलेज्ञानेन ज्ञाततोत्पादनमङ्गी कृत्यक्रियाजन्यफल शालित्वरूपकर्मत्वमपि कदाचित्सम्भवतीतिभाविनमित्युक्तंतत्र पूर्वघटस्या भावेनज्ञाततायाजननासम्भवादिति भावः। शङ्कते। विषयतैवेति। द्वितीयार्थः। द्वितीयायाः शक्यार्थः। तथा च शक्त्यैव तद्बोधसम्भवान्नतत्र लक्षणेतिभावः। अत्रविनिगमकमाह। क्रियेति। ग्राममिति ग्रामविषयकत्वस्यागमनेऽभावेनक्रियाजन्यफलशालित्वरूपकर्मत्वं लक्षणयैव त्वन्मतेबोधनीयमिति भावः। आयुष्मतेति। तथा च विभक्तौ लक्षणावश्यकीतिभावः। क्रियाजन्यफलशालित्वस्य विषयत्वापेक्षयागुरुत्वेपितत्र भूरिप्रयोगात्तत्रैव शक्ति रुचितेत्यतउक्तं। विभावनीयमिति। ननुद्वितीयायाः क्रियाजन्यफल-

तर्हि ग्रामङ्गच्छतीत्यत्र कुतः कर्मत्वप्रतीतिर्लक्षणायां विनैव्या- युप्नताविभावनीयम् । आस्तान्तत्रापि वृत्त्यन्तरमिति चेन्न । क्लृप्तवृत्त्यैवोपपत्तेः । मीमांसकास्तु । अनुकूलव्यापारमात्र माख्यातार्थः । रथो गच्छतीत्यादौ मुख्यप्रयोगस्तिङ्त्याहुः तन्न । यत्नत्वस्य जातित्वेन तस्यैव शक्यतावच्छेदकत्वात् । न- त्वनुकूलत्वस्य गुरुत्वात् । कथं तर्हि पाकानुकूलता यत्नस्य भासत इति चेत् । संसर्गविधयेत्यवेहि । कथं तर्हि जानाति

---

शालित्वरूपेकर्मत्वएव शक्तिःभाविनंघटं जानातीत्यादौ विषयत्वरूपकर्म- त्वबोधस्तु विभक्तौलक्षणानङ्गीकारात् वृत्त्यन्तरेणैवभविष्यतीत्याशङ्कते । आस्तान्तत्रापीति । भाविनंघटंजानातीत्यत्रापीत्यर्थः । क्लृप्तेति । लक्षण- यैवेत्यर्थः । विभक्तौनलक्षणेतिप्रवादस्तु न श्रद्धेयइति भावः । वस्तुतस्तु । विभक्तौलक्षणानास्तीत्यस्य सुब्विभक्तौलक्षणानास्तीत्यर्थात्तिङ् विभक्तौलक्ष- णा स्वीकारएव । अतएव विद्यतेव्योम विद्यते घटः सत्तातिष्ठतीति प्रयोगा- इतिहृदयं । रथोगच्छतीत्यनुरोधादाख्यातस्य व्यापारमात्रमर्थ इति विभ- क्तौलक्षणानङ्गीकारेऽपि नक्षतिरितिमीमांसक मतमाह । मीमांसकास्त्विति । व्यापारमात्रं । व्यापारसामान्यं न तुयत्न एवेति भावः । मुख्यइति । श- क्त्याप्रयोगइत्यर्थः । व्यापारत्वस्यैवाख्यातशक्यतावच्छेदकत्वेनयत्नबोधेऽपि व्यापारबोधेबाधकाभावादिति भावः । तस्यैव । यत्नत्वस्यैव । नत्विति । नतुअनुकूलव्यापारत्वस्य शक्यताच्छेदकत्वमिति विभक्ति विपरिणामेना न्वयः । अनुकूलत्वं जनकत्वन्तदुत्कीर्तनञ्च प्रकारतयाभानमभ्युपेत्यागुरुत्वात् । यत्नत्वापेक्षयागुरुत्वात् । व्यापारत्वस्य नियतोत्तरवर्त्तित्वरूपजन्यत्वरूपत्वा- दिति भावः । ननु अनुकूलयत्नत्वस्याख्यातशक्यतावच्छेदकत्वेऽनुकूलत्वां- शे शक्तेरावश्यकतया यत्नत्वांशंविहायानुकूलमात्रएव शक्तिरास्तामेव च रथोगच्छतीत्यत्र मुख्यप्रयोगइत्यतः अनुकूलत्वांशंविहायलाघवाद्यत्नत्वमेव शक्यतावच्छेदकमित्येवोपेयं । तथाचकथं अनुकूलत्वं प्रतीयतइत्यभिप्राये- णाशङ्कते । कथंतर्हीति । यत्नत्वस्यैवाख्यात शक्यतावच्छेदकत्वेहीत्यर्थः ।

इच्छति यतते करोतीत्यादय: प्रयोगा: । नहि ज्ञानाद्यनुकूलो यत्नोऽस्ति । प्रतीयतेवेति चेत् । आश्रय तालक्षकत्वादाख्य।नस्येति गृहाण । चिन्तामणिकृतस्तु जानातीत्यादौ धात्वर्थ एव चैत्रादौ साक्षादन्वेति । आख्यात प्रतिपाद्यश्च काल: संख्या च । नतु यत्नोपि । अयोग्यत्वादिति भाव: । तच्चिन्त्यम् । नामार्थधात्वर्थयो: साक्षाद्भेदान्वयबोधस्य व्युत्पत्ते: । अन्न-

---

पचतीत्यत्र पाकानुकूलयत्नोभासते तत्रानुकूलताबोध:कथंआख्याता शक्यत्वादित्यर्थ: । संसर्गेति । पाकयत्नयो: संसर्गविधयेत्यर्थ: । अशक्यस्यापि संसर्गस्य भानोपगमात् । तत्प्रकारकबोधस्तु नानुभवसिद्धइति भाव: । कथं तर्हीति । व्यापारमात्रस्याख्यात वाच्यत्वेहीत्यर्थ: । यतते करोतीतियतीप्रयत्ने-डुकृञ्करणेइतिधातुभेदे न प्रयोगभेद: । ननु जानातीत्यादौ ज्ञानानुकूलयत्नवानितिबोधेबाधकाभावइत्यतआह । नहीति । ज्ञानादीति । आदिनाइच्छादि परिग्रह: । ननुज्ञानानुकूलयत्नोस्त्येव आत्ममन: संयोगस्यज्ञानासमवायिकारणत्वात् । तस्यमन: क्रियाजन्यत्वात् । तस्याश्चप्रयत्नवदात्मसंयोगजन्यत्वादतआह । प्रतीयतेवेति । जानातीत्यादौ ज्ञानाश्रयत्वमात्रं प्रतीयते न तुज्ञानानुकूलयत्नवानितीत्यर्थ: । आश्रयतेति । जानातीत्यत्राख्यातस्याश्रयत्वेन । लाक्षणिकत्वादित्यर्थ: । घटोनश्यतीत्यत्रतुनष्टस्यापि प्रतियोगिता-सम्बन्धेननाशाश्रयत्वसम्भवेपि प्रतियोगितासम्बन्धावच्छिन्नाश्रयतायांलक्षणायांगौरवात् प्रतियोगित्वमेव तत्राख्यातार्थोवसेय: । धात्वर्थएव । ज्ञानरूपोधात्वर्थएव । साक्षात् । विभक्त्यर्थमद्वारीकृत्य । तथाचाश्रयतासम्बन्धेन ज्ञानंचैत्रेऽन्वेतीतिनाख्यातस्य कोप्यर्थइतिभाव: । तर्ह्याख्यातं निरर्थकमतआह । आख्यातेति । प्रतिपाद्य: । लट्त्वेनएकवचनत्वादिना च प्रतियाद्य: । काल: । वर्त्तमानादि: । संख्या एकत्वादिरूपा । नतुयत्नोपि आख्यातत्वेनाख्यात प्रतिपाद्य: । अयोग्यत्वादिति तथा च जानातीत्यदौ नाश्रयत्वलक्षणेति भाव: । नामार्थेति । साक्षाद्विभक्त्यर्थं मद्वारीकृत्य । भेदेति । अभेदातिरिक्तसम्बन्धेनान्वयबोधस्याव्युत्पन्नत्वादित्यर्थ: । स्तोकं पचतीति क्रियाविशेषणस्थलेस्तोकस्यपाके अभेदेनान्वयाद्भेदेति । न चतत्रविशेषणविभक्तेरभेदोर्थ इति वाच्यं । विशेषवि-

या ओदनः पचतीत्यत्रौदनपाकयोः कर्मतासंसर्गेणान्वयः स्यात् । वस्तुतो जानातीत्यादावाख्यातार्थानवभासे आख्यातार्थसंख्यान्वयो न स्यात् तस्याख्यातार्थ विशेष्यकत्वनियमात् । विभक्त्यर्थो विशेषणीभूतो नामार्थ विशेष्यः । तन्नचैव ओदनं पचतीत्यत्र तथा विभक्त्यैवाख्यातार्थ विशेष्योन्त्वोदनः । द्वितीयार्थ विशेषणत्वात् । पच्यत इत्यत्र कर्मप्र-

---

भक्तेः साधुत्वार्थकत्वात् । स्तोकःपाकइत्यादावगतेश्च । विभक्त्यर्थस्य प्रकारतया संसर्गतयान भानमितिमतेघटमा न येत्यत्र घटस्यकर्मतासम्बन्धे नानयनेऽन्वयाखाधादिति । न चनकलंजभक्षयेदित्यत्रकलंजभक्षणं बलवदनिष्टाननुबन्धीष्टसाधनत्वाभाववदितिबोधात् । भक्षणेधात्वर्थेनञर्थाभावान्वयाद्व्युत्पत्ति भङ्गइति वाच्यं । निपातातिरिक्तनामार्थ धात्वर्थयोरन्वयस्य व्युत्पत्ते रित्यर्थात् । न ओऽभाववतित्वार्थकत्वाद्वा । अन्यथेति । नामार्थ धात्वर्थ योर्विभक्त्यर्थ मद्दारोक्तत्यापि अभेदातिरिक्त सम्बन्धे नान्वयस्वीकारिदत्यर्थः । ओदनइति । ओदनंपचतीत्यत्र विभक्त्यर्थ कर्मत्वादेःप्रकारतया संसर्गतया च भानोपगमात् । यथाओदनपाकयोः कर्मतासंसर्गेणान्वयः । तथाओदनः पचतीत्यत्रापि कर्मतासंसर्गेणौदनस्यपाकेऽन्वयबोधापत्ते रित्यर्थः । ननुनिपातातिरिक्तत्वमिवसविषयधात्वतिरिक्तं त्यपिदेयमतआह । वस्तुतइति । कश्चित् । तन्नन्नश्यतीत्यादावगतेः । आस्तान्तत्र प्रतियोगित्वे लक्षणेति चेत्किमपराद्धन्तर्हि जानातीत्यत्राश्रयत्वे लक्षणया व्युत्पत्तिसङ्कोचेनाप्यनिर्वाहे तद सङ्कोचस्यै वन्याय्यत्वात् । वस्तुतस्तु । ननुनामार्थ धात्वर्थयोः साक्षाद्भेदेनान्वयबोधोन स्वीक्रियतइति नियमबलान्नामार्थनिष्ठाभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धे नशाब्दबुद्धित्वावच्छिन्नं प्रतिविभक्तिपद निरूपितवृत्तिज्ञानजन्योपस्थितित्वे नहेतुत्वम् । एवं धात्वर्थनिष्ठ प्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धे नशाब्दबुद्धिं प्रत्यपीतिलब्धन्तच चैत्रं स्तण्डुलंपचतिमैत्रेण पच्यतेतण्डुलइत्यत्रेव चैत्रःपचतितण्डुलः मैत्रःपच्यतेतण्डुलइत्यत्रापितण्डुलस्य कर्मतासम्बन्धेनमैत्रस्य च कर्तृतासम्बन्धे नपाकेऽन्वयवारणायनामार्थप्रकारकधात्वर्थविशेष्यकान्वयबोधानुपगमे-

पिधात्वर्थ प्रकारकनामार्थविशेष्यकान्वयबोधोपगमे क्षतिविरहात् द्वितीयकार्यकारणभावे मानाभावात् । चैत्रो जानातीत्यादौ आश्रयतासम्बन्धेनज्ञानरूपधात्वर्थस्य चैत्रे अन्वयेबाधकाभाव: । नच तथासतिज्ञानं चैत्रइत्यत्रापि ज्ञानस्याश्रयतासम्बन्धेनान्वयापत्तिरिति वाच्यं । नामार्थयोरभेदातिरिक्त सम्बन्धेनान्वयाभावादिति व्युत्पत्यन्तरेणैव तदापादानसम्भवात् किञ्चानुपूर्वीज्ञानस्य शाब्दबोधहेतुतया ज्ञान प्रकारकाश्रयता संसर्गकचैत्रविशेष्यकशाब्दबोधं प्रतिज्ञाधातुसमभिव्या हृताख्यातिसमभिव्याहृत चैत्रपदज्ञानत्वेन हेतुत्वादेवतद्वारणसम्भवात् । भवन्मतेप्या श्रयत्वप्रकारकशाब्दबोधेताहृशसमभिव्याहार ज्ञानहेतुताया आवश्यकत्वात् । अन्यथा ज्ञान माश्रयत्वं चैत्रस्येत्यतोपि तदापत्ते: । अथैवं पचतीत्यत्रापि स्वानुकूलकृतिमत्त्व सम्बन्धेनपाकस्य चैत्रेऽन्वयोपपत्ते: .कृतेरप्याख्यातार्थत्वविलोप प्रसङ्गइति चेन्न । नपचति चैत्र इत्यत्र वृत्यनियामकसम्बन्धस्याभाव प्रतियोगितानवच्छेदकतया अनुकूलकृतिमत्त्वसम्बन्धावच्छिन्नप्रतियोगिताक पाका भावस्य बोधासम्भवात् । आश्रयतासम्बन्धावच्छिन्नप्रतियोगिताक पाका भावबोधोपगमे पचत्यपि न पचतीति प्रसङ्गात् । न च पचतीत्यत्र पाककृतिमान्चैत्र इत्याख्यातार्थ प्रकारकशाब्दबोधोदयेनाख्यात जन्यकृत्युपस्थिते: कारणत्वकल्पने तत्तदर्थनिवेशात्मनिष्ठ प्रत्यासत्या आख्यात जन्योपस्थिते र्हेतुत्वकल्पने गौरवेणलाघवाद्धात्वर्थ प्रकारकशाब्दबोधंप्रति प्रत्ययजन्योपस्थिते: समानविशेष्यताप्रत्यासत्याहेतुत्वकल्पनादाख्यातस्य जानातीत्यदौ आश्रत्वार्थकत्व मावश्यकमिति वाच्यं । सामान्यत: धातुत्वस्य प्रत्ययस्य चैकस्याभावेन सामान्यतस्तथाहेतुत्वासम्भवात् । विशिष्यहेतुत्वे च जानातीत्यादौ तदकल्पनात् । यत्तु जानातीत्यत्र घटादौ स्वारसिकलक्षणा ग्रहकाले ज्ञानीयो घट इति शाब्दोत्पत्याज्ञान प्रकारक घटा दिविशेष्यक शाब्दबुद्धित्वावच्छिन्नं प्रतिज्ञाधातुसमभिव्याहृताख्यात जन्यघटाद्युपस्थितित्वादिना हेतुत्वकल्पने घटत्व पटत्वादिनिवेशगौरवात् । ज्ञाननिष्ठ प्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेनशाब्दबुद्धित्वावच्छिन्नं प्रतिआख्यातपदनिरूपितवृत्तिज्ञानजन्योपस्थिते: प्रकारतासम्बन्धेन हेतुत्वकल्पनादाश्रयत्वेलक्षणावश्यकी । अथ आख्यात पदजन्यपटाद्युपस्थिति कालेपि ज्ञानीयो घट इति शाब्दबोधस्यात्मनि

समवायेनापत्तिः । समवायेन तादृशशाब्दहेतो र्ज्ञानीयो घट इति योग्यता ज्ञानस्य समवायेन सत्वादिति विषयंनिवेश्य पद जन्यपदार्थोपस्थिते र्हेतुत्वमावश्यकं । न च योग्यताज्ञानस्यापि विशेष्यतावच्छेदकता प्रत्यासत्यैव हेतुत्वमिति वाच्यं । तथापि भिन्नविषयकानुमिति सामग्र्यभावरूप कारणबलादात्मनितथाविध शाब्दबोधापत्ते र्दुर्वारत्वादिति चेन्न । पद जन्य पदार्थोपस्थितेः तत्तद्विषयंनिवेश्यात्मनिष्ठ प्रत्यासत्याहेतुत्वे तत्तद्विषकत्वैःसद्भविनिगमनाविरहेण गौरवात् विशेष्यतावच्छेदकताप्रत्यासत्यैवहेतुत्वं । घट त्वादिवृत्तिविषयता सम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति घटत्वादिवृत्तिविषयतासम्बन्धेन ज्ञानत्वेन हेतुत्वान्तरकल्पनेन चदर्शितापत्तिवारण सम्भवात् । ज्ञाधातुसमभि व्याहृताख्यात पद जन्योपस्थिति विशिष्ट घटत्व प्राकारक ज्ञानस्य विरोधिसामग्र्यभावेन ज्ञानीयो घट इति शाब्दबोधेजननीयेसहकारित्वात् प्राकारतासम्बन्धेन स्वाधिकरणविषयतासम्बन्धेन वृत्तित्वरूप सामानाधिकरण्य सम्बन्धेन च तथोपस्थितिवैशिष्ट्यं घटत्वज्ञानेऽवसेयम् । इत्थञ्चाख्यातपदजन्यपटोपस्थितिकाले भिन्न विषयकानुमिति सामग्र्यभावरूपकारणबलान्ना त्मनिज्ञानीयो घट इति शाब्दबोधापत्तिः आख्यात पद जन्योपस्थिति विशिष्ट घट त्वज्ञानरूपसहकार्यभावात् । न च पुरुषान्तरस्याख्यात पद जन्य घटोपस्थितिकाले तथा विधसहकारिसत्त्वादापत्तिरिति वाच्यं । एकात्मसमवेतस्यान्यात्मन्या पत्तिवारणायतत्तदात्मसमवे तत्वावच्छिन्नं प्रतितादात्म्यप्रत्यासत्यातत्तदात्मत्वेनापि हेतुतयातत्पुरुषीयाख्यात पद जन्योपस्थिति विशिष्टतत्तत्पुरुषीय घटज्ञान विशिष्टतत्तदात्म विशिष्टविरोधि सामग्र्यभावस्यतत्तदात्मनि ज्ञानीयो घट इति शाब्दबोधसामग्रीत्वात् । तत्तदात्मनि घटत्वज्ञान वैशिष्ट्यमेककालीनत्वसम्बन्धेन विरोधिसामग्र्यभावेनतत्तदात्म वैशिष्ट्यञ्चतादात्म्य विशेषणतोभय घटित सामानाधिकरण्य सम्बन्धेनेति । इत्थञ्च ज्ञाननिष्ठ प्रकारतानिरूपितविशेष्यतावच्छेदकता सम्बन्धेन शाब्दबुद्धिं प्रतिज्ञाधातुसमभिव्याहृता ख्यात पद जन्योपस्थित्तेः प्रकारता सम्बन्धेन हेतुत्वात् । चैत्रो जानातीत्यादौ चाश्रयत्वेलक्षणावश्यकीति । तदसत् । तदादिपदेनापि ज्ञानीयो घट इति शाब्दबोधजननात् । तत्र तथाविधाख्यात पद जन्योपस्थितेरभावे न व्यभिचारात् । तथोपस्थिति विशिष्टशाब्दत्वमेव तथोपस्थितेः

कार्यतावच्छेदक सुपेयं । एवं च तयोपस्थिति विरहेतरोपस्थिति विशिष्ट शाब्दबोधानुपपत्तावपि तदनुत्तरशाब्दबोधस्य जानातीत्यादावुपपत्तौ बाधकाभावः । ज्ञाधातुसमभिव्याहृताख्यातसमभिव्याहारज्ञानरूप कारण बलादाश्रयता संसर्गकबोधोपगमात् । न चाश्रयता सम्बन्धेन ज्ञान प्रकारक शाब्दबोधे ज्ञान प्रकारक योग्यता ज्ञानस्य कारणत्वकल्पनेमेतन्मते गौरवमिति वाच्यं । भवन्मतेपि ज्ञानाश्रयत्व प्रकारक चैत्रविशेष्यक शाब्दबोधे तथाविधयोग्यताज्ञान हेतुताया आवश्यकत्वात् । आश्रयत्वस्यापि सम्बन्धं निवेश्ययोग्यताज्ञान हेतुत्वस्य कल्पने भवन्मतएव गौरवाच्च । मन्मते चाश्रयत्वस्यैव संसर्गत्वात्र तस्यापि सम्बन्धनिवेशः । न च ज्ञाधातुसमभिव्याहृताख्यातस्यच ज्ञानाश्रयत्वेलक्षणातत्र भवतापि ज्ञानाश्रयत्व प्रकारक योग्यताज्ञानस्य हेतुत्वंकल्पनीयमिति वाच्यं । आश्रयतायाः संसर्गतावादिना ज्ञानाश्रयत्वप्रकारकबोधस्यानुपगमात् । एतेनयत्र ज्ञाधातुसमभिव्याहृताख्यातस्य ज्ञानाश्रयत्वे लक्षणा तत्र भवतापि ज्ञानाश्रयत्व प्रकारक शाब्दबोधे ज्ञाधातुसमभिव्याहृताख्यात पदनिरूपितवृत्ति ज्ञान जन्याश्रयत्वोपस्थिते हेतुत्वस्यक्लृप्ततया क्लृप्तेनैवनिर्वाहादाश्रयत्वेलक्षणा सर्वथावश्यकीति परास्तं । तथा सति यत्र चैत्रपदएवाश्रयता सम्बन्धेन ज्ञान विशिष्ट चैत्रे लक्षणातत्र चैत्रपदजन्यज्ञानविशिष्ट चैत्रोपस्थितेः क्लृप्ततया चैत्रो जानातीत्यत्र चैत्र पदादेवाश्रयता सम्बन्धेन ज्ञानवांश्चैत्र इति बोधस्यापि क्लृप्तेनैवोप पादयितुमशक्यत्वात् । न चैवं जानातीत्यस्य वैयर्थ्यमिति वाच्यं । आख्यातत्वेनाख्यातस्येव जानातीत्यस्य सर्वस्यैवतात्पर्य ग्राहकत्वोपगमस्य सुवचत्वात् । किञ्च जानातीत्यत्र ज्ञानाश्रयत्व प्रकारक बोधस्यैवानुपगमेन क्लृप्तेनोपपत्त्यभावात् । तस्मादा श्रयता सम्बन्धेन ज्ञानस्य चैत्रेऽन्वये बाधकाभावेना श्रयत्वेलक्षणावैयर्थ्यमतआश्रयत्व इति । केचित्तु । यत्र ज्ञाधातोर्ज्ञाना श्रयत्वे लक्षणातत्र ज्ञानस्य धात्वर्थैक देशतया चैत्रेऽन्वयासम्भवेन ज्ञाना श्रयत्व प्रकारक एव शाब्दबोधउपगन्तव्य इति तत्र ज्ञानाश्रयत्वप्रकारक शाब्दबोधेतत्प्रकारया योग्यताज्ञान हेतुत्वमुभयसिद्धं । आश्रयता संसर्गक शाब्दबोधाङ्गी कर्तृमते तुआश्रयता संसर्गक योग्यताज्ञान कारणत्वकल्पन मधिकं । न च तच्छब्देनयत्राश्रयता सम्बन्धेन ज्ञानविशिष्टचैत्रशाब्दबोधस्तत्रा श्रयता

संसर्गक योग्यताज्ञान हेतुत्वमप्युभयसिद्धमिति वाच्यं । तत्र शाब्दबोधे पदार्थान्तरभाननियमेन ज्ञानविशिष्ट चैत्रमात्रविशेष्यक योग्यताज्ञानस्य विशिष्टचैत्रादिमात्रविशेष्यकशाब्दबोधहेतुतायाःकृत्वाप्यकॢप्तत्वात् । न च तथापिभिन्न विषयक प्रत्यक्षादिकं प्रति जानातीत्यानुपूर्वी ज्ञान घटित ज्ञाधातु जन्य ज्ञानोपस्थिति घटित शाब्दसामग्र्याः प्रतिबन्धकतायां आख्यातजन्याश्रयत्वोपस्थितिके निवेशे गौरवमिति वाच्यं । ज्ञाना श्रयत्वाभाववांश्चैत्रस्सुन्दर इति विशिष्टवैशिष्ट्यावगाहि प्रत्यक्षे जानाति चैत्र इत्यानुपूर्वीज्ञान ज्ञाधातु जन्योपस्थिति घटित शाब्दसाग्र्याः प्रतिबन्धक-त्वाधिक्यात् । मन्मते आश्रयत्व प्रकारकोपस्थितिकाले बाधबुद्धिसम्भवेन तादृशसामग्र्योर्युगपदसम्भवेन कॢप्तेनैवोपपत्तेरित्याहुः । तच्चिंत्यम् । एवंसति विशेषणविभक्तेरप्यभेदार्थक त्वापत्तेः । तत्रापि नीलाभेदाभाववान् घट इति प्रत्यक्षादौ नीलोघट इति शाब्दसामग्र्याः बाधमुद्रया प्रतिबन्धकतयैवो-पपत्तेरतिरिक्तप्रतिबन्धकत्वाकल्पने लाघवसम्भवात् । इष्टापत्तौ च विशे-षणविभक्तेः साधुत्वमिति सिद्धान्तव्याकोपइत्यास्तांविस्तरः । आख्या-तार्थेति । आख्यातत्वेना ख्यातार्थंबोधेइत्यर्थः । तस्याः । आख्यातार्थ सं-ख्यायाः । आख्यातार्थेति । संख्यायाः कालातिरिक्ताख्यातार्थस्य भावनाया यद्विशेष्यत्वन्तन्नामित्वनियमादित्यर्थः । भावनान्वयिन्येव संख्यान्वय इति नियमात् संख्याकालातिरिक्ता ख्यातार्थोहि भावनेत्यभिधीयत इति भावः । नन्वाख्यातार्थविशेष्यः कइत्याकांक्षायामाह । विभक्त्यर्थाविशेषणीभूत इति नामार्थइत्यनेन विभक्त्यर्थनिरासः । न च पचतीत्यत्र वर्तमानत्वरूपा ख्यातार्थस्य कृतिरेवविविशेष्यति कथमीदृशनियम इति वाच्यं । आ-ख्यातार्थविशेष्य एव संख्यान्वय इति नियमप्रविष्टाख्यातार्थविशेष्यस्या-त्राभिधानादिति भावः । उपपादनपुरःसरंविभक्त्यर्था विशेषणीभूतइत्यस्य व्यावृत्तिमाह । तेनेति । विभक्त्यर्था विशेषणीभूतस्यैव नामार्थस्या ख्यातर्थस्य विशेष्यत्वादेवेत्यर्थः । तथाविध विभक्त्यर्थाविशेषणीभूतप्रथमायाः साधु-त्वादिति भावः । द्वितीयार्थेति । द्वितीयार्थे कर्मत्वे विशेषणत्वादित्यर्थः । कर्माख्यातस्थलेप्याह । पच्यत इत्यत्रेति । 'चैत्रेण पच्यते तण्डुल' इत्यत्र कर्म-तण्डुलः आख्यातार्थ विशेष्यः । न कर्ता । न चैत्रः । तृतीयार्थेति । तृती-

कर्त्ता । तृतीयार्थावच्छिन्नत्वात् । स्थीयत इत्यत्र स्थित्यनुकूलाक्तिरिति । आख्यातार्थे कस्यापि न विशेष्यत्वमिति संख्यानन्वितैव, अत एवौत्सर्गिकमेक वचनमेवेत्यूचुः। धात्वर्थविशेष्य-

---

यार्थेन कर्तृत्वेनावरुद्धत्वात् । कर्तृत्वे विशेषणत्वादित्यर्थः । ननु चन्द्र इव सुखमस्तीत्यादौ चन्द्रपदार्थे इवार्थे वा भावनान्वयापत्तिः । तस्य विभक्त्यर्था विशेषणीभूतनामार्थत्वात् । न च विभक्त्यर्थाविशेषणीभूतइत्यस्येतराविशेषणत्वमर्थइति वाच्यं । चन्द्र इव सुखंचद्रोराजतेइत्यत्र चन्द्रे तदन्वयानुपपत्तिरिति चेन्न । प्रकृत पद जन्यशाब्दबोधे विशेष्यत्वाभाववत्वे सति यत् इतरविशेषणत्वंतदभाववत्वे सतीत्यस्यतदर्थत्वात् । वस्तुतस्तु । चन्द्र इव सुखमस्तीत्यादौ नामार्थयोरिति व्युत्पत्तौ अव्ययनिपातातिरिक्तत्वविशेषणाभावात् चन्द्र पदं चन्द्र सदृशलक्षकं इवपदं तात्पर्य्य ग्राहकमिति मते चन्द्र सादृश्य विशिष्टे सुखेभावनाऽन्वये विशेषणांशेपितदन्वयेन चन्द्रपदार्थतदन्वये इष्टापत्तिः । तत्रइवपदस्य निरर्थकतया तदर्थाभावादेवनाति प्रसङ्गः । इवपदस्य सार्थकत्वेपि चन्द्र पदोत्तर प्रथमायाः प्रतियोगित्वार्थकतया इवपदस्य च सादृश्यार्थकतया चन्द्रस्य विभक्त्यर्थविशेषणीभूतनामार्थत्वाभावात् । इवपदार्थे सदृशे च विशिष्टेतदन्वये विशेषणांशेतदन्वये इष्टापादनमेवेति प्रतिभाति । ननु चैत्रेण स्थीयत इत्यत्र संख्यानन्वयापत्तिः । तत्र विभक्त्यर्था विशेषणीभूत नामार्थाभावे न भावना विशेष्या भावात् । अतः इष्टापत्त्या परिहरति । स्थीयतइत्यत्रेति । संख्येति । भावनान्वयिन्येव संख्यान्वयनियमादत्रभावनाया अनन्वयेन संख्यायाअप्यनन्वय इत्यर्थः । अतएव भावाख्यातस्थले संख्याया अनन्वयादेव । औत्सर्गिकमिति । स्वाश्रयस्य द्विवहुत्वेपि संख्याया अनन्वयात्प्रथमोपस्थितत्वात्साधुत्वार्थमेकवचनमित्यर्थः । भावाख्यातस्थले प्रकारांतरेणबोधं कस्य चिन्मतेनाह । धात्वर्थेति । चैत्रेणस्थीयते इत्यत्र चैत्रकर्तृका वर्तमानस्थितिरित्यर्थः । नन्वेवं भावना विशेष्यएव संख्यान्वयात् धात्वर्थस्य च भावनाविशेष्यत्वात् द्विवचनापत्तिरित्याशंकते । न चैवमिति । एवं । धात्वर्थ विशेष्यकान्वयस्वीकारे । धात्वर्थस्य स्थित्यादेर्द्विवचनापत्तिः । द्वित्वस्यतत्राबाधादिति भावः । असाधुत्वादिति । देवदत्तेन-

कोऽत्रान्वयबोधः । नचैवं धात्वर्थस्य द्वित्वादि विवक्षया द्विव-चनाद्यापत्तिः । असाधुत्वादित्यपि कश्चित् स्यादेतत् । आ-ख्यातार्थःकालः कृत्यर्थे अन्वेति इति चेत् । एकपदोपात्तत्वप्र-त्यासत्त्या कृतावित्यवेहि । धात्वर्थइत्यपरे । कथमन्यथा जा-नातीत्यादौ ज्ञाने वर्त्तमानत्वादि प्रतीयेतेति । स्यादेतत् ।

---

क्षीयतेदेवदत्ताभ्यां क्षीयते देवदत्तैः क्षीयते इत्येकवचनमेवाचसाध्विति भावः । चैत्रःपचतीत्यादौ प्रथमांतार्थ एव भावनायामन्वयात् भावनायां-धात्वर्थस्य विशेषणत्वेनैवान्वयस्य क्लृप्तत्वात् । भावना विशेषणकधात्वर्थ विशेष्यकान्वयस्वीकारे गौरवमेवात्रास्वरसः कश्चिदित्यनेन सूचितः । आख्या-तार्थः कालः वर्तमानत्वादिः । एकपदेति । एकेनपदेनाख्यातेनोपात्तत्वा द्भावनायां वर्तमानत्वान्वयइत्यर्थः । न च संख्यायामेव कुतो न कालान्वयः समानपदोपात्तत्वाविशेषादिति वाच्यं । तर्हि पक्षेपि प च तीतिप्रयोगःस्या त्संख्यायां वर्तमानत्वस्य सत्वादिति भावः । धात्वर्थइति । चैत्रः पचतीत्यादौ वर्तमानोयः पाकः स्तदनुकूलकृतिमानितिबोधः । इदमेव मतमुपपादयति । कथमन्यथेति । वर्तमानत्वादेर्धात्वर्थेऽन्वये जानातीत्यादौ कृतेर्बाधादाश्र-यत्वेलक्षणा । आश्रयत्वे च वर्तमानत्वादेरन्वयासम्भवाद्धात्वर्थ एवान्वयो वाच्यः । एवं चाख्यातार्थ वर्तमानत्वादिनिष्ठप्रकारतानिरूपित विशेष्य-ताविच्छेदकता सम्बन्धेनशाब्दबोधं प्रति प्रकारतासम्बन्धेनधातुजन्योप-स्थितेः कारणत्वात्तेनैवनिर्वाहे आख्यातार्थकृतौ कालान्वयस्वीकारे कार्यका-रण भावान्तरकल्पने गौरवमेव पूर्वकल्पे । अस्वरसइतिद्रष्टव्यं । भविष्य-त्वेति । स्यतासीलृलुटोरित्यनुशासना द्भविष्यत्वंलृडर्थः । अतीते लुङ् इत्यनु-शासनाच्चातीतत्वंलुङर्थ इत्यर्थः । ननु भविष्यत्वं वर्तमान प्रागभाव प्रति-योग्युत्पत्तिकत्वं अतीतत्वं च वर्तमानध्वंस प्रतियोग्युत्पत्तिकत्वं । एवं च घ-टो भविष्यतीत्यत्र भूसत्तायामिति भूधातोरुत्पत्तिरेवार्थः । आख्यातस्य चाश्र-यत्वमर्थः । तत्राख्यातार्थाश्रयत्वे भविष्यत्वादेरन्वयासम्भवाद्धात्वार्थो त्पत्ता-वेवान्वयो वाच्यः । तथा च वर्तमान प्रागभाव प्रतियोग्युत्पत्तिका या उत्प-त्तिस्तदाश्रयो घट इत्यन्वयबोध स्वीकारे उत्पत्तेरप्युत्पत्त्युपगमेऽप्रसिद्धात्वा

भविष्यताऽतीतत्वेऽप्याख्यातविशेष वाच्ये । भविष्यत्वं च विद्यमानप्रागभाव प्रतियोगित्वं । विद्यमानध्वंसप्रतियोगित्वं अतीतत्वमिति पचति चैत्रे भाविकृतिप्रागभावमादाय पक्ष्यति । आद्यकृतिध्वंसमादाय पाक्षीदिति स्यात् । न स्यात् । आद्यकृति प्रागभावस्यैव भविष्यत्प्रत्ययेन चरमकृतिध्वंसस्यैवातीतप्रत्ययेनाभिधानात् अथौदनं पचतीत्यत्रौदननिष्ठविक्लित्तिजनकव्यापारविशेषकर्तृत्वं प्रतीयते । तत्र विक्लित्तिस्तदनुकूलव्यापारश्च कस्यार्थः । उच्यते । विक्लित्तिफलं तद्द्वितीयाया अर्थस्तदनुकूलो विलक्षणव्यापारो धात्वर्थः । अनुकूलता च संसर्गः । ननु कर्मत्वं द्वितीयाया वाच्यं तच्च

---

भावेपि अननुभवइत्यतआह । भविष्यत्वंचेति । तथा च वर्त्तमान प्रागभाव प्रतियोगित्वमेव भविष्यत्वं तच्चभविष्यतीत्यादौ धात्वर्थोत्पत्तौ पक्ष्यतीत्यादौ आख्यातार्थे कृतावन्वेतीति भावः । पचतीतिसप्तम्यन्तं । आख्यातार्थकालस्य समानपदोपात्तत्वप्रत्यासत्त्या कृतावन्वयइत्युक्तं । तथा च पक्ष्यतीत्यत्र वर्त्तमानप्रागभाव प्रतियोगिनी या पाकानुकूलाकृतिस्तद्वांश्चैत्रइतिबोधस्वीकारे चैत्रेण यदा पाकः क्रियते तदा एकस्याः कृतेर्जातत्वेपिध्वंस प्रागभावयोःसामान्यधर्म्मावच्छिन्न प्रतियोगिताकत्वाभावेन भाविनी या न्या कृतिस्तत्प्रागभावस्य सत्त्वात्पक्ष्यतीति प्रयोगापत्तिः । एवमपाक्षीदित्यत्रलुङर्थातीतत्वस्य वर्त्तमानध्वंसप्रतियोगित्वरूपस्य कृतावेवान्वये वर्त्तमानध्वंसप्रतियोगिनी या पाकानुकूलाकृतिस्तद्वांश्चैत्रइत्यन्वयो वाच्यः । एवं चाद्यकृतेर्नष्टत्वेन पाकदशायामपि अपाक्षीदिति प्रयोगापत्तिरित्यर्थः । समाधत्ते । नस्यादिति । आद्येति । तथा च पक्ष्यतीत्यत्र प्राग भावत्वेन रूपेणाद्यकृति प्रागभावस्यापाक्षीदित्यादौ अंत्यकृतिध्वंसस्यैववक्तृतात्पर्यविषयत्वात् न भाविकृति प्रागभाव मादायपक्ष्यतीति आद्यकृतिध्वंसमादाय च पाकदशायां अपाक्षीदिति प्रयोगापत्तिरिति भावः । ननु भविष्यत्वं यदि वर्त्तमान प्रागभाव प्रतियोगित्वं तदा नंक्ष्यतीत्यदौ प्रतियोगित्वस्याख्यातार्थतया तत्र भवि-

त्वस्यान्वया सम्भवात् धात्वर्थनाशे तदन्वयो वाच्यः। तथा च स्वोभाविनाशके परश्वोनंक्ष्यतीति प्रयोगापत्तिः। तथाहि परश्वस्तनकालस्य नाशेऽन्वयस्वीकारे नाशस्य परश्वस्तनकालवृत्तित्वात् परश्वोनंक्ष्यतीतिस्यात्। न च परश्वस्तनकालस्य भविष्यत्व घटकीभूत प्राग भावेऽन्वयः। एवं च परश्वस्तनकालवृत्तित्व वर्तमान प्राग भाव प्रतियोगित्वस्यनाशेऽ भावान्न तथा प्रयोगापत्तिरिति वाच्यं। तथासति स्वोभाविनाशके श्वोनङ्क्ष्यतीतिनस्यात्। नाशप्रगभावस्य श्वस्तनकालवृत्तित्वाभावात्। इत्थंश्चघटो भविष्यतीत्यादौ देशविशेषस्य कालविशेषस्य वाधिकरणत्वेनोत्पत्तिरूपधात्वर्थ एवान्वयेस्वीपेयत्वात्। अन्यथा कपालनाशजन्य घटनाशस्थले इहकपाले घटध्वंसोभविष्यतीति प्रत्ययापत्तिः। घटरूपप्रतियोग्यात्मक घटध्वंस प्रागभावस्य कपालेसत्वात्। एवं श्वोभाविन्यद्यतनभविष्यद्ध्वंसो भविष्यतीति प्रत्ययापत्तिः। अद्यतनकालवृत्तित्वस्य प्रागभावेसत्वात् एवमुत्पत्तिमति तदन्वय स्वीकारे भवने श्वः समुत्पद्यप्रांगणे परश्वोगमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति बुद्धिप्रसङ्गात्। उत्पत्तिमतस्तस्य प्राङ्गणवृत्तित्वात् परश्वस्तनकालवृत्तित्वाच्चेतिदेशविशेषस्य कालविशेषस्योत्पत्तिरूपधात्वर्थ एवान्वयो वाच्यः तथा च स्वोभाविनाशके परश्वोनङ्क्ष्यतीत्यापत्तिः। एवं नश्यति नष्ट इत्यत्र वर्तमानत्वं अतीतत्वं च धात्वर्थे नाशे एवान्वेष्यतीति नष्टे नश्यतीति स्यात् नाशस्य वर्तमानत्वात्। नष्टे च नष्ट इतिनस्यात् नाशेऽतीतत्वाभावादिति चेन्नैवं। अत्र वर्तमान प्रागभाव प्रतियोग्युत्पत्तिकत्वरूप भविष्यत्वस्य वर्तमानध्वंस प्रतियोग्युत्पत्तिकत्वरूपा। तीतत्वस्य च प्रत्ययार्थत्वात्। प्रत्ययार्थोत्पत्तावेव च काल विशेषादेरन्वयात्। भविष्यत्वं च वर्तमान प्रागभाव प्रतियोगित्वं वर्तमानध्वंस प्रतियोगित्वमतीतत्वमित्युक्तिस्तु भविष्यति पश्यतीति स्थलाभिप्रायेण तत्र धात्वर्थोत्पत्तेः आख्यातार्थत्वेतेष सम्भवितयानुपपत्य भावात्। एवं च वर्तमान प्रागभाव प्रतियोगित्वे लाघवाच्छक्तिः। नङ्क्ष्यतीत्यादौ वर्तमान प्रागभाव प्रतियोग्युत्पत्तिकत्वबोधस्तु लक्षणयेति हृदयम्। अथेति। ओदनपदन्तण्डुलपरं। विक्लित्यवच्छिन्न तण्डुलस्यैवोदनतया तस्य पाकासम्भवेन यथाश्रुता सङ्गतेः। ओदननिष्ठा या विक्लित्तिस्तज्जनको यो व्यापारविशेषस्तत्कर्तृत्वं तदनुकूलकृतिमत्वं प्रतीयतइत्यर्थः। तत्रेति। कर्तृत्वस्यानन्यलभ्यत्वादिति भावः। तत्। फलं। द्वितीयाया इति। ओदनमित्यत्र द्वितीयाया इत्यर्थः। फलस्यै-

क्रियाजन्यफलशालित्वं नतु फलमात्रमिति चेन्न। क्रियाया धातुवाच्यत्वात्। जन्यत्वाश्रयत्वयोश्च संसर्गमर्यादयालाभात्फलमात्र एव शक्तेः कल्पनात्। अनन्यलभ्योहि शब्दार्थः। ननु फलमपि धातुलभ्यमेव। फलानुकूलोव्यापारोहि धात्वर्थ इति चेन्न। फलानुकूलत्वोपलक्षितो विलक्षणव्यापारोऽत्र धात्वर्थो नतु फलानुकूलत्वमपि गौरवात्। नन्वेवं त्यजिगम्योः पर्यायतापत्तेः तथाहि। संयोगानुकूलं कर्म गमेरर्थः। विभागानुकूलं च कर्म त्यजेरर्थः। तत्र यदि फलानुकूलत्वमुपलक्षणं तदा कर्ममात्रं शक्यं तत्र वाच्यं। तथाच कुतोन पर्यायता। आस्तां पर्यायता कोदोष इति चेन्न। ग्रामं गच्छतीति वक्तव्ये ग्रामं त्यजतीत्यापत्तेः। मैवं। गच्छतीत्यादि समभिव्याहृत द्वितीयायाश्च विभागबोधकत्व व्युत्प-

---

त्तिविरुद्धत्वाद् द्वितीयार्थत्वादिति भावः। तदनुकूलइति। फलानुकूलइत्यर्थः। विलक्षणेति। अथः संतापनादिरूपो व्यापारो धात्वर्थ इत्यर्थः। अनुकूलता चेति। व्यापारानुकूलकृतिमानित्यत्रानुकूलता चेत्यर्थः। संसर्ग इति। व्यापारकृत्योः संसर्गइत्यर्थः। ननु कर्मत्वमिति कर्मणि द्वितीयेति सूत्रेण कर्मत्वस्य द्वितीयार्थ त्वबोधनादिति भावः। तत्र। कर्मत्वं च। नतुफलमात्रं कर्मत्वमित्यर्थः। क्रियाया इति। क्रियाजन्यफलशालित्वरूपे कर्मत्वइत्यर्थः। जन्यत्वेति। क्रिया जन्येत्यत्र जन्यत्वफलशालित्वमित्यत्र च शालित्वं आश्रयत्वमित्यर्थः। तयोःसंसर्गमर्यादयालाभात् फलमात्र एवशक्तेः। द्वितीयायाशक्तेः कल्पनादित्यर्थः। ननु क्रियादीनां धात्वादिना लाभेपि द्वितीयाया अपि शक्तिरास्तामत आह। अनन्येति। हि यस्मादनन्यलभ्य एव शब्दार्थ इत्यर्थः। धातुलभ्यमेवेति। तथा च कथन्तत्रापि द्वितीयायाः शक्तिः अन्यलभ्यत्वादिति भावः। वस्तुगत्या फलावच्छिन्नो यो व्यापारस्तद्बोधकत्वादेवधातूनां सकर्मत्व व्यवहारः जानातीत्यादिस्थले तु भाक्त इति सूचनार्थ फलानुकूल-

न्तरेऽपि यथोक्तातिप्रसङ्गनिरासात्। न्यायभास्करकृतस्तु। फलमवच्छेदकमेव। द्वितीयार्थस्त्वाश्रयता। नचैवं भूमौपततीत्यत्र भूमिपदाद् द्वितीयापत्तिः समभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयताबोधकत्वव्युत्पत्तेः। अतएव धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति लक्षणं ध्रुवं। न

---

त्वोपलक्षितइत्युक्तं। नतुफलानुकूलत्वमपि धात्वर्थइत्यनुषज्यतो गौरवादिति। अनुकूलत्वस्य संसर्गमर्यादया लाभादिति भावः। नन्वेवमिति। व्यापारमात्रस्य धात्वर्थत्वे इत्यर्थः। त्यजिगम्योः त्यज् गम् धात्वोरित्यर्थः। उत्तरदेशसंयोगावच्छिन्न क्रिया गम् धातोरर्थः पूर्वदेश विभागावच्छिन्नक्रिया त्यज् धात्वर्थः। तत्रफलावच्छिन्नत्वं यदिनधात्वर्थः तदा क्रिया मात्रस्यैव धात्वर्थत्वात्क्रियारूपैकार्थ प्रतिपादकत्वात् पर्यायता स्यात् शक्यतावच्छेदकैक्ये सति विभिन्नशक्ततावच्छेदकत्वस्य पर्यायत्वरूपत्वादिति भावः। शङ्कते। आस्तामिति। त्यजतीति। गम् धातुनेव त्यज् धातुनापि व्यापारबोधनादिति भावः। नन्वेवमिति। पूर्वपक्षे समाधत्ते। नैवमिति। द्वितीयायाःफलमर्थः तत्र गम् धातुसमभि व्याहारे द्वितीयया संयोगरूपं फलं बोध्यते त्यज् धातुसभिव्याहारे च विभागरूपं फलं बोध्यते इत्यर्थः। यथोक्तेति। ग्रामं गच्छतीति वक्तव्ये ग्रामंत्य जतीति प्रयोगापत्तिप्रसंगनिराकरणादित्यर्थः। तथा च व्यापारमात्रस्य धात्वर्थत्वे त्यजिगम्योः पर्यायत्वे इष्टापत्तिः। ग्रामङ्गच्छतीत्यत्रेव ग्रामवृत्तिसंयोगानुकूलकृतिमान्नितिबोधस्थगम् धातुसमभि व्याहाराभावात् ग्रामं त्यजतीत्यतोऽसम्भवेन ग्रामङ्गच्छतीति वक्तव्ये ग्रामं त्यजतीति प्रयोगापत्तिं वारयितुं शक्यत्वादिति भावः। अवच्छेदकमेव। धात्वर्थतावच्छेदकमेव। फलावच्छिन्न व्यापारस्य धात्वर्थत्वादिति भावः। नन्वेवं द्वितीयाया निरर्थकत्वापत्तिः। फलस्य धातुत एव लाभादित्यतआह। द्वितीयार्थस्त्विति। ग्रामङ्गच्छतीत्यादौ ग्रामवृत्तिसंयोगावच्छिन्नक्रियानुकूलकृतिमानित्यन्वयबोधः। तत्र पूर्वकल्पे फलस्य द्वितीयार्थत्वात्। आधेयत्वं संसर्गमर्यादया भासते। अस्मिन् मते तु फलस्य धात्वर्थत्वात् द्वितीयार्थ एवाश्रयतेति

हि क्रियाजन्यफलाश्रयत्वं तत्। इत्थाद्भूमौ पततीत्यत्र द्वयभूम्योः कर्मजन्यविभागसंयोगाश्रयतया कर्मत्वापत्तेः। ननु तथाप्यधःसंयोगानुकूलव्यापारस्य पतत्यर्थतया कर्मत्वं भूमेर्दुरपह्नवमिति चेन्न। पतत्यर्थे फलस्यावच्छेदकत्वानङ्गीकारात् तद्धात्वर्थाविकरणत्वे सतीति विशेषणाच्च। नचैवस्य धात्वर्थतावच्छेदकफलग्रामसंयोगाश्रयत्वेपि कर्मत्वमिति स्वीकुर्वन्तीति संक्षेपः। तस्य शब्दस्य निराकाङ्क्षाद्यन्वयाबोधकत्वादाकाङ्क्षादिकं सहकारि। तत्र यत्पदेन

---

भावः। नचैवमिति। एवं आश्रयत्वार्थकत्वे। भूमाविति। भूमौपततीत्यत्र भूमावाश्रयत्वस्याबोधाद्भूमिपदोत्तरद्वियापत्तिः। मन्मते तु तत्र फलस्याबोधनात् न तद्बोधक द्वितीयापत्तिरितिभावः। समभिव्याहृतेति। समभिव्याहृतो यो धातुस्तदर्थतावच्छेदकं यत्फलन्तदाश्रयताबोधकत्वं द्वितीयाया इत्यर्थः। तथा च यत्र समभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयत्वे बोधस्तत्र द्वितीया भूमौ पततीत्यादौ तु पत्धातोरकर्मकतया धात्वर्थतावच्छेदकफलाभावेन तदाश्रयत्वाबोधनात्। आश्रयत्वबोधेपि न द्वितीयेति भावः। न च तथापि फलावच्छिन्न व्यापारस्य धात्वर्थत्वे फलस्यैकदेशतया कथन्तत्र द्वितीयार्थाश्रयत्वादेरन्वय इति वाच्यं। आकांक्षावैचित्र्यादेकदेशेप्यन्वयस्वीकारात्। अतएव पदार्थान्विताधेयत्वबोधकसप्तमीतो द्वितीयाभेद इति हृदयं। अतएवेति। फलावच्छिन्ने व्यापारस्य धात्वर्थत्वादेवेत्यर्थः। ध्रुवमिति. अन्यथा व्यापारमात्रस्य धात्वर्थत्वे फलस्य धार्थत्वे फलस्य धात्वर्थतानवच्छेदकतया कर्मत्वं दुर्वचमिति भावः। ननु मास्तु धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वं किन्तु क्रियाजन्यफलशालित्वमतआह। नहीति। तदिति। कर्मत्वमित्यर्थः। चैत्रो ग्रामङ्गच्छतीत्यत्रोत्तरदेश संयोगावच्छिन्न क्रिया गम् धातोरर्थः। तज्जन्योत्तरदेशसंयोगरूपफलशालित्वात् ग्रामकर्मत्वं। न च संयोगस्य द्विनिष्ठत्वाच्चैत्रस्यापि कर्मत्वापत्या चैत्रः स्वात्मानङ्गच्छतीति प्रयोगापत्तिरिति वाच्यं। परसमवेतत्वस्य क्रिया विशेषणत्वात्। तथा च परसमवेता या क्रिया तज्जन्यफलशालित्वं कर्मत्वं। न चोभयकर्मजस्थले मल्लोम-

मं गच्छतीतिवत् मन्नः स्वात्मानङ्गच्छतीति स्यादिति वाच्यं। प्रकृत्यर्थविच्चया हि परत्वं द्वितीयादिना बोध्यते ग्रामङ्गच्छतीत्यत्रग्रामभिन्नसमवेतग्रामवृत्तिसंयोगजनक क्रियानुकूलकृतिमानित्यन्वयबोधः। स्वात्मानं गच्छतीत्यत्र तु स्वात्मभिन्नसमवेता स्वात्मवृत्तिसंयोगजनिका या मन्नोत्तरवृत्तिक्रिया तदनुकूलकृतिमत्वस्य स्वस्मिन्नभावेन तादृश प्रयोगापत्यसम्भवात्। अथ प्रकृत्यर्थस्थान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन परत्वे ऽन्वये पृथिवीं प्रयातिविहगइत्यत्र पृथिवीत्वस्यान्वयितावच्छेदकतया तदवच्छिन्नभिन्नत्वस्य विहगेऽभावादेरन्वयापत्तिः। प्रतियोगितामात्रेणैवान्वये च द्वित्वावच्छिन्न भेदमादायस्वात्मानं प्रयोगापत्तिरितिचेन्नद्वितीयार्थफले यद्वृक्तौ रन्वयस्तद्वृत्तित्वावच्छिन्न प्रयितोगितासम्बन्धेन प्रकृत्यर्थस्य परत्वेऽन्वयात्! पृथिवीं प्रयाति विहगइत्यादौ यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकं प्रयाणं शाब्दबोधविषयस्तद्व्यक्तिभिन्नत्वस्य विहगेऽबाधादिति। केचित्तु। सामान्यपदस्य विशेषपरतया पृथिवीपदेन भूखण्डमेव बुध्यते नतु विहगसाधारणपृथिवीत्वजात्यवच्छिन्नमित्यनुयितावच्छेदकावच्छिन्नमित्यनुयितावच्छेदकावच्छिन्न प्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्यापरत्वेऽनुयेपि न दोष इत्याहुः। वृक्षभूम्योरिति। वृक्षस्यकर्मजन्यविभागाश्रयतया भूमेश्वकर्मजन्यसंयोगाश्रयतयेत्यर्थः। पतनरूप क्रियाजन्यं फलं पूर्वदेशेन वृक्षेण सह विभागभूमिरूपोत्तरदेशसंयोगश्चेति वृक्षभूम्योरुभयोरपि कर्मत्वापत्तिः। यत्धातोरकर्मकतयेष्टापत्तेरयोगादिति भावः। इदमुपलक्षणं। गमनजन्यविभागरूपफलशालित्वस्य पूर्वदेशे सत्वाद्गमेः पूर्वस्मिन् देशे कर्मत्वापत्तिः। त्यजेश्चोत्तरस्मिन् देशे त्यजेश्च पूर्वापरयोः कर्मत्वापत्तिरित्यपिद्रष्टव्यं। पतत्यर्थतया। पतधात्वर्थतया। दुस्त्यजमिति। धात्वर्थतावच्छेदकाधःसंयोगादिरूपफलशालित्वादिति भावः। पतत्यर्थ इति। अधःसंयोगावच्छिन्न क्रिया न पतत्यर्थः। किन्तु गुरुत्वासमवायिकारणकविजातीयक्रियामात्रमिति धात्वर्थतावच्छेदकफलाभावेन न कर्मत्वापत्तिरिति भावः। ननु धात्वर्थतावच्छेदकफलशालित्वस्य कर्मत्वरूपत्वे चैत्रोग्रामङ्गच्छतीत्यत्रोत्तरदेशसंयोगावच्छिन्नक्रिया गम् धात्वर्थ इति धात्वर्थतावच्छेदक संयोगरूपफलशालित्वस्य ग्रामे इव चैत्रे पि सत्वात्तत्रापि कर्मतापत्तिः। तथा च चैत्रः स्वात्मानङ्गच्छतीति प्रयोगापत्तिरत आह। तद्धात्वर्थेति। यद्धात्वर्थतावच्छेदकफलशालित्वं तद्धात्वर्थानधिकरणत्वे-

सतोऽर्थः। तेनकर्मणोधात्वर्थान्तराधिकरणत्वेपि नासम्भवः। न चैत्रस्येति। गम्धात्वर्थतावच्छेदकंयत्फलंग्रामवृत्तिसंयोगस्तदाश्रयत्वेपि चैत्रस्य न कर्मत्वमित्यर्थः। गमनरूपधात्वर्थानधिकरणत्वाभावादिति भावः। स्वीकुर्वंतीत्यनेनास्वरसः सूचितः। सच फलावच्छिन्न व्यापारस्य धात्वर्थत्वे द्वितीयार्थाश्रयत्वस्य तदेकदेशे फलेऽन्वयस्वीकारे एकदेशान्वयापत्तिः। एवंलज्जासत्ताद्यर्थकाकर्मकधातूनां व्यापारमात्रार्थकतया तत्र पर्यायत्वापत्तिवारणवत्सनैव सकर्मकधातूनामपि पर्यायत्ववारणे किमिति गुरुफलावच्छिन्नव्यापारत्वं शक्यतावच्छेदकं। न चैवं कर्मत्वस्य दुर्वचत्वापत्ति वाच्यं। परसमवेततद्धात्वर्थान्वयिफल विशेषशालित्वं तद्धात्वर्थकर्मत्वमिति तन्निर्वचनात्। सयोगरूपफल विशेषस्य गम्धात्वर्थन्वयित्वादुत्तरदेशे कर्मत्वं विभागरूपफलस्य च गम्धात्वर्थानन्वयेन पूर्वदेशे कर्मत्वापत्त्यभावात्। पततीत्यत्र फलविशेषाबोधाद्धात्वर्थत्वेन्वयिफल विशेषशालित्वरूपकर्मत्वस्य न वृक्षभूम्योरापत्तिरिति। अत्रेदमवधेयं। कर्त्राख्यातस्थले चैत्रः पचतीत्यादौ पाकानुकूलकृतिमांश्चैत्र इति शाब्दबोधः। कर्माख्यातस्थले तु चैत्रेण पच्यते तण्डुल इत्यादौ तृतीयायाश्रयत्वमर्थः। फलावच्छिन्न व्यापारोधात्वार्थः। आख्यातबलाच्चकृतेर्लाभः। तथा च चैत्र निष्ठकृतिजन्यपाक जन्यफलशाली तण्डुल इत्यन्वयबोधः। आख्यातार्थकृतेर्धात्वर्थ विशेष्यत्वविशेषणत्वाभ्यामेवकर्ताख्यात व्याहार इति प्राञ्चःनव्यास्तु क्रियाजन्यफलशालित्वरूप कर्मत्वबोधस्य कर्माख्यातस्थले आख्यातस्य फलबोधकत्वं विनानुपपत्तिः। तथाहि। फलस्य प्रकारतया भानात्संसर्गमर्यादया भानासम्भवफलावच्छिन्न व्यापारस्य धात्वर्थत्वेपि विशेष विशेष्यभावव्यत्यासस्यासम्भवात् क्रिया जन्यफलशालित्वं कथं बुध्यते। इत्यश्च फलस्य चात्मनेपदार्थत्वे व्यापारमात्रं धात्वर्थः चैत्रेण गतमित्यादौ तृतीयायाः कर्तृत्वार्थत्वावश्यकतया तृतीयाया एव कृतिरर्थः आख्यातार्थ कृतेर्धात्वर्थ विशेष्यतयैव भानस्य कर्त्राख्यातस्थले क्लृप्तत्वात्तन्नङ्गापत्तेः सुवर्थकृतेश्च धात्वर्थविशेषणत्वेनैव भानस्य क्लृप्तत्वात्कर्तृत्वकर्मत्वबोधकत्वादेव च कर्तृकर्माख्यात व्यवहार इति प्राहुः। वैयाकरणास्तु। आख्यातस्य कर्त्तरि शक्तिः। कर्तृकर्माभिधानानभिधानाभ्यां तृतीया द्वितीया नियमस्य कर्तृकर्मसंख्याभिधानानभिधानाभ्यामुपपत्तावपि लाघवादेव तत्र शक्तिः। तथाहि। चैत्रः पचतीति शाब्दसामग्रीकाले कर्तृप्रकारक ज्ञानाभावप्रत्यक्षवारणाय-

सह याद्दशान्वयानुभवजनकं तत्पदस्य तत्पदसमभिव्याहा-रस्ताद्दशान्वयबोधे आकाङ्क्षा । भवति हि नामपदस्योत्तरवर्त्ति विभक्तिपदेनैव सहान्वयबोधकमतस्तस्य समभिव्याहार-स्ताद्दगन्वय आकाङ्क्षा । अत एव घटकर्मत्वमित्यतो न घट-मिति वदन्वबोध आकाङ्क्षाविरहात् । धातुपदं चाख्यातप-देनैव सहान्वय विशेषबोधकमिति । भवति तथाख्यातपद-समभिव्याहार आकाङ्क्षा । अतएवानयनं कृतिरित्यादावा-नयतीति वन्नान्वयबोधः । कृतिवाचकाख्यात समभिव्या-हाराभावेन निराकाङ्क्षत्वात् । ननु नामपदं द्वितीया दि-

---

ताद्दशप्रत्यक्षे शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं । वैयाकरणमते तु विषयासत्वादेव ताद्दशप्रत्यक्षवारणान्नतत् कल्पनं । न च कृतिप्रकारक ज्ञाना भाव प्रत्यक्षे ममापि कल्पनमिति वाच्यं । कर्तृप्रकारकज्ञान काले कृतिप्रका-रकज्ञानस्यावश्यकतया ममापि विषयासत्त्वैव तद्वारणात् । कृतिप्रकारक ज्ञा-नकाले च कर्तृप्रकारक ज्ञानस्याभावेन साम्याभावात् । एवं शाब्दसामग्र्य-भावे ताद्दशप्रत्यक्षहेतुत्वसम्बन्धकल्पने गौरवमि त्याहुस्तदसत् । गुरुशरीर क-र्तृप्रकारक योग्यताज्ञानाभावादिरूपबाधाभावादिघटित तथाविधशाब्दसा-मग्र्यभावे घटपटादिप्रत्यक्षकारणत्वकल्पने गौरवात् । लाघवेन कृतित्वजातेरे वाख्यातशक्यतावच्छेदकत्वादिति दिक् । तस्य शब्दस्येति । वृत्तिमच्छब्दस्येत्य-र्थः । निराकाङ्क्षादाविति । आदिना अयोग्यानासन्नपरिग्रहः । सहकारीति । ज्ञायमानं सत् सहकारीत्यर्थः । तत्र । आकाङ्क्षां निरूपयति । तत्रेति । या-द्दशान्वयइति । यद्विशेषकयत्प्रकारकयत्संसर्गकान्वयबोधजनकमित्यर्थः । इ-दमेवोपपादयति । भवति हीति । नामपदमिति । घटमानयेत्यत्र नामघटपदं उत्तरवर्त्तिविभक्तिपदेन स्वोत्तरवर्त्ति अमूरूपविभक्ति पदेनैव सह । अन्वयेति । घटीया कर्मतेति । आधेयतासंसर्गकं घट प्रकारक कर्मत्व विशेषकान्वयबोध-जनकमित्यर्थः । अतस्तस्येति । घटपदस्य विभक्ति समभिव्याहार इत्यर्थः । ताद्दगन्वय इति । घटीया कर्मतेत्यन्वये आकाङ्क्षेत्यर्थः । अत एवेति याद्दशा-

विभक्तिसमभिव्याहृतमेव । कर्मत्वादीनामाश्रयाश्रयिभा-
वेनान्वयबोधकमित्यत्र किं नियामकमिति चेन्न। नाम्नः स्वा-
र्थनिष्ठकर्मत्वानुभवजनने तदुपस्थापक विभक्ति सहकारित्व-
मिति गृहाण। हन्तैवं यस्य पुरुषस्य घटः कर्मत्वमित्यादि
वाक्यव्युत्पत्तिरभूत् न कुतस्ततोऽन्वयबोध इति चेत्। त-
स्मिन्पुरुष एव मानं नास्ति का कथा तदयान्वयबोधे। तथापि
यदि कश्चित्तादृशः स्यात्तस्य किं भविष्यतीति चेत्। शाब्दा-
नुभावबैधुर्यमेवान्वय व्यतिरेकसिद्धकारण विरहादिति। ए-
तदर्थाश्चाकाङ्क्षाज्ञानाभावाज्ज्ञानं हेतुः।तदूमेणान्वयबोधात्। अपरा
च प्रकृतान्वय बोधसमानाकारस्वजन्यान्वयबोध विरहः प्र-
कृतान्वयबोधे स्वरूपसति हेतुराकाङ्क्षा। अतो घटमानयतीति
पदमेकदान्वयबोधे जनितेनान्वय बोधान्तरं जनयति। स्व-
जन्यान्वय बोधवैधुर्यविरहात् । एवं च गामानयेत्यतोऽन्व-
य बोधे जाते दण्डेनेत्यन्वय बोधे निराकाङ्क्षता स्यात्। अ-
तउक्तं प्रकृतान्वयबोध समानाकार इति नच गामानयेत्यन्व-
यबोधः प्रकृतो येन दण्डेन गामानयेत्यन्वयबोधस्तेन समाना-

---

न्वयनिप्रवेशादेवैत्यर्थः। घटः कर्मत्वमिति। घटः कर्मत्वमानयनं कृतिरिति-
निराकाङ्क्षवाक्ये समानविभक्तिकनामपदयोरभेदान्वय साकाङ्क्षत्वेन घटः क-
र्मत्वमित्यादौ अभेदान्वय साकाङ्क्षत्वेपि आधेयतासम्बन्धेन साकाङ्क्षत्वाभा-
वात् यादृशान्वयेति विवक्षणीयमिति भावः। योग्यताभ्रमेणाभेदान्वयबोध-
स्येष्टत्वात् घटमिति वदित्युक्तं। घटीया मंतेति नान्वयबोधइत्यर्थः। आका-
ङ्क्षेति । घटपदस्यामूपदसमभिव्याहाररूपाकाङ्क्षाविरहादित्यर्थः । धातुपदं
चेति। आनयेत्यत्र धातुपदं चाख्यातपदेनैवसहानुकूलतासंसर्गकानयनप्रका-
रक प्रकृति विशेष्यकान्वयबोधजनकं भवति तत्र धातुपदे आख्यातपद सम-
भिव्याहार आकाङ्क्षेत्यर्थः। अत एवं धातुपदे आख्यातपद समभिव्याहारस्या-

काङ्क्षत्वादेव। आनयनं कृतिरिति अभेदान्वय साकाङ्क्षत्वेपि आनयतीत्यत्रे-वानुकूलता संसर्गकानयन प्रकारक कृतिविशेष्यकान्वयबोधइत्यर्थः। कृतीति। कृतिवाचक कृतिपदस्य सत्वेपि कृतिवाचकाख्यातसमभिव्याहाराभावेनेत्यर्थः। निराकाङ्क्षत्वादिति। आनयनानुकूलाकृतिरित्यन्वयबोधे निराकाङ्क्षत्वादित्यर्थः। नन्विति। कर्मत्वबोधेकर्मत्वोपस्थापकपदत्वेन कारणतया घटः कर्मत्वमित्यत्रापि कर्मत्वोपस्थापकपदसत्वेन घटमिति वत् कृतोनान्वयबोधः। कार्यस्य सामग्र्यधीनत्वात्सामग्र्यास्तत्रापि सत्वादिति भावः। कर्मत्वादीनामिति। घटादिनासहेतिशेषः। स्वार्थेति। नामार्थेत्यर्थः। कर्मत्वोपस्थापकेत्यर्थः। तथाचाश्रयाश्रयिभाव सम्बन्धेन नामार्थनिष्ठकर्मत्व विषयकशाब्दबोधत्वावच्छिन्नं प्रतिनामपदसमभिव्याहृत द्वितीयापदज्ञानत्वेन कारणत्वात् घटः कर्मत्वमित्यादौ तदभावान्न घटमिति वदन्वयबोध इति भावः। इतैवमिति। एवं आधेयता संसर्गकनामार्थनिष्ठकर्मत्वान्वयबोधकर्मत्वोपस्थापक विभक्तेरेव सहकारित्वे। घटः कर्मत्वमित्यादेर्निराकाङ्क्षत्वे इति यावत्। व्युत्पत्तिरिति। आधेयतासम्बन्धेन घटीया कर्मतेत्यन्वबोधे घटः कर्मत्वमिति समभिव्याहारः कारणमिति कारणत्वग्रहोऽभूदित्यर्थः। तत इति। घटः कर्मत्वमित्यादि वाक्यादित्यर्थः। कर्मत्वोपस्थापक विभक्ति समभिव्याहारादिति भावः। तस्मिन्पुरुषे। घटः कर्मत्वमित्यादि निराकाङ्क्षवाक्ये विपरीत व्युत्पत्ते रित्यर्थः। काकयेति। तथाच तादृशपुरुषस्यालीकतया तस्यान्वयबोधस्यापि अलीकत्वेन घटीया कर्मतेत्यन्वयबोधे कर्मत्वोपस्थापक विभक्तित्वेन कारणतायां न व्यभिचार इति भावः। तादृशः स्यात् घटः कर्मत्वमिति वाक्ये विपरीतव्युत्पन्नः स्यात् तस्य किमिति तस्यान्वयबोधः कथं भविष्यतीत्यर्थः। कर्मत्वोपस्थापक विभक्ति समभिव्याहाराभावादिति भावः। शाब्देति। घटीया कर्मतेति शाब्दबोधाभावइत्यर्थः। ननु कथं न तत्र कार्यमतआह। अन्वयेति। प्रथमः घटमिति वाक्यएव व्युत्पन्नानां घटः कर्मत्वमिति वाक्यात् घटीया कर्मतेत्यनुभवाभावेन तादृशान्वयबोधे घटमिति समभिव्याहारस्य कारणत्वावश्यकतया पुरुषभेदेन कारणत्वकल्पने गौरवात् घटः कर्मत्वमिति वाक्यान्न कस्याप्यन्वयबोध इति। आधेयता संसर्गकघट प्रकारक कर्मत्वविशेष्यक शाब्दबोधे घटपद समभिव्याहृत कर्मत्वोपस्थापक द्वितीया विभक्तित्वेन कारणत्वेन व्यभिचार इति दिक्। तस्याश्चेति। समभिव्याहा-

कार इति दिक्। योग्यता च एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्वं। तेन पयसा सिंचतीति योग्यं पयसि सेककरणत्वसंसर्गस्य सत्वात्। वह्निः पय सि सेककरणत्व संसर्गो नास्ति तस्मिन्नयोग्यं। आकाशं घट इत्यत्र समवायरूपसंसर्गवत्वमादायाभेदान्वयबोधेपि योग्यतास्यादत उक्तं प्रकृतेति। अस्याश्च ज्ञानं कारणं। तद्भ्रमेणाप्यन्वयबोधात्। ननु संसर्गस्यापूर्वत्वात्कथं प्रथमं तदा न संभव इति चेत्। उच्यते। योग्यताज्ञानसामान्यं हेतुः। अस्ति चात्र पयः सेककरणतावन्नवेति संशयरूपं ज्ञानं क्वचिन्निश्चयोपि। यथा

---

रूपायाश्चाकाङ्क्षायाज्ञानं कारणमित्यर्थः। तद्भ्रमेणेति। समभिव्याहारभ्रमेणेत्यर्थः अन्वयेति। स्वरूपसत्यास्तस्या हेतुत्वे स्वरूपसत्यास्तत्राभावेन शाब्दानुदयप्रसङ्गात्ज्ञानं कारणं तच्च भ्रमात्मकं तत्र सम्भवत्येवेति भाव; प्रकृतेति। यद्विशेष्यकयत्प्रकारक यत्संसर्गकोऽन्वय बोधस्तत्समानाकारकः तद्विशेष्यकः तत्प्रकारकः तत्संसर्गकोयः स्वजन्या अन्वयबोधः पदजन्यान्वयबोधः। तद्विरहः प्रकृतान्वये तद्विशेष्यकतत्प्रकारक तत्संर्गकान्वयबोधे स्वरूपसती अपराऽकाङ्क्षा हेतुरित्यर्थः। अत इति अपराकाङ्क्षायाः स्वरूपसत्याहेतुत्वादित्यर्थः। एकदेति। घटकर्मकानयनमिति बोधे जनिते अन्वयबोधान्तरं घटकर्मकानयनमिति बोधान्तरं न जनयतीत्यर्थः। तत्र हेतुमाह। स्वजन्येति। वाक्याजन्यानुभवविरहरूपकारणाभावादित्यर्थः। घटमानयेत्यत्र घट कर्मकानयनानुकूलाकृतिरिति शाब्दबोधे जाते पुनस्तादृगन्वयबोधापत्तिवारणाय प्रकृतशाब्दबोधाभावरूपाकांक्षाया अपि कारणत्वमावश्यकमिति भावः। एवं चेति। स्वजन्यान्वयबोधविरहरूपाकांक्षाया अवश्यहेतुत्वे चेत्यर्थः। गामिति। दण्डेन गामानयेत्यात्रावांतरवाक्यार्थबोध पूर्वकस्यैव महावाक्यार्थबोधस्यानुभवसिद्धत्वात् गोकर्मकानयनमित्यन्वयबोधे जाते दण्डेनेत्यन्वयबोधे दण्डकरणकगोकर्मकानयनमिति महावाक्यार्थबोधे निराकांक्षता स्यादित्यर्थः। न चेति। नह्नीत्यर्थः। गामिति। गोकर्मकमानयनमित्य-

न्वयबोध इत्यर्थः प्रकृतः । दण्डेन गामानयेति वाक्यतात्पर्यविषयः । तेन गामानयेत्यन्वयबोधेन । समानाकार इति । समानविषयक इत्यर्थः । तथा च प्रकृतान्वयबोध समानाकारत्वं स्वजन्यानुभवविशेषणमिति भावः । नन्वेवमन्वयबोधद्वयंजायतामिति तात्पर्ये घटमानयेति वाक्यादेकबोधे जाते घटान्वयबोधो न स्यादित्यत आह । दिगिति । एवंतात्पर्यविषयत्वमप्यन्वयबोधे विशेषणमित्यर्थः । तथा च तात्पर्यविषयीभूतबोधद्वयस्य तत्र जातत्वान्नाकांक्षा च्तिरिति योग्यतालक्षयति । योग्यता चेति । एकपदार्थेऽपरपदार्थस्य यादृश संसर्गवत्वं योग्यतेत्यर्थः । लक्षणेलक्षणंयोजयति । पयसेति । नन्वेवंकरकाभिप्राय प्रयुक्तं पयसा सिंचेतीति वाक्यमपियोग्यं स्यादत आह । यस्मिंश्चेति । करकासमुद्रमध्यस्थजलादावित्यर्थः । तस्मिन् करकादिरूपे पयसि । अयोग्यमिति । एकाकारवाक्यस्यापि विषयबाधाबाधाभ्यां योग्यायोग्यत्वमिति भावः । आकाशमिति । आकाशे शब्दसमवायसत्वादभेदान्वयमादायापि योग्यतापत्तिरिति प्रकृतेति विशेषणोपादानं । तथा च एकपदार्थेऽपरपदार्थस्य यादृश संसर्गवत्वं तत्संसर्गमादाय योग्यता प्रकृतेचाभेदसंसर्गस्याकाशशब्दयोर्बाधान्नाभेद संसर्गमादाय योग्यतेति । अस्याश्चेति । एकपदार्थेऽपरपदार्थ संसर्गरूपाया योग्यताया श्चेत्यर्थः । तद्भ्रमेणापि योग्यताभ्रमेणापि । अन्वयेति । करकाभिप्राय प्रयुक्तपयसा सिञ्चतीत्यत्रान्वयबोधादित्यर्थः । स्वरूपसत्यास्तस्याः कारणत्वे सेकसंसर्गस्यासत्वेन शाब्दबोधानुदयप्रसङ्गाज्ज्ञानंकारणमिति भावः । एतन्मते वन्हिना सिञ्चतीति वाक्यं स्वरूपायोग्यम् । तदुक्तं । नहि आरोपितसामर्थ्यं दहतिप चति वेति । संसर्गस्य । पयसि सेकसंसर्गस्य । अपूर्वत्वात् । शाब्दबोधात्पूर्वमप्रतीतत्वात् । कथमिति ।तथाच कथंयोग्यता ज्ञानं शाब्दबोधे कारणमिति भावः । ज्ञानमात्रमिति । संशयनिश्चयसाधारण ज्ञानमात्रमित्यर्थः । अत्र पयसा सिञ्चतीत्यत्रासंशयरूपं ज्ञानमिति । तथा च निश्चयरूपज्ञानस्य पूर्वमसत्वेपि संशयस्यासत्वात्ज्ञानस्य कारणत्वे बाधका भावः इति भावः । ननु निश्चयस्य क्वचित्पूर्वंसत्वे तत्साधारणं ज्ञानं कारणंस्यात्तदेव तु कुतइत्यतआह । क्वचिदिति । तन्निश्चयोपि । योग्यता निश्चयोपि । संभवतीत्यनुषज्यते । निश्चयस्य स्थलमाह । प्रत्यक्षेणेति । दृष्टे । घटे दृष्टे । घटोस्तीति । भूतले घटनिश्चये जाते भूतले घटोस्तीति वाक्याच्छाब्दबोध इत्यर्थः । शाब्दमित्रैरेव शाब्दबोध प्रतिबन्धकतया प्रत्य-

प्रत्यक्षेण दृष्टे घटोऽस्तीति। परेतु। असंसर्गग्रहः प्रतिबन्धकस्तदभावो योग्यता स्वरूपसती हेतुः। नचैवं जलह्रदोवह्निमानित्यप्यसंसर्गाग्रहदशायां योग्यंस्यात्। दृष्टत्वात्। नच लाघवात्संसर्गज्ञानं कारणं नत्वसंसर्गाग्रह इति वाच्यं। असंसर्गाग्रहस्य लौकिकसाक्षात्कारातिरिक्तपित्तादिदोषाजन्य विशिष्टज्ञानमात्रे एव हेतुत्वावधारणात्। कथमन्यथा चन्दनं न सुरभीति निश्चये सुरभिचन्दनमितिज्ञानं न स्यात्। तदभावानुमितावपि चक्षुषा घटस्य लौकिकसाक्षा-

---

त्वनिर्णये शाब्दबोधोदयादिति भावः। अत एव स्वजन्यान्वयबोधविरहः आकांक्षेत्युक्तं। नत्वन्वयबोधविरह इति। असंसर्गग्रह इति। तेन सम्बधेन तदभावग्रह इत्यर्थः। प्रतिबन्धकः शाब्दबोधे प्रतिबन्धकः। तदभावः। तेन सम्बन्धेन तद भाव ग्रहाभावो योग्यतेत्यर्थः। सा। असंसर्गाग्रहरूपा योग्यता स्वरूपसती शाब्दबोधे हेतुः। नचैवमिति। असंसर्गाग्रहस्यैव योग्यतात्वे इत्यर्थः। जलह्रद इति। जलह्र दोवन्ह्य भाववानिति बोधा भावदशायामज्ञलह्र दोवन्हिमानित्यपि वाक्यं योग्यं स्यादित्यर्थः। दृष्टत्वादिति। तत्रापि योग्यताभ्रमाच्छाब्दभ्रमाभ्युपगमादिति भावः। वन्हिना सिञ्चतीति वाक्यं तु स्वरूपा योग्यमेव। नन्वारोपितसामर्थ्यं दहति पचतिवेति। न चेति। लाघवात्। संशयनिश्चयसाधारण संसर्गज्ञानत्वेन कारणत्वे लाघवात्। कारणं शाब्दबोधे कारणं नतु असंसर्गा ग्रहः नतु सम्बन्धाभाव निश्चया भावः। संसर्गग्रहापेक्षया संसर्गाभावनिश्चयाभावत्वेन कारणत्वे गौरवादित्यर्थः। असंसर्गाग्रहस्येति। बाधाभावस्येत्यर्थः। लौकिकेति। लौकिकसाक्षात्कारातिरिक्तं पित्तादिरूप दोषाजन्यश्च यद्विशिष्ट ज्ञानन्तन्मात्र एव कारणत्वावधारणादित्यर्थः। तथा च विशिष्टबुद्धिसामान्य एव बाधाभावस्य कारणत्वात्तेनैवायोग्यवारणे विशिष्य योग्यतायाः शाब्दबोधे न कारणत्वमतिरिक्तकारणत्वकल्पने गौरवादिति भावः। विशिष्टबुद्धिसामान्ये बाधाभावस्य हेतुतां व्यवस्थापयति। कथमन्यथेति। बाधाभावस्य विशिष्टबुद्धिसामान्ये च हे-

त्कारः शंखेषु पीतत्वभ्रमस्य इष्यत इति भजन्यान्तं । न च घ-टोऽभिधेय इत्यत्राभिधेयत्वासंसर्गाप्रसिद्ध्या तद्ग्रहाप्रसिद्धिः । अभिधेयत्वप्रतियोगिकत्वेन योऽभावभ्रमस्तदभावस्य प्रसि-

तुल्ये इत्यर्थः । लौकिकसाक्षात्कारातिरिक्त इत्यस्य व्यावृत्तिमाह : तद भावे-ति । घटाभावानुमितावपि घटस्य लौकिकसाक्षात्कारोदयाल्लौकिसाक्षात्का-रातिरिक्तत्वं विशेषणं । पित्तादिदोषाजन्यत्वस्य व्यावृत्तिमाह । शंखइति । तद भावानुमितावपीत्यनुषज्यते । शंखे पीतत्वा भावानुमितावपि शंखः पीत इति दोषजन्यज्ञानोदयाद्दोष जन्यत्वं देयमिति भावः । अजन्यान्तमिति । लौकिकसाक्षात्कारातिरिक्त पित्तादिदोषाजन्यत्वं विशेषणमित्यर्थः । नेदं रज-तमिति ज्ञाने इदंरजतमिति दोषजन्य ज्ञानापत्तिवारणाय पित्तादिरूपो दो-षो निवेशितः । केचित्तु । दोष विशेषजन्यपीतः शंख इति ज्ञानोत्तरं पीतंसा-क्षात्करोमीति साक्षात्कारित्वग्रहोदयाल्लौकिक विषयतायाश्च साक्षात्कारित्व व्यञ्जकतया तत्र लौकिक विषयताया अवश्यं स्वीकारेण लौकिकसाक्षात्का-रित्वग्रहोयात् लौकिक विषयताशालिसाक्षात्कारातिरिक्तत्वेनैवपीतः शंख इति ज्ञानवारणे पित्तादिदोषाजन्यत्वं प्रतिबध्यतावच्छेदक कोटौ न-देयमेव । न च लौकिक विषयतायां लौकिकसंनिकर्षस्यैव नियामकतया कथं तत्र तेन विना पीतत्वांशे लौकिक विषयतेति वाच्यं । लौकिकसंनिक-र्षवत् दोष विशेषस्यापि लौकिक विषयतानियामकत्वोपगमात् । फलानु-रोधित्वात्कल्पनाया इत्याहुः । न च घट इति घटोऽभिधेय इत्यत्र स्वरूप स-म्बन्धसंसर्गकघटविशेष्य काभिधेयत्वप्रकारकबुद्धिं प्रति घट विशेष्यकस्वरूप सम्बन्धावच्छिन्न प्रतियोगिताकाभिधेयत्वाभाव प्रकारक निश्चया भावस्वरूप बाधाभावत्वेन कारणता वाच्या । तत्तु न सम्भवति स्वरूप सम्बन्धे नाभि-धेयत्वा भावस्य कुत्राप्यप्रसिद्धे रित्यर्थः । अभिधेयत्वे ति । अभिधेयत्व प्रति-योगिकस्वरूप सम्बन्धाभावा प्रसिद्धे रित्यर्थः । तद्ग्रहाप्रसिद्धेः । अभिधेयत्वा संसर्गग्रहा प्रसिद्धेः । समाधत्ते । अभिधेयत्वे ति । वस्तु गत्यास्वरूप सम्बन्धे-नाभिधेयत्वाभावस्या प्रसिद्धावपि घटाभावेऽभिधेयत्व प्रतियोगिकत्व भ्रमः प्रसिद्ध एवेत्यर्थः । तदभावस्य । अभिधेयत्वप्रतियोगिकत्वे ना भावग्रहा भावस्य प्रसिद्धे रित्यर्थः । घट विशिष्टबुद्धिं प्रति वस्तुगत्याघटा भावग्रहाभा-

द्धेः । यदि च सोपि न प्रसिद्धस्तदास्तान्तत्र योग्यता हेतुरेव । नचैवं व्यभिचारः शाब्दबोधंप्रति योग्यतायाः कथं कारणत्वमिति वाच्यं । नहि शाब्दबोधत्वावच्छेदेन योग्यतायाः

---

वस्य हेतुत्वे यत्र घट प्रतियोगिकत्वेन पटाभाव भ्रमस्तत्र घट विशिष्टबुद्ध्यापत्ते र्घट विशिष्ट बुद्धिं प्रति प्रतियोगिता सम्बन्धावच्छिन्न घटत्वावच्छिन्न निष्ठप्रकारतानिरूपिताभाव निष्ठ विशेष्यताशालि निश्चया भावत्वे नैव हेतुताया वाच्यतया प्रकृतेपि स्वरूपसम्बन्धावच्छिन्न प्रतियोगितासम्बन्धेन वाच्यत्व प्रकारक अभावविशेष्यकभ्रमस्य सम्भवितया तदभावस्य हेतुतायां व्यभिचाराभावादिति भावः । ननु भ्रमस्य दोषाधीनतया यत्र न तादृशो भ्रमस्तत्र का गतिरत आह । यदि चेति । सोपि भ्रमोपि । तत्र । घटोभिधेय इति शाब्दबोधे । असंसर्गग्रहे शाब्दबोध वारणाय हि योग्यता कारणं यत्र तु स एव न प्रसिद्धस्तत्रापत्त्य भावेन तस्या अहेतुत्वे पि न क्षतिरिति भावः । न चैव मिति । एवं । घटोभिधेय इति शाब्दबोधे योग्यताया अहेतुत्वे व्यभिचारात् अभिधेयत्व विषयक शाब्दबोधे व्यभिचारात् । व्यतिरेकव्यभिचारात् । शाब्दबोधं प्रति । शाब्दबोधसामान्यं प्रति । न हीति । शाब्दबोधत्वावच्छेदेन सकल पुरुषसाधारण विशिष्ट बुद्धिसामान्ये इत्यर्थः । शाब्दबोधत्वस्य कार्यतावच्छेदकतायाः पूर्वमनभिधानाद्यथाश्रुतासङ्गतेः । किन्तु विशिष्यैवेति । नहि शाब्दबोधसामान्ये योग्यता हेतुरित्युच्यते किंतु तत्पुरुषीयतद्विशेष्यकतत्प्रकारक विशिष्टबुद्धिं प्रति तत्पुरुषीय तद्विशेष्यकतत्सम्बन्धावच्छिन्नप्रतियोगिताक तद भावनिश्चयाभावत्वेन कारणत्वं । एवं चाभिधेयत्वादिकेवलान्वयिस्थले बाधाभावस्याहेतुत्वे पि नक्षतिः । कार्यकारणभावस्य विषयभेदेन पुरुषभेदेन च भिन्नत्वादिति भावः । ननु समवायेन विशिष्ट बुद्धिं प्रति समवायसम्बन्धावच्छिन्न प्रतियोगिताक बाधाभावस्य कारणतया विषयभेदेन भिन्नत्वे पि पुरुषभेदेन भेदे मानाभावः । एकपुरुषीयबाधस्य अन्यात्मन्यसत्वेन व्यभिचाराभावात् । तथा च घटोभिधेय इत्यत्र भ्रांतिः पुरुषधर्मतयाऽनादौ संसारे कस्याप्यभिधेयत्वप्रति योगिकत्वेनाभावभ्रमस्य प्रसिद्ध्या तदभावस्य भ्रमशून्ये पि पुरुषभेदं निवेश्य व्यभिचारवारणमिति चेन्नैवं बाधकालेऽप्रामाण्यग्रहदशायां विशिष्ट बुद्ध्युदयात् अप्रामाण्यग्रहाविषय बाधाभावत्वेन

कारणत्वे एक पुरुषस्याप्रामाण्यग्रहकाले बाधकाले पुरुषान्तरस्य विशिष्ट बुद्धिवारणाय तत्पुरुषीयाप्रामाण्यग्रहाविषय बाधाभावत्वेन कारणत्वावश्यकत्वात् । न च स्वविशेष्यत्वस्वसामानाधिकरण्योभयसम्बन्धावच्छिन्न प्रतियोगिताकाप्रामाण्यग्रहाभावविशिष्टबाधाभावत्वेन हेतुत्वे न तत्पुरुषीयत्वनिवेश इति वाच्यं । प्राचीनमते वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया तथा कारणत्वासम्भवात् । न च । प्रामाण्यग्रहा भाव विशिष्ट बाधाभावत्वेन कारणत्वे मिथो विशेषणविशेष्यभावे विनिगमनाविरह इति तदपेक्ष्य बाधविशिष्टान्यत्वावच्छिन्नं प्रति बाधा भावः अप्रामाण्यज्ञान विशिष्टावच्छिन्नं प्रति चाप्रामाण्यज्ञानं हेतुरित्येवोचितं। वैशिष्ट्यं च स्वाव्यवहितोत्तरत्व स्वसामानाधिकरण्योभय सम्बन्धेनेति वाच्यं । तथामतिएकस्मिन्बोधे अप्रामाण्यग्रहकाले अप्रामाण्यग्रहानास्कन्दित बाधान्तरसत्वेपि विशिष्टबुध्युपत्तेरिति दिक् । अनाहुरित्यस्वरसोद्भावनं । तद्बीजन्तु नहि विशिष्टबुद्धिसामान्ये बाधाभावो हेतुः किन्तु बाधकाले पीच्छाकाले आहार्य प्रत्यक्षोदयादिच्छाया उत्तेजकत्वावश्यकतया प्रत्यक्षस्यैव प्रतिबध्यतावच्छेदकतयोपनीतभानसाधारणबाधप्रतिबध्यतायाः शाब्दबोधावृत्तित्वात् । नच तथाप्यनुमिति साधारणबाधप्रतिबध्यतायाः शाब्दसाधारण्यमिति वाच्यं । प्रत्यक्षान्यज्ञानत्वस्य बाधाप्रतिबध्यतावच्छेदकत्वे प्रत्यक्षान्यत्वज्ञानत्वयोर्मिथोविशेष्यविशेषणभावे विनिगमनाविरहेणानुमितित्वस्यैव बाधप्रतिबध्यतावच्छेदकत्वात् । तस्माच्छब्दबोधं प्रति स्वातंत्र्येणैवाऽसंसर्गाग्रहत्वेनैव हेतुता वाच्येति तदपेक्षया संसर्गरूपयोग्यताज्ञानस्यैव कारणत्वमुचितमिति । नच बाधनिश्चयत्वेन प्रतिबन्धकत्वे संशयनिश्चय साधारणाप्रामाण्यज्ञानस्योत्तेजकत्वं संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुतायाञ्चप्रामाण्यनिश्चयस्यैवोत्तेजकतया गौरवन्तदभाववद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वाभावाप्रकारकतदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्व प्रकारकज्ञानाभावविशिष्टतत्प्रकारकज्ञानत्वेन हेतुतायाञ्चवतावाच्यत्वात् । मन्मतेतु तद्वद्विशेष्यकत्वावच्छिन्नतदभावप्रकारकज्ञानाभावविशिष्टे तदभाव प्रकारकज्ञानाभावत्वेनेति शाब्दबोधं प्रति स्वातंत्र्येण बाधाभावहेतुत्वकल्पनमेवोचितमिति वाच्यं । तद्धर्मावच्छिन्नाभानाभाववति तद्धर्मावच्छिन्नाभावप्रकारकमित्यप्रामाण्यग्रहस्य तद्धर्मावच्छिन्नवति तद्धर्मावच्छिन्नाभावप्र

कारणत्वं। किन्तु तदीयताद्दशान्वयबोधे तदीय ताद्दशान्वय विरहनिश्चयाभावत्वेनैव विशिष्यैवेति न व्यभिचारइत्याहुः। आसत्तिः पदाव्यवधानं। अत एव गिरिरग्निमानित्यासन्नं। अनासन्नं च गिरिर्भुक्तमग्निमान् देवदत्तेनेति। नचैवं स्थाल्यामोदनं पचतीति स्थाल्यामित्यस्य पाकेनानासन्नताप-

कारकमित्यप्रामाण्यग्रहस्य च तदभावनिश्चय प्रतिबन्धकतयां निवेशनीयतया द्विविधाप्रामाण्यग्रहाभाव निवेशेन बाधप्रतिबन्धकतायां गौरवात्। योग्यताज्ञानहेतुतया च तदभाववति तत्प्रकारकमित्येकविधस्यैवा प्रामाण्यग्रहस्याभावोनिवेशनीय इति लाघवं। किञ्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्यभावे प्रतियोगितासम्बन्धेन तत्प्रकारकमित्यप्रामाण्यग्रहाभावस्याधिकस्य निवेशाद्बाध प्रतिबन्धकतायां गौरवं। एवं शाब्दबोधे बत्तदभावतद्वदन्योन्याभावतदभावव्याप्यवत्ताज्ञानादीनां प्रतिबन्धकत्वकल्पनापेक्षया योग्यताज्ञाने हेतुत्वमेवोचितं। वस्तुतस्तु पयसा सिञ्चतीति शाब्द सामग्रीकाले सेकः पयःकरणकत्वाभाववान् इति मानसवारणाय ताद्दशमानसे शाब्दसामग्र्याः प्रतिबन्धकत्व कल्पने गौरवं। सम्मते योग्यता ज्ञानस्यावश्यकतया विपरीत ज्ञानोत्तर प्रत्यक्षनिर्णयं प्रति विशेष दर्शन हेतुतया विशेष दर्शना भावादेव न मानसापत्तिः। विशेष दर्शनसत्वे च तदभावव्याप्यवत्तानिर्णयरूपप्रतिबन्धकसत्वेन शाब्दसामग्र्याएवाभावान्मानसेष्टापत्तेः। न च निर्णयं प्रत्येव विशेषदर्शनहेतुतया शाब्दसामग्रीकाले मानससंशयवारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयत्वसनिवेश्य सेकत्वावच्छिन्नविशेष्यकपयःकरणकत्वाभावप्रकारकमानसत्वमेव तत्प्रतिबध्यतावच्छेदकमिति वाच्यं। सेकत्वावच्छिन्नविशेष्यकपयः करणकत्वप्रकारकमानसे शाब्दसामग्रीप्रतिबन्धकत्वांतरस्यावश्यकतया तेनैव संशयवारणात्। संशये प्रतिबन्धकत्वांतराकल्पनात्। न च विपरीतज्ञानोत्तर प्रत्यक्षनिर्णये विशेषदर्शनस्य हेतुत्वे सिद्धे एव योग्यताज्ञानहेतुत्वमिद्धिरिति वाच्यं। गुरुभूतशाब्द सामग्रीप्रतिबन्धकत्वकल्पनापेक्षयातत्कल्पमाया न्याय्यत्वादितिध्येयं। शाब्द प्रमांप्रति योग्यताप्रमाया गुणतया यद्विशेषयोरिति न्यायेन योग्यताज्ञानस्य शाब्दसामान्ये हेतुतावश्यकतेत्याप्याहुः।

त्तिः । ओदनमित्यनेन व्यवधानादिति वाच्यं । प्रकृतान्वय-बोधाननुकूलस्य व्यवधानाभावस्य विवक्षितत्वात् । ओदनपदं च स्थाल्यधिकरणकौदन कर्मकपाककर्तृत्वान्वयबोधानुकूलमेव । स्थाल्यां पचतीत्यन्वये तु अनासन्नमेवेति प्राञ्चः । नचैवं श्लोकादौ योजनवाक्यान्वयबोधः कथं व्यवहितत्वेन प्रत्यक्ष-सिद्धे ऽव्यवहितत्वेन भ्रमासम्भवादिति वाच्यं । तत्र हि श्लोक पदान्नान्वयबोधः । किन्तु योजनावाक्यादित्याहुः । वस्तुतस्तु

---

शाब्दप्रमायां । स्वपरसाधारण बाधकप्रमाविरह हेतुत्वस्य तेन सुवचतया नेयं युक्तिः साधीयसीत्यपरे । आसक्तिं निरूपयति । आसत्तिरिति । एकप-देऽपरपदाव्यवधानमासत्तिरित्यर्थः । अतएव पदाव्यवधानस्यासत्तित्वादे-व । गिरिरिति । अग्निमत्पदे गिरिपदाव्यवधानस्य सत्वादासन्नमित्य-र्थः । अनासन्नमिति । गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्राग्निमत्पदे भुक्तमि-त्यनेन व्यवधानात् गिरिपदाव्यवधानस्याभावादनासन्नमित्यर्थः । नचैवमि-ति । पदाव्यवधानस्यासत्तित्वइत्यर्थः । स्थाल्यामिति । सर्वेषां कारकाणां क्रि-यायामेवान्वयात् स्थाल्यधिकरणक ओदन कर्मकपाकानुकूलकृतिमानित्यन्व-यबोधोजायत इति भावः । पाकेनेति । पाकवाचकपदेनेत्यर्थः । विवक्षितत्वा-दिति । अव्यवधानपदेन विवक्षितत्वादित्यर्थः । ओदनपदञ्चेति । स्थाल्यामो-दनंपचतीत्यादौ ओदनपदञ्चेत्यर्थः । अनुकूलमेवेति । तथा चौदनपदेन व्य-वधाने तस्यान्वयबोधानुकूलत्वात् अन्वयबोधाननुकूलपदव्यव्यवधानाभावस्य सत्त्वान्नानासन्नत्वापत्तिर्भावः । यत्र च स्थाल्यांपचतीत्यन्वयबोधे तात्पर्यंतत्रौदन-पदेन व्यवधाने अनासन्नत्वे इष्टापत्तिरित्याह स्थाल्यामिति । प्राञ्च इति । यत्प-दाकांक्षितं योग्यंसंनिधानं प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवावगम्यत इति तेषामाशयापि । नचैवमिति । पदाव्यवधानस्यैवासत्तित्वे इत्यर्थः । श्लोकादेरिति पञ्चमी भावा कथमिति । पदाव्यवधानादिति भावः । नन्वासत्तिर्नस्वरूपस-ती हेतुः किन्तु तज्ज्ञानं एवं चाव्यवधानभ्रमादेव तत्र शाब्दबोधइत्यत आह । व्यवहितत्वेनेति । भ्रमेति । तथाच तत्र विशेषदर्शनेनाव्यवहितत्वभ्रमासम्भ-वादासत्ति भ्रमोपि न सम्भवतीति भावः । तत्र हि श्लोकेति । श्लोकपदात् श्लो-

आकाङ्क्षादिमत्त्वे सति तात्पर्यज्ञाने व्यवहितादप्यन्वयबोधात्तद्विलम्बेनाविलम्बाच्चैतज्ज्ञानं हेतुः । किन्त्वव्यवहितपदतात्पर्यज्ञानं । तच्चैतत्पदमेतत्पदाव्यवहितोत्तरमभिसन्धाय इत्यभिसन्धापयितुरिच्छा । अतएव मौनिश्लोकेऽप्यासत्तिः वक्तुरभावेऽप्यभिसन्धातुः सत्वात् । शुकवाक्ये च भगवत्तात्पर्यमादायैव गतिरिति नव्याः । तदपि न । सत्यर्थतात्पर्यज्ञानादावेतद्विलम्बेन शाब्दबोधविलम्बाभावात् । तस्माद्वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः । सा च स्वरूपसती हेतुः । नहि पदार्थानुपस्थितावन्वयबोधः । न च वृत्त्या पदजन्येति व्यर्थं । घटपदात्समवायेनाकाशस्मृतौ घटोऽस्ती-

---

क घट कपदात् । नान्वयबोध इति । तथा च श्लोकस्यानासन्नत्वेपि न व्यतिरिति भावः । कथं तर्हि शाब्दबोध इत्यत आह । किंत्विति । योजनेति । क्रिया कर्मभावेनान्वयबोधजनकपदसमूहादित्यर्थः । तत्र चासन्नत्वमस्त्येवेति भावः । आहुरित्यस्वरसं सूचयन्नव्यमतमाह । वस्तुतस्त्विति । आकांक्षादीत्यादिना योग्यतापरिग्रहः । व्यवहितेपीति । श्लोकादावपीत्यर्थः । तद्विलंबेन । पदाव्यवहितत्व ज्ञानविलम्बेन । अविलम्बाच्च शाब्द बोधविलम्बाभावाच्च । तथा च व्यतिरेक व्यभिचार इति भावः । किंत्विति । अव्यवहितपदतात्पर्यज्ञानं हेतुरित्यनुषज्यते । तथा च पदतात्पर्यमासत्तिरिति भावः । तच्चेति । अव्यवहितपदतात्पर्यं चेत्यर्थः । अभिसन्धायेति । एतत्पदमेतत्पदेनसह सम्भूयान्वयबोधञ्जनयत्विति अभिसन्धापयितुरिच्छेत्यर्थः । ननु वक्तुरिच्छैव वास्तु कृतमभिसन्धापयितुरिति निवेशनेत्यत आह । अत एवेति । मौनीति । मौनिनो वक्तृत्वाभावेपि सभिसन्धापयितृत्वादिति भावः । ननु शुक वाक्याद्बोधो न स्यात् शुकस्यार्थज्ञानाभावेनाभिसन्धापयितृत्वाभावादित्यत आह । शुकवाक्ये चेति । भगवदिति । यत्र शुकवाक्याद्बोधस्तत्र ईश्वरीयतात्पर्यसत्त्वात् पदतात्पर्यसत्वात् । पदतात्पर्यज्ञानस्य कारणतायां न व्यभिचार इति भावः । सत्यर्थेति । अर्थतात्पर्यज्ञाने विद्यमाने एतद्विलम्बेन । पदतात्पर्यज्ञा-

नि वाक्यादाकाशान्वयबोधापत्तेः । ननु घटमानयेत्यत्र घटकर्मत्वानयनकृत्युपस्थितीनां न युगपत्सम्भवः । आशुविनाशिनां क्रमिकाणां मेलकाभावादिति चेन्न । क्रमिकपदानुभवजन्यानेकसंस्कारैर्युगपत्तावत्पदस्मरणाद्युगपत्तावत्पदार्थोपस्थितान्वयबोधः सम्भवतीति सङ्क्षेपः । अत एवाव्यवधानेन पदजन्यपदार्थोपस्थितिरासत्तिरित्यपास्तं । वृत्तीयांत-

---

नस्य विलम्बेन शाब्दबोधविलम्बाभावादित्यर्थः । तथा च न पदतात्पर्यमासत्तिरिति भावः । तस्मादिति । अन्यविधासत्तेर्दुर्वचत्वादित्यर्थः । वृत्त्याशक्तिलक्षणान्यतररूपसम्बन्धेन पदजन्या या पदार्थोपस्थितिः सैवासत्तिरित्यर्थः । साचेति । वृत्त्या पदजन्यपदार्थोपस्थितिरूपासत्तिश्चेत्यर्थः । ननु स्वरूपसत्यासत्त्या हेतुत्वे यत्र न सा स्वरूपसती तत्रान्वय बोधो नस्यात् अत आह । नहीति नचेतित्यर्थमित्यनेनान्वयः । घटपदादिति । पदस्य पदार्थस्मारकत्वं एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन । एवं च घटपदस्य शब्दत्वात्समवायेनाकाशस्मारकत्वे घटपदादाकाशशाब्दबोधापत्तेः वृत्त्येति निवेशनीयतया समवायेनाकाशस्मारकत्वेतिशक्तिलक्षणान्यतरसम्बन्धेनास्मारकत्वाददोष इति भावः । नन्विति । घटकर्मकानयनानुकूल कृतिमानिति शाब्दबोधे घटकर्मत्वानयनकृत्युपस्थितीनां कारणता वाच्या । साच न संभवति एकक्षणे तासाभसम्भवादित्यर्थः । असम्भवे हेतुमाह । आशुविनाशिनामिति । तृतीयक्षणवृत्तिध्वंस प्रतियोगिनामित्यर्थः । क्रमिकाणां । एकाधिकरणक्षणाध्वंसाधिकरणक्षणोत्पत्तिकानां । मेलकाभावादिति । एकक्षणावस्थायित्वाभावादित्यर्थः । आशुविनाशिनामपि ज्ञानानां सहोत्पत्तिकानां यौगपद्यासम्भवात् क्रमिकाणामिति । क्रमिकाणामपि घटपटादीनांमेलकादाशुविनाशिनामिति मिलितोपादानं । क्रमिकेति । क्रमिकानियोनि पदानि तदनुभवजन्या येऽनेकसंस्काराः तैर्युगपत्तावत्पदानां स्मरणात् युगपत्तावत्पदार्थानां स्मृतौ सत्यां शाब्दबोधः सम्भवतीत्याखण्डलार्थः । तथा च सर्वत्र समूहालम्बनात्मकपदजन्यपदार्थोपस्थिताविव शाब्दबोध इति भावः । ननु घटगोचरसंस्कारात् पदस्मरणानुदयेन समानविषयकसंस्कारस्य स-

वैयर्थ्यात्। व्यवहितोपस्थितावेकस्यानुपस्थितेर्विनाशात्। तात्पर्यं चेदं एतस्मिन्नर्थेऽस्यान्वयं प्रत्याययत्विति प्रयोक्तुरिच्छा। प्रयोक्ता चाभिसन्धापयिष्टमाचं। नतु वक्तैव। मौनिश्लोकाव्याप्तेः। शुकवाक्ये च भगवदिच्छयैवगतिः। त-

---

मानविषयकस्मृति हेतुतया कथं नानापदगोचरैः प्रत्येकसंस्कारैर्भिन्न विषयकनानापदगोचरमेकं स्मरणमत आह। संक्षेपइति। भिन्नविषयकत्वां शे संस्कारः कारणं नेत्येव नतु जायमानंस्मरणं भिन्नविषयकमेवन जायत इति। यथा घटपटचक्षुःसंनिकर्षसंयोगमत्वे संमूहालम्बनमेकप्रत्यक्षमिति भावः। अतएवेति। हत्वा पदजन्यपदार्थोपस्थितेरासत्तित्वादेवेत्यर्थः। तृतीयान्तेति। अव्यवधानेनेत्यस्य वैयर्थ्यादित्यर्थः। ननु गिरिर्भुक्तमग्निमान् देवदत्तेनेत्येतत्तद्वारणार्थमेव तदित्यत आह। व्यवहितेति। उपस्थितेः क्रमिकपदार्थोपस्थितेर्नष्टत्वादित्यर्थः। अव्यवधानस्यभेदघटितत्वे व्यवधानेन क्रमिकपदार्थोपस्थितौ तासां सर्वासामेकदासम्भवेन समूहालम्बनस्मृतेरेव कारणत्वं वाच्यं। इत्थञ्च तत् ध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपमेदघटिताव्यवधानंनिवेशेऽसम्भवात्। तत्ध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपभेदाभेदासाधारणमव्यवधानमेव निवेशनीयं। तथा च तदुपादानेपि गिरिर्भुक्तमित्यादौ समूहालम्बनात्मकस्मृतिमादायाव्यवधानसम्भवादव्यवधानांशो व्यर्थैव। गिरिर्भुक्तमित्यादौ अन्वयबोधाभावस्यार्थतात्पर्यज्ञानविरहेणैवोपपन्न इति भावः। आसत्तिं निरूप्य तात्पर्यं निरूपयति। तात्पर्यं चेदमिति। अर्थतात्पर्यं चेत्यर्थः। एतस्मिन्निति। इदमेतस्मिन्नर्थे अस्य पदार्थस्य अन्वयंप्रत्यापयतु बोधयतु इति प्रयोक्तुरिच्छेत्यर्थः। अभिसन्धापयिष्टमाचमिति। एकपदार्थज्ञानवदपरपदार्थं ज्ञानवन्मात्रमित्यर्थः। नतु वक्तैव। नतु शब्दोच्चारयितैव। मौनीति। तत्र शब्दोच्चारणाभावेन तात्पर्याभावप्रसङ्गादित्यर्थः। नन्वेवं शुकवाक्ये शुकस्यार्थज्ञानाभावेनाभिसन्धापयितुरभावात्तात्पर्याभावप्रसङ्ग इत्यत आह। शुकवाक्ये चेति। भगवदिच्छा ईश्वरेच्छैव गति रित्यर्थः। तथा च तत्रापीश्वरतात्पर्यसत्वान्न दोष इति भावः। तस्य चेति। तात्पर्यस्य चेत्यर्थः। अस्येति।

स्य च निश्चयो हेतुः । अस्य च संशये व्यतिरेकनिश्चये चान्वयाबोधात् । तद्भ्रमे चान्वयबोधाच्चेति सङ्क्षेपः । सोऽयं शब्दो द्विविधः । विधिरर्थवादश्च । तत्र विध्यभिधायकः प्रत्ययस्तद्घटितवाक्यो वा विधिः अभिधेयविधिश्च कार्यत्वं तच्च कृतिसाध्यत्वमिति । किमत्र मानमिति चेत् । उच्यते । विधिस्तावत्प्रवर्तकज्ञानमजनयित्वा प्रवृत्तिजनिकामिच्छामजनयित्वा न प्रवृत्तिजननायालं । अतो यस्य बुद्धिः प्रवृत्तिजननीमिच्छां सूते स विधेरभिधेयः । प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारिकेच्छा तज्जननीच कृतिसाध्यत्वप्रकारिका

---

तात्पर्यसंशये व्यतिरेकनिश्चयेनान्वयबोधादित्यर्थः । यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र हेतुरिति नियमबलादित्यर्थः । तद्भ्रमे चेति । तात्पर्यभ्रमे च अन्वयबोधाद्भ्रमप्रमासाधारणतन्निश्चयो हेतुरित्यर्थः । संक्षेप इति । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपुत्र संसर्गप्रतीतीच्छयोच्चरिते राज्ञ इत्यस्य पुरुषपदेन साकांक्षत्ववारणाय यत्पदंय त्पदव्यतिरेकेण तात्पर्यविषयीभूतार्थान्वयाननुभावकत्तत्पदन्तत्पदेन साकांक्षमिति तात्पर्यगर्भाकांक्षा ज्ञानकारणत्वा वश्यकतया आकांक्षा घटकतयैव तात्पर्य ज्ञानं हेतुर्नतुस्वातंत्र्येणेत्यादि । सोऽयमिति । आकांक्षादिसहकृतः शब्दइत्यर्थः । तत्र । तयोर्विध्यर्थवादयोर्मध्ये । विध्यभिधायकेति । अभिधायकप्रत्ययत्व सुवादिविभक्तावतिव्याप्तमतः विधीति । बिधिः विध्यर्थः । विधिशब्दस्य विधिप्रत्यये विध्यर्थे च प्रयोगदर्शनात् । अत एव स्वर्गकामो यजेतेत्यादौ इष्टसाधनत्वं कार्यत्वं वा यद्विधिः सःसमभिव्याहृतक्रियान्वयो वेति मणिकृद्भिः कार्यत्वंवा यद्विधिरित्युक्तं । तथा चार्थविशेषाभिधायकः प्रत्ययः विधिप्रत्यय इत्यर्थः । सचलिङ्लोटतव्यपञ्चमलकाररूप प्रत्ययस्वरूपइति । ननुयजादिसमभिव्याहृते लिङ्पदे विधित्वेन व्यवहारः अत आह तद्घटितमिति । तद्घटितमिति । तद्घटितं विध्यभिधायकप्रत्ययघटितवाक्यमित्यर्थः । तच्च स्वर्गकामो यजेतेत्यादिकं । ननु कस्तावद्विध्यर्थः । तत्राभिधेयलिङ्र्थः सैवचप्रवृत्ति हेतुरि-

ति भट्टाः । तदाचार्यमाशय: । करणस्य परनिष्ठव्यापारजनकत्वं स्वनिष्ठ व्या-
पारद्वारेतिनियम: यथा घटं प्रति करणस्य दण्डादे: चक्रनिष्ठभ्रमिरूपव्यापार-
जनकत्वं स्वनिष्ठस्पंदार्जनद्वारा व्यापारेण व्यापारे जननीये स्वनिष्ठव्यापारान्त-
रापेक्षणेनवस्थापत्त्या व्यभिचारवारणाय करणस्येति । अभिधारूपव्यापारसि-
द्धये स्वनिष्ठेति । अन्यथेष्ट साधनता ज्ञानादिरूप व्यापारमादाय सिद्धसाधना-
पत्ते: । तथाच विधे: प्रवर्तकतया परनिष्ट प्रवृत्तिरूपस्वर्गादिफलक व्यापारज-
नकत्वं स्वनिष्टव्यापारद्वारेतिलिङ्समवेत: लिङ्जन्योऽभिधारूपव्यापार:
स्वीकरणीय: । भट्टमते शब्दस्य द्रव्यत्वात्तस्य समवायिकारणत्वाविरोधात् ।
तन्मते हि भावना द्विविधा शाब्दी आर्थीच । तत्रेयं शब्दनिष्टत्वाच्छाब्दीभा-
वनेत्युच्यते । अन्याचार्थी अर्थो यागादिस्तद्विषयिणी प्रवृत्तिरूपा । तदुक्तं ।
अभिधा भावनामाहुरन्यामेवलिङादय: । अर्थात्मभावनात्वन्या सर्वाख्यातस्य
गोचर इति । आर्थीभावनाच कर्मकरणमितिकर्त्तव्यताञ्चापेक्षत इति अंश-
त्रयवती । तथाच स्वर्गकर्मिका यागकरणिका प्रयाजादीतिकर्त्तव्यताका-
चार्थीभावना । इयमपि च भावनात्वेन किं केन कथमित्यंशत्रयवती, किम्भा-
वयति केन भावयति कथं किंसहकारिण मासाद्य भावयतीति तदर्थत्वात् । त-
थाचोक्तं । लिङोभिधा सैव च शाब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः ।
सम्बन्धबोध: करणं तदीयप्ररोचनार्थ्यं चांगतयोपयुज्यते, तत्र सम्बन्धबोध: लिङ्-
पदे शक्तिग्रह:, प्ररोचना, स्तुत्यर्थवाद: अङ्गतया संहकारितयोपयुज्यते । तत्र
चाभिधा स्वरूपसती अभिधात्वेन ज्ञाता वा न प्रवर्तिकेति प्रवर्तनात्वेन तज्ज्ञानं
कारणं प्रवर्तनात्वं च प्रवृत्तिजनकत्वं यजादिपदसमभिव्याहारेण यागविषयक
प्रवृत्तिजनकत्वं शाब्दं । तच्च च समानसंवित्संवेद्यतया यागे कृतिसाध्यता-
बोधोपि । एवमिष्टसाधनताज्ञानंविना प्रवृत्तिजनकत्वं दुर्ग्रहमिति भावना-
त्वेनापि तज्ज्ञानं कारणं । भावनात्वं च भाव्यजनकत्वं भाव्यत्वं चेष्टत्वं । एव
मभिधात्वेनापि तज्ज्ञानं कारणं । अन्यथा धर्मितावच्छेदकापरिचयेन ध-
र्मितावच्छेदकाबोधानुपपत्ते: । तथाच गुरुमते विध्यर्थकार्यविशेष्यकोबोध: ।
भट्टमते तु यागविषयकप्रवृत्तिजनिकाऽभिधा स्वर्गजनिका अभिधात्वज्ञाना-
नुकूलाप्रवर्तनात्व ज्ञानानुकूलाऽभिधात्यनुकूलाचेति शक्ति चतुष्टयं । अभि-
धाज्ञानं वैदिक प्रवृत्तिं प्रतिहेतु: । लौकिकप्रवृत्तिं प्रति तु इष्टसाधनताज्ञानं
हेतुरितिबोध्यं । वस्तुतस्तु प्रवृत्तिर्द्विविधा स्वरसवाहिनी पराधीना च

तत्र पराधीनप्रवृत्तौ प्रवर्तनाज्ञानं । हेतुः । अत एव राजाज्ञया पितुः शिरःछेदादौ प्रवर्तते । शाब्द प्रवृत्तावाचार्यादेः प्रवर्तकत्वं । आचार्यप्रेरितोऽहं गामानयामि नतु स्वेच्छयेत्यनुभवात् । आचार्यादेश्च साक्षान्न प्रवर्तकत्वं किन्तु शब्देन स्वप्रवर्तनांज्ञापयित्वेच्छासुत्पाद्ये(त्य)नुभवसिद्धं । प्रवर्तनाच प्रवृत्तिप्रयोजकः प्रवर्तयितुर्व्यापारः । स चेतरस्येच्छारूपः । अहमेनं प्रवर्तयामीत्यनुभवसिद्धः अचेतनस्य शब्दादेस्तुपदार्थांतरं अभिधा भावना प्रवर्तनाद्यपदेश्यस्यैव च लिङर्थः । तथा च विधिः राजेव मां प्रवर्तयतीति प्रवर्तना ज्ञायते । तेन यागादौ पुरुषं प्रवर्तयतीति भट्टमतनिष्कर्षः । तदसत् । सामान्यतः प्रवृत्तिसामान्ये इष्टसाधनताज्ञानहेतुत्वे नैवोपपत्तौ प्रवर्तनाज्ञानस्य हेतुत्वे मानाभावात् । राजाज्ञया पितुः शिरः छेदादौ प्रवृत्तिरपि स्वेष्टं प्रतिसन्धायैव नहि प्रयोजनमनुद्दिश्य मंदोपि प्रवर्ततेइति । एवमभिधायां इष्टसाधनत्वे ज्ञातेपि इष्टसाधनत्वाज्ञाने अप्रवृत्तिः अभिधायां इष्टसाधनत्वं यागे इष्टसाधनतांविनाऽनुपपन्नमिति यागेष्टसाधनताज्ञानस्यावश्यकत्वे कृतमभिधाज्ञान हेतुतया । न च करणस्येत्यादिनियमादभिधासिद्धिः । अप्रयोजकत्वात् । अनुमितिकरणव्याप्तिज्ञानादौ व्यभिचाराच्चेति नाभिधा लिङर्थ इत्यतः प्राभाकरमतन्दर्शयति । अभिधेयविधिरेति । प्रतिपाद्यरूपोविधिः विध्यर्थ इतियावत् । प्रागभाव प्रतियोगित्वरूपकार्यत्वं न प्रवर्तकज्ञानप्रकारइत्यर्थ आह । तच्चेति । कार्यत्वंचेत्यर्थः । शक्तेकिमचेति । अत्र कृतिसाध्यत्वस्य विध्यर्थत्वे । भलं । समर्थः । यस्य बुद्धिः । यद्विषयिणीबुद्धिः । सइति । प्रवृत्तिजनकेच्छाजनकज्ञानप्रकार इत्यर्थः विधेरभिधेयः । प्रतिपाद्यः । तज्जननीचेति । कृतिसाध्यत्वप्रकारकेच्छाजननीचेत्यर्थः । ननु तादृशेच्छां प्रतिज्ञानत्वे नकारणत्वमास्तामत आह । कृत्यसाध्यत्वेति तदनुत्पत्तेः । कृतिसाध्यत्वप्रकारकेचानुत्पत्तेरित्यर्थः ननु नियत पूर्ववृत्तित्वेन कॢप्तत्वात् कृत्यसाध्यताज्ञानाभाव एव हेतुः ननु कृतिसाध्यताज्ञानं तत्र नियमानन्यथासिद्धत्वयोर्द्वयोकल्पनीयत्वे गौरवादित्यत आह । नत्विति । नतु कृत्यसाध्यत्वज्ञानाभावोहेतुरिति शेषः । गौरवादिति । कृत्यसाध्यत्वप्रकारकज्ञानाभावत्वेन कारणत्वे गौरवात् । लाघवात्कृतिसाध्यत्व प्रकारकज्ञानत्वेनैव नियमानन्यथा सिद्धत्वयोः कल्पनादित्यर्थः । ननु कृतिसाध्यतानिश्चयत्वे कारणत्वमपेक्ष्य लाघवेन कृत्यसाध्यताज्ञानाभावत्वेनैवे हेतुत्वमिति चेन्न । निश्चयत्वेन हेतुत्वे संशयनिश्चय-

बुद्धि: । कृत्यसाध्यत्वज्ञानेनतदनुत्पत्ते: । ननु कृत्यसाध्यत्वप्रकारकज्ञानाभावो गौरवात् । सर्वदा चिकीर्षोत्पत्त्यापत्तेश्च ।

---

साधारणप्रामाण्यज्ञानस्यैवोत्तेजकत्वं कृत्यसाध्यताज्ञानत्वेन प्रतिबन्धकत्वे चाप्रामाण्यनिश्चयस्योत्तेजकत्वमिति गौरवात् । अप्रामाण्यज्ञानेऽप्रामाण्यज्ञानस्योत्तेजकत्वानभ्युपगमात् । एतेनाप्रामाण्यनिश्चय स्योत्तेजकत्वे तत्ताप्रामाण्यज्ञान सामान्यस्योत्तेजकत्वं अप्रामाण्यज्ञानस्योत्तेजकत्वे च तत्ताप्रामाण्यनिश्चयस्योत्तेजकत्वमिति विपरीत गौरवमिति परास्तं । वस्तुतस्तु कृत्यसाध्यताज्ञानप्रतिबन्धकत्वे कृतिसाध्यत्वाभाव कृतिसाध्यभेदतद्व्याप्यतदवच्छेदकधर्मदर्शनादीनां प्रतिबन्धकत्वापेक्षया कृतिसाध्यताज्ञानत्वेनैव हेतुत्वमुचितमिति । ननु ज्ञायमानेष्टभेदाग्रहस्य तन्मते कारणत्वं न स्यात् तत्राप्यतदग्रहेकारणत्वे लाघवात् । यदिच नियतपूर्ववर्तित्वेन कॢप्तत्वात् तद्वेतोरितिन्यायेन कारणत्वं तदा प्रकृतेपि तुल्यमित्यताह । सर्वदेति । सत्वात् । कृत्यसाध्यता ज्ञाना भावसत्वात् । ननु भवन्मतेसर्वदा भेदग्रहसत्वात् सर्वदा विसंवादिप्रवृत्त्यापत्ति: । यदि ज्ञायमानेष्टभेदाग्रहत्वेन कारणत्वं तदा मयापि ज्ञायमानकृतिसाध्यत्वा भावज्ञानाभावकारणत्वमपि सुवचं अत आह । अतइति । तन्मते अन्यथाख्यात्यभावेन इष्टाभेदग्रहइष्टभेदाग्रहयोर्युगपत् स्थित्यभावेन भेदाग्रह एव विसंवादिप्रवृत्तिहेतु:अत्र तु कृतिसाध्यताज्ञानकृत्यसाध्यताज्ञानाभावयोर्युगपत्स्थित्या लाघवेन कृतिसाध्यता ज्ञानत्वेनैव प्रवृत्तिहेतुत्वमिति भाव: । केचित्तु । साक्षादविरोधिनो ज्ञानस्य प्रतिबन्धकत्वंज्जनकज्ञानविघटकत्वेनैवेतिनियमात् कृत्यसाध्यताज्ञानस्य साक्षादविरोधिन:चिकीर्षाकारणकृतिसाध्यता ज्ञानविघटकत्वेनैव प्रतिबन्धकत्वमिति कृतिसाध्यता ज्ञानं हेतुरिति । ननु बाधादिवारणाय साक्षादविरोधित्वं विशेषणं । तदर्थश्च ग्राह्याभावतद्व्याप्याद्यनवगाहित्वं तच्च प्रकृतेप्यसिद्धंचिकीर्षाविषय कृतिसाध्यताभावावगाहित्वात् कृत्यसाध्यता ज्ञानस्य । यदि च कारणीभूता भावप्रतियोगित्वरूपं प्रतिबन्धकत्व घटकंतदापि कृत्यसाध्यता ज्ञानस्य साक्षादेव विरोधित्वोपगमेन साक्षाद विरोधित्वसिद्धे रितिकथमेतत् । उच्यते । साक्षादविरोधिनं प्रति यत्प्रतिबन्धकं भवतितज्जनक ज्ञानविघटकं सदेव प्रतिबन्धकं भवतीति नियम: साक्षादविरो-

धित्वं च तद्विषयविरोध्यग्राहि ज्ञानभिन्नत्वं तेन न सत्प्रतिपक्षादौ व्यभिचारः चिकीर्षा च ज्ञानभिन्नत्वादेव साक्षाद् विरोधिनीति तज्जनक ज्ञानविघटकत्वेनैव कृत्यसाध्यता ज्ञानस्य प्रतिबन्धकत्वमिति गुरुमते सिद्धे ऽनुमिति प्रतिबन्धकत्वाभावान्न तत्र व्यभिचारः सिद्धत्वस्य ज्ञानेच्छाप्रतिबन्धकत्वेपि तद्ग्राह्यत्व प्रतिबन्धकता निवेशनीया असिद्धत्वज्ञानं वा हेतुः । असाधुत्वज्ञानस्य शाब्दबोधप्रधिबन्धकत्वेमानाभावः । न च संवादिप्रवृत्तौ तन्मते इष्टभेदाग्रहहेतुतया तत्रव्यभिचार इति वाच्यं । संवादित्वविशेषणेन तद्वारणात् । संवादिप्रवृत्तौ तु तन्मतेपि विशिष्ट ज्ञानं हेतुरिति न क्वापि व्यभिचार इत्याहुः । तन्न साक्षादविरोधिनो ज्ञानस्य प्रतिबन्धकत्वं जनकज्ञानविघटकत्वेनैवेत्येव नियमस्य तेनाप्युपेयत्वात् । साक्षादविरोधिनं प्रति यत्प्रतिबन्धकं भवति तज्जनक ज्ञानविघटकत्वेनैवेति नियममादृत्य साक्षादविरोधित्वशरीरे च ज्ञानभिन्नत्वेत्यत्र ज्ञानेति निवेश्य कृतिसाध्यता ज्ञानहेतुतासाधनस्य अपार्थनिर्णयतापत्तिरिति ध्येयम् । ननु कृतिसाध्यता ज्ञानं चिकीर्षाद्वाराप्रवृत्तिहेतुरिति सिद्धं । एवं च जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे प्रवृत्त्यापत्तिः । अथ अदृष्टवदात्मसंयोगेनैव प्राणपञ्चकसञ्चारोपपत्तेर्जीवनयोनियत्ने माना भावः । न च भस्त्रावायूदीरणदृष्टान्तेन वायूदीरणत्वेन यत्नजन्यत्वानुमानात् परिशेषात्तत्सिद्धिरिति वाच्यं । वाह्यवायूदीरणे व्यभिचारात् । न च तस्यापीश्वरीययत्नजन्यत्वान्न व्यभिचार इति वाच्यं । प्रकृतेपि तेनैवार्थान्तरात् । जन्यत्वविशेषणे च वाह्यवायूदीरणे व्यभिचारात् । यत्तु समाधिस्थानां श्वासवारणे श्वास क्रियानुदयः । सर्वसिद्धः । जीवनादृष्टस्य च तदापि सत्त्वेन तदनुत्पादो जीवनयोनियत्नव्यतिरेकादिति । तन्न । तदानीं जीवनयोनियत्नानुवृत्तिर्यत्प्रयुक्ता तत एव श्वासक्रिया विरहोपपत्तेरिति । मैवं । धावतःयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनात् श्वासक्रियात्वावच्छिन्नं एव यत्नजन्यत्वनिश्चयात् । यद्विशेषयोःकार्यकारणभावोऽसतिबाधकेतत्सामान्ययोरपीतिन्यायात् । जीवनयोनियत्नसिद्धिः । न च विषभक्षण व्यावर्तनाय स्वविशेषणवत्ता प्रतिसन्धानजन्यकार्यता ज्ञानस्यावश्यहेतुतया तद भावादेव न प्राणपञ्चकसञ्चारे प्रवृत्तिरिति वाच्यं । अहंकृतिसाध्य प्राणपञ्चकसञ्चारो जीवित्वात् प्राणपञ्चकसञ्चारो मत्कृतिसाध्यः मत्कृतिंविना सत्त्वे सति मदिष्टसाधनत्वादिति च तत्सम्भवादिति । उच्यते ।

चिकीर्षाधीन कृतिसाध्यता ज्ञानत्वेन प्रवृत्तिकारणत्वात्। ननु तथापि भो-
जनचिकीर्षाधीनकृतिसाध्ये नान्तरीयकश्रमे प्रवृत्ति प्रसङ्गः। अत्र कश्चित्।
चिकीर्षाधीन कृतित्वेन न श्रमजनकत्वं द्वेषयोनियत्नादपि श्रमोत्पत्ते-
रित्याह। तन्न। शत्रुवधप्रवृत्तौ प्रतियोगिनि शत्रौ द्वेषः कारणमिति
तावद्दुर्वचं। तस्य भिन्न विषयतया शत्रुवधप्रवृत्तावहेतुत्वात्। किन्तु शत्रु
वधस्येष्टसाधनत्वेन तदिच्छाया एव तत्र हेतुत्वात। न च शत्रुनिवृत्तौ
शत्रु द्वेषस्य समानविषयकत्वेन हेतुत्वप्रसङ्ग इति वाच्यं। इष्टत्वात्।
द्वेषयोनिनिवृत्तितस्तु न श्रमोत्पत्तिसम्भावनापि। व्याघ्रादिसमीपवृत्ति-
देशादेव निवृत्तेः। तत्र तद्देशवर्जनरूपेष्टसाधनता ज्ञानात् पलायनप्रवृत्त्यैव
श्रमसम्भवात्। न च प्रवृत्त्यभाव एव निवृत्तिरिति वाच्यं। निवृत्त्यभाव
एव प्रवृत्तिरित्यस्यापि सुवचत्वात्। न च प्रवृत्त्यभावकाले कदाचिन्नि-
वृत्तत्वव्यवहारात्प्रवृत्त्यभाव एव निवृत्तिरिति वाच्यं। निवृत्तेर्द्वेषसमान
विषयकत्वस्यानुभवसिद्धत्वात्। अथ निवृत्त्याख्ययत्नस्वीकारे विषयभेदेन
प्रवृत्ति निवृत्त्योर्यौगपद्यापत्तिरिति चेन्न। इष्टानिष्टसाधनता समूहालम्बन
सम्भवेपि रागद्वेषयोरेकदाऽसम्भवेन तदसम्भवात्। न च यत्रापेक्षाबुद्ध्यात्मकं
तत्स्मरणं अनन्तरं फलेच्छयाफलद्वेषौ तत उपायेच्छा उपायद्वेषौ तत्र तदा-
पत्तिरिति वाच्यं। उपायेच्छाकाले एवापेक्षाबुद्धेर्नाशात्। उपादान प्रत्यक्षस्य-
साक्षात्प्रवृत्तिहेतुतया तदभानाच्च ज्ञानेच्छाद्वेषाणां यौगपद्याभावात्। एवं
प्रयत्नयौगपद्यस्य चेष्टास्थल इव चतिरभावाच्च। विंशत्यंगुल्यवच्छेदेन विजातीय
चेष्टानुरोधेनविजातीयविंशति प्रयत्नानांयुगपदुत्पादात्। अन्यथासमवायेन-
विजातीयतच्चेष्टां प्रत्यवच्छेदकतासम्बन्धेन कृतेर्हेतुतया एकाङ्गुल्यामिवापर-
त्रापि तस्या एव कृतेरवच्छेदकतया सत्वाद्विजातीये तच्चेष्टाया एवांगुल्यन्तरे
प्यापत्तिः। नाना कृतिस्वीकारे तु एतत्कृतेरवच्छेदकतयांऽगुल्यन्तरे असत्वादे-
वन तत्र विजातीये तच्चेष्टापत्तिः ननु समवाय सम्बन्धेन विजातीये तच्चेष्टांप्रति
स्वीयविजातीयैतच्चेष्टावृत्तिसाध्यत्वाख्यविषयतानिरूपित सिद्धत्वाख्यविषयता
सम्बन्धेन कृतिर्हेतुरिति एककृति स्वीकारेपि नानुपपत्तिः। एकस्या एव कृते-
र्विजातीयैतच्चेष्टावृत्तिसाध्यत्वाख्य विषयतानिरूपि तसिद्धत्वाख्य विषयतयां-
गुल्यन्तरेऽभावात्। अथ यदापुरुषान्तरस्य एतदङ्गुल्यांविजातीयचेष्टा साध्य-

का कृतिरुत्पन्ना तदा एतत्पुरुषस्य कथं न स्याङ्गुल्यवच्छेदेनविजातीयचेष्टो-त्पद्यते इति तत्पुरुषीयत्वं निवेश्यकार्यकारणभावकल्पने गौरवं । नानाकृति-स्वीकारे तु अवच्छेदकतयापुरुषान्तरीयकृतेरेतत्पुरुषीयाङ्गुल्यामसत्वादेव न तदापत्तिरिति चेन्न । अवच्छेदकता तादृशविषयत्वोभयसम्बन्धेन कृतेर्हेतुतया-ममापि तत्पुरुषीयत्वानिवेशात् । भवन्मते तु अनन्तवैजात्यकल्पनेन तदवच्छे-द्यनियामककल्पनेन च गौरवमिति नानाकृतिस्वीकारो निरर्थकइति मैवं । अवच्छेदकता तादृशविषयतोभयसम्बन्धेन कृतेर्हेतुत्वंतु उभयत्वस्यापेक्षा-बुद्धिविशेषविषयत्वरूपस्य दुर्वचतया एकविशिष्टापरत्वरूपस्य च विनिगम-नाविरहग्रस्ततया गौरवेण तादृश विषयता सम्बन्धेनैव कारणता वाच्या । तथा तत्पुरुषीयत्वनिवेशे गौरवादवच्छेदकता सम्बन्धेनैव कृतर्हेतुतेति एक कृति स्वीकारेविजातीय चेष्टानामनुपपत्त्या नानाकृतिस्वीकार आवश्यकइति-दिक् । अत्रोच्यते । स्वचिकीर्षाधीनकृतिसाध्यता ज्ञानत्वेन प्रवृत्तिकारण-त्वात् भ्रमे स्वचिकीर्षाधीन कृतिसाध्यता ज्ञानाभावादेवा प्रवृत्तेः । अत एवा-न्येच्छाधीनेच्छा विषयत्वादेवभ्रमो नान्तरीय इत्युच्यते । ननु प्राणपञ्चकसञ्चारे भ्रमे च प्रवृत्तिवारणाय स्वचिकीर्षाधीन कृतिसाध्यता ज्ञानत्वेन कारणतेत्युक्तं । तदयुक्तं । प्राणपञ्चकसञ्चारादेःप्रवृत्ति स्वरूपायोग्यतयैवतत्र प्रवृत्तिवारणात् किञ्च चिकीर्षाधीनत्वविशेषणेन । अन्यथावस्तुगत्या चिकीर्षाधीना याकृति-स्तत्साध्यताभ्रमात् प्राणपञ्चकसञ्चारे प्रवृत्तेर्व्वलेपत्वात् । तथा च प्रवृत्ति स्वरूपयोग्यत्व ज्ञानस्य पृथक्कारणतया प्रवृत्तिस्वरूपायोग्यवृत्तिविशेष्यताप्रत्या-सत्त्या कृतिसाध्यता ज्ञानत्वेन कारणतयैवोपपत्तौ न तद्विशेषणमिति । अत्रे-दम्बोध्यं । स्वेच्छाधीनत्वं न ज्ञानतंत्रमपि तु वस्तुगत्या स्वेच्छाधीनायाकृति-स्तत्साध्यता ज्ञानं कारणमिति । प्राणपञ्चकसञ्चारे वस्तुगत्यास्वेच्छाधीन कृतेरप्रसिद्धतयाकथं भ्रममादायातिप्रसङ्गवारणाय प्रवृत्तिस्वरूपयोग्यत्व ज्ञानस्य प्रवृत्तिस्वरूपायोग्य व्यावृत्तविशेष्यताप्रत्यासत्त्या कृतिसाध्यता ज्ञा-नस्यवा कारणत्वावश्यकतयातद्विशेषणानुपादानमिति । न च तथापिसुखे-च्छामादायसुखे प्रवृत्तिप्रसङ्गइति तथा ज्ञानकारणत्वमावश्यकमिति वाच्यं । फलेच्छाया अप्रवर्तकत्वात् । तथापि स्वचिकीर्षाधीनत्वस्य विवक्ष-णात्सुख चिकीर्षाधीनत्वेन तु न प्रवर्तकत्वमिति । वस्तुतस्तु । प्रवृत्तिस्वरूपा-योग्य व्यावृत्तविशेष्यता प्रत्यासत्त्या कृतिसाध्यता ज्ञानत्वमात्रेण कारणत्वेघ-

सर्वदा तत्त्वात् अतः कृतिसाध्यत्वमेवविध्यर्थ इति । नन्वेवं मण्डलीं कुर्यादितिवाक्यादत्यन्तकृतिसाध्यताज्ञानवतोबलवद-निष्टजनकमेव मण्डलीकरणं । जानतोमण्डलीकरणे प्रवृत्तिः स्यात् अथ बलवदनिष्टाननुबन्धि कृतिसाध्यताज्ञानं प्रवर्त्तकमिति चेन्न । इत्थमपीष्टाजनकत्वेन बलवदनिष्टाननुबन्धि

---

टादौ जीवनयोनि यत्नसाध्यताभ्रमकाले प्रवृत्त्यापत्तिवारणाय चिकीर्षाधीन कृतिसाध्यताज्ञानत्वेन हेतुताया आवश्यकतया चिकीर्षाधीनत्वविशेषणमावश्यकमेवेति । एतेन प्रवृत्तिस्वरूपयोग्यत्वज्ञानं कारणमिति प्रवृत्तिस्वरूपायोग्यव्यावृत्तविशिष्यता प्रत्यासत्या कृतिसाध्यताज्ञानं कारणमिति वा न ब्रूमः किन्तु क्लृप्तेनैव प्राणपञ्चकसञ्चारेण प्रवृत्तिरिति । तथाहि । घटोघट इति तदुद्देश्यतावच्छेदक तद्विधेयकशाब्दबोधवारणाय निर्वन्हिर्वन्हिमानिति तदभावधर्मितावच्छेदकतद्धर्मावच्छिन्नप्रकारताकानुमिति वारणाय च तन्निवृत्तिविषयतासम्बन्धेन ज्ञानंप्रति तद्भेदत्वेन हेतुता वाच्या । तत्रच कार्यतावच्छेदकेज्ञानत्वमनिवेश्य तन्निवृत्तिविषयतासम्बन्धेन गुणत्वावच्छिन्नं प्रत्येवतद्भेदस्य हेतुत्वमभ्युपेयते एवंच प्रवृत्तिलक्षणो गुणः प्राणपञ्चकसञ्चारभिन्न एव जायत इति प्राणपञ्चकसञ्चारभिन्न वृत्तिविषयतासम्बन्धेन प्रवृत्तौ प्राणपञ्चकसञ्चारभेद एव हेतुरिति नातिरिक्तकार्यकारणभावकल्पनमिति चिकीर्षाधीनत्वविशेषणमफलमिति निरस्तं । तावतऽपि घटादौ जीवनयोनिकृतिसाध्यताभ्रममादाय प्रवृत्तिवारणाय चिकीर्षाधीनत्वविशेषणावश्यकत्वादिति दिक् । नन्वेवमिति । एवं कृतिसाध्यत्वमात्रस्य विध्यर्थत्वे । जानत इति वाच्यं निष्फलमपि मण्डलीकरणं फलभ्रांत्याक्रियते । तस्य च वृथाचेष्टांनकुर्वीत न विप्रःक्षणिकोभवेत्यदिना वेद निषेधादनिष्टजनकत्वेन तत्र बलवदनिष्टजनकत्व ज्ञानकाले आस्तिकानामपि प्रवृत्तिप्रसङ्गः । प्रवर्त्तकस्य कृतिसाध्यता ज्ञानस्य सत्वादित्यर्थः । अथेति । तथाच बलवदनिष्टाननुबन्धित्वेसति कृतिसाध्यत्वंविध्यर्थ इति भावः । इत्थमपीति । बलवदनिष्टाननुबन्धित्वेसति कृतिसाध्यताज्ञानस्य प्रवर्त्तकतया बलवदनिष्टजनकत्वज्ञानकाले प्रवृत्तिवार-

कृतिसाध्यत्वेन च मण्डलीकरणं ज्ञानवतस्तत्र प्रवृत्तिः स्यात् । प्रवृत्तिजनकज्ञानस्य च सत्वात् । अत्र प्राभाकरमतानुवर्त्तिनः । नित्ये शौचादिमत्वप्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्त्तकं । अन्यत्र चेष्टसाधनताज्ञानजन्यमिष्टसाधनताज्ञान-

णेऽपीत्यर्थः । तत्र मण्डलीकरणे । प्रवृत्तिजनकेति । बलवदनिष्टाननुबन्धि कृतिसाध्यताज्ञानस्य सत्वादित्यर्थः । प्राभाकरमते इष्टसाधनत्वमपि विध्यर्थो भवत्येव । अत एव तैर्नित्यापूर्वनिषेधापूर्वरूपं परागपूर्वमपि सन्ध्यामुपासीत न कलञ्जं भक्षयेदित्यादि नित्यनिषेधयोः कल्प्यते । तस्य च स्वतएवपुरुषार्थत्वान्नेष्टत्वविरोध इति सर्वप्राभाकराणामिव नेदंमतमिति सूचनायात्र प्राभाकरमताऽनुयायिन इत्युक्तं । तथाच तदष्येकदेशिमतमिति भावः । नित्ये इति । सन्ध्यावन्दनादावित्यर्थः । शौचादीत्यादिना तत्कालजीवित्वपरिग्रहः । सन्ध्यामुपासीतेत्यादिस्थले अहं एतत्कालीन कृतिसाध्यसन्ध्यावन्दनकः शुचिः तत्कालजीवित्वात् पूर्वसन्ध्यायामहमिवेत्याकारक कार्यताज्ञानं प्रवर्तकमित्यर्थः । अन्यत्र चेति । काम्ये चेत्यर्थः । इष्टेति । पाको मत्कृतिसाध्यः मत्कृतिंविना सत्वे सति मदिष्टसाधनत्वादित्यानुमानिकं कार्यताज्ञानं काम्यगोचरप्रवृत्तौ हेतुरित्यर्थः । ननु स्नानपानकार्यता स्मरणात्प्रवृत्तिर्नस्यात् व्याप्त्याद्यात्मक स्मरणेनानुमानिकस्येष्टसाधनताज्ञानजन्यकार्यताज्ञानस्याभावादित्यत आह । इष्टसाधनता ज्ञानकालीनं चेति । कालश्चात्र यावता कालेन व्याप्त्यादि ज्ञानात् कार्यतानुमितिस्तावानेव विशिष्यग्राह्यः । तेन न स्थूलकालमादाय दोषः । लिङ्गोपस्थितलैंगिकभानोपगमे तु यथा श्रुते न दोष इति । सामान्ये चेति । प्रवृत्तिसामान्ये चेत्यर्थः । यद्विशेषयोः कार्यकारणभावो ऽसतिबाधके तत्सामान्ययोरपीति न्यायादिति भावः । न कश्चिदिति । मण्डलीकरणे प्रवृत्तिप्रसङ्गरूपोदोषो नेत्यर्थः । प्रवृत्तित्वावच्छिन्नं प्रति कार्यताज्ञानत्वेन हेतुता काम्यगोचरप्रवृत्तिंप्रति इष्टसाधनतालिंगककृतिसाध्यताज्ञानत्वेन नित्यगोचरप्रवृत्तिंप्रति शौचादिमताप्रतिसन्धानजन्यकार्यताज्ञानत्वेन हेतुतया विशेषसामग्रीसहकृतताया एव सामान्यसामग्र्याः फलोत्पादकतया विशेषसामग्री विरहादेव न मण्डलीकरणादौ प्रवृत्त्यापत्तिरिति भावः । पाको मत्कृतिसाध्यः मत्कृतिं विना सत्वे सति मदिष्टसाधनत्वादिति पाकानुमानं । तत्रच अ-

कालीनं वा कार्यताज्ञानं प्रवृत्तिहेतुः। सामान्ये च कृतिसाध्यताज्ञानसामान्यमिति न कश्चित् दोषः। नचैवं स्वाघ्रादिष्टसाधनताविषयक कृतिसाध्यताज्ञानमेव प्रवृत्ति

मे प्रवृत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्यैव प्रवर्त्तकतया स्वेच्छाधीन मत्कृतिसाध्यत्वमेव साध्यं हेतुरपि इच्छाधीन मत्कृतिं विना ऽसत्त्वे सति मदिष्टसाधनत्वादिति। तेन प्राणपञ्चकसंचारे न व्यभिचारः। मदिष्टसाधनत्वमात्रस्य हेतोर्वृष्टौ व्यभिचार इति सत्यंतं। मदिष्टसाधने परकृतेपाके व्यभिचारवारणाय मत्कृतिं विनेत्यत्रमत्पदं। अमे व्यभिचारवारणय विशेष्यदलनिवेशः। तस्यापि मदीयशत्रोरिष्टसाधनत्वाद्व्यभिचार इत्यतः मदिष्टेत्यत्र मत्पदं। अथ मदिष्टसाधनेनांतरीयके जलसंयोगे व्यभिचारः अमवतस्तस्याप्यन्येच्छाधीन मत्कृतिसाध्यत्वात् स्वेच्छाधीनमत्कृतिंविनेति विवक्षणे च अमेपि तेनैवानतिप्रसङ्गात् मदिष्टेत्यस्यवैयर्थ्यमिति चेन्न। अखण्डाभावघटकतयावैयर्थ्याऽभावात्। तस्य हेत्वन्तरत्वादिति। अथात्र सिद्धपाकस्य पक्षत्वे कृत्यनन्तरध्वंसत्वरूपस्य कृतिसाध्यत्वस्य बाधः अनागतपाकस्य च सामान्यलक्षणानङ्गीकारात् ज्ञानासम्भव इतिचेन्न। पक्षधर्मताज्ञानस्य समानप्रकारकत्वेनैवानुमितिहेतुतया पक्षतावच्छेदकपाकत्वप्रकारक सिद्धपाकविशेष्यकज्ञानादसिद्धपाकविषयकानुमिते सम्भवात्। तदुक्तं मणिकृता। पाके कृतिसाध्यत्वं सिध्यत्सिद्धेबाधादनागतंपाकमादय सिध्यति। पक्षतावच्छेदकसामानाधिकरण्यं साध्यसामान्यस्य सिध्यतीत्यनुमाने कृप्तत्वादिति। ननु भावियौवराज्ये प्रवृत्तिवारणायेदानीं तन मत्कृतिसाध्यताज्ञानस्यैव प्रवर्त्तकतया इदानींतनमत्कृतिसाध्यत्वमेव साध्यं। हेतुरपि चेदानीं तनत्वघटितः स तु सिद्धपाके ऽसम्भवी असिद्धस्य चाज्ञानात् पक्षधर्मताज्ञानंदुर्भिक्षमिति चेन्न। स्व समानाधिकरणपाकत्वरूपपरंपरासम्बन्धेन सिद्धपाके एव हेतुमताज्ञानसम्भवात् नच द्रव्यत्वेन पर्वतेवह्निव्याप्यधूमवत्ताज्ञानाद्द्रव्यत्वेन ह्रदपक्षकानुमित्यापत्तिः अन्यथा व्याप्त्यापत्त्यः इष्टापत्तेरयोगादिति वाच्यं। द्रव्यत्व प्रकारक तत्तद्व्यक्तिपक्षकानुमितित्वं कार्यतावच्छेदकं। द्रव्यत्वप्रकारकपरामर्शत्वेन च कारणताकारणतावच्छेदके परं तत्तद्व्यक्तित्वविशेषः। समानविषयकत्वेन कारणत्वेपि तत्तद्व्यक्तिभेदेन कारणत्वस्यावश्यकत्वात् कारणताव-

च्छेदकेपि तत्तद्व्यक्तिनिवेशस्य लभ्यते परमाधिक्यात् । इत्यञ्च ह्रदव्यक्तिमनंत-भाव्यैव कारणत्वान्न दोषः । ननु व्याप्यतांघटकसम्बन्धेनैव हेतुमत्ताज्ञानस्यैवा-नुमिति हेतुतया तदसम्भवः । सिद्धपाके व्यभिचारेण स्व समानाधिकरणपा-कत्वरूप परंपरासम्बन्धस्य हेतुता न वच्छेदकत्वात् । नच साध्यमपि तेनैव-सम्बन्धेनेति वाच्यं । प्रवृत्तिजनकचिकीर्षायां स्वरूपसम्बन्धेनैव कृतिसाध्य-त्वस्य प्रकारतया तज्जनकज्ञानेपि तेनैव सम्बन्धेन तस्यप्रकारत्वात्स्वरूपस-म्बन्धस्यैव साध्यतावच्छेदकत्वादिति चेन्न । गुरुमते येनकेनचित्सम्बन्धेनैव हेतुमत्ताज्ञानादप्यनुमिति स्वीकारात्कालिकसम्बन्धेन पर्वते धूमवत्ता ज्ञानेपि अनुमितेरिष्टत्वात् । नचैवं पर्वते धूमवत्ताज्ञानात्धूमावयवह्रदादौ वन्ह्यनु-मित्यापत्तिरिति वाच्यं । पक्षतावच्छेदकभेदेनानुमितिपरामर्शयोः कार्य-कारणभावात् । ह्रदत्वाद्यवच्छिन्नपक्षकानुमितेरलीकतया तदन्तर्भावेनकार्य-कारणभावाकल्पनात् । नच समानविशेष्यतावच्छेदकता प्रत्यासत्याकारण-त्वे लाघवाद्द्रव्यत्वेन ह्रदपक्षकानुमित्यापत्तिरिति वाच्यं । अन्यथा ख्यात्या-पत्तिभयेन गुरुत्वेपि पक्षतावच्छेदकभेदेन कारणत्वकल्पनाद प्रामाण्यज्ञाना-भावनिवेशानुरोधेनापि पक्षतावच्छेदकनिवेशस्यावश्यकत्वाच्चेति दिक् । अप रेतु संनिकृष्टपर्वते पर्वतत्वेन धूमाभाववत्ताग्रहे येनकेनचित्संबन्धेन धूमव-त्तापरामर्शादसन्निकृष्टपर्वतेवन्ह्यनुमित्यापत्तिः । इष्टापत्तौ च वन्ह्यर्थं प्रवृ-त्त्यापत्तेरेतच्चिंत्यमित्याहुः । तदसत् । उपादानप्रत्यक्षाभावादेव तत्र प्रवृत्ति-वारण सम्भवादिति । नचैवमिति । एवं । इष्टसाधनताज्ञानजन्यकार्यताज्ञान-त्वेन हेतुत्वे । लाघवादिति । इष्टसाधनताज्ञानजन्यत्वापेक्षया इष्टसाधन-ताज्ञानकालीनत्वापेक्षया च इष्टसाधनताविषयकत्वस्य निवेशे लाघवादित्य-र्थः । प्रवृत्तिसामान्ये इति । तथाच प्रवृत्तिसामान्यसामग्रीविरहादेव न म-ण्डलीकरणे प्रवृत्तिरिति भावः । नित्ये इति । संध्यावंदनादावित्यर्थः । तद-भावात् । तस्येष्टसाधानत्वाभावेनेष्टसाधनताविषयककृतिसाध्यताज्ञानाभा-वादित्यर्थः । ननु तत्रापि प्रत्यवायानुत्पादरूपेष्टसाधनत्वमस्त्येव यत्र फलं न श्रूयते तत्रापि तत्कल्प्यते इत्यत आह । साध्यत्वेति । ननु तन्निरूपितसाध्य-त्व तन्निरूपितसाधनत्वं च विरुद्धमिति कृतिनिरूपितसाध्यत्वेष्टसाधनत्वयो-र्भाने बाधकाभावः । सामान्यतस्तु साध्यत्वसाधनत्वयो न विरोध इत्यभिप्रेत्य शङ्कते । कथमिति । अनयोः साध्यत्वसाधनत्वयोः । अनयोः कृतिसाध्यत्वेष्ट

सामान्ये हेतुरिति वाच्यं। नित्ये तदभावात्। साध्यत्वसाधनत्वयोर्विरोधेनैकदैकस्मिन्कृतिसाध्यत्वेष्टसाधनत्वयोर्भानासम्भवाच्च। कथमनयोर्विरोध इतिचेदृष्टं। साधनत्वं हि सिद्धधर्मः। असिद्धावस्थायांतदनुपपत्तेः। साध्यत्वं ह्यसिद्धधर्मः। सिद्धतादशायां तदभावात्। नचैकदासिद्धमसिद्ध-

---

साधनत्वयोरित्यर्थ इत्यपिकश्चित्। साधनत्वंहीति। सिद्ध धर्मः पूर्वकालवृत्ति धर्मः। अनन्यथा सिद्धनियतपूर्ववर्त्तित्वरूप कारणतायाः सिद्धधर्मत्वादित्यर्थः। सिद्धधर्मत्वमेवाह। असिद्धेरिति। भाविनः कार्यानुदयादित्यर्थः। साध्यत्वं चेति अनन्तरंभविष्यत्वरूपं साध्यत्वं च। असिद्धधर्मः। भावि कालवृत्तिधर्म इत्यर्थः। अनन्यथासिद्धनियतपश्चाद्भावित्वरूपकार्यतायाः। अनागतवृत्तित्वादिति भावः। तदेवाह। सिद्धता दशायामिति। तदभावात् साध्यत्वाभावात्। नचेति। एककालावच्छेदेन सिद्धत्वासिद्धत्वयोरसम्भवेन तदवच्छिन्नयो साध्य साधनत्वयोरपि सामान्यत एव विरोधेनान्यनिरूपितयोरपि तयोर्विरोध इति भावः। येन। एककालावच्छेदेन सिद्धत्वासिद्धत्वयोः सम्भवेन। एकदाकृतीति। नच इदानीं इष्टसाधनंअग्रे च कृतिसाध्यमिति ज्ञानादेव प्रवृत्तिरास्तामिति वाच्यं। इदानीं अग्रेतनकालयोरननुगमेन तथा व्याप्तिग्रहासम्भवादिति भावः। नवीन नैयायिकमते इष्टसाधनताज्ञानस्य कृतिसाध्यताज्ञानस्य च पृथगेवकारणत्वादाह। जन्यदिति। लाघवादिति। कारणतावच्छेदकलाघवादित्यर्थः। प्रवर्त्तकमिति। प्रवृत्तिसामान्ये कारणमित्यर्थः ज्ञानादीति। आदि नेष्टसाधनताज्ञानकालीन कार्यताज्ञानपरिग्रहः। गौरवादिति। जन्यत्वादि प्रवेशेन कारणातावच्छेदक गौरवादित्यर्थ। फलाभावादिति। सन्ध्यावन्दनादीनां स्वर्गादिरूप फलाभावादित्यर्थः। नित्येपीति। सन्ध्यावन्दनादावपीत्यर्थः। फलश्रुतेरिति। संध्यामुपासते येतु सततंशंसितव्रताः। विधूतपापास्ते यांति ब्रह्मलोकंसनातनमित्यादिना तत्रापि फलबोधनादित्यर्थः। सर्वत्र नित्ये फलश्रवणाभावादाह बहुश इति। अतएवाह। यत्र चेति। नित्ये इति शेषः। विश्वजिदिति। विश्वजिता यजेतेत्यत्र इष्टसाधनत्वस्य विध्यर्थत्वेन विशेषतः फलानुपस्थितौ विधेः प्रवर्त्तकत्वानुपपत्याविशेषतः तत्फ-

ज्ञ। येनैकदाकृतिसाध्यत्वमिष्टसाधनत्वं च स्यादिति। अत्रज रत्नं यायिका: । इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमेव लाघवात्प्रवर्त्तकं । नत्विष्टसाध्यताज्ञानजन्य कार्यताज्ञानादि गौरवात् । नच नित्ये इष्टसाधनताज्ञानासम्भव: फलाभा- वादिति वाच्यं । नित्येऽपि बहुश: फलश्रुते: । यत्रच फल-

लं कल्पनीयं । तत्रस्वर्गापवर्गयोरेव मुख्यपुरुषार्थत्वेनापवर्गस्याभावरूपतया गौरवेण लघुत्वात् स्वर्गएव फलंकल्प्यते तथा ऽश्रुतफले नित्येपीत्यर्थः । ननु यदकरणे प्रत्यवायस्तन्नित्यमिति तत्र प्रत्यवायपरिहारस्यावश्यकत्वात् भएफलं नतु स्वर्गो गौरवात् । नच निरूपाधीच्छा विषयत्वरूप मुख्यपुरुषार्थ- त्वासम्भव इति वाच्यं । बलवद्द्वेष विषयाभावत्वेन दुःखाभाव इव दुःखजन- काभावेपि तत्वाविरोधादित्यतस्तथैवाह । प्रत्यवायेति । नच प्रत्यवायपरि- हारस्तत्प्रागभाव: तस्यच कथं त्वलं प्रागभावस्याजन्यत्वादिति वाच्यं । यत्स- त्वे यत्सत्वं यदभावे पदभाव इत्येवंरूपयोगक्षेम साधारण जन्यत्वस्य तत्रा- पि सम्भवादिति भाव: । नचैवमिति । नित्ये पि इष्टसाधनता ज्ञानबलादेव प्रवृत्तिस्वीकारेत्यर्थ: । काम्यत्वमिति । कामनाधीनकर्त्तव्यत्वस्यैव काम्यत्व रूपत्वादित्यर्थ: । नत्विति । कामानानधीनकर्त्तव्यत्वस्यैव नित्यत्वस्वरूप- त्वादिति भाव: । कर्महि त्रिविधं । नित्यं काम्यं नित्यकाम्यंच तत्र केवलं नित्यं सन्ध्यावन्दनादि केवलं काम्यंयागादि नित्यकाम्य एकादशीव्रतादि । अकरणे प्रत्यवाय श्रवणात् नित्यत्वं । पुत्रादि कामना श्रवणात् काम्यत्व- मपि । अतएव काम्यकरणे नित्यमपितंत्रेणैव सिध्यतीति न तत्र कर्मद्वयं- भवमते सर्वस्यैव नित्यस्य काम्यत्वे केवलं नित्यकर्मैव न स्यात् । तथाच नित्यत्वमित्यस्य केवल नित्यत्वमित्यर्थ: । अन्यथा नित्यकाम्ये कामनाधीन- कर्त्तव्यत्वेन काम्यत्वे पिनित्यत्वस्वीकारादसंगत्यापत्तेरिति धेयं । नदि- ति । कामनाधीनकर्त्तव्यभिन्नत्वस्य नित्यत्वरूपत्वे नित्यकाम्याऽसंग्रहात्का- मनानधीनकर्त्तव्यत्वमित्युक्तम् । यदिति । विहित तत्कालीनाकरणे इत्य- र्थ: । तेनान्यदा सध्यावन्दनाकरणेऽपि न क्षति: । तत्वमित्यन्तरं नित्यत्व- मित्यऽनुषंग: । तत्रेति । प्रत्यवाय प्रयोजकीभूताकरण प्रतियोगित्वरूप नि-

श्रुतिर्नास्ति तथास्तां विश्वजिन्न्यायात् स्वर्ग एव फलं प्रत्यवायपरिहारो वा। नचैवं फलकामनाधीनकर्तव्यत्वे काम्यत्वं स्यान्नतु नित्यत्वमिति वाच्यम्। नहि फलकामनानधीनकर्त्तव्यत्वं नित्यतां ब्रूमः। किन्तु यदकरणे प्रत्यवायस्तत्त्वं। तच्च फलकामनोपाधिकर्त्तव्यत्वेप्यक्षतमेव। नचैवं फले यदा कामनानास्ति तदा संध्यावन्दनादौ प्रवृत्तिर्न स्यादिति वाच्यं इष्टत्वात्। नहि प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते। नचैवं कामनाधिकारिविशेषणं स्यात्। तथाच यदा फले कामना नास्ति तदा पुरुषस्याशुचेरिवानाधिकारत्वान्नित्याकरणेपि प्रत्यवायो न स्यादिति चेत्। यदि तत्र प्रत्य-

---

त्यत्वंचेत्यर्थः। कामनोपाधीति। कामनारूपो यदुपाधिः प्रयोजकस्तत्कर्त्तव्यत्वेपि इत्यर्थः। प्रयोजकत्वंचान्यूनानऽतिरिक्त वृत्तित्वं। तथाच कामनाधीन कर्तव्यत्वे कामनाधीनकर्तव्यत्वस्य विरुद्धत्वेऽपि प्रत्यवायप्रयोजकीभूताकरण प्रतियोगित्वं न विरुद्धमिति भावः। नचैवमिति। एवं कामनोपाधिकर्त्तव्यत्वे। फलेति। प्रथमतः फलज्ञानं ततः फलेच्छा ततः इष्टसाधनता ज्ञानं उपाये ततः उपायेच्छा ततः प्रवृत्तिरिति क्रमः। तथा चाहरहः सन्ध्यामुपासीतेत्यादीय दानफलप्रतिसन्धानं तत्र फलेच्छाभावेन इष्टसाधनताज्ञानाभावात् प्रवृत्तिर्नस्यादित्यर्थः। इष्टत्वादिति। गुरुणाहरहः सन्ध्याकर्त्तव्येतियिच्चितेऽवश्यं किञ्चिदेतस्य फलमस्तीति प्रतिसधायैव बालानामपि प्रत्यहं प्रवृत्तिरिति भावः। तथाच केवलं नित्यत्वमास्थेयेतिहृदयं। नन्वेवमिति। एवं नित्यस्याऽपि काम्यत्वे। कामनेति। अधिकारि विशेषणंहि अधिकारः तथाच नित्ये शुचितत्कालजीवित्वमधिकारः काम्ये तु कामनाधिकाइति कामनाऽधिकारीविशेषणंस्यादित्यर्थः। नस्यादिति। अधिकृताकरणे प्रत्यवाय। यथाऽशुचिना संध्याऽकरणेपि न प्रत्यवायः। अधिकाराभावात् तथा कामनाशून्येनाकरणेपि प्रत्यवायो न स्यात्। अधिकाराभावादित्यर्थः। यदीति। तत्र। कामनाविरहप्रयुक्त नित्याकरण स्थले। वस्तुतस्तु। तत्रनियमेन कामनास्त्येव अकरणं तु आलस्यादिप्रयुक्तमिति अधिका-

वाय: प्रामाणिकत्वं त्यज्यते । तर्हि कामनाधिकारि विष-णं । ननु वेदबोधितमिष्टसाधनत्वमपि । प्रामाणिकत्वात् । कल्प्यतां वा कामनेतर यावदधिकारवतामकरणमेव प्रत्य-वायहेतुरितिन किञ्चिदेतत् नच साध्यत्वसाधनत्वयोर्विरो-धः । एकस्मिन्पाकओदनसाधन कृतिसाध्यत्वयो: असत्वा-त् । कथमन्यथा तवेष्टसाधनताज्ञानकालीनं कृतिसाध्यता-ज्ञानं यागादौप्रवर्त्तकमिति । कृतिसाध्यत्वे च बलवदनि-ष्टाननुबन्धित्वं विशेषणं देयं । नातोमधुविषसंपृक्तान्नभोजने

---

रोरुत्येव । कामनेति । नित्येतरकाम्ये कामनाऽधिकारिविशेषणं । नित्य-काम्ये तु शुचितत्कालजीवित्वमेवाधिकार इति कामना शून्येऽपि प्रत्यवायो-स्तीति भाव: । इष्टसाधनत्वमपि त्यज्यते इति पूर्वेणान्वय: । प्रामाणिकत्वात् । प्रमाणसिद्धत्वादित्यर्थ: । ननु फलहेतोरेवाऽधिकारतया कामनाप्यधिकारि विशेषणत्वादधिकार: कथमन्यथा काम्यसाधनता ज्ञानस्य प्रवृत्तिसामान्ये हेतुत्वमित्यत आह । कल्प्यतां वेति । कामनेतरेति । तथाच कामनायाश्चा-धिकारत्वेपि कामनेतर शुचितत्कालजीवित्वरूप यावदधिकारवतां नित्या-करणे प्रत्यवाय इति कामनाविरहकालेऽपि नित्याकरणे प्रत्यवाय एवेति भा-व: । न किञ्चिदिति । काम्यगोचरप्रवृत्तिं प्रति इष्टसाधनता लिङ्गक कृति-साध्यताज्ञानत्वेन प्रवृत्तिसामान्ये तु कार्यताज्ञानत्वेन हेतुत्वमिति गुरुतरा-नुसरणस्य वैयर्थ्यम् । नित्येऽपि फलस्योपपादितत्वादिति । ननु साध्यत्वसा-धनत्वयोर्विरोधादिष्टसाधनता विषयककृतिसाध्यता ज्ञानत्वेन प्रवृत्तिहेतुत्वा-सम्भव इत्याशयेनाह । नचेति । उत्तरयति । एकस्मिन्निति । एकनिरूपितयो-रेव साध्यत्वसाधनत्वयोर्विरोधेन अन्यनिरूपितयोरविरोधितया ओदननिरू-पितसाधनत्वस्य कृतिनिरूपितसाध्यत्वस्य च पाकेऽविरोधित्वादिति भाव: । अन्यथेति । साध्यत्व साधनत्वयो: सामान्यत: विरोधे । तवेति । विषभक्षणा-दौ प्रवृत्तिवारणाय इष्टसाधनतालिंगकं कृतिसाध्यताज्ञानं प्रवर्त्तकमिति वा-च्यं । तत्र साध्यत्वसाधनत्वयोर्विरोधेऽसम्भवतीति तयोर्नसामान्यतो विरोध

कृतिसाध्यत्वेन सुखसाधनत्वेन च ज्ञातेऽपि प्रवृत्तेर्बलवदनिष्टानुबन्धित्वेनाग्रहात् । यदि च बलवदनिष्टानुबन्धित्वेन ज्ञायते तदा प्रवर्त्तत एव । एवंच बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वविषयकं ज्ञानं प्रवर्त्तकं । विध्यर्थोऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं । अतएव कलंजभक्षणस्येष्टसाधनत्वे सति कृतिसाध्यत्वेऽपि बलवदनिष्टाननुबन्धित्वाभावाद्विशिष्टाभावान्न कलंजं भक्षयेदिति विध्यर्थनिषेध उपपद्यते कथन्तर्हि श्येनेनाभिचरन् यजेतेत्यत्र विधिप्रवृत्तिः श्येनस्य हिंसात्वेन नरकरूपबलवद

---

इति लाघवात् सामान्यतः इष्टसाधनताविषयककृतिसाध्यताज्ञानमेवप्रवर्त्तकमिति भावः । ननु मधुविषसंपृक्तान्नभोजने मरणरूपबलवदनिष्टजनकत्वज्ञानकालेऽपि प्रवृत्त्यापत्तिः । कृतिसाध्यत्वस्य तृप्तिरूपेष्टसाधनत्वस्य च ज्ञानात् । मन्मते तु बलवदनिष्टाननुबन्धीष्टसाधनत्वलिङ्गककृतिसाध्यताज्ञानत्वेन प्रवर्त्तकतया हेत्वज्ञानेन तत्राज्ञानाभावादित्यत आह । बलवदिति । सुखेति । तृप्तिरूपसुखेत्यर्थः बलवदनिष्टाननुबन्धित्वभ्रमकाले प्रवृत्त्यापत्तिरतस्तत्रेष्टापत्तिमाह । यदिचेति । एवंच । बलवदनिष्टाननुबन्धित्वज्ञानस्यान्वयव्यतिरेकानुविधायित्वें च । विध्यर्थोऽपीति । प्रवर्तकज्ञानविषयस्यैव विध्यर्थतया बलवदनिष्टाननुबन्धीष्टसाधनत्व विशिष्टं कृतिसाध्यत्वं विशिष्टमेव विध्यर्थः । प्रत्येकशक्तिकल्पने नानार्थत्वापत्त्याविशिष्टे एव शक्तिरिति भावः । अत एवेति । विशिष्टस्य विध्यर्थत्वादेवेत्यर्थः । विशेषणाभावप्रयुक्त बलवदनिष्टाननुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यत्वाभावरूपो विशिष्टाऽभावोस्तीत्यर्थः । उपपद्यत इति । प्रत्येकं शक्तौ च कलंजभक्षणे इष्टसाधनत्व कृतिसाध्यत्वरूप विध्यर्थसत्वात्सामान्यतो विध्यर्थनिषेधबोधनेबाधात् । नकलंजंभक्षयेदित्यादिश्रुत्या भक्षणनिषेधात् । निषिद्धाचरणेचानिष्टोत्पत्त्याविध्यर्थं बलवदनिष्टाननुबन्धित्वांशे बाधात् । विशिष्टरूपविध्यर्थ निषेधः विशिष्टे शक्तिस्वीकारे शक्यसमर्थनमिति भावः । कथं तर्हीति । बलवदनिष्टाननुबन्धित्वस्य

निष्टाऽननुबन्धित्वादिति चेन्न श्येनो हि वधसाधनं न तु नरकसाधनं मानाभावात् श्येनाच्च वधो वधाच्च नरकमिति न तत्रास्तिकानां प्रवृत्तिरिति ननु श्येनो मरणानुकूलव्यापारत्वेन हिंसा साच नरकजनिकेतिचेत् नहि मरणानुकूलव्यापारमात्रं हिंसा कूपादौ विनष्टे गवि तत् कर्त्तुर्गोवधकर्त्तृत्वप्रसङ्गात् नापि मरणोद्देशेनानुष्ठीयमानत्वेन विशेषितं तत् गङ्गामरणसुद्दिश्यकृतत्रिसंख्यास्तवपाठादेरपि तत्त्वापत्तेः अदृष्टाद्वारा मरणानुकूलत्वं विवक्षितमिति चेन्न-

---

विध्यर्थत्वेहीत्यर्थः। श्येनेनेति। अभिचरन् वैरिवधाद्युत्कटकामनावान् श्येनेन यजेतेत्यर्थः। विधिप्रवृत्तिः। विधेः शाब्दबोधप्रयोजकत्वं। हिंसात्वेनेति। न हिंस्यात्सर्वभूतानि इत्यनेन हिंसामात्रस्यैव नरकसाधनत्वबोधनादिति भावः। मानाभावादिति। नरकसाधनत्वबोधकप्रमाणाभावादित्यर्थः। नच हिंसात्वमेव मानमिति वाच्यं। तस्य निरस्तत्वादिति भावः। ननु तर्हि नरकासाधनतया आस्तिकानामपि कथं न तत्र प्रवृत्तिरत आह। श्येनाच्चेति। आस्तिकानां नरकभीरूणां। तथाच श्येनस्य साचान्नरकासाधनत्वेऽपि नरकप्रयोजकत्वप्रतिसंधानादेव न तत्रास्तिकानां प्रवृत्तिरिति भावः। कथं मानाभाव इति शंकते। नन्विति। सा चेति। हिंसा चेत्यर्थः। नरकेति। न हिंस्यात्सर्वभूतानीत्यनेन नरकजनकत्वबोधनादिति भावः। विनष्टे इति। गवि विनष्टे सतीत्यर्थः। तत् कर्त्तुः। कूपकर्त्तुः। गोवधेति। कूपकर्त्तुः गोहिंसकत्वापत्त्या तस्यापि गोवधप्रायश्चित्तापत्तेस्तत्सम्भावनया न कस्यापि कूपकरणे प्रवृत्तिस्यादिति भावः। तदिति। मरणानुकूलव्यापारमात्रं हिंसा इत्यनुषज्यते। यत्र मरणोद्देशेन खड्गघातः तेन च मरणं न जातं तत्रापि हिंसकत्वापत्तेरतोमरणानुकूलव्यापारत्वमिति। तदर्थेऽपि मरणोपधायकव्यापारत्वं। तथाच कूपस्य मरणोद्देशेनाननुष्ठीयमानत्वान्नतत्कर्त्तुर्गोवधकर्त्तृकत्वमिति भावः। तत्त्वापत्तेः हिंसात्वापत्तेः। तथाच तस्यापि आत्मवधकर्त्तृत्वापत्तेरिति भावः। अदृष्टेति। तथाच मरणोद्देशेनाननु-

र्हि कथं श्येनस्यहिंसात्वमिति नव्यास्तुकृतिसाध्यत्वेसति बलवदनिष्टाननुबन्धीष्टसाधनता ज्ञानत्वेन बलवदनिष्टाननुबन्धिकृतिसाध्यत्वेसतीष्टसाधनताज्ञानत्वेन वेत्यत्र विनिगमनाविरहः। अस्तुतेनापि तेनापि रूपेण हेतुत्वमिति चेत्तर्हि

---

क्षीयमानत्वेसति अदृष्टाद्वारामरणानुकूलव्यापारत्वं हिंसात्वं। त्रिसंध्यास्तवपाठस्य अदृष्टद्वारा मरणानुकूलत्वेन न हिंसात्वमिति भावः। तर्हीति। अदृष्टाद्वारा मरणानुकूलत्वस्य विवक्षितत्वेहीत्यर्थः। कथमिति। श्येनेनह्निनाह्यमरणं जन्यते किन्तु कालान्तरे। तथाच तत्राऽदृष्टस्वीकारस्यावश्यकत्वात्। अदृष्टाद्वारामरणानुकूलत्वरूपं न हिंसात्वमिति तत्र च बलवदनिष्टाननुबन्धित्वस्याक्षततया श्येनेनाभिचरन् यजेतेति विधेर्नाप्रामाण्यमिति दिक्। प्राचीनमते स्वरसंप्रकाशयन् नव्यमतमाह। नव्यास्त्विति। विनिगमनाविरह इति। तथाच बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यताज्ञानत्वेन हेतुत्वे तेषां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण विशिष्टरूपेण न कारणत्वमिति भावः। नच त्रिशिष्टस्य वैशिष्ट्यमितिन्यायेन नावच्छेदकत्वं येन विशेषणविशेष्यभावे विनिगमना विरहस्यात्। किन्तु एकत्र द्वयमिति न्यायेन सर्वेषां विशेषणानां ज्ञान एव विशेषणत्वं। अवच्छेदकतायाः व्यासज्य वृत्तित्वाङ्गीकारात् इति वाच्यं। नाना सम्बन्धावच्छिन्नावच्छेदकतायाः एकस्याः असम्भवात्। महानसीय वह्न्यभावप्रतियोगितावच्छेदकतायाः एकस्या महानसीयत्ववह्नित्वे च स्वीकरे महानसीयत्वे समवायसम्बन्धावच्छिन्नावच्छेदकत्वप्रतीत्यापत्तेस्तस्याव्यासज्यवृत्तित्वस्य च वक्तुमशक्यत्वादिति दिक्। शङ्कते। अस्त्विति। तेन तेनापीति। बलवदनिष्टाननुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यताज्ञानत्वेन कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनताज्ञानत्वेन बलवदनिष्टाननुबन्धित्वविशिष्ट कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानत्वेन इष्टसाधनत्वविशिष्टकृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धिताज्ञानत्वेनापि रूपेण हेतुत्वमित्यर्थः। तर्हीति। कृतिसाध्यताज्ञानत्वादिना कृतिसाध्यताज्ञानत्वेन इष्टसाधनताज्ञानत्वेन बलवदनिष्टाननुबन्धित्वज्ञानत्वेनैव हेतुत्वमस्त्वीत्यर्थः। लाघवादिति। बलवदनिष्टाननुब-

कार्य्यताज्ञानत्वेनैव हेतुतास्तु लाघवात् वस्तुतस्तु कृतिसाध्यताधीत्वेनैव चिकीर्षांप्रति हेतुत्वं नन्वेवमिष्टाजनकेऽपि चिकीर्षा स्यादिति चेन्न स्यादेव सुखादौ। इष्टाजनकत्वेन ज्ञाते मण्डलीकरणादौ चिकीर्षा स्यादिति चेन्न उपायेच्छासामग्र्यभावात् केयमुपायेच्छासामग्रीति चेत् इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानञ्च बलवदनिष्ट-

---

न्धित्वे इष्टसाधनत्वे कृतिसाध्यत्वे च प्रत्येकरूपेणाहेतुत्वे गौरवात् विशिष्ट एव शक्तिः। विशिष्टरूपेणैव च हेतुत्व मित्येककार्यकारणभावेनैव निर्वाह इति नवाभिप्रायः। सत्त्वावच्छेदकतायाः व्यासज्यवृत्तित्वानङ्गीकारात् मिथो विशेषण विशेष्यभावे विनिगमनाविरहेण कार्यकारणभावद्वयावश्यकतया वच्छेदकगौरवाच्चासम्भवीति अवच्छेदकलाघवात प्रत्येकरूपेणैव हेतुत्वमुचितमिति भावः। चिकीर्षा द्वारा ज्ञानस्य प्रवृत्तिहेतुता तत्र चिकीर्षात्वावच्छिन्नं प्रति न विशिष्टरूपेण हेतुत्व किन्तु कृतिसाध्यताज्ञानत्वेनैवेत्याह वस्तुतस्त्विति। चिकीर्षांप्रतीति। चिकीर्षात्वावच्छिन्नंप्रतीत्यर्थः। इच्छायाः स्व समानप्रकारक धी साध्यत्व नियमात् कृतिसाध्यत्वप्रकारकेच्छां प्रति कृतिसाध्यत्वप्रकारक ज्ञानत्वेनैव हेतुत्वं नतु प्रत्येक त्रितयरूपेण त्रिशिष्टरूपेण वा। तेन रूपेण हेतुत्वे गौरवात्। मानाभावाच्चेति भावः। नन्वेवमिति। एवं। कृतिसाध्यताज्ञानत्वेनैव चिकीर्षात्वावच्छिन्नंप्रति हेतुत्वे। इष्टाजनकेपीति। कृतिसाध्यताज्ञानस्यतत्रापिऽ सत्वादिति भावः। स्यादेवेति। कृतिसाध्ये सुखादौ चिकीर्षाभवत्येवेत्यर्थः। तथाचेष्टापत्तिरिति भावः। शङ्कते। इष्टेति। मण्डलीकरणे इष्टसाधनत्वभ्रमकाले चिकीर्षाभवत्येवेत्यत इष्टाजनकत्वेन ज्ञात इति। मण्डलीकरणे फलतया चिकीर्षानोपादयितुंशक्यते सुखादि चिकीर्षांप्रति सुखादिज्ञानत्वेन हेतुत्वादिति उपायतया आपादनीया सा तु न सम्भवति विशेषणसामग्र्या फले जननीये सामान्य सामग्र्याः सहकारित्वादित्याह। उपायेच्छेति। उपायेच्छाया या सामान्यसामग्री तस्या अभावादित्यर्थः। शङ्कते। केयमिति। इष्टेति। कृत्यसाध्यवृष्ट्यादाविच्छानुरोधेन उपायेच्छात्वावच्छिन्नंप्रति इष्टसाधनताज्ञानत्वेन बलवदनिष्टाननुबन्धित्वज्ञानत्वेन हेतुत्वं सुखादौ चिकीर्षात्वावच्छिन्नंप्रति कृतिसाध्यताज्ञानत्वेन हेतुत्वंमण्डलीकरणे

साधनताज्ञानस्य प्रतिबन्धकं। इष्टसाधनत्वञ्च विद्यमाने-च्छाविषयोयस्तत्साधनं इच्छाविषयत्वञ्च स्वरूपसद्विशेषणां नतु तदथापि ज्ञानं कारणं। एवंचयद्ासुखादाविच्छापा-कादौ च सुखसाधनाधीस्तद्ापाकादाविच्छेति ध्येयमिति विध्यर्थोऽपीष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाजनक-त्वं च नतु विशिष्टं विशेषणा विशेष्यभावेन विनिगमना-विरहात् न कलञ्ज भक्षयेदित्यत्र कृतिसाध्यत्वेष्टसाधनत्व-

---

चिकीर्षा जायमाना उपायतयैवस्यात् साच न सम्भवति। उपायेच्छा सामान्य सामग्र्यभावादित्यर्थः। बलवदनिष्टानुबन्धित्वज्ञानं वा प्रतिबन्धकमिति बल वदनिष्टाननुबन्धित्वज्ञानस्य प्रतिबन्धकत्वे अप्रामाण्यनिश्चयत्वेनोत्तेजकतया तदभावव्याप्यतदभावावच्छेदकधर्मदर्शनादीनां प्रतिबन्धकत्वे च गौरवमेवा-चास्वरसो वाकारेण दर्शितः। विद्यमानेति। विद्यमाना या इच्छा तद्विषयो य स्तत्साधनत्वमित्यर्थः। स्वरूपसदिति। वस्तुगत्या यः इच्छाविषयस्तत्साधनता-ज्ञानं कारणमित्यर्थः। तस्यापि। इच्छविषयत्वस्याऽपि। एवं चेति। वस्तुग-त्यायदिष्टंतत्साधनताज्ञानं कारणमिति। सुखादाविच्छाशून्यकालेन पाका-दाविच्छोदय इति। ननु बलवदनिष्टाननुबन्धीष्टसाधनताकृतिसाध्यता ज्ञा-नादीनां प्रत्येकरूपेण हेतुत्वेऽपि विधेर्लाघवाद्विशिष्ट एव शक्तिरास्तामत आ-ह। विध्यर्थोपीति। प्रवर्त्तकज्ञानविषयस्यैव विध्यर्थतया येन रूपेण ज्ञानस्य प्रवर्तकता तेनैव रूपेण शक्तिरिति भावः। ननु येन रूपेण प्रवर्त्तकताते नैव रूपेण शक्तिरित्यत्र मानाभावात् लाघवाद्विशिष्टमेव शक्यमस्त्वित्यत आह। नत्विति विशिष्टं। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसा-ध्यत्वं। विशेषणेति। बलवदनिष्टाननुबन्धित्वविशिष्टे ष्टसाधनत्वविशिष्टकृति-साध्यत्वे शक्तिः उतकृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसा-धनत्वे बलवदनिष्टाननुबन्धित्वविशिष्ट कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे इष्ट-साधनत्वविशिष्ट बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वे वेति विनिग-मना विरहादवच्छेदकगौरवाच्च प्रत्येकरूपेणैव शक्तिरिति भावः। ननु न क-

स्य नञर्थे ऽनान्वयात्तस्य कार्य्यत्वादिष्टसाधनत्वाच्च किं- तु बलवदनिष्टाननुबन्धित्वस्य श्येनेनाभिचरन्यजेतेत्यत्र बल- वदनिष्टाननुबन्धित्वस्य नान्वयाबोधात् इष्टसाधनत्वकृति- साध्यत्वयोस्त्वन्वयस्याबाधादिति सङ्क्षेपः । सोऽयं वि- धिस्त्रिविधः । अपूर्व्वविधिर्नियमविधिः परिसंख्याविधिश्चे- ति । तदुक्तम् विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र

---

लंजभक्षयेदित्यत्र कलंजभक्षणे विध्यर्थस्याऽभावो बोधनीयः । विध्यर्थश्च प्र- त्येकमेवेति इष्ट साधनत्वस्य कृतिसाध्यत्वस्य च नञर्थेऽन्वये बाधापत्तिः । वि- शिष्टरूपेण शक्तौ तु बलवदनिष्टाननुबन्धित्वरूप विशेषणाभावाद्यत्र विशि- ष्टाभावसम्भवास्तत्रैव शक्तिरुचितेत्यत आह । नकलंजमिति । तस्य कलंज- भक्षणस्य । कार्यत्वात् । कृतिसाध्यत्वात् । इष्टेति । तथाचायोग्यत्वान्न तयोर्न- ञर्थेऽन्वय इति भावः । तर्हि कथं विध्यर्थाभावबोधनमत आह । किंत्विति । नहि यावद्विध्यर्थाभावेनञावोधयति भवन्मतेऽपि यावद्विशेषणाभावायत्र वि- शिष्टाभावासम्भवात् । तथाच यत्किंचिद्विधयर्थाभावबोधनेनैव सामंजस्यमि- ति भावः । विशिष्टरूपेण शक्तौ श्येनोवधसाधनं नतु नरकसाधनमिति तत्र विधयर्थाबाध उपपादितः श्येनाच्च बधो बधाच्च नरक इति प्रतिसंधाना- च्चास्तिकानां न तत्र प्रवृत्तिरित्युक्तं । तत्तु न सम्यक् । बलवदनिष्टाजनक- त्वस्यविधयर्थत्वे विधयर्थाबाधसम्भवेऽपि आस्तिकानां कथं न तत्र प्रवृत्तिः प्र- वर्त्तकस्य बलवदनिष्टाजनकत्वज्ञानस्य तत्र सत्वात् । बलवदनिष्टाप्रयोजक- त्वज्ञानस्य प्रवर्त्तकत्वे च बलवदनिष्टाप्रयोजकत्वस्यैव विधयर्थत्वेन कथं तत्र विधार्थबाध इत्यभिप्रेत्य प्रत्येकरूपेण शक्तौ विधयर्थाबाधं उपपादयति । श्येनेनेति । बाधादिति । बलवदनिष्टाप्रयोजकत्वरूपस्य तस्य बाधादित्यर्थः । अबाधादिति । बाधाभावरूपयोग्यता सत्वादित्यर्थः । ननु बलवदनिष्टेत्य- त्र बलवत्वं दुर्निरूप्य मत आह । संक्षेप इति । नांतरीयकदुःखव्यावृत्तब ल- वत्वमानुभाविकमित्यादि । रागिणां तु नरके बलवत्वाग्रहान्न तत्र प्रवृत्त्य- नुपपत्तिरिति हृदयं । विधिं निरूप्य तद्विभागमाह ।सोयमिति । क्रमेणल- क्षणान्याह । अपूर्वेति । तदुक्तमिति । अत्यंतमप्राप्तौविधि :अपूर्वविधिरित्य-

चान्यत्र च प्राप्तौ परिसंख्येति गीयते इति। उदाहरणानि। व्रीहीन् प्रोक्षति व्रीहीनवहन्ति पञ्चपञ्चनखाभक्ष्या इत्यादि

र्थ:। यथा व्रीहिषु प्रोक्षणस्याप्राप्त्या व्रीहीन् प्रोक्षतीत्यपूर्वविधि:। पाक्षिकेसति। पक्षे प्राप्तौ सत्यां नियमविधिरित्यर्थ: यथा व्रीहिषुतु पक्षेप्राप्तौसत्यां नियमविधिरित्यर्थ:। यथा व्रीहिषु तुषोपवापस्यावघातेनेव नखविदलनेनाऽपि सम्भवात्यक्षेऽवघातस्य प्राप्त्या अवघातेनैव तुषोपवाप: कर्तव्यो नतु नखविदलनादिनेति नियम्यते इति व्रीहीनवहंतीति नियमविधिरित्यर्थ:। तत्र चान्यत्र च प्राप्तौ यत्र नियम्यते सा परिसंख्या। यथा-पंचनखानां सर्वेषां भक्षणप्राप्तौ पंचैव पंचनखा भक्ष्या नत्वन्ये इति नियम्यते इति पंच पंचनखा भक्ष्या इति परिसंख्याविधिरित्यर्थ:। शशक: शल्लकीगोधा खड्गीकूर्मस्तु पंचम इति पंचनखा बोध्या:। ननुयाजनाध्यापनप्रतिग्रहै ब्राह्मणो धनमर्जयेदिति नियमविधिस्थे न तावत् धनार्जनं विधीयते तस्य रागप्राप्तत्वात्। नाप्यर्जनेयाजनाद्यन्वय:। कृष्याद्यन्वयवत्तस्यापि रागप्राप्तत्वात्। किंत्वप्राप्ते तरोपायनिषेध एवात्रविधेय:। एवं परिसंख्यायां पंच पंचनखभक्षणस्य रागप्राप्तत्वात्। तदितर पंचनखभक्षणनिषेधएव विधेय इति इतर व्यवच्छेद कत्वा विशेषान्नियमपरिसंख्ययो: को विशेष इति। तत्राहु:। यत्र क्रियायां विकल्पेन कारकान्वय: स नियम:। यथा धनार्जने याजनप्रतिग्रहाभ्यामेकस्यार्जनस्याऽसम्भवात् एकस्यां धनार्जनक्रियायां याजनादीनां मिलितानामन्वयासम्भवितया विकल्पेनैवान्वय: शशकादिमांसनिर्मितस्यैकपिण्डस्य सम्भवात् भक्षणक्रियायां मिलितानामन्वयसम्भव इति नियमपरिसंख्ययोर्भेद:। तदुक्तं। नियम: पाक्षिके सतीति। केचित्तु। इतरव्यवच्छेदस्यार्थत्वशाब्दत्वाभ्यां नियमपरिसंख्ययोर्भेद:। तथाहि। अर्जने उपायत्रय सम्बन्धस्य शब्दात्प्रतीतौ कृष्यादीनामनन्वय: अर्थात्सिध्यति येषामेकान्वयेऽपरानन्वयस्तेषां समुच्चयासम्भवात्तत्तरोपायव्युदासे शब्दतात्पर्यं कल्पते परन्तु धूमोस्तीति वाक्ये वन्हेरिव तस्याप्यर्थत्वं। परिसंख्यायां तुभक्षणक्रियायां पंचानामन्वय: सम्भवति इतरपंचनखव्युदासो नार्थ:। तत्र पंचानामपि समुच्चयसम्भवात्। किन्तु शाब्द एव एवंच भक्ष्यपंचनखपदयोर्विरोधि लक्षणया पंचेतरे पंचनखाभक्ष्या इति वाक्यार्थ; तथाच उपस्थितपदार्थपरित्यागादनुपस्थितप-

अत्र गुरवः नेष्टसाधनत्वं विध्यर्थः स्वर्ग्गकामो यजेतेति विधिना तस्य बोधयितुमशक्यत्वात् । तथाहि स्वर्ग्गकामस्येष्टसाधनं याग इत्यनेन बोध्यम् इष्टञ्चात्र कामस्यत्वेनोपस्थित स्वर्ग्ग एव नचेदं शक्यं साक्षात्साधनत्वस्याशुविनाशित्वेनासम्भवात् नच परंपरया स्वर्ग्गसाधनत्वं बोध्यं परंपराघटकाऽपूर्व्वानुपस्थितेः नापि कार्य्यत्वं स्वर्ग्गकामिकार्य्यत्वस्य यागे

---

दार्थकल्पनादभाव विधित्वाच्च नियमापेक्षया दोषत्रयवती परिसंख्येत्याहुः । तच्चिंत्यं । याजनादि जन्यार्जने इतरव्यवच्छेदस्यार्थत्वेऽपि कृष्यादिभिर्नार्जयेदित्यस्याप्राप्तत्वानियमेऽपि इतरव्यवच्छेदस्य शाब्दत्वावश्यकत्वात् स्वार्थत्यागः परार्थस्वीकारः प्राप्तबाधश्चेतिदोषत्रयं । इतरथा तु कृष्यादिभिरर्जयेदेव तज्जन्यार्जने तत्सम्बन्धव्युदासाभावादितिनेष्टसाधनत्वादौ विधेः शक्तिः किन्तु कार्येऽपूर्वं एवेति प्राभाकरमतमाह: । अत्र गुरवइति । तस्य । इष्टसाधनत्वस्य । बोधनाशक्यत्वमेवाह । तथाहीति । स्वर्गकामस्येति । स्वर्गकामस्य यदिष्टं तत्साधनं याग इति । अनेन विधिना । बोध्यं बोधनीयं । ननु विधिना सामान्यतः इष्टसाधनत्वे बुद्धेपि कुतः स्वर्गरूपेष्टसाधनत्वबोधः इत्यत आह । इष्टं चात्रे ति । स्वर्गएवेति । स्वर्गकामपद समभिव्याहारात् स्वर्गरूपमिष्टं सिद्ध्यति । प्रतीतिस्तु इष्टत्वेन पदार्थैकदेशयोरप्यभेदान्वयस्वीकारे तु स्वर्गत्वेन तथाच स्वर्गभिन्नेष्टसाधनं यागइतिबोध्यमिति भावः । नचेदमिति । स्वर्गसाधनं याग इति बोधयितुं न शक्यमित्यर्थः । साक्षात्साधनत्वस्य । साक्षात्स्वर्गसाधनत्वस्य । आशुविनाशित्वेन । तृतीयक्षणवर्तिध्वंसप्रतियोगित्वेन । असम्भवादिति । यागाख्येच्छाविषयात्मकतया तृतीयक्षणेनष्टतया कालान्तरभावि स्वर्गाव्यवहित पूर्ववर्ति त्वासम्भवादित्यर्थः । नचेति । साधनत्वं हि द्विविधं साक्षा त्परपरं याचेति साक्षात्स्वर्गसाधनतया बाधेऽपि परंपरया स्वर्गसाधनता बोधेब (?)धकाभावादिति भावः परंपरेति । परंपरया स्वर्गसाधनत्वं हि स्वर्गसाधन पूर्वसाधनत्वं तच्च स्वर्गकामो यजेतेति वाक्य प्रवृत्तेः पूर्वमपूर्वानुपस्थित्या दुर्ग्रहमिति भावः । कृतिसाध्यत्वमपि न विध्यर्थं इत्याह । नापीति । कार्य्यत्वंकृतिसाध्यत्वंनविध्यर्थइत्यर्थः ।

बोधयितुमशक्यत्वात् तथाहि शाब्दे योग्यताज्ञानं हेतुः। योग्यताचान्वयप्रयोजकरूपवत्त्वम् अतएव सेकान्वयप्रयोजकं रूपं द्रवद्रव्यत्वम् जलेऽस्तीति तद्योग्यं वन्हौच नास्तीति तदयोग्यम् प्रकृतेच कामिकार्य्यत्वान्वये इष्टसाधनत्वमन्वयप्रयोजकम् नच तद्ग्रहीतुंशक्यमिष्टम् अन्वयप्रयोजकस्य काम्यसाधनत्वस्य विरहात् तस्मात्कार्य्यमपूर्व्वमेव विध्यर्थस्तस्मिंस्थयागस्य विषयतयान्वयः नन्वपूर्व्वस्य पूर्व्वमनुपस्थितत्वात्तत्र शक्तिग्रहोऽनुपपन्नः। अथ कार्य्यत्वेन का–

स्वर्गकामीति। इष्टसाधनत्वस्य बोधकत्वे स्वर्गकामस्येष्टसाधनं याग इति बोधंः। कृतिसाध्यत्वस्य बोधकत्वे तु स्वर्गकामीयकृतिसाध्यो याग इति बोधनीयं तच्च न सम्भवतीति भावः। तदेवोपपादयंति। तथाहीति। शाब्दे। शाब्दबोधे। बाधाभावस्य योग्यतात्वे प्रकृतानुपयोग इत्यत आह। योग्यताचेति। अतएव अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वादेव। तद्योग्यमिति। पयसा सिंचतीति वाक्यं योग्यमित्यर्थः। नास्तीति सेकान्वयप्रयोजकं द्रवद्रव्यत्वं नास्तीति तदयोग्यं। वन्हिना सिंचतीतिवाक्यमयोग्यमित्यर्थः। नन्वस्तु शाब्दबोधे योग्यताज्ञानं कारणं आस्तां चाऽन्वयप्रयोजकरूपवत्वमेव योग्यता ततः किमत आह। प्रकृतेचेति। स्वर्गकामोयजेतेत्यत्र च। कामीति। कामिकृतिसाध्यत्वस्यान्वयप्रयोजकं रूपमिष्टसाधनत्वमेव। तद्ग्रह एव च कामिकार्यत्वस्य शाब्दबोधो भवेत्। नच तत् इष्टसाधनत्वं ग्रहीतुं शक्यं। इत्युक्तमिति। आशुविनाशित्वात् साक्षात्साधनत्वस्य परंपरा घटका पूर्वानुपस्थित्या च परंपरासाधनत्वस्य ग्रहीतुमशक्यत्वादित्युक्तमित्यर्थः। स्वमतमाह। तस्मादिति। इष्टसाधनत्वस्य कृतिसाध्यत्वस्य च बोधयितुमशक्यत्वाद्विध्यर्थत्वासम्भवादित्यर्थः। कार्यमिति। कार्यमेव विध्यर्थः। तच्च प्रकृते। अपूर्वमेव पर्यवस्यतीत्यर्थः। अन्वयप्रकारमाह। तस्मिंश्चेति। कार्यरूपे विध्यर्थे। विषयतयेति। यागविषयकं कार्यमितिबोध इति भावः। अनुपस्थितत्वादिति। पूर्वमुपस्थितत्वे चापूर्वत्वव्याघातः। अपूर्वत्वं हि पूर्वाप्रतीतत्वमितिभावः। तत्र। कार्ये अपूर्वे शक्तिग्रहः। विधिशक्तिग्रहः। अथेति। न लिङः कार्येऽपूर्वो एव

र्य्यसामान्य एव शक्तिग्रहः वेदस्थले च योग्यतावशादपू-र्व्वस्य लाभः नहि यागविषयकमन्यत्कार्य्यं भवतीति चेन्न। स्वज्ञानादेरपि सम्भवात्। उच्यते। कार्य्यं तावत्स्वर्गकामस्या-न्वयो नियोज्यनियोजकभावसम्बन्धेन कामी नियोज्यः नि-योजकञ्च कार्य्यमतः कार्य्यं नियोज्यनियोजकत्वमेव स्वर्गकाम-स्यान्वयः नियोजकत्वञ्च तत्कामिकार्य्यतया प्रतीयमानत्वं। तत्र चान्वयप्रयोजकं काम्यसाधनत्वं नहि कामी काम्याद-न्यत् काम्यसाधनत्वेनाज्ञातं कार्य्यतयाऽवैति नच काम्य-साधनं काम्यासाधनत्वेन ज्ञायते अन्यथा व्याप्तेरनभ्युपग-

---

शक्तिः। किन्तु कार्यत्वेन रूपेण घटपटादिरूपकार्यसामान्य एव। तत्रैव श-क्तिग्रहः। ननु विधिजन्यबोधे कार्यत्वेन घटादेरेव भानापत्त्या कथमपूर्वप्र-तीतिरत आह। योग्यतेति। नहीति। अन्यदिति घटादिरूपकार्यस्य याग-विषयकत्वाभावादिति भावः। स्वज्ञानादेरपीति। स्वं पुरुषः। तदीयज्ञानस्य यागविषयकत्वात्। तथाच कथमपूर्वलाभ इति भावः। कार्यमिति। कार्य-त्वरूपेण घटपटादावेव शक्तिग्रहः। ततः यागविषयकं कार्यमिति बोधे स्वर्ग-कामस्यापि नियोज्यनियोजकभावसम्बन्धेन कार्येऽन्वयादपूर्वलाभः। ननु किं नियोज्यं किं नियोजकमत आह। तच्चेति। नियोजकत्वं चेति। तत्कामीति। स्वर्गकामकृतिसाध्यत्वेन प्रतीयमानत्वं कृतिसाध्यत्वं चापूर्वे यागद्वारा। ननु कामिकार्यतया प्रतीयमानत्वं ज्ञानादावपि सम्भवतीत्यत आह। नहीति। सुखादेरपि कार्यत्वेन प्रत्ययादुक्तं काम्यादन्यदिति। अवैतीति। तन्मते अन्व-यप्रयोजकरूपवत्त्वस्यैव योग्यतात्वेन योग्यतायाश्च शाब्दे भानात्साध्यत्वसा-धनत्वयोर्विरोधेऽपि कामिकार्यत्वान्वये इष्टसाधनताज्ञानविशेष्यत्वस्यैवाऽन्व-यप्रयोजकतया काम्यसाधनताज्ञानस्यावश्यकतया ज्ञानादेः स्वर्गसाधनत-याऽज्ञानान्न तत्र कामिकार्यतया प्रतीतिरितिभावः। ननु ज्ञानादेरपि इष्ट-साधनत्वभ्रमसम्भवात्कामिकार्यतया प्रतीतिः सम्भवत्येवेत्यत आह। नचेति। काम्यासाधनं ज्ञानादि काम्यसाधनत्वेन न ज्ञायते इत्यर्थः। ननु प्रमाविर-

मात् । नच ज्ञानं काम्यस्य स्वर्गस्य साधनं सम्भवतीत्यतो-योग्यताबाधापादनविषयकं कार्य्यं स्वर्गकामीयं स्वर्गका-मो यागविषयककार्य्यवानित्येवं वानुभवो भवन् योग्यतया

---

ऽपि भ्रमःस्यादेवेत्यत आह । अन्वयेति । ननु तथापि ज्ञानस्यापि स्वर्गसाधनतया तद् ज्ञानसम्बन्धेन कामिकार्यतया प्रतीतिसम्भवात्कथं न तत्र योग्यतेत्यत आह । नचेति । नहीत्यर्थः । यागेति । स्वर्गकामनियोज्यकं यागविषयकंकार्यमित्यन्वयबोध इति भावः । प्रथमांतार्थ मुख्यविशेष्यक बोधाभिप्रायेणाह । स्वर्गकाम इति । कार्यवत्वंच नियोज्यनियोजकभावलक्षणसम्बन्धेन । योग्यतयेति । स्वर्गकामनियोजकस्य यागविषककार्यस्यान्यस्यासत्त्वेनापूर्वलाभ इत्यर्थः । ननु कामिकार्यतान्वये इष्टसाधनत्वस्यान्वयप्रयोजकतया, पूर्वानुपस्थित्या तत्रेष्टसाधनताज्ञानासम्भवात् कथं स्वर्गकामनियोज्यकं यागविषयकंकार्यमिति प्राथमिको बोध इति चेत् नहि बोधनीये योग्यताज्ञानंकारणं किंतु तत्पदार्थतावच्छेदकावच्छिन्ने यत्र कुत्रचित् तदज्ञानं मृग्यते तच्च पचेत्यादौ कामिकार्ये इष्टसाधनत्वावगमादक्षतमिति । ननु पदार्थस्य पदार्थयोग्यतायाश्च शाब्दबोधे भानमुपेयते तत्रेष्टसाधनत्वस्य स्वर्गकामिनियोज्यकत्वं योग्यतात्वेन कथमिष्टसाधनत्वमविषयीकृत्य तज्ज्ञानमितिचेत्सत्यम् । स्वर्गसाधनीभूतापूर्वसाधनत्वमेव हि यागे स्वर्गसाधनत्वमित्यपूर्वे स्वर्गसाधनत्वभानस्यावश्यकतया शब्दानुपस्थितस्यापि अर्थाध्याहारवादिनमते भानोपगमात् नहि प्रथमांतेऽपि यागविषयककार्ये स्वर्गसाधनत्वबोधो नाभ्युपेयत इति । किन्तु अस्थिरत्वात् क्रियायां क्षतिसाधकत्वान्वयात्मागिष्टसाधनत्वबोधो न सम्भवतीति तन्मतनिगर्वात् । अथ स्वर्गसाधनं स्वर्गकामनियोज्यकं यागविषयककार्यमिति प्राथमिकोबोध इति तन्मतसिद्ध तच्च न सम्भवति । अन्वयप्रयोजकरूपवत्वरूपयोग्यताज्ञानस्य शाब्दबोधहेतुतया कथं युगपदेवेदृशोबोधः । स्वर्गसाधनत्वबोधानंतरं क्षतिसाधकत्वस्य बोध इति तन्मतनिगर्वादिति चेत् तन्मतेहि असंसर्गाग्रहसहितोपस्थितेरपि विशिष्टबुद्धिकार्यकारित्वोपगमात् स्वर्गसाधनत्व स्वर्गकामनियोज्यत्वादीनां पूर्वमनुपस्थितानामसंसर्गाग्रहत्वादेव शाब्दबोधे भानसम्भवात् । तद्योग्यताविषय-

क तत्पदार्थविषयक शाब्दबोधस्य तन्मतेऽलीकत्वादिति। ननु तथापि साध्यत्वसाधनत्वयोर्विरोधात्कथं स्वर्गसाधनत्वकृतिसाध्यत्वयोरपूर्वे एकज्ञानविषयत्वं ननु यागे इति चेत्। वैदिकस्थले एकविशिष्टेऽपरान्वय इतिहि उत्सर्गः। उद्देश्यतावच्छेदकसमानकालीनत्वं विधेये भासत इत्यपि नियम इति इष्टसाधनत्वमुद्देश्यतावच्छेदकीकृत्य कृतिसाध्यत्वस्य विधेयतया भानं न सम्भवति। सिद्धावस्थधर्मः साधनत्वमसिद्धावस्थधर्मः साध्यत्वमिति। प्रकृतेतु एकविशिष्टेऽपरवैशिष्ट्यमितिन्यायेनेष्टसाधनत्वकृतिसाध्यत्वयोर्भानासम्भवेऽपि एकत्र द्वयमिति न्यायेन यागविषयकंकार्यमिष्टसाधनमित्यन्वयबोधे बाधकाभावः। आख्यातार्थमुद्देश्यतावच्छेदकीकृत्य बोधानुपगमात्। अन्यथा पचन् गच्छतीतिवत् पचति गच्छतीत्यत्रापि शाब्दबोधापत्तेः। नन्वेवं यागेपि इष्टसाधनत्वकृतिसाध्यत्वयोरेकत्रद्वयमिति न्यायेन भानस्य सम्भवेन कथं यागमादाय तयोर्विरोध इति वाच्यं। तत्र यागस्य प्रकृत्यर्थतया प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन एकविशिष्टेऽपरवैशिष्ट्यमिति न्यायेनैवान्वयबोधस्य व्युत्पत्तिसिद्धत्वान्नत्वेकत्रद्वयमिति न्यायेनापि अत एव तिलकीकर्मकुर्वीतेत्यादौ तिलकविशिष्टे कर्मकरणवैशिष्ट्यमिति न्यायेनैव बोधोदयात्कर्मकरणे नियमेन तिलकसमानकालीनत्व भानात् तिलकशून्यकालीनत्वकर्मकरणस्य नैष्फल्यं। यदि चैकत्रद्वयमिति न्यायेनापि शाब्दबोध इष्यते तदा तस्य नैष्फल्यानापत्तिरिति। आख्यातार्थोद्देश्यतावच्छेदकशाब्दबोधानुपपत्त्यात्र विधिप्रत्ययस्थले एकत्र द्वयमिति न्यायेन बोधे बाधकाभाव एव। ननु च वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेदित्यादौ पुत्राभाव समानकालीनत्वं पुत्रबाधितमिति कथं विशिष्टवैशिष्ट्यमिति न्यायेन बोधे उत्सर्गं इति चेत्। तत्र नञो विरोधिलक्षणया पुत्रविरोधिनी पुत्रेच्छार्थः स्वविषयसिद्धत्वस्येच्छान्निरोधित्वात्। तथाच पुत्रेच्छासमानकालीनत्वं पुत्रे भासत इति न काप्यनुपपत्तिरिति दिक्। अत्र स्वर्गकामो यजेतेत्यादौ प्रथमतः यागविषयकं कार्यमिति प्रथमो बोधः। यागविषयकंकार्यं स्वर्गसाधनमिति द्वितीयो बोधः। स्वर्गसाधनं यागविषयककंकार्यं स्वर्गकामनियोजकमिति तृतीयो बोधः। स्वर्गसाधनं स्वर्गकामनियोज्यकं यागविषयकंकार्यं स्वर्गकामकृतिसाध्यमिति तुर्य्योबोधः। ततश्चापूर्वे कृतिसाध्यत्वं यागे कृतिसाध्यत्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानसहकारेण स्वर्गसाधनं स्वर्गकामनियोज्यको

यागः स्वर्गकामकृतिसाध्य इत्यादौपादानिक यागविशेषकः पंचमोबोधः स-
एव च प्रवर्त्तकः । उपादनमनुपपत्ति ज्ञानं तत्सहकृतशब्देनजनितोबोध औ-
पादानिक इत्युच्यते इति केचिदाहुः । काम्यसाधनता धीजन्यममेदं कार्यता-
ज्ञानवत् पुरुषकार्यं यागविषयकमिति प्रथमो बोधः । ततो ममेदं यागवि-
षयकंकार्यमिति द्वितीयो बोधः । अयमेव च नियोज्यत्वेन पुंसो अपूर्वेऽन्व-
यः । अपूर्वजनिका कामिकृतिस्तावन्नभवति यावद्यागविषया न भवति कृ-
त्यंतरात्तदनुपपत्तेः । कामिकृतिश्च यागविषया न तावद्भवति । यावद्यागः
काम्यसाधनत्वेन न ज्ञायते काम्यसाधनत्वेन ज्ञायमान एव कामिकार्यत्व-
नियमादित्येतादृश विमर्शानंतरं काम्यमानस्वर्गसाधनं स्वर्गसाधनताज्ञा-
नजन्यकार्यताज्ञानवत्स्वर्गकामकार्यो याग इति तृतीयो बोधः । अत्र चा-
धिकारित्वेन पुरुषान्वयः । काम्यस्वनिष्ठस्वर्गे न क्रियाकार्यत्वावगमात् ततो
यागकृतिः कर्त्तारं विनाऽनुपपन्नेत्यऽनुपपत्तिज्ञानवत्वात्स्वर्गकामो याग-
कर्त्तेति तुर्य्योबोधः । स्वर्गकामस्य इदं कार्यं अहमपि स्वर्गकामस्ततो ममेदं-
कार्यमिति युक्तिपुरःसरं यागी यष्टुः प्रतिसन्धानं पञ्चमोबोधः । विधेः प्रवृत्ति
निर्वाहकतया तावत्पर्यंतं नाकांक्षाया अपिऽपरिपूर्तेः पंचैव शाब्दानीति ब-
हवः । मदंशोपरागेण बोधद्वयमानुमानिकं बोधत्रयमेव शाब्दमिति नव्याः ।
मदंशस्य शाब्दे प्रवेशेऽपि प्रथमं यागविषयकंकार्यमित्येव बोधो नतु स्वर्गका-
मस्य तत्र प्रवेशः अन्योन्याश्रयापत्तेः । तत उक्तबोधपंचकमिति षडेव बोधा
इत्यपि प्राहुः । स्वर्गकामनियोज्यकं यागविषयकं कार्यं स्थायि स्वर्गसाधनत्वेन
ज्ञायमानमिति प्रथमो बोधः । नतु/ स्वर्गसाधनंमिति स्वर्गकामनियोज्यत्व-
स्य स्वर्गकामस्येदंकार्यमिति बोधरूपतया तत्राज्ञायमानस्येष्टसाधनत्वस्या-
न्वयप्रयोजकत्वाभावात् इष्टसाधनत्वज्ञानाभावे कृतिसाध्यत्वज्ञानानुदयाच्चे-
ति । इदं च ज्ञानमपूर्वविषयप्रयोजकं नतु यागविषयकं तस्यास्थिरत्वेन तच्चे-
ष्टसाधनत्वस्य दुर्ग्रहत्वात् ततो मन्नियोज्यकं इदं कार्यं स्थायि स्वर्गसाधनत्वेन
ज्ञायमानमिति पुनरपूर्वविषयकं मदंशोपरागेण ज्ञानं द्वितीयं । नतु संनियो-
ज्यकं कार्यमित्याकारकं तत् सर्वत्रैवकार्यबोधे नियोज्यकत्वस्थायित्वस्वर्गसाध-
नत्वानां योग्यतावच्छेदकानां भानस्यावश्यकत्वात् । अपूर्वे कृतिसाध्यत्वं च
यागे कृतिसाध्यत्वंविनाऽनुपपन्नं यागविषयाकृतिश्चेष्टसाधनताज्ञानंविनाऽनु-
पपन्ना । नहि कामीकाम्यादन्यत्काम्यसाधनतयाऽज्ञायमानं कार्यतयाऽवैती-

ति यागे इष्टसाधनत्वमुपादानेनावगत्य यागकाम्यमानस्वर्गसाधनत्वेन ज्ञायमानोऽधिकारी भूतस्वर्गकामस्य नियोज्यस्य कार्यमित्येवं तृतीयं ज्ञानं यागविषयकं अयमेवचाधिकारित्वेनान्वयः। ततश्च चैत्रः पचतीत्यादाविव स्वर्गकामः यागानुकूलकृतिमानिति स्वर्गकाम्यविशेष्यकश्चतुर्थो बोधः ततः स्वर्गकामस्येदं कार्यं अहमपि च स्वर्गकामः तस्मान्ममेदं स्वर्गकामस्य नियोज्यस्य कार्यं स्वर्गसाधनत्वेन ज्ञायमानमिति बोधपंचकमित्याहुः। केचित्तु। इदानीं तनत्वांतर्भावेण कृतिसाध्यता ज्ञानस्य विधितः साक्षादसम्भवितया परंपरयैव विधिजन्यज्ञानस्य प्रवर्त्तकत्वेन यागे कृतिसाध्यताज्ञानमपि न शाब्दं किंत्वौपादानिकमनुमित्यात्मकमेवेत्याहुः। तच्चिंत्यं। यागे कृतिसाध्यताज्ञानं विधिना जनयितुं न शक्यते तत्रेष्टसाधनत्वस्यान्वयप्रोजकतया परंपराघटकापूर्वोपस्थितिं विना तज्ज्ञानासम्भवादपूर्वेशक्तिरिति तन्मतं तत्र यदि यागे कृतिसाध्यताबोधो न शाब्दः। तर्हि कथं तद्बोधार्थं योग्यताज्ञानसम्पत्त्यर्थमिष्टसाधनताज्ञानसम्पादनाया पूर्वेशक्तिरिति न जानीम इति दिक्। परेतु। नियोज्यस्वर्गकामीयं स्वर्गसाधनत्वेन ज्ञायमान स्थायियागविषयकं कार्यमिति प्राथमिको बोधः। नियोज्यत्वं योग्यतात्वेन स्वर्गकामे प्रकारतया स्वर्गकामस्य संसर्गतयापि भासते। ततः अपूर्वं कृतिसाध्यत्वं यागे कृतिसाध्यत्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानात् प्रतीतापूर्वघटितकाम्यसाधनताज्ञानसहितात् स्वर्गकामीयः स्वर्गसाधनत्वेन ज्ञायमानः यागः कार्यं इति द्वितीयो बोधः। ततः कृतिराश्रयं विनानुपपन्नेत्यनुपपत्तिज्ञानात् स्वर्गकामः स्वनियोज्यकस्वर्गसाधनत्वेन ज्ञायमानकार्ययागानुकूलकृतिमान् स्वर्गकामः स्वनियोज्यकस्वर्गसाधनत्वेन ज्ञायमानकार्ययागानुकूलकृतिमान् स्वनियोज्यकस्वर्गसाधनत्वेन ज्ञायमानकार्ययागानुकूलव्यापारवान् वेति तृतीयो बोधः। ननु क्रियानुकूलव्यापारवत्त्वस्य कर्तृरूपतया यागे स्वर्गकामकृतिसाध्यत्वे प्रतीते तत्कर्तृत्वस्यापि प्रतीतिर्जातेति तृतीयबोधवैयर्थ्यमिति चेन्न। व्यापारमात्रशक्तस्याख्यातस्य व्यापारबोधकतया व्यापारस्य कर्तृसाकाङ्क्षत्वात्। प्रथमांतार्थविशेष्यकबोधस्य व्युत्पत्तिसिद्धत्वाच्च अत एव तत्रैवाख्यातार्थसंख्यान्वय इति ततश्च नानभिज्ञतः कर्त्तेति न्यायेनावगतं स्वर्गकामस्य कर्तृत्वं यागजन्यफलभोक्तृत्वरूपाधिकारित्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानात् स्वर्गकामो यागजन्यफलभोक्तेति चतुर्थो बोधः। ततश्च विधिः प्रवर्त्तक-

त्वं प्रवर्त्तकज्ञानजननं विनानुपपन्नमित्यनुपपत्तिज्ञानात् स्वर्गकामस्य यागः कार्यः स्वर्गकामस्य यागः कार्य्यं स्वर्गकामोयागस्य कर्ताभोक्ताचाऽहमपि च स्वर्गकाम इति प्रतिसन्धाय यागो मत्कृतिसाध्य अहं च यागकर्ता अधिकारीति प्रवर्त्तकं पञ्चमं ज्ञानमुत्पद्यते इति प्राभाकरमतमेवं वर्णयंति। ननु परमापूर्वं वाच्यं कलिकापूर्वाणि तु कल्प्यानीति तेषां सिद्धान्तः स च कथं सङ्गच्छते तथाहि। अमावास्यायाममावस्यया यजेत पौर्णमास्यां पौर्णमास्यायजेतेति दर्शपौर्णमास यागौ विहितौ तदुत्पत्तिविधयश्च षट् यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति उपांशु यागमंतराय जतिताभ्यामेवाग्नीषोमीयमेकादशकपालं पौर्णमास्यां प्रायच्छत् ऐंद्रदधिभवत्यमावास्यायां ऐंद्रं पयोभवत्यमावास्यायामित्यनेनाग्नेयो अष्टाकपालउपांशु यागः। अग्नीषोमीय एकादशकपालः पौर्णमास्यां आग्नेयोऽष्टाकपाल ऐंद्रदधियागः। ऐंद्रं पयोयाग अमावास्यायां विहिताः एतेषां षषां दर्शपौर्णमास यागानां क्षणिकतया स्वर्गंप्रतीव परमापूर्वंप्रत्यपि साक्षाद्धेतुत्वासम्भवेन कलिकापूर्वस्यापि वाच्यत्वमुपेयमिति चेत्। अत्रोच्यते। फलस्योत्कटरागगोचरतया फलपूर्णत्वसफलशिरस्काऽपूर्वबोधक काम्यविधेरेवादौ प्रवृत्तिः। तेन च यागे साक्षात्स्वर्गसाधनत्वस्य बोधयितुमशक्यत्वात् परम्पराघटकापूर्वं बोधिते तदुत्तरं उत्पत्तिवाक्येभ्यः षषां आग्नेयादीनां नियोगसाधनताबोधः तावत्कालस्थायिव्यापारकत्वरूपयोग्यता ज्ञानसम्भवात्। ततश्चाग्नेयादीनां षषामाशुविनाशितया परमापूर्वंकृत्यव्यापारकत्वंबोधे कलिकापूर्वाणिकल्प्यंते तद्द्वारा च तेषां परमापूर्वसाधनत्वमिति। अथ प्रधानविधिना परमापूर्वंबुद्धे आग्नेयादीनां परमापूर्वसाधनता उत्पत्तिवाक्यैः प्रतीयते। परमापूर्वसाधनतायाश्च साक्षादसम्भवितया कलिकापूर्वाणिकल्प्यंते इति तत्सिद्धान्तः। तन्नु कथमुपपद्यते। तथाहि। यथा आशुविनाशितया यागेन स्वर्गसाधनताबोधस्तथा परमापूर्वसाधनतापि दुर्घटा। नहि परमापूर्वमाग्नेयादीनां प्रत्येकंव्यापारः तथा तत् द्वारा स्वर्गसाधनतानिर्वाहोऽपि कथं। परम्परा घटकापूर्वानुपस्थित्या परमापूर्वंप्रति श्रीरामश्रीराम परम्परया साधनत्वस्य दुर्ग्रहत्वात्। यागत्वावच्छिन्ने परमापूर्वसाधनत्वग्रहसम्भवेऽपि पदार्थतावच्छेदकाग्नेयत्वाद्यवच्छिन्ने तावत्कालस्थायि व्यापारकत्वस्याग्रहात् सामन्यतो दृष्टत्वात् तथा कल्पने कालांतरभाविफलजनकाशुविनाशित्वावच्छिन्ने तावत्कालपर्य्यन्तस्थायि व्या-

पारकत्वस्यानुभवे दृष्टत्वात्परमापूर्वस्यापि वाच्यत्वं दुर्घटंस्यादिति। अचोपाध्यायाः। षण्णां षट्पुरुषक्रियमाणानां यौगपद्यसम्भवादयोग्यता धीर्नसम्भवतीति तदुत्तरं चैककर्तृकत्वेऽवगते प्रथमावगतस्वर्गसाधनत्व निर्वाहकतया कलिकापूर्वाणिकल्प्यंत इति। तत्तु चिंत्यं। प्रथमं तेषामेककर्तृकत्वस्य भिन्नकालीनत्वस्यच पाणिपिहितत्वा भावादिति। नवीनास्तु। काम्यविधिना कार्यत्वेन परमापूर्वबुद्धे आग्नेयादीनां कार्यत्वेनोपस्थितं प्रतिहेतुता बुद्ध्यते। कार्यस्याव्यवहितोत्तरक्षणेपि संभवान्न कालांतरभावित्वप्रतिसंधानं तत्र। स्वर्गस्यच देहांतरोपभोग्यत्वप्रतिसंधानात् न यागे साक्षात्तज्जनकत्वबोधसंभवः। एवमाग्नेयादि न साक्षात्परमापूर्व जनकमिति बाधग्रहेपि साक्षात्कर्मजनकमिति ग्रहे बाधकाभावश्च समानप्रकारक बाधबुद्धेरेव प्रतिबंधकत्वात् ततश्च कार्यांतरजनकत्वबाध प्रतिसंधाने परमापूर्वरूप कार्यजनकत्वमेव ग्राह्यं। तच्च सर्वोदीच्यतया कालांतरीणत्वेन साक्षात्तज्जनकत्वासंभवात्परंपरयैव जनकत्वमिति कलिकापूर्वाणि कल्प्यंत इत्याहुः। अत्रच दर्शत्रिकेणाकलिकापूर्वत्रिक सहकृतेनैकं समुदायापूर्वं जन्यते। एवं पौर्णमासत्रिकेणाप्रत्येक कलिकापूर्वत्रिक सहकृतेनैकं समुदायापूर्वं जन्यते। दर्शत्वेन पौर्णमासत्वेन च हेतुता लाघवात् निरपेक्षसाधनत्वस्यच तृतीयार्थत्वात्ताभ्यां च समुदायापूर्वाभ्यां फलशिरस्का पूर्वं स्वर्गजनकं जन्यते इति। न वापूर्वी वादः। तत्रकेचिदाहुः। प्रथम त्रितयांतर्गतस्य चरमप्रधानस्य साक्षादेवसमुदायापूर्वजनकत्व संभवे तज्जन्य कलिकापूर्वे मानाभावः। एवंच कलिकापूर्वद्विक सहितेन दर्शत्रिकेना। एवं कलिकापूर्व द्विकसहकृतेन पौर्णमासत्रिकेनासमुदाया पूर्वं जन्यते ताभ्यां समुदायापूर्वाभ्यां फलशिरस्कापूर्वं जन्यते इति सप्तापूर्वी वाद एवेति। अन्येतु। पंचजन्यापूर्व सहकृतश्चरमः साक्षादेव परमापूर्वं जनयतु किं तज्जन्यापूर्वस्वीकारेण। तेन पंचापूर्व संस्कारेण स्वाव्यवहितोत्तरक्षण एव परमापूर्वजनन संभवात्। यदिच षड्पूर्वी स्वीकारस्तदा तेषामेव साक्षात्स्वर्गजनकत्व संभवात्कथं परमापूर्वसिद्धिः। ननु षण्णां प्रत्येकमहेतुतया मिलितानां हेतुत्वं मिलनंच पंचानामिव षष्ठस्यापि व्यापारद्वारेव। अन्यथा केषांचिद्व्यापारतः कस्यचित्साक्षादिति नानाविधतया मिलनस्य प्रयोजकत्वे गौरवादननुगमाच्च। एवं फलस्योत्कटरागगोचरतया फलबोधकपद समभि-

व्याहृत प्रधानविधेरेव प्रथमप्रवृत्तत्वात् प्रधानस्य चाशुविनाशितया परमापूर्वं जनकत्वेस्थिते पश्चादुत्पत्तिवाक्यानां प्रवृत्तिरिति नवैः षड्पूर्वैः प्रथमक्लृप्तैकविध परमापूर्वस्यान्यथासिद्धिरुपजीव्य विरोधादिति चेन्न । क्लृप्तप्रत्येकधर्मावच्छिन्नकारणताकानां समाजाधीना कार्योत्पत्तिः तत्रच साक्षान्मेलनासंभवे व्यापारकल्पनमित्य कविधमेलनस्याकिंचित्करत्वात् नहि यागस्य व्यापारद्वारा मेलनमिति तज्जन्यापूर्वस्यापि व्यापारद्वारा मेलनं कश्चिदभ्युपैतीति । तन्न । दक्षिणादानस्योत्तरांगतया परमप्रधानस्य साक्षात्परमापूर्वजनकत्वासंभवात् एवं षडपूर्वीस्वीकारेऽपि परमापूर्वमावश्यकं दक्षिणाचोत्तरागं साक्षादेवपरमापूर्वहेतुः । ननु तज्जन्यमप्यंगापूर्वं कल्प्यते इति न तत्र द्वारापेक्षा । षडपूर्वीद्वारा सांगप्रधानषट्केन परमापूर्वं जन्यते । दक्षिणाया अङ्गतया स्वर्गाजनिकायाः षडपूर्वीजन्यं परमापूर्वं प्रत्येवजनकत्वादित्यास्तां विस्तरः । ननु दुरितापूर्वं कल्प्यं नतु वाच्यमिति तेषां सिद्धांतः । तथाच यथा यो ब्राह्मणायावगोरयेत् शतेन यातयेदितिविधिना ब्राह्मणवधोद्यमस्य यातनारूपनरकविशेष हेतुत्वबोधानंतरं दुरितापूर्वं कल्प्यते तथा काम्यस्थलेपिस्यादिति चेन्न । हेतुहेतुमतोर्लिङ्ङित्यनुशासनबलात्पौर्वापर्यमात्रं बुध्यते नतु कारणत्वं किन्तु एतद्विधेर्निवर्तकत्वानुपपत्त्याऽवगोरणस्य नरकहेतुत्वं कल्प्यते तच्च दुरितापूर्वं विनानुपपन्नमिति तत् कल्पनमिष्ट च कार्यत्वशक्तो लिङ्कार्यतामात्र । कार्यत्वं विनेष्टसाधनत्वग्रहं दुर्ग्रहं साधनत्वं चान्यथासिद्धिपक्षकराहित्ये सति नियतपूर्ववर्त्तित्वरूपं कार्यसहभूतत्वघटितं कार्यं सहभूतत्वं च क्षणिकस्य व्यापारघटितमिति काम्यस्थलेऽपूर्ववाच्यता नतु प्रकृत इति । केचित्तु । हेतुहेतुमतोर्लिङ्त्यनुशासनबलात्पौर्वापर्यमात्रमुदासीनसाधारणं बुध्यते नत्वव्यवस्थितपूर्ववर्तित्वरूपकारणत्वं ततश्च सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यत इति व्युत्पत्तिबलात्कारणत्वावगम इति न दुरितापूर्वस्य वाच्यता । अथवा । यद्योगप्राथम्याभ्यां नियतपौर्वापर्यबोधानंतरं विधेर्निवृत्तिपरत्वग्रहेनावगुरितव्यमिति विधिः कल्प्यते तेन चावगोरणाभावविषयकं कार्यमित्यन्वयबोधः । तदन्यथानुपपत्त्या चावगोरणस्य नरकहेतुत्वं कल्प्यते । नह्यवगोरणस्यानिष्टसाधनत्वं विनावगोरणाभावविषयकंकार्यसम्भवतीति दुरितापूर्वं कल्प्यत इति प्राहुः । ननु स्वर्गकामोयजेतेत्यादौ लिङः कार्ये शक्तिर्यागादेराशुविनाशितया तत्रेष्टसाधनत्वज्ञानासम्भवात् । स्वर्गका-

त्रऽपूर्वं मानस्वती एवञ्च काम्ये क्लृप्तशक्तिलिङ्नित्ये निषेधे-
चापि विधेऽपूर्वं माह लोके च पचेदित्यादौ अपूर्वं तात्पर्यार्थ-

---

मनियोज्यकत्वान्वययोग्यमपूर्वमेव स्वर्गकामनियोज्यकं यागविषयकं कार्यमि-
त्यन्वयबोधे विषय इति पर्यवसितं । आस्तां तावदेवं काम्यस्थले । यत्र तु न
फलं तत्र नित्यादि विधिस्थले संध्योपासनरूपक्रियायाः विषयतयान्वयाभा-
वेऽपि अभेदेनैव कार्येऽन्वयसम्भवात् संध्योपासनीयं कार्यमित्यन्वयबोधे क्रि-
याया एव कार्यायाः प्रतीत्यानापूर्वविषयत्वमिति । कथं वैदिकविधौ सर्वत्रा-
पूर्वबोध इत्यत आह । एवंचेति । अपूर्वबोधस्यावश्यकत्वे चेत्यर्थः । काम्ये स्व-
र्गकामोयजेतेत्यादौ । नित्ये । अहरहः संध्यामुपासीतेत्यादौ । निषेधे । न
कलंजं भक्षयेदित्यादौ । अपूर्वमाहेति । लोके पचेदित्यादावनन्यलभ्यस्य शब्दा-
र्थतया कार्यत्व एव शक्तिः । काम्यस्थले तु कामिकार्यत्वस्य विनेष्टसाधनत्वग्रहं
प्रत्येतुमशक्यतया क्रियाया अस्थिरतया च तत्रेष्टसाधनताज्ञानार्थं परंपरा-
घटकापूर्वोपस्थितये कार्यलिङः शक्तिः कल्प्यते तत्र कार्यं वस्तुगत्याक्रियाति-
रिक्तमेव वैदिकविधिजन्यबोधविषय इति नित्यनिषेधविधिस्थलेऽपि क्रिया-
तिरिक्तकार्यमेव बोधविषय इत्यपूर्वविषयक एव सर्वत्रवैदिकस्थले बोध इत्य-
र्थः । इदं तु चिंत्यं । निषेधस्थले कलंजभक्षणाभावीयं कार्यमित्यनुभवे कलं-
जभक्षणाभावस्य प्रागभावरूपस्य वस्तुगत्या क्रियातिरिक्तस्याभेदेन कार्येऽन्वय-
सम्भवान्नापूर्वलाभः योगक्षेमसाधारणस्य कार्यत्वस्य प्रागभावेऽपि सम्भवादि-
ति । ननु सामान्यतः लिङ्त्वावच्छेदेन कार्यशक्तेः पचेतेत्यादावपि कार्यबो-
धःस्यादत आह । लोके चेति । अपूर्वे तात्पर्यासम्भवात् क्रियातिरिक्त कार्यबो-
धासम्भवेन क्रियायां कार्यत्वबोधाय तत्र लक्षणेत्यर्थः । अनन्य लभ्यस्यैव शब्दा-
र्थत्वान्न तत्र कार्यत्वेऽपि शक्तिरिति भावः । ननु लाघवाल्लोकेकार्यत्वे शक्ति-
र्वेदेतु कार्ये लक्षणत्वे वकिन्नस्यात् नचापूर्वानुपस्थित्यातत्र शक्यसम्बन्धरूप-
लक्षणाग्रहासम्भवान्न लक्षणेति वाच्यम् कार्यत्वरूपशक्यसम्बन्धस्य सामान्यतः
कार्येऽवगतेरिति मैवम् लाक्षणिकपदस्यानुभावकतया लिङः कार्ये लक्षणा
स्वीकारेऽपूर्वाननुभवापत्तेः नच गङ्गायांघोष इत्यत्रेव यजादियदादेवबोधो-
स्तु इतरान्वितस्वार्थानुभावकत्वात्पदानामिति वाच्यम् । वस्तुगत्येतरान्वितो

अत्रात्कार्य्यत्वे लक्षणेत्याहुः । अत्रोच्यते कार्य्यत्वे एव विधे•

---

यस्यार्थस्तदनुभावकत्वं पदेनत्वितरांशस्याप्यन्यलभ्यत्वात् गङ्गायांघोष इत्यत्रापीतरान्वितो यो घोषस्तदनुभावकत्वं घोषपदस्य नतु तीरस्यापि शाब्दबोधविषयत्वं तीरस्य तु संस्कारादेवोपस्थितस्य तटस्थतया भानं शक्या-दशक्योपस्थितिर्लक्षणेति मतेन गङ्गापदेन पूरस्मरणं पूरेणच स्वसम्बन्धितीर-मुपस्थाप्यते तथाचासत्त: पदजन्यपदार्थोपस्थितिरूपतयाऽनासन्नत्वेन तीर-शाब्दबोधासम्भवात् तत्राप्यनुपस्थितेनान्वितेनाभिधानानभ्युपगमात् अपूर्व्वस्य तु पूर्व्वमप्रतीततया न संस्कारवलाज्ज्ञानसम्भव: नन्वत्यर्थाध्याहारवादिनस्तस्य मते पदजन्यपदार्थोपस्थितिर्नासत्ति: एवं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थ बोधकत्वमिति नियमात् तीराधिकरणको घोषइति बोधानुपपत्तिरिति तीरस्यापीतरपदादेव शाब्दबोधविषयत्वमुपेयमिति यज्यादिपदादेवकार्य्यत्व सामान्यरूपेणोपस्थितापूर्व्वलाभाद्बोधसम्भव इतिचेत् तथापि लक्षणायां लक्ष-णीयविशेषणकस्वार्थविशेष्यकान्वयबोधजनकत्व नियमात्स्वर्ग्गकामकार्य्यविष यो याग इत्येवानुभवो यजि पदेन जननीय: नचैष आकाङ्क्षितस्तस्यकार्य्यांशे कृतिसाध्यत्वप्रकारकत्वेऽपि स्वर्ग्गकामबोधकोयागविषयकंकार्य्यमिति कार्य्यमु-ख्यविशेष्यकज्ञानस्यैव प्रवर्त्तकत्वाभ्युपगमेनाकाङ्क्षितत्वात् आहार्य्यत्वस्य तत्त-च्छक्तित्वरूपतया तत्तच्छक्तित्वावच्छिन्नप्रतियोगिताकभेदे कूटरूपस्यानाहा-र्य्यत्वस्य निवेशे कार्य्यविशेषणक भेदानामनिवेंशेच लाघवसम्भवेन मुख्यविशे-ष्यताया निवेशस्य तक्क सहकृतत्वात् स्वर्ग्गकामकार्य्यमित्येवज्ञानन्तु यजिपदेन जनयितुमशक्यं यागाविशेषित कार्य्यमात्रे स्वर्ग्गकामान्वयासम्भवात् परन्तु यागविषयककार्य्यविशेषविषयकं तथाच यागविशेषितकार्य्यबोधार्थं लिङ्श-क्तिरिति । अथवा लौकिकलिङ:क्रियाकार्य्यत्वे शक्ति: वेदेतु स्वर्ग्गकामान्वया-नुपपत्या क्रियातिरिक्त कार्य्ये शक्ति: एवं चशक्ततावच्छेदकैक्याभावेन नाना-र्थ्यन्याय इति दिक् । प्राभाकरमतं दूषयति । अत्रोच्यत इति कार्य्यस्य एव कृ-तिसाध्यत्व एव लाघवादिति कार्य्यत्वविशिष्टे शक्तिस्वीकारे कार्य्यत्वांशे शक्तेरा-वश्यकत्वात् नागृहीतविशेषणान्यायेन तत्रैव शक्तिरित्यर्थ: । नन्वपूर्व्वे शक्ति-विरहेऽपूर्व्वानुपस्थिताविष्टसाधनत्वाप्रतीत्या स्वर्ग्गकामकृतिसाध्यत्वान्वयबो-

शक्तिग्रहात् नतु कार्य्यत्वविशिष्टे नच यागी स्वर्ग्गकाम-
कार्य्यत्वान्वयासम्भवो बाधकाभावात् नच योग्यताज्ञानवि-
रहोबाधकः नह्यन्वयप्रयोजकरूपवत्त्वं योग्यता सेकान्वयि-
तोयेसत्त्वात् किन्तु प्रकृतसंसर्ग्गवत्त्वं तस्य च संशयसा-
धारणं ज्ञानं हेतुः नच यागी स्वर्ग्गकामकार्य्यत्वस्य सं-
शयो न संभवति येनैवं स्यादित्युक्तं इष्टसाधनत्वं न विध्यर्थं
यागे तस्यच लिङ्गापि प्रत्येतुमशक्यत्वादिति तदपि न

---

धासम्भव इत्याशङ्कते नचेति समाधत्ते बाधकाभावादितिनचेति अन्वयप्रयो-
जकरूपवत्त्वरूपयोग्यताज्ञानविरहोबाधक इत्यर्थः अपूर्व्वानुपस्थित्या स्वर्ग्गका-
मिकार्य्यत्वान्वयप्रयोजकरूपस्येष्टसाधनत्वस्याज्ञानात्तदन्वयबोधसम्भव इति
भावः। सेकेति। सेकान्वयप्रयोजकस्वद्रवद्रव्यत्वस्य करकादावपि सत्वे न करका-
भिप्रायप्रयुक्तं पयसासिञ्चतीति वाक्यमपियोग्यंस्यादिति भावः। किन्त्विति। प्र-
कृतसंसर्गवत्वं योग्यतेत्यनुषङ्गः ननुपयसासिञ्चतीत्यादौ संसर्गस्य वाक्यार्थरूप-
तया तदज्ञानासम्भवाद्योग्यताज्ञानविरहात्कथं शाब्दबोध इत्यत आह। तस्य चे-
ति। प्रकृतसंसर्गवत्वस्येत्यर्थः। संशयेति। संशयनिश्चयसाधारणं योग्यताज्ञानं
शाब्दबोधे हेतुरित्यर्थः। येनेति। संशयासम्भवेन। एवंस्यादिति। अपूर्व्वं शक्ति-
स्यादित्यर्थः लाघवात्कार्य्यत्वे शक्तिं व्यवस्थाप्येष्टसाधनत्वे शक्तिस्वीकारे पूर्व्व-
मुक्तं बाधकं निरस्यति यच्चेति तस्येष्टसाधनत्वस्य बाधकाभावात्। लिङा
यागे इष्टसाधनताबोधने बाधकाभावादित्यर्थः। उक्तमिति। आशुविनाशिन-
स्साक्षात्साधनतायाः परम्पराघटकापूर्व्वानुपस्थित्या परम्परासाधनत्वस्यापि
यथासम्भवरूपबाधकमुक्तमित्यर्थः समाधत्ते। साधनतेति। साधनतात्वेन
रूपेण साधनताबोधः सच साक्षात्साधनत्वासम्भवात्परम्परासाधनताविषयक
एवेति भावः इदञ्च साधनतात्वं साक्षात्परम्परासाधारणमेकमित्यभिप्रायेण।
यथेति। रूपवांश्च इत्यत्र रूपत्वेनैव रूपेण नीलादिविषयकोबोध इति भावः।
अथेति। एकविशेषबाधे। एकविशेषबाधस्थले सच्छिद्रघटस्य जलाहरणेऽन्वय
बाधे छिद्रेतरत्वेनघटस्य शाब्दबोधःछिद्रेतरेण घटेन जलमाहरेत्याकारकः
अत इति एकविशेषबाधे शाब्दसामान्यज्ञानस्य तदितरविशेषप्रकारकत्वनियत-

बाधकाभावाद्युक्तं बाधकमिति चेन्न साक्षात्परंपरात्वसदृस्य साधनतासामान्यस्य लिङ्गाबोधनाद्यथारूपवांश्चैव इत्यत्र नीलत्वादीन् व्युदस्य रूपसामान्यज्ञानं अथैकविशेषबाधे शाब्दसामान्यज्ञानं तद्विशेषप्रकारकतानियतं यथा घटेन जलमाहरेत्यत्र सच्छिद्रबोधे च्छिद्रेतरत्वेन घटज्ञानमतोऽत्र साक्षात्त्वबाधे परंपरंरात्व प्रकारकं ज्ञानं कार्य्यम तच्च न सम्भवति द्वारानुपस्थितेरिति चेन्न घटेन जलमाहरेत्यत्र हि योग्यतया वस्तुनो यच्छिद्रेतरस्तदन्वय नतु तदितरत्वेन तदुपस्थापकाभावात् नच लक्षणया तदुपस्थितिर्मानाभावात् आस्तां वाचापि साक्षादन्यसाधनत्व प्रकारेणैवान्वय: किंतच्छिन्नम्। अथ योग्यताज्ञानविरहोबाधक: तथाहि आशुतरविनाशिन: कालान्तरभाविफलजनकत्वे फलसमयपर्य्यन्तस्थायि व्यापारजनकत्वमन्वय प्रयोजकम् नचेह तथाज्ञानं सम्भवतीति चेन्न अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्त्वविरहात् नन्वेवं कथमपूर्व्वलाभ इतिचेत् आशुतरविनाशिन: कालान्तरभाविफलजनकत्वस्य तत्कालस्थापि भावव्यापारकत्वेऽव्याप्ते: तदुक्तमाचार्य्यै:। चिरध्वस्तं फलायालं न कर्म्मातिशयंविना सम्भोगोनिर्व्विशेषाया

---

त्वादित्यर्थ:। अत्र स्वर्गकामोयजेतेत्यत्र साक्षाद्बाधे साक्षात्साधनताबाधे परं परात्वप्रकारकं परम्परासाधनतात्वप्रकारकंज्ञानं कार्य्यलिङ्गाजननीयम् तच्च परम्परात्व प्रकारकंज्ञानञ्च। द्वारेति। परम्परास्वर्गसाधनत्वं हि स्वर्गजनकापूर्व्वजनकत्वरूपमपूर्व्वानुपस्थित्या दुर्ग्रहमित्यर्थ:। वस्तुत:। वस्तुगत्या तदन्वय: जलाहरणे तदन्वय: तदितरत्वेन छिद्रेतरत्वेन तदुपस्थापकाभावात् छिद्रेतरत्वोपस्थापकाभावात् घट पदस्य घटत्वविशिष्ट एव शक्तेरिति भाव: ननु घटपदस्य छिद्रेतरत्वविशिष्टे लक्षणेत्यत आह। नचेति। तदुपस्थिति:

छिद्रे तरत्वोपस्थितिः । मानेति । वस्तुगत्या छिद्रे तरघटस्यान्वयेनैवोपपत्ते-रिति भावः । किमि त । साचात्ववाधे साचादन्यसाधनतात्वरूपेणावोधेऽपि परम्परासाधनतात्वेन रूपेणावोधात्रापूर्व्वं वाच्यतेति भावः वाधकः साचादन्य साधनतात्वेनापि रूपेण परम्परासाधनतावोधे वाधकः तथाज्ञानं फलपर्य्यन्त स्थायिव्यापारजनकत्वे न ज्ञानं सम्भवतीति व्यापारानुपस्थितेरिति भावः । नन्वे वमिति । एवं अपूर्वे शक्तिविरहे । तत्कालेति । तत्कालस्थायी फलपर्य्यन्तस्थायी भावरूपो व्यापारस्तत्कालव्याप्ते रित्यर्थः यागध्वंसस्य व्यापारत्वनिरासया भा-वेति तदुक्तमिति । चिरध्वस्तंकर्म्म अतिशयं विनाव्यापारं विना फलाय कालान्तर भाविफलाय न अलं न समर्थम् यथाऽनुभवेन स्मृतौ जननीयायां संस्कारो व्या-पार इति ननु तथाप्यपूर्व्वे मानाभावः यागध्वंसस्यै व व्यापारत्वसम्भवात् व्याप्ते-स्व भावव्यापारवत्वघटितत्वे ऽप्रयोजकत्वेन व्यापारमात्र सिद्धेरिति नच स्वर्गं धारायां आपत्तिः मन्मते चरमफलस्यापूर्व्वं नाशकत्वंनोपगमेन व्यापाराभावा देव तदनुदयादितिवाच्यम् । उपान्त्यफलध्वंसस्य फलप्रतिवन्धकत्वोपगमाच्चरम फलस्यापूर्व्वं नाशकत्वकल्पनापेक्षयास्यलघुत्वात् एवं फलजनकतदितरकारण-स्य तत्तच्चन्दनसंयोगस्य तत्तच्छरीरादेश्चासत्वादेव न धारायां आपत्तिः नच साम-ग्री सम्पादकस्यादृष्टस्य सत्त्वात्तस्याप्यापत्तिरिति वाच्यम् तत्तदृष्टकारणम्प्रति त-त्तदृष्टकारणान्तराभाव तदृष्टकारणसम्पत्तेरभावादिति नच कार्य्यीभूताभाव-प्रतियोगित्वं प्रतिवन्धकत्वमिति यागस्य प्रतिवन्धकत्वापत्तिरिति वाच्यम् अभावत्वे न कारणत्वस्यै व प्रतिवन्धकत्वशरीरनिविष्टत्वात् अत्रध्वंसत्वेन कार-णतयाऽतथात्वात् नच कर्म्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् गण्डकीवा-हुतरणाद्धर्म्मः चरतिकीर्त्तनादिति श्रुतेः कृते यागादौ तत्कीर्त्तने च सतिस्वर्गा-दि फलाभावस्सर्व्व सिद्धस्सच भवन्मतेऽनुपपन्नः कीर्त्तनेन यागस्यनष्टत्वादेवाना-शात् ध्वंसस्याच ध्वंसासम्भवात् अपूर्व्वस्वीकारेच कीर्त्तनेनापूर्व्वं नाशादुपप-द्यत एवेति वाच्यम् । तत्र कीर्त्तनादीनां फलप्रतिवन्धकत्वोपगमात् धर्म्मो या-गादिः कीर्त्तनात् चरतिफलभाङ् न भवतीत्यर्थ करणादिति अत्राहुः कीर्त्त-नादीनामाशुविनाशितया फलप्रतिवन्धकत्वासम्भवादपूर्व्वं स्वीकार आवश्यक एव नच कीर्त्तनं तत्प्रतिवन्धकं किन्तु कीर्त्तन प्रागभावविशिष्टो याग स्वर्गं हेतु रिति वाच्यम् । कीर्त्तनसत्वेऽपि यागान्तरीय कीर्त्तनप्रागभावविशिष्टयागात् फलापत्तेः तत्क्रियोद्देश्यककीर्त्तनप्रागभावविशिष्ट तत्क्रियात्वेन हेतुत्वे य-

क्रियायां कीर्त्तनमप्रसिद्धं तत्र फलाभावप्रसङ्गस्तस्या: कारणतावच्छेदकानाक्रान्तत्वात् अथ कीर्त्तनंध्वंससम्बन्धेन प्रतिबन्धकमिति चेन्न अश्वमेधजन्य स्वर्गम्प्रति अश्वमेध:कृत इति कीर्त्तनत्वेन प्रतिबन्धकत्वं अश्वमेध: कृत इति कीर्त्तनानन्तरं पुनरश्वमेधेकृते स्वर्गानुदयप्रसङ्गात् तदश्वमेधजन्यस्वर्गम्प्रति तदश्वमेध:कृत इति कीर्त्तनत्वेन प्रतिबन्धकत्वं चासम्भवितदश्वमेधजन्यस्वर्गस्यैवाप्रसिद्धे: नच यदश्वमेधमुद्दिश्य कीर्त्तनंकृतं तदश्वमेधव्यक्ति जनितफलकाश्वमेधव्यक्ति एतदन्यतरजन्यस्वर्गम्प्रति तदश्वमेधोद्देश्यककीर्त्तनत्वेन प्रतिबन्धकत्वमिति नाप्रसिद्धिरिति वाच्यम् । जनितफलकव्यक्तेर्न्निवेशे प्रत्येकं सर्व्वासामपि निवेशमादाय विनिगमनाविरहापत्ते: न रूपधायकतासम्बन्धेन स्वर्गम्प्रति उद्देश्यतासम्बन्धावच्छिन्नप्रतियोगिताककीर्त्तनाभाववत्कर्म्मत्वेन कारणत्वं नतु कीर्त्तनादीनां प्रतिबन्धकत्वमिति चेन्न कीर्त्तनादेश्शब्दरूपतयाऽऽशुविनाशित्वेन कृतेऽपिकीर्त्तने फलापत्ते: नचोद्देश्यतासम्बन्धेन कीर्त्तनवद्भिन्नकर्म्मत्वेन कारणत्वमिति वाच्यम् । तथा सतिफलोत्पत्त्यनन्तरं यत्र कीर्त्तनमाचरितं तत्र पूर्व्वफलानुदयप्रसङ्गात् तस्मात्कीर्त्तनादिनाश्यतयाऽपूर्व्वस्वीकारआवश्यक: एवं प्रायश्चित्तस्य दुक्खसाधनदुरितध्वंसफलकेनापि तत् स्वीकारआवश्यक: ननु दुक्खप्रागभावपरिपालनमेव तत्फलं योगक्षेमसाधणजन्यत्वस्य प्रागभवेऽपि सत्त्वात् सुखदुक्खाभावान्यतरस्यैवपुरुषार्थत्वेन दुक्खप्रागभावस्यैव फलत्वौचित्यादितिनापूर्व्वसिद्धिरिति चेन्न तच्चार्थे दुक्खानुत्पत्त्या तत्प्रागभावेऽपि मानाभावात् बलवद्द्वेषविषयाभावत्वेन दुक्खाभावइव दुक्खजनकदुरितध्वंसेऽपि पुरुषार्थतायास्सम्भवात् दुरितध्वंसस्यैवतत्फलत्वमिति यत्तु परमापूर्व्वास्वीकारेऽङ्गानामपि स्वर्गादिजनकत्वमेवोपेयमिति प्रधानाङ्गभावानुपपत्तेरपूर्व्वस्वीकारं इति यागेरागादङ्गं वेधीति तदुपपत्ते: राग: फलेच्छाविधिरपूर्व्व इति तत्तुच्छम् प्रधान कर्म्मताप्रवृत्तविधिविधेयत्वे नाङ्गपरिभाषोपपत्ते: केचित्तु सत्कर्म्मदानादपि फलंश्रूयते तच्चासत्कर्म्मणो न दानं तस्य नष्टत्वादकर्म्मिकायाश्च दानक्रियायाअभावाददृष्टदानमेवतत्पर्य्यवस्यति तेनादृष्टदानेनादृष्टान्तरं फलसमानाधिकरणं जन्यत इति सत्कर्म्मदानान्यथानुपपत्त्याऽदृष्टसिद्धिरिति तच्चिन्त्यम् यागादिकं समफलं माजनयत किन्त्वस्येतीच्छाविशेषस्य फलजनकत्वोपगमात् दानपदस्य भाक्तत्वोपगमस्य च तवाप्यवश्यत्वादिति दिक् तच्चादृष्टं कर्त्तरिस्वीक्रियते पुत्रकृत-

गयाश्राद्धादिस्थलेतु भोक्तरिपितर्य्येव अत एव शास्त्रदेशितफलमनुष्ठातरीत्यु-त्सर्ग इति गीयते अथ दृष्टत्वावच्छिन्नम्प्रति विहितक्रियात्वेन हेतुतया या-गस्थलइव तत्रापि कर्त्तर्य्येवादृष्टमुचितम् नच गयाश्राद्धं कृत्वा यत्रमुक्तः पुत्र-स्तत्राशेषविशेषगुणोच्छित्तेरेवमुक्तितया तददृष्टनाशात्पितुस्स्वर्गाभावप्रसङ्ग इ-ति वाच्यम् स्ववृत्तिफलजनकादृष्टस्यैवमुक्तिविरोधितया तददृष्टसत्त्वेऽप्यक्षतेः नच यत्रैकं पितरमुद्दिश्य नानापुत्रैर्गयाश्राद्धं कृतं तत्र नानादृष्टस्वीकारापे-क्षया एकस्मिन् पितर्य्येव तदुचितमिति वाच्यम् यत्र त्रिकोटिकुलोद्धरणेच्छ-या गङ्गास्नानादिकृतं तत्र नाना दृष्टस्वीकारेण तुल्यत्वादिति मैवम् अस्मिन-स्य कालान्तरभाविस्वर्गोपपादनायादृष्टस्वीकार इति स्वर्गसमानाधिकरण-मेव तत्कल्प्यते स्वर्गम्प्रति समवायसम्बन्धेनादृष्टस्य हेतुत्वे लाघवात् तवतु पितृस्वर्गम्प्रतिपुत्रनिष्ठादृष्टस्य व्यधिकरणतया परम्परासम्बन्धेनैवकारणतया गौरवात् नचादृष्टम्प्रतिगयाश्राद्धस्य परंपरयैवत्वया हेतुत्वस्य वाच्यतया तुल्यते-ति वाच्यम् पितरमुद्दिश्य श्राद्धकरणादुद्देश्यतासम्बन्धेनैव श्राद्धस्यकारणत्वात् फलइव पितर्य्यप्युद्देश्यतायास्स्वीकरणात् ततः पितरमुद्दिश्य ब्राह्मणेभ्यो धनं ददावितिरामायणश्रुतेरिति । ननु यत्र पुत्रेण गयाश्राद्धंकृत्वा सङ्कीर्त्तनंकृतं कर्म्मनाशाजलस्पर्शो वा कृतस्तत्रपितुस्स्वर्गापत्तिरिति कीर्त्तनस्य कर्म्मनाशा जलस्पर्शे च परम्परासम्बन्धेन नाशकत्वं कल्प्यम् मन्मतेतु प्रतियोगिता सम्ब-न्धेनादृष्टनाशम्प्रति सामानाधिकरण्यसम्बन्धेनकीर्त्तनस्य शब्दरूपस्य जल-संयोगरूपस्य जलस्पर्शस्य च कारणत्वम् । सामानाधिकरण्यञ्चैकत्रावच्छेदक-तया स्वाधिकरणेशरीरेऽवच्छेदकता अपूर्व्वस्य वृत्तित्वरूपं द्वितीये च सम-वायेन स्वाधिकरणे शरीरेऽवच्छेदकतासम्बन्धेनापूर्व्वस्य वृत्तित्वरूपमितिचे-त्तवैयत एव फलम् त्वन्मतेऽपि पुत्रस्य बलपुष्ट्यादिकामनया यत्र पित्रा क-र्म्मकृतं पुत्रेण च कर्म्मनाशा जलस्पर्शः कृतस्तत्रफलोत्पत्ताविष्टापत्तेरेवाङ्गी-करणीयत्वादिति दिक् ननु देवताप्रीतिव्यापारोऽस्तु कृतमपूर्व्वस्वीकारेणेति मैवम् प्रीतेस्सुखरूपतया सुखानुभवरूपतयावाऽस्थिरत्वेन कालान्तरभाविस्व-र्गजनकत्वासम्भवात् स्वसमानविषयकफलंप्रत्येवसंस्कारस्य हेतुतया तज्जन्य संस्कारहेतुतायादुर्व्वचत्वात्तद्देवताप्रीतेर्व्यधिकरणतया स्वर्गहेतुत्वानुपपत्ते-श्चेति । अत्र केचित् देवताचैतन्यएव मानाभावः इन्द्रस्सहस्राक्ष इत्यादेस्तुस्ता-वकत्वेन प्रवृत्तिपरत्वात् मन्त्रप्रकाशितशशिशेखराद्युपेतमुद्दिश्य याज्ञिकानां

तत्रैवदेवतापद्वारस्तु लक्षणयाप्युपपद्यत इत्याहुः तन्न। शिवाय गां दद्यादि-त्यादौ फलभागित्वेनोद्देश्यत्वरूपसम्प्रदानत्वं शिवस्य श्रूयते इति चेतनैव देव-ता यदि च वृक्षस्यापोदकमासिंचतीत्यत्रेव वास्तवसम्प्रदानत्वाभावेऽपि वैवक्षि-कसम्प्रदानत्वमादायात्रापि गतिः देवतायाः स्वीकारविरहेण तत्रापि मुख्य सम्प्रदानत्वविरहादिति विभाव्यते तथापि शिवादि सर्व्वनाम्नां पर्य्यायत्वश्रवणा-दर्शैक्य एव च पर्य्यायत्वेन तदनुपपत्तिः शब्दस्यैव देवतात्वेऽनेकदेवताकल्पनाप-त्तिश्च आराधितदेवतानां वरदातृत्व श्रुतेश्च ग्रावाणः प्लवन्तीतिवन्नात्र लक्षणयो-पपत्तिः वाधकाभावादिति देवताचैतन्यसिद्धिः ननु नाना यागे ष्वेकदाह्वाने एकदासन्निधानं कथमुपपद्यते इन्द्रादेरेकत्वादिति चेन्न तत्तद्बुद्धिविशेषएव हि सन्निधानं प्रतिष्ठाविधिना प्रतिमादावहङ्कारवत्। नचेन्द्रादेस्सार्व्वज्ञाभावा-त्सङ्ग्रामादिव्यासङ्गदशायां नानाराधककोटिभिरेकदाह्वाने कथंज्ञानमिति वाच्यम्। अदृष्टविशेषस्यारिभलिङ्गादि प्रतिसन्धानात्तत्तद्विषयज्ञानमदृष्टविशे-षसहकृतमनसा वा तथाज्ञानमिति अथास्तां राजसूयादिफलत्वेन श्रुतेरिन्द्रा-दिश्चेतनएव देवतात्वे तु तस्य मानाभावात्। किन्त्विन्द्रायेति पदमेव देवता-देशनादेशित चतुर्थ्यन्तपदनिर्द्देश्यकत्वमेवाद्य देवतात्वानिर्द्देश्येति भावप्रधा-नो निर्द्देशः तथाच देशनयातद्धितादि रूपया देशितंवोधितं चतुर्थ्यन्तपदनि-र्द्देश्यत्वं तच्छब्दोच्चारणं यत्र तत्तथा इन्द्रायेत्युच्चार्य्य दद्यादिति वेदेन वोध-नात्। आग्नेयोऽष्टाकपाल इत्यत्र तद्धितेन चतुर्थ्यन्तपदनिर्द्देश्यत्वं वोध्यते दे-शनादेशितं चतुर्थ्यन्तपदनिर्द्देश्यत्वं तत्वंभवतीति नच भूस्वाहा धृतिस्स्वाहे-त्यत्रतु चतुर्थ्यन्तस्याभावः तत्र चतुर्थ्यन्तस्य ऊहनात् नच तद्धितस्य देवतात्व-मप्यर्थः साऽस्यदेवतेति देवताधिकारीयत्वात् तथाचोक्तम् तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः देवतासङ्गतिस्तत्र दुर्व्वलन्तु परंपरमिति तथाच देवता-त्व ज्ञाने तद्धितात्मकदेशनया वोधनं देशनयाबोधनेच सतिदेशनादेशित च-तुर्थ्यन्त पदनिर्द्देश्यत्वरूपदेवतात्वज्ञानमित्यन्योऽन्याश्रय इति वाच्यम् देवता-त्वैकदेशस्य चतुर्थ्यन्तपदनिर्द्देश्यत्वरूपस्य तद्धितार्थत्वात् तथाच चतुर्थ्यन्तप-दनिर्द्देश्यत्वरूपदेवतात्वज्ञानेसति तद्धितप्रवृत्तौ देशनादेशित चतुर्थ्यन्तपदनि-र्द्देश्यत्वरूपं देवतात्वंगृह्यत इति ननु आग्नेयोऽष्टाकपाल इत्यत्राग्निर्द्देवताऽ-स्येति तद्धितेनाऽन्यादेः प्रकृत्यर्थस्यदेवतात्वंवोध्यते नत्वाग्नय इति पदस्येति

कथं तस्य देवतात्वमिति चेन्न । तत्र शब्दात्मकस्यैव प्रकृत्यर्थत्वोपगमात् अथ तथापीन्द्रायेति चतुर्थ्यन्तपदं न चतुर्थ्यन्तपदेन निर्दिश्यते येन चतुर्थ्यन्तपदमेवदेवता भवेदितिचेन्न अर्थोपस्थितशब्द एव देवतेतिमते देशनयादेशितं चतुर्थ्यन्तपदनिर्देश्यत्वं यस्य तद्रूपार्थोपस्थितं चतुर्थ्यन्तपदनिर्देश्यत्वं देवतेत्यर्थः नचार्थस्यापिदेवतात्वं सिद्धमिति कथं देवताया अचैतन्यमिति वाच्यम् । तत्रापि विशिष्टस्याचेतनत्वात् नचैवमिन्द्रायेत्यादिपदमेवदेवतेत्ययुक्तमिति वाच्यम् । तथापि चतुर्थ्यन्तपदस्यैव प्राधान्यात् अर्थस्योपलक्षणत्वाभिप्रायेण वा तथोक्तेरिति अग्नये इति पदेनोक्तावेव फलभागित्वं नतु वह्नये इति तस्माच्छब्दसपी देवतेति नचेन्द्रायस्वाहेति तादर्थ्यचतुर्थ्युपपत्तिरिति वाच्यम् । स्वाहादियोगे उपपदविभक्तिरित्युपगमात् उपपदं समीपवर्त्तिपदं तद्योगाद्विभक्तिरित्यर्थात् मैवम् अर्थोपस्थितशब्दस्य देवतात्वे विशेषणीभूतार्थस्यैव देवतात्वमुचितम् । एवमग्नयेऽध्वयवाहनायेत्यादौ देवताद्वयप्रसङ्गात् इन्द्रस्यहस्त्राक्ष इत्यपि वादस्येन्द्रमुपासीतेति विधिसमभिव्याहारेणैकवाक्यतया तस्यैवोपास्यत्वात् शिव स्वं नाददतेत्यादौ महादेवमुद्दिश्य त्यक्ते शिवस्वत्वेन शिष्टानां व्यवहाराच्च अग्नयेइत्येवत्यागो नतुवह्नये इतियत् तच्छ्रुतिबोधितत्वेन तथात्यागस्य फलहेतुत्वात् व्रीहीनवहन्तीत्यत्र नखविदलनेन तुषोहायसम्भवे प्यवधात नियमवत् मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वमपि चेतनदेवाताया एव स्वाहादियोगे चतुर्थ्यनुशासनञ्च प्रधानार्थम् नच वीजाक्षराणां देवतात्वाङ्गीकारेत्तदनुपपत्तिस्तवमतेऽपि वीजाक्षराणां चतुर्थ्यन्तत्वानियमेन देशनादेशित चतुर्थ्यन्तपदनिर्देश्यत्व रूपदेवता स्वस्यानुपपादनात् मन्त्रप्रकाशितशशिशेखरत्वाद्युपेतमुद्दिश्य हविस्त्यागभागित्वेन याजकानां तत्रैव देवतात्वव्यवहाराच्च शिवस्य मन्त्रभेदेन वीजाक्षराणां नानात्वेनाननुगतेषु शिवपदशक्तिग्रहे गौरवाच्च तस्मान्मन्त्रकरणक हविस्त्यागभागित्वं नोद्देश्यत्वं देवतात्वमिति मणिकृतः मन्त्रकरणको यो हविस्त्यागस्तद्भागित्वेनोद्देश्यत्वं मन्त्रप्रयोज्यहविस्सम्बन्धवत्वेनोद्देश्यत्वमिति यावत् हविर्निष्ठत्यागजन्यफलंस्वत्वं तदाश्रयतयोद्देश्यत्वमिति वक्तुमार्थः स्वर्गसम्बन्धितयोद्देश्यत्वस्य यागकर्त्तरिसत्वात्तत्रातिव्याप्तिवारणाय हविरिति हविष्यपित्यागकर्मत्वं कोऽदात्कस्माअदादिति मन्त्रकरणकघृतादि रूपहविस्त्व-

निश्वासैः सक्तैरपीति । मन्त्रास्तु धर्म्मिकल्पनातो धर्म्मक-ल्पनाया लघुत्वाद्यागादेरेव स्थायित्वं युक्तं नत्वपूर्व्वम् न-चैवमिदानीं यागप्रत्यक्षतापत्तिः आत्मविशेषगुणानां द्विती-यक्षणे योग्यत्वादित्याहुः तन्न इदानीं न यजेयमिति प्रत्यक्ष विरोधात् विधिभिन्नोऽर्थवादः सच त्रिविधः गुणवादोऽ-नुवादो भूतार्थवादश्चेति तदुक्तम् विरोधे गुणवादस्यादनुवा-

---

त्वभागितयोद्देश्यत्वस्य प्रतिग्रहीतरिसत्त्वात्तत्रातिव्याप्तिवारणाय मन्त्रपरत्या-गकर्त्तृ मन्त्रपरम् न योषिद्भिः पृथग्दद्यादित्यादिना पार्व्वणादौ पत्न्या अपि स्वत्वभागितया तत्रातिव्याप्तिवारणायोद्देश्यत्वमिति नच शूद्रपितुर्मन्त्रकर-णकहविस्सम्बन्धाभावान्नदेवतात्वं स्यादिति वाच्यम् तस्यदेवतात्वानभ्युपग-मात्तज्जातीयस्य हविस्सम्बन्धस्य विवक्षितत्वाद्वा प्रेतस्यापि देवतामिष्यत एव मन्त्रपदस्वाहास्वधान्यतरपरमिति केचित् तदन्यत्वेन विशेषणान्न तत्रा-तिव्याप्तिरित्यपरे उद्देश्यत्वञ्चोद्देश्यतावच्छेदकधर्म्मवत्त्वरूपंबोध्यम् तेन न-शरीरानवच्छिन्नतादृशायामात्मन्यतिव्याप्तिः शरीरावच्छिन्नस्यैवोद्देश्यत्वाद्दे-वतात्वाच्चेति निगर्व्वः। धर्म्मीति। स्थाय्यपूर्व्वकल्पने स्थायित्वपूर्व्वयोरुभ-योः कल्पनाद्वरं याग एव स्थायित्वं धर्म्मसाच कल्प्यतामित्यर्थः। नचैवमि-ति। एवं यागस्य स्थायित्वस्वीकारे इदानीं यागनाशकाले प्रत्यक्षतेति। प्रत्य-क्षे विषयस्य कारणतया तत्सत्वात् सम्मतेच यागस्याशुविनाशित्वाद्विषयास-त्वान्नतल्लौकिकप्रत्यक्षमिति भावः। आत्मेति। प्रथमक्षणेयोग्यत्वाद्द्वितीयक्षणे तत्प्रत्यक्षेऽपि न तृतीयादि क्षणे प्रत्यक्षमित्यर्थः विषयस्य कार्य्यकालवर्त्तितया हेतुत्वेन तृतीयादि क्षणेन ज्ञानादिप्रत्यक्षमित्यभिप्रायेण द्वितीयक्षणेयोग्यत्वा-भिधानम् अन्यथातु तृतीयक्षणे योग्यत्वादिति बोध्यम्। इदानीमिति। भव-न्मते यागस्यस्थायित्वेन यागस्य चिरातीतदशायां न यजेयमिति न स्यादि-त्यर्थः। अपूर्व्व स्वीकारेतु तस्यातीन्द्रियतया न तत्प्रत्यक्षापत्तिरिति भावः। विधिं-निरूप्यार्थवादं निरूपयति विधिभिन्न इति। विधिभिन्नो वाक्यविशेषोऽर्थवाद इत्यर्थः विशेष इत्युपादानाम्घटमानयेत्यादि वाक्ये ऽतिव्याप्तिः विधौ तद्वार-

दोऽवधारितो भूतार्थवादस्तद्भूतादपि बाधकविधानतः कृमेणो दाहरणानित्यादित्यो यूपः अग्निर्हिमस्य भेषजम् इन्द्रो वृत्राय वज्रमुदयच्छत् सोऽयं शब्दोऽनित्यः उत्पन्नो गकारो विनष्टो गकार इति प्रतीतेः अत्र गुरवः नित्यश्शब्दो व्योमैकगुणत्वात्तत्परिमाणवत् नचाप्रयोजकं सोऽयं गकार इति प्रत्यभिज्ञानस्यान्यथानुपपत्तेः नचायं भ्रमः बाधकाभावात् नचोत्पन्न्या-

---

णाय विधिभिन्न इति अर्थवादं विभजति । स्त्विति । अर्थवादस्त्वित्यर्थः यथाक्रमं तल्लक्षणान्याह । तदुक्तमिति । विरोधे विशिष्यतावच्छेदक विशेषण शब्दार्थयोर्विरोधो यथा आदित्योयूपोभवति यजमानः प्रस्तर इत्यादि । अवधारित इति प्रमाणान्तरेणानिश्चितार्थं ज्ञापकश्शब्दः अनुवादरूप इत्यर्थः यथाग्निदुःखेन सम्भिन्नमित्यादि वाक्यं परिणति सुरसमाम्रफलं परिणति विरसं पनसफलमित्यादिरूपं च वाक्यं तत्र प्रत्यक्षप्रमाणादिना ततदर्थनिर्णयादिति बोध्यम् । तद्भावादिति । अर्थभानात् तथाच तत्काले तद्गुणज्ञापकश्शब्दो भूतार्थवाद इत्यर्थः यथा जरायामयं शूरः यथा वाराण्यभ्रंशेऽप्यमात्यैरयंराजेति प्रयुज्यत इति । इयताप्रबन्धेन परिकरस्यशब्दस्य प्रामाण्यं व्यवस्थाप्यशब्दस्य नित्यत्ववादिमतनिरासाय तस्यानित्यत्वं व्यवस्थापयति । सोऽयंशब्द इति । अनित्यः उत्पत्तिमान् ध्वंसप्रतियोगिवा तत्रमानमाह । उत्पन्न इति । गुरवः प्राभाकराः । व्योमेति । व्योममात्र गुणत्वादित्यर्थः मात्रपदेन घटाकाशसंयोगेन व्यभिचारः तत्परिमाणवत्गगनपरिमाणवत् अप्रयोजकत्वं हेतुरस्तु साध्यमास्तु इति प्रकृतानुमानेऽनुकूलतर्कविरह इत्यर्थः अन्यथा शब्दनित्यतांविना । अनुपपत्तेरिति । सोऽयंगकार इत्यत्र हि एतत्कालीनगकारेपूर्व्वकालीनगकाराभेदोभासते । सचगकारनाशेन सम्भवति तथाच शब्दोयदि नित्योन स्यात्तर्हि पूर्व्वकालीनगकाराऽभेदे प्रत्यभिज्ञानविषयो न स्यादित्यनुकूलतर्क इति भावः अयम् सोऽयंगकार इति प्रत्ययो बाधकाभावात् प्रमात्वे बाधकाभावात् बाधकाभावेऽपिच भ्रमत्वे विषयव्यवस्थोच्छेदापत्तेरिति भावः । उत्पन्न्यादीति । उत्पन्नो गकार इत्यादि-

दि प्रतीतिर्बाधिकातस्याव्यञ्जक वायूत्पत्त्यादि विषयत्वा-दित्याहुः तन्न गकारगतत्वेनोत्पत्त्यादि प्रतीतेः न चासौभ्रा-न्तिः बाधकाभावात् प्रत्यभिज्ञानं बाधकमिति चेत् अनयैव सावाधिताकिन्न स्यात् नह्यत्र विनिगमकमस्ति नन्वेवं वि-

---

प्रतीतेरित्यर्थः आदिना विनाशप्रतीतिपरिग्रहः बाधिका नित्यत्वे बाधिका-तस्याउत्पत्त्यादि प्रतीतेरित्यर्थः। व्यञ्जकेति। अस्मन्मते विजातीयवायुः श-ब्दोत्पादकःएतन्मते व्यञ्जकः तथाचोत्पन्नोगकार इत्यत्र गकारव्यञ्जकवायुरु-त्पन्न इति वायुनिष्ठत्वेनोत्पत्त्यादिप्रतीतेर्नशब्दनित्यता बाधकत्वमितिभा-वः। गकार इति। तथाच गकारउत्पन्न इत्यत वायोरभानात् गकार नि-ष्ठोत्पत्तेरेव विषयत्वाच्च न वायुनिष्ठोत्पत्त्यादि विषयकत्वमिति न शब्दनि-त्यत्वमिति भावः नचासावितिगकारगतत्वेनोत्पत्त्यादि प्रतीतिः बाधका-भावात् प्रमात्वे बाधाकाभावात् प्रत्यभिज्ञानं सोऽयं गकार इत्यभेदावगा-हिप्रत्यभिज्ञानम् बाधकम् उत्पत्त्यादि प्रत्ययस्य प्रमात्वे बाधकम् अनयैव उ त्पत्त्यादिमत्वप्रतीत्यैव सोऽयंगकार इत्यभेदावगाहिप्रत्यभिज्ञावाधिका किं न स्यादित्यर्थः अत्र उत्पत्त्यादिप्रतीत्यभेदावगाहिप्रत्यभिज्ञानयोर्वाध्य बाधकभावे विनिगमकमस्तीति येनप्रत्यभिज्ञानस्य बाधकत्वेनोत्पत्त्या-दि प्रतीतेर्भ्रमत्वकल्पनाच्छब्दानित्यत्वं नसेत्स्यतीति भावः। नन्वेवमि-ति। एवमित्यस्य विवरणं विनिगमकाभावे इतिबाध्यबाधकभावे विनिग-काभाव इत्यर्थः विनाशादीति। एवकारेण प्रत्यभिज्ञानव्यवच्छेदः कुत इति येन तद्दलाच्छब्दानित्यत्वं सिद्ध्येदिति भावः उत्पत्तीति। द्वयोर्भ्रमत्वकल्प-नापेक्षया एकस्यैव भ्रमत्वकल्पनायान्याय्यत्वादित्यर्थःउभयस्यापि प्रमात्वे नो-पपत्तिमाह अन्येत्वित्यादिना विनिगमकेति बाध्यबाधकभावे विनिगम-काभावादित्यर्थः उभयोः उत्पत्त्यादि प्रतीतिप्रत्यभिज्ञानयोः एतद्विरुद्धार्थ-योरुभयोः प्रमात्वमित्यर्थः अनयोरेकतरंवाध्यं विरुद्धार्थग्राहकत्वादिति भावः प्रत्यभिज्ञानस्य स एवायं गकार इति प्रत्यभिज्ञानस्य गत्वेति इद-न्त्वावच्छिन्ने गत्वावच्छिन्नाभेदो भासते नतु तत्तद्व्यक्त्यभेद इतिगकारव्यक्ती-नामुत्पत्त्यादि प्रत्ययबलेन नानात्वेऽपि गत्वेन रूपेणाभेदोऽस्त्येवेतिन क-

निगमकाभावे विनाशादिप्रत्ययस्यैव कुतोबाधितत्वमिति चेन्न उत्पत्तिविनाशप्रत्यययोरुभयोर्बाध्यत्वकल्पनापेक्षया प्रत्यभिज्ञानमात्रस्य बाध्यत्वकल्पनायां लाघवात् ॥ अन्ये तु विनिगमकाभावादुभयोरेवप्रमात्वं कथमेतदिति चेत् प्रत्यभिज्ञानस्य गत्वावच्छिन्न भेदाभाव विषयत्वात्तथाच सतिगकारोऽयमितिस्यान्नतु सोऽयमितीति चेन्न सोऽयमित्यस्य तद्व-

---

स्या अपि प्रतीतेर्भ्रमत्वमिति भावः शङ्कते तथा सतीति गत्वावच्छिन्नाभेदाभावविषयकत्वे सतीत्यर्थः । नन्विति । सोऽयमित्यत्र हि इदन्त्वावच्छिन्ने-तद्व्यक्त्यभेद एव भासते नतु गत्वावच्छिन्नाभेद इति भावः । तद्वृत्तीति । सोऽयमित्यत्र तद्व्यक्त्यभेदोन विषयः किन्तु तद्व्यक्तिवृत्तिगत्वावच्छिन्नाभेदः सचव्यक्त्योर्भेदेऽपि गत्वस्याभेदात्सम्भवत्येवेति भावः । गकारोऽयमिति । गकारोऽयमित्यत्र स्वरूपतः गत्वावच्छिन्नाभेदो विषयः नतु सोऽयमित्यत्रेवतद्व्यक्तिवृत्तिगत्वावच्छिन्नाभेद इति भावः । तद्वृत्तित्वेति । तद्वृत्ति तद्व्यक्तिवृत्तित्वानवगाहित्वादित्यर्थः तथाच गत्वे तद्व्यक्तिवृत्तित्वं यत्र न भासतेतत्र गकारोऽयमित्याकारः यत्रतु तद्व्यक्तिवृत्तित्वं भासते तत्र सोऽयमितिनसोय मित्यत्र गकारोऽयमिति प्रतीत्यापत्तिरि तिभावः ननु व्यक्तीनां भेदेऽपि जातेरभेदेनैवाभेदावगाहिप्रत्यय इति तवानुमतमेवत्वन्मतेसोऽयमित्यस्य तद्व्यक्तिवृत्तिगत्वजात्यवच्छिन्नाभिन्नोऽयमित्यर्थपर्यवसानात्तज्जातीयोऽयमित्याकारापत्तिःरित्याशङ्कते तथा सतीति । गत्वरूपजात्यवच्छिन्नाभेदविषयकत्वे सतीत्यर्थः । तज्जातीयोऽयमिति । तद्वृत्तिजात्यवच्छिन्नाभेदस्यैव तज्जातीयोऽयमिति प्रतीतिविषयत्वादिति भावः । जातित्वेति । यत्रजातित्वेनोपस्थित तद्व्यक्तिवृत्तित्वे नोपस्थित गत्वावच्छिन्नाभेदोभासते तत्रतज्जातीयोयमिति यत्रतु तद्व्यक्तिवृत्तित्वे नैवोपस्थित गत्वावच्छिन्नाभेदस्तत्र सोऽयमित्याकार इति न तज्जातीयोऽयमित्याकारइति भावः आहुरित्यस्वरसोद्भावनं तद्बीजन्तुसोऽयंघट इति प्रत्यभिज्ञावलाद्घटादीनांस्थैर्यसिद्धिः सातु घटादीनां क्षणिकत्वेऽपि घटत्वे नैक्यादेवाभेदप्रत्ययोपपत्तेर्न तत्साधिकेति स्थै

न्ति गत्वावच्छिन्नाभिन्नोऽयमित्यर्थोङ्कारोऽयमित्यत्र च गत्वे तद्वृत्तितानवगाहनात्तथा च सति तज्जातीयोऽयमिति स्यादिति चेन्न गत्वे जातित्वानवभासनादित्याहुः भट्टास्तु शब्दानित्यो निरवयवद्रव्यत्वादात्मवदित्याहुः तन्न उक्तदोषाच्छब्दस्य द्रव्यत्वे मानाभावाच्च शब्दद्रव्यं साक्षात्सम्बन्धेनेन्द्रियाग्राह्यत्वाद्घटवदिति चेन्न अप्रयोजकत्वाच्छब्दस्य नीरूपद्रव्यत्वेन वहिरिन्द्रियग्राह्यापत्तेश्च अन्ये तु वर्णो नित्योऽन्यत्व-

---

थ्येमाचसुच्छिन्नेतेति तद्व्यक्त्यभेद एव सोऽयमितिप्रतीतेर्विषयो वाच्य: तथाचैतस्याभ्रमत्वं विनानोपपत्तिरिति यत्तु विजातीयवायुसंयोगस्य कात्थितावच्छेदकं कविषयकश्रावणत्वं शब्दनित्यत्वमते वाच्यम् तच्च विषयकत्वश्रावणत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरह: मन्मते तु कत्वमेवेति तत्तुच्छम् तन्मते विषयितासम्बन्धेन कव्यक्तेरेवावच्छेदकत्वात् अगृहीतकत्वखत्वादिरूपजातिकशब्दस्य कोलाहलतया तत्प्रत्यक्षासङ्ग्रहेण विषयितयां कत्वखत्वस्यावच्छेदकता सम्भवादिति वस्तुतस्तु तारत्वमन्द्रत्वरूपविरुद्धधर्माध्यासाद्भेदसिद्धौ तन्नित्यत्वे मानाभाव: अभेदावगाहिप्रत्यभिज्ञाया असम्भवात् य एव तारस्स एव मन्द्र इति प्रतीतेस्तारत्वमन्द्रत्वयोरविरोधेऽपि तत्प्रतियोगिकं तारत्वं तत्प्रतियोगिकंमन्द्रत्वञ्च विरुद्धमेव कत्वादिना सङ्करात् तारत्वादीनां कत्वादिव्याप्यानामननुगमेऽपि सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेन तेषामनुगमात्तार इत्यनुगतप्रतीत्युपपत्ति:सजातीयेत्यस्यस्वाश्रयसजातीयेत्यर्थ: लौकिकविषयतया मन्द्रसाक्षात्कारम्प्रति स्वावच्छेदककर्णावच्छेद्यत्वरूपया समानावच्छेदकत्वप्रत्यासत्त्या तारस्य प्रतिबन्धकत्वमिति तारत्वे प्रतिबन्धकतावच्छेदकत्वमिति नन्वत्रावच्छेदकत्वं न तत्पर्य्याप्त्यधिकरणत्वं मन्द्रबुभुत्साविरहविशिष्टतारत्वेनैव प्रतिबन्धकतयातारत्वेऽपि तत्पर्य्याप्त्यधिकरणत्वाभावात् अवच्छेदककोटिप्रविष्टत्वविवक्षणे चतारसाक्षात्कारम्प्रति तारबुभुत्साविरहविशिष्टमन्द्रबुभुत्साविशिष्टमन्द्रत्वेन प्रतिबन्धकतया मन्द्रत्वेऽतिप्रसङ्ग इति चेन्नैवम् मन्द्रबुभुत्साविशिष्टत्वेनैव प्र

तिबन्धकत्वात् मन्द्रत्वभुक्तात्वेनैव सामानाधिकरण्य प्रत्यासत्त्याप्रतिबन्धकत्वे-तु मन्द्रासत्वेपि तारप्रत्यक्षानापत्तेर्स्त्वभुक्तितित्वेन प्रतिबन्धकत्वं तथाच मुख्यविशेष्यविधयाऽवच्छेदककोटिप्रविष्टत्वरूपावच्छेदकत्वस्य विवक्षणान्मन्द्रत्वेनातिप्रसङ्ग इति दिक्-शब्दस्य द्रव्यत्वनित्यत्व वादिभट्टमतं दर्शयति। भट्टास्त्विति। निरस्पर्शेति निरुपर्शत्वं गन्धादौ व्यभिचारीति। द्रव्यत्वादिति। द्रव्यत्वमात्रंच घटादौ व्यभिचारीति निरुपर्शद्रव्यत्वादिति विशिष्टहेत्वनुधावनम्। उक्तदोषादिति। शब्दस्य नित्यत्वे उत्पत्तिविनाशप्रत्यययोरुभयोर्भ्रमत्वकल्पनमपेक्ष्यैकस्याभेदावगाहिप्रत्ययस्यैव भ्रमत्वकल्पनायान्याय्यत्वादितिनित्यत्वे उक्तदोषादित्यर्थः तथाच प्रकृतानुमाने बाध इति भावः स्वरूपासिद्धिमप्याह। शब्दस्येति। नन्वनुमानमेव शब्दस्य द्रव्यत्वसाधकमित्याशङ्कते शब्दे इति साक्षादिति। साक्षात्सम्बन्धत्वञ्चसंयोगसमवायान्यतरत्वम्। अप्रयोजकत्वादिति। अनुकूलतर्काभावादित्यर्थः प्रतिकूलतर्कमप्याह। शब्दस्येति। नीरूपेति शब्दो द्रव्यंभवेद्रूपिद्रव्यं वा भवेन्नीरूपद्रव्यस्वातच्चरूपिद्रव्यत्वस्य प्रत्यक्षबाधितत्वात्नीरूपद्रव्यत्वमेवेति भावः। बहिरिति। बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रतिउद्भूतरूपत्वेन हेतुतया शब्दस्याप्रत्यक्षत्वापत्तेरित्यर्थः तथाच शब्दो यदि नीरूपद्रव्यं स्यात् बहिरिन्द्रियप्रत्यक्षविषयो न स्यात् रूपिद्रव्यत्वन्तु प्रत्यक्षबाधितमिति शब्दस्य द्रव्यत्वसाधने प्रतिकूलतर्क इति भावः वर्णातिरिक्तो वर्णव्यङ्ग्यो नित्यश्शब्दस्स्फोटः तस्यचोत्पत्त्यादि प्रत्ययाभावात् नित्यत्वेन तं दृष्टान्तीकृत्यान्येषामपिवर्णानां नित्यत्वमिति वैयाकरणमतं दर्शयति। वर्ण इति। शब्दमात्रस्यपक्षत्वे ध्वन्यात्मकशब्दे बाधः अंशतो भागासिद्धिश्च शब्दत्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यतायान्तु स्फोटेन तन्मते सिद्धसाधनमतश्शब्द इतिविहाय वर्ण इत्युक्तम् अतएव पक्षातिरिक्तस्यैव दृष्टान्तत्वमिति मतेऽपि नक्षतिरितिध्येयम्। ध्वन्यन्येति। शब्दत्वमात्रस्य ध्वनौ व्यभिचारित्वात् ध्वन्यन्येति ध्वन्यन्यत्वञ्च घटादौ व्यभिचारीतिशब्दत्वादित्युम्। अतएवेति। उत्पत्त्यादि प्रत्यक्षेणानुमानस्य बाधित्वात् अप्रयोजकत्वाच्चेत्यर्थः दोषान्तरमप्याह। दृष्टान्तेति। दृष्टान्तासिद्धिमेवोपपादयति नहीति। प्रमाणेति। प्रत्यक्षादेरभावादिति भावः सः स्फोटः। वर्णकदम्बेति। वर्णसमूहेत्यर्थः आशुविनाशितया तृतीयक्षणवृत्तिध्वंसप्रतियोगितया। मेलनेति।

ग्राहकत्वात्स्फोटवदित्याहुः तदप्यतएव निरस्तम् दृष्टान्तासि-
द्धेश्च नहि वर्णान्यः स्फोटात्मकः प्रमाणसिद्धोऽस्ति नन्वस्ति न सः
तथाहि पदानां वर्णकदम्बरूपाणामाशुतरविनाशितया मे-
लनासम्भवादप्रत्यक्षत्वं तावन्निरूढम् तथाच तदप्रत्यये कु-
तोऽर्थप्रत्ययस्तस्मात्तावद्वर्णाभिव्यङ्ग्यः पदस्फोटः कश्चिदभ्यु-
पेयः यतोऽर्थप्रत्यय इति तदसत्सहि स्फोटस्तावद्वर्णव्यङ्ग्यः
तावतां मध्ये यत्किंचिद्वर्णव्यङ्ग्यो वा तावद्वर्णाभिव्यक्तिव्यङ्ग्यो
वा नाद्यः आशुतरविनाशिनां क्रमिकाणां तेषां मेलनासम्भ-
वात् न द्वितीयः घकारमात्रोच्चारणे घटपदस्फोटप्रत्ययेऽर्थ-
प्रत्ययापत्तेः वर्णान्तरवैफल्याच्च नान्त्यः तदसम्भवात् अथ

---

एकक्षणावस्थायित्वाभावादित्यर्थः । अप्रत्यक्षत्वमिति । पदानामिति प्राक्तने-
नान्वयिप्रत्यक्षे विषयत्वेन कारणत्वादिति भावः । तथाचेति । पदानामप्रत्य-
क्षत्वे च तदप्रत्यये पदाप्रत्यये व्याप्तग्राह्यस्मरणेनानुमित्यादेरप्यभावादिति भावः।
कथमिति । वृत्त्यापदजन्यपदार्थोपस्थितेरेव शाब्दबोधाङ्गत्वादिति भावः त-
स्मात् पदानामप्रत्यक्षत्वात् । पदस्फोट इति । तथाच तेनैव पदार्थोपस्थिति
रिति भावः । तावद्वर्णेति । पदघटकीभूततावद्वर्णैर्व्यङ्ग्य इत्यर्थः. तावतां पद
घटकीभूतानां तावतामित्यर्थः। तावदिति । पदघटकीभूत तावद्वर्ण प्रत्यक्षव्य-
ङ्ग्यो वेत्यर्थः आशुविनाशिनां तृतीयक्षणवृत्तिध्वंसप्रतियोगिनाम् क्रमिकाणा-
म् तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकानाम् । मेलनेति । एकक्षणाव-
स्थायित्वासम्भवादित्यर्थः आशुतरविनाशिनामपि युगपदुत्पन्नानांपुरुषीयज्ञा-
नानां मेलनमस्तीति क्रमिकाणामिति क्रमिकाणामपि घटपटादीनां मेलन-
मस्तीति आशुतरविनाशिनामिति आशुतरविनाशिनोः क्रमिकयोरपिज्ञा-
नयोर्मेलनमस्तीति आशुतरविनाशिनामिति बहुवचनोपपादनं । घका-
रेति । टकारमात्रोच्चारणेऽपीति द्रष्टव्यम् । वर्णान्तर इति । वर्णानां ना-
र्थप्रत्यये उपयोगित्वं किन्तु स्फोटप्रत्यय एव तस्यच यत्किञ्चिदेकवर्णेनैवोप-
पत्तेः वर्णान्तरोपादानवैयर्थ्यादित्यर्थः। तदसम्भवादिति । पदघटकीभूत तावद्व-

पूर्व्वपूर्व्व वर्णगोचरसंस्कारसहचरितचरमवर्णो पदव्यञ्जक इति चेत्तर्हि सएवार्थ प्रत्यायकोभवतु कृतं स्फोटेन अथ पदप्रतीतिबलात्तत्सिद्धिरिति चेन्न तस्यक्रमविशेषवत्तावद्वर्णगोचरत्वात् तावद्वर्णगोचरप्रत्ययएव न सम्भवतीति चेन्न तावद्वर्णगोचरसंस्कारात्तत्समूहालम्बनरूपतावद्वर्णगोचरस्मरणसम्भवात् ननु तावद्वर्णमात्रं नपदं अर्थाप्रत्यायकत्वादन्यथा नदीदीनयोः पदयोरविशेषापत्तेः किन्त्वानुपूर्व्वीविशेषविशिष्टतावद्वर्णरूपं नच तत्प्रत्ययसम्भवतीति चेन्नघो-

---

र्णाभिव्यक्तीनामेकदाऽसम्भवादित्यर्थः प्रथमं घत्वनिर्व्विकल्पकं ततः घत्वविशिष्टबुद्धिः तत टत्वनिर्व्विकल्पकं तत टत्वविशिष्टबुद्धिरिति एकदा वर्णानामिव ज्ञानानामप्याशुविनाशितया यौगपद्यासम्भवादिति भावः । तद्व्यञ्जक इति । स्फोटव्यञ्जक इत्यर्थः सएव पूर्व्वपूर्व्ववर्णगोचरसंस्कारसहितचरमवर्णोपलक्ष एव क्लृप्तम् । व्यर्थस्फोटेनेति तद्धेतोरेवास्तु हेतुत्वं किंतेनेतिन्यायेन पूर्व्ववर्णगोचरसंस्कारसहकृत चरमवर्ण प्रत्यक्षेणैवार्थप्रत्ययोपपत्ते र्नतदन्यथानुपपत्त्या स्फोटकल्पनमिति भावः मास्तु अर्थप्रत्ययानुपपत्त्या स्फोटसिद्धिः पूर्व्वपूर्व्व वर्णसंस्कारसहकृतचरमवर्णाभिव्यक्तिव्यङ्ग्येन स्फोटेन पदप्रतीतिर्जन्यत इति पदप्रतीत्यन्यथानुपपत्तिरेव स्फोटसाधिकास्त्वादित्याशङ्कते । अथेति । तत्सिद्धिः स्फोटसिद्धिः तस्य पदप्रत्ययस्य । क्रमेति । स्वाव्यवहितोत्तरवर्ती यः टः तदव्यवहितोत्तरवर्त्त्यमादिविषयत्वादित्यर्थः । न सम्भवतीति । वर्णानामाशुविनाशितया प्रत्यक्षात्मकस्तावद्वर्णगोचरः प्रत्ययोनसम्भवतीत्यर्थः प्रत्यक्षात्मकतावद्वर्णप्रत्ययासम्भवेऽपि स्मरणात्मकस्यैव तस्यसम्भव इत्याह । तावदिति । ननु तावद्वर्णगोचरस्मरणसम्भवेऽपि न तस्य पदरूपत्वं पदस्य तावद्वर्णमात्रानात्मकत्वादित्याह । नन्विति । तावद्वर्णेति पदघटकीभूततावद्वर्णमात्रमित्यर्थः । अर्थेति । केवल वर्णमात्रस्यार्थाप्रत्यायकत्वादित्यर्थः अन्यथा वर्णमात्रस्यार्थ प्रत्यायकत्वे । अविशेषापत्ते रिति । दीनपदादपि नदीविषयकशाब्दबोधापत्तेरित्यर्थः वर्णद्वयस्योभयत्राविशिष्टत्वादिति भावः दीनेत्यत्राप्यानुपूर्व्व्याःसत्त्वादानुपूर्व्वीविशेषेति तत्प्रत्ययः आनुपूर्व्वीप्रत्ययः आनुपूर्व्वीगोचरसंस्कारा-

त्तरत्वं हि टस्यानुपूर्व्वी अस्तिच तस्य प्रत्यक्षत्वं घोत्तरं टं शृणोमीति प्रतीतेरिति दिक् । नन्वर्थापत्तिरपि पृथक् मानमिति हि: मानान्तरम् तथाहि पीनो देवदत्तो दिवा न भुङ्क्ते इति प्रत्ययानन्तरं दिवसाभोजिन: पीनत्वं रात्रिभोजनमन्तरेणानुपपन्नमिति तत्कल्पयति नचात्र प्रत्यक्षादिप्रमाणम् किन्त्वनुपपत्तिज्ञानम् सैवार्थापत्तिरितिचेन्न केवलव्यतिरेकिण्येवोपपत्ते: तथाहि देवदत्तो रात्रौ भुङ्क्ते दिवाभु-

---

भावेन तत्स्मरणस्याप्यभावादिति भाव: । घोत्तरत्वं हीति । घाव्यवहितोत्तरत्वं हीत्यर्थ: अनादौ संसारे सर्व्वस्यापि टकारस्य घोत्तरत्वात् अव्यवहितोत्तरत्वञ्च तद्व्यक्तिध्वंसाऽधिकरणक्षणध्वंसानधिकरणत्वे सति तद्व्यक्त्यधिकरणक्षणध्वंसानधिकरणीभूतो य: क्षणस्तदुत्पत्तिकत्वम् यद्यप्येतस्य तत्तद्व्यक्तिघटितत्वादननुगमस्तथापि स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्वसम्बन्धेन घवत्त्वं बोध्यम् सम्बधाननुगमस्य चादोषत्वाददोष: यत्तु टस्य घोत्तरत्वं घवृत्तीच्छादिमत्वं इच्छादिमत्ताच कालिकसम्बन्धेन नतु घवृत्तिज्ञानवत्त्वं तत् अपेक्षाबुद्ध्यात्मकज्ञानस्य क्षणचतुष्टयावस्थायित्वसम्भवेन तस्याव्यवहितोत्तरत्वघटकत्वासम्भवादिति तन्न इच्छावत्त्वनिवेशेऽपि नदीदीनयोरविशेषापत्तेरवारणात् इच्छाविशेषनिवेशेच विशेषस्य दुर्निरूपत्वादिति तस्य घोत्तरत्वानुपूर्व्वीविशेषस्य प्रत्यक्षत्वम् अलौकिकप्रत्यक्षविषयत्वम् । घोत्तरं टमिति । घोत्तरत्वांशेऽलौकिकं टांशे लौकिकं श्रावणप्रत्यक्षं भवतीत्यर्थ: । दिगिति । पदत्वम् आनुपूर्व्वीविशेषविशिष्टवर्णत्वं तथाच शाब्दबोधे आनुपूर्व्वीविशेषविशिष्टवर्णज्ञानत्वेन कारणत्वे वर्णविशिष्टानुपूर्व्वीविशेषज्ञानत्वेन कारणत्वमादाय विनिगमनाविरहाद्वर्णज्ञानत्वेनानुपूर्व्वीज्ञानत्वेनच भिन्नभिन्नरूपेणैव कारणत्वमिति सूचितम् । पृथगिति । अर्थापत्तिरपिप्रमाणम् अर्थापत्तिपदवाच्यमपिप्रमाणं पृथगस्तिप्रत्यक्षादिप्रमाणचतुष्टय भिन्नमस्तीत्यर्थ: तेन न सिद्धसिद्धिव्याघात: तत् रात्रिभोजित्वं कल्पयति । नचात्रेति । अत्र रात्रिभोजित्वज्ञाने प्रत्यक्षादीत्यादिनाऽनुमानादि परिग्रह: किन्त्वनुपपत्तिज्ञानं प्रमाणमित्यनुषज्यते । सैवेति । अनुपपत्तिज्ञानरूपैव अर्थापत्तिरिति ।

ज्ञानत्वेनसतिपीनत्वाद्यन्नैवंतन्नैव यथा केवलमभोजीति अ-र्थापत्तिपदञ्चकेवलव्यतिरेकिण्येव नार्थान्तरमिति सङ्क्षे-पः अविदितकर्तृकश्शब्दविशेष एव ऐतिह्यं नासयदि मानं-तदा शब्द एव नोचेत्प्रमाणमेव नेत्युभयथापि न मानान्तर मितिसिद्धञ्चत्वारिप्रमाणानीति ननु सर्व्वमिदं प्रमात्वसि-द्धौ स्यात् तदेवतावन्नसिद्धम् नहि तत्प्रत्यक्षंज्ञानस्यातो-

---

अर्थापत्तिरूपं प्रमाणमित्यर्थः. तज्जन्यप्रमापि अर्थापत्तिरित्येव व्यवह्रियत इति ध्येयम् । दिवेति । पीनत्वमात्रं दिवैवभोजिनिव्यभिचारीति दिवाभोजि त्वेसतीति अभोजित्वस्य स्वरूपासिद्धत्वादिवाऽभोजित्वे सतीति विशिष्टमुपा-त्तं दिवाभोजित्वमात्रं चाभोजिनि अपीनेव्यभिचारीति पीनत्वादिति। यन्नैव-मिति । यः रात्रौ न भुङ्क्ते नासौदिवाभोजित्वेसति पीनः यथा रात्रौदिवाऽ भोजी अपीनश्चे ति व्यतिरेकिण्येव व्यतिरेक्यनुमानेनैव उपपत्तेः रात्रिभोजि-त्वज्ञानोपपत्तेः नार्थापत्त्याख्यं प्रमाणान्तरमुपेयमिति भावः ननु तथासति अर्थापत्तिः प्रमाणमिति व्यवहारः कथमतआह अर्थापत्तिपदञ्चेति । केव लेति । केवलव्यतिरेकिविशेषस्यैवेत्यतर्थः नन्वनुमिनोमीत्यनुव्यवसायवद-नुपपत्तिप्रभवतादृशज्ञानोत्तरमर्थापयामीत्यनुव्यवसायादर्थापत्तित्वजाति-सिद्धौ तदवच्छिन्नकरणतया प्रमाणान्तरत्वस्वीकारआवश्यकइत्यआह । सङ्क्षे-प इति । अर्थापत्तित्वस्यानुमितित्वव्याप्यत्वोपगमादतएव तादृशज्ञानोत्तरं नानुमिनोमीति न धीरिति दिक् ऐतिह्यप्रमाणान्तर वादिमतं दूषयितुमा-ह । अविदितेति । विशिष्यानिर्णीतकर्तृकश्शब्दविशेषः इतिहासादि रूपः स एव ऐतिह्यमिति व्यवह्रियते तस्य प्रमाणान्तरत्वं दूषयति । सयदीति । शब्द विशेषः यदि प्रमाणम् यदि प्रमितिकरणं तदा शब्दएव प्रमाणं नत्वतिरिक्तं नोचेत् प्रमाणं न चेत् प्रमाणमेव न प्रमाणपदवाच्यमेव न उभयथा प्रमितिजनकत्वाजनकत्वाभ्याम् न मानान्तरम् न प्रत्य-क्षादिप्रमाणेभ्यो भिन्नं सत्प्रमाणमित्यर्थः । चत्वारीति । प्रत्यक्षानु-मानोपमानशब्दाएव प्रमाणानि नत्वतिरिक्तानीत्यर्थः इयता प्रबन्धेन प्रमाणं निरूप्य प्रामाण्यस्य परतोग्राह्यत्वं साधयितुमाह । नन्विति ।

न्द्रियत्वादन्यथाज्ञानं ज्ञानं तज्ज्ञानानां ज्ञानमेवस्यान्नतु-विषयान्तरसञ्चार इति अत्रगुरवः। स्वप्रकाशमेवज्ञानं घ-टादिकमिवस्वात्मानं स्वाधिकरणमात्मानञ्चविषयीकरोति अ-त एव सर्वमेवज्ञानं घटमहंजानामीत्याकारकम् इत्यञ्च ज्ञानस्यमिति मातृमेयतयैतिद्विः त्रिपयत्वात्त्रिपुटीप्रत्यक्ष-तेति प्रवाद इत्याहुः तन्न चक्षुर्ज्ज्न्यघटज्ञानादिस्वात्म-नोविषयीकर्तुमशक्यत्वाच्चक्षुर्षादिज्ञाने विषयेन्द्रियसन्निक-र्षयोरपि हेतुत्वात् नचोत्पद्यमानं ज्ञानपूर्व्वमस्तिसन्निकृ-

---

सर्व्वमिदंप्रमाकरणनिरूपणम् प्रमात्वसिद्धौ प्रमात्वज्ञानं विशिष्टबुद्धिं प्रति वि-शेषणज्ञानस्य हेतुतया प्रमात्वज्ञानं विनाप्रमाकरणत्वज्ञानासम्भवादिति भा-वःतदेवतु प्रमात्वमेवतु कुतस्सिद्धम् किंजन्यज्ञानविषयः तत्प्रमात्वम् प्रत्यक्ष-म् प्रत्यक्षगम्यम्तत्प्रत्यक्षं प्रमात्वप्रत्यक्षमिति वा तदर्थः। ज्ञानस्येति। प्रमा-त्वाश्रयज्ञानं विनाप्रमात्वज्ञानासम्भवात् प्रमात्वस्य ज्ञानघटितत्वादिति भा-वः ननु ज्ञानातीन्द्रियत्वमेव कुत इत्यत आह। अन्यथेति। ज्ञानस्य प्रत्यक्ष-त्वेविषयतत्सन्निकर्षयोस्सत्वात् ज्ञानधारैवस्यान्नतुघटपटादि विषयान्तरविष-यकंज्ञानं कदाचिदपिस्यादित्यर्थः अनुव्यवसायान्तरकल्पने प्रतीत्यनवस्था-पत्त्या व्यवसायएवानुव्यवसायः नर्व्वातिरिक्त इति ज्ञानस्य प्रत्यक्षत्वमेवेति गुरुमतंदर्शयति। अत्रगुरवेति। स्वंप्रकाशते भासते यच्च तादृशं ज्ञानंस्वात्मा-नं स्वस्वरूपं स्वाधिकरणं स्वस्यज्ञानस्याधिकरणं आत्मानंविषयीकरोतीत्य-र्थः। अतएवेति। ज्ञानस्यघटादिविषयज्ञानात्मविषयकत्वादेव। इत्यञ्चेति। सर्वस्य व्यवसायस्यानुव्यवसायात्मकत्वे च ज्ञानस्य सर्व्वस्य ज्ञानस्य। मि-तेति। मितिर्ज्ञानम् माता आत्मा मेयंघटादि तद्विषयकत्वात् मिति मातृ मेयानां ज्ञानस्यैकसामग्रीकत्वादिति भावः। त्रिपुटीति। त्रयाणांपुटानां समा-हारः त्रिपुटीमिति मातृविषया इतियावत् तत्प्रत्यक्षतेत्यर्थः। चक्षुरिति। च-क्षुर्ज्ज्न्यंयत् घटज्ञानादि तेन स्वात्मनश्चक्षुर्ज्ज्न्यघटज्ञानस्वरूपस्य। विषये-ति। विषयस्य विषयेन्द्रियसन्निकर्षस्यच हेतुत्वादित्यर्थः विषयस्यासत्वमाह। नचेति। नहीत्यर्थः उत्पद्यमानं घटज्ञानादि। पूर्वमिति। पूर्व्वभाविन

ष्ट्वा कथं चाक्षुषाऽऽत्मविषयकं ज्ञानं जायते चाक्षुषादिज्ञाने उद्भूतरूपवत एव द्रव्यस्य योग्यत्वादन्यथाऽऽकाशस्यापि चक्षुषा ग्रहापत्तेः भट्टास्तु ज्ञानं तावत्स्वविषये ज्ञातताख्यं फलं जनयतीति निरूढं तेनैवानुमेयज्ञानमित्याहुस्तदपि न ज्ञाततया निरस्तत्वा अ्ज्ञानरूपस्य साध्यस्याप्र-

---

एव कारणत्वादिति भावः सन्निकर्षस्यासत्वमाह । सन्निकृष्टञ्चेति । यत्र विषयतया प्रत्यक्षं तत्पूर्वक्षणे तत्रविषयस्य सन्निकर्षस्यचापेक्षणीयत्वेन उत्पद्यमाने तत्र तत्पूर्व्वक्षणावच्छेदेन तयोरभावात् अवच्छेद्याधिकरणे सम्बन्धस्यावच्छेदकत्वानङ्गीकारादिति भावः ननु तन्मते ज्ञानेन्द्रियसन्निकर्षस्य ज्ञानप्रत्यक्षहेतुत्वानभ्युपगमेन विषयतत्सन्निकर्षाद्यघटितायाएवसामग्रीव्याप्तेरुपगमाद्ज्ञानस्य स्वप्रकाशकत्वेवाधकाभावः नचेच्छादिप्रत्यक्षानुरोधेनात्मसमवेतमानसत्वावच्छिन्नम्प्रति मनस्संयुक्तसमवायस्य हेतुतया ज्ञान प्रत्यक्षे व्यभिचार इति वाच्यम् कार्य्याव्यवहितपूर्व्वक्षणावच्छेदेन कार्य्याधिकरणे कारणाभावस्यैव व्यभिचारतयाऽवच्छेद्याधिकरणेऽसम्बन्धस्यानवच्छेदकतया कार्य्याधिकरणेज्ञाने पूर्व्वक्षणावच्छेदेन कारणसत्वस्यैवकारणाभाव सत्वस्याप्यनङ्गीकारेण व्यभिचारासम्भवादित्यत आह कथञ्चेति । चाक्षुषादीत्यादिनास्पार्शनपरिग्रहः स्पार्शनेऽप्युद्भूतरूपस्य प्रयोजकत्वात् वायोरप्रत्यक्षत्वादितिभावः । अन्यथेति । रूपशून्यसम्बन्धस्यापि चक्षुषःग्रहे चक्षुषेत्युपलक्षणं त्वचापि ग्रहापत्तेरित्यपिद्रष्टव्यम् । केचित्तु चाक्षुषादीत्यादि पदात्स्पार्शन परिग्रहः उद्भूतरूपवतदत्युपलक्षणमुद्भूतस्पर्शवतदत्यपिद्रष्टव्यम् । स्पार्शने उद्भूतस्पर्शवत एव द्रव्यस्ययोग्यत्वादितिभावः तेन नात्मनोघटादि स्पार्शनेऽपि भानसम्भवं इति व्याचक्रुः ज्ञानं न प्रत्यक्षं अनवस्थापत्तेः किन्त्वनुमिति ग्राह्यमिति भट्ट मतमाह । भट्टास्त्विति । स्वविषये ज्ञानविषये घटादावित्यर्थः । ज्ञाततेति । ज्ञातो घट इति प्रतीतेरितिभावः तत्र चज्ञानंनिमित्तकारणंघटादिकं समवायिकारणमसमवायिकारणन्तु नापेक्षितं भावकार्य्यस्य सा समवायिकारणकत्वमितिनियमस्यतु तैरनङ्गीकारादिति बोध्यम् तयैव ज्ञाततयैव ज्ञातताया इति नष्टे घटेऽपि ज्ञातोघटइतिप्रतीतेस्त-

सिद्धावनुमानासम्भवाच्च उच्यते मनसैव ज्ञानं गृह्यते योग्यत्वा-
त् नचैवं तज्ज्ञानमपि स्यादेवं तज्ज्ञानस्याप्यनवस्था वि-
षयान्तरसञ्चारसामग्र्याः प्रतिबन्धेनैकस्यचिज्ज्ञानस्यम-
नसाऽग्रहात्तत्प्रतिबन्धकत्वे किं नियामकमिति चेत् फलानु-
दयएवेति सङ्क्षेपः तथापि तस्य प्रामाण्यं केन गृह्यते न
तदनुमानेन गृहीतुं शक्यं साध्याप्रसिद्धेः अत्र भट्टाः ज्ञाततया
ज्ञानानुमितिर्ज्ञायमानाप्रामाण्यमपि विषयीकरोतीत्या-

---

त्रचसमवायिकारणस्य घटस्यासत्वेन ज्ञाततायाजननासम्भवात् स्वरूपसम्बन्ध-
रूपंज्ञानविषयत्वमेव ज्ञातो घट इति प्रतीतिविषय इति ज्ञाततायां प्रमाणा-
भावेन तेन हेतुना ज्ञानानुमानासम्भवादिति भावः साध्याप्रसिद्धिमप्याह। ज्ञा-
नरूपस्येति। साध्यप्रसिद्धिर्हि अनुमानाङ्गम् प्रकृतेतु ज्ञानरूपस्य क्वचिदप्यप्र-
सिद्धयाज्ञाततायां तन्निरूपितव्याप्तेरग्रहान्नतया तदनुमानसम्भव इतिभावः त-
स्मादज्ञानस्याप्रत्यये तद्घटितमूर्त्तिकस्य प्रमात्वस्य दुर्ज्ञेयत्वमिति पूर्व्वपक्षे स-
माधानमाह। उच्यत इति। योग्यत्वात् मनसो योग्यत्वात् नचैवं ज्ञानस्यम-
नोयोग्यत्वे तद्ज्ञानमपि ज्ञानज्ञानमपि एवं तद्ज्ञानज्ञानमपि ज्ञानज्ञानज्ञान
मपि। अनवस्थेति। सर्व्वत्रविषयतत्सन्निकर्षरूपायास्सामग्र्यास्सत्वादितिभावः
उत्तरयति। विषयान्तरेति। घटादिविषयकज्ञानसामग्र्याः प्रतिवन्धकत्वेनेत्य-
र्थः मानससामग्र्यादुर्व्वलत्वादिति भावः। फलेति। सर्व्वत्रमानससामग्र्यास्स
त्त्वेनेतरसामग्र्यपेक्षया तस्या एव दुर्व्वलत्वोपगमादितिभावः शङ्कते। तथा-
पीति। तथापि ज्ञानस्य प्रत्यक्षगम्यत्वेऽपि तस्यज्ञानस्य तत्प्रामाण्यमनुमानेन इदं
ज्ञानं प्रमासमर्थप्रवृत्तिजनकत्वादित्यादिरूपेण। साध्येति। साध्यस्य प्रामाण्य-
स्य। ज्ञाततयेति। घटो ज्ञानवान् ज्ञाततावत्त्वादित्यादिना ज्ञानविधेयकानु-
मितिर्ज्ञायमाना घटत्ववतिघटत्वप्रकारकत्वरूपप्रामाण्यमपि विषयीकरोती-
त्यर्थः ततः ज्ञानमात्रनिरूपितव्याप्तेः नतु तत्प्रमात्वमपि तस्यज्ञानस्य प्रमात्व-
मपि सिद्धेदित्यनेनान्वयि ननु ज्ञानत्ववत् प्रमात्वग्रहे बाधकाभाव इत्यतआ
ह। साध्यतेति। ननु रूपान्तरेण नतु साध्यतावच्छेदकरूपेण ननु तद्विधेयकानु-
मितौ तद्व्याप्यवत्तापरामर्शो हेतुः नतु तद्धर्म्मावच्छिन्नविधेयकानुमितौ इतिरू

ङ्गत्तन्न ज्ञाततयाहि ज्ञानमात्रस्य व्याप्तिर्गृहीताप्रमात्वाविशिष्टस्य वानाद्यः ततो ज्ञानमात्रं सिध्येन्नतु प्रमात्वमपि साध्यतावच्छेदकरूपेण साध्यं व्याप्त्यासिध्येन्नतु रूपान्तरेण अन्यथावह्निव्याप्योधूम इति ज्ञानद्रव्यत्वेन दीपत्वेन वा दहनसिद्ध्यापत्तेः नान्त्यः व्यभिचारात्साध्याप्रसिद्धेश्च गुरवस्तु-स्वप्रकाशमहिम्ना स्वमिवस्वप्रामाण्यमपि सिध्यतीत्याहुः तन्न स्वप्रकाशतायाअसिद्धेः किञ्चैवं ज्ञाने प्रामाण्यसंशयोऽपिनस्यात् ज्ञानग्रहे प्रामाण्यानिश्चयान्निश्चितेच संशयायो-

---

पान्तरेणापि तज्ज्ञानमतआह । अन्यथेति। अन्यथा साध्यतानवच्छेदकरूपेणाप्यनुमितौ भाने । दहनेति । इदन्तु लाघवज्ञानेतर बाधातिरिक्तस्थले बोध्यम् तेन वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शादपि महानसीय वह्नौलाघवमिति लाघवज्ञानबलान्महानसीय वह्निभिन्नवह्न्यभाववानितीतर बाधज्ञानबलाच्च महानसीयवह्नित्वादिनाऽनुमितावपि न क्षतिः तत्र वह्नित्वादिना महानसीयवह्निभानोपगमे पर्व्वतो महानसीयवह्निमान्नवेति संशयापत्तेरितिध्येयम् । व्यभिचारादिति । भ्रमाहितज्ञाततायां व्यभिचारादित्यर्थः नच ज्ञानतेव प्रमिततापि स्वीकार्य्येति वाच्यम् । एवं सत्यप्रमिततामपि स्वीकृत्याप्रामाण्यस्यापि स्वतोग्राह्यत्वापत्तेरिति एवं प्रमात्वस्य कुत्रापिदुर्ग्रहत्वेन तद्धर्म्मविशिष्टनिरूपित व्याप्तेरपिदुर्ग्रहत्वमाह साध्येति । स्वमिवेति । ज्ञानमिवस्वप्रामाण्यमपि स्वनिष्ठं प्रामाण्यमपि विषयी भवतीति मितिमातृमेयरूपत्रिपुटीप्रत्यक्ष वादि मते घटत्ववतिघटत्वप्रकारकत्वरूप प्रामाण्यमपि भासतएवेति भावः । स्वप्रकाशतायाइति । विषयतत्सन्निकर्षयोः प्रत्यक्षहेतुतया स्वस्मिन्स्वविषयकत्वासम्भवादितिभावः । किञ्चैवमिति । एवं प्रामाण्यस्यस्वतोग्राह्यत्वे । ज्ञानइति । इदं ज्ञानं प्रमा नवेतिप्रामाण्यसंशयो न स्यादित्यर्थः ननु तत्र प्रामाण्यानिश्चयान्न संशयानुपपत्तिरतआह । ज्ञानग्रहइति । निश्चयात् प्रामाण्यस्य निश्चयात् अयं घट इति ज्ञानोत्तरंहि इदंज्ञानं प्रमा नवेति प्रामाण्यसंशयः तत्रायंघट इति ज्ञानस्य स्वप्रकाशतया स्वविषयकत्वेन स्वनिष्ठ-

गाद्ग्रहे स्वप्रकाशत्वव्याघाताद्धर्म्मिज्ञानाभावाच्च समानध-
र्म्मवत्तया धर्म्मिज्ञानस्यान्वयव्यतिरेकाभ्यां संशयहेतुतावधा-
रणात्। मुरारिमिश्रास्तु तद्विशेष्यकत्वे सति तत्प्रकारकत्वं
प्रामाण्यम् तच्च प्रथमानुव्यवसायेनैव गृह्यते तथाहि घटत्व-
वाँस्तावद्व्यवसायोपनीतः अतः तद्विशेष्यकतासंसर्गरूपा-
ज्ञाने मनसागृह्यते तद्विशेषणस्य तद्वतः पूर्व्वमुपस्थितत्वात्
नहि मनसोवहिरर्थप्रकाशकताऽसामर्थ्यमुपनयस्य सहका-
रेण तस्य वहिरर्थप्रकाशकत्वात् कथमन्यथा कविकाव्यमू-

---

प्रामाण्यस्यापि निश्चयादितिभावः निश्चिते प्रामाण्ये संशयायोगात् प्रामाण्यस्य संशया योगात् तन्निश्चयस्य तत्संशयप्रतिवन्धकत्वादितिभावः ननु यत्र प्रामाण्यसंशयस्तत्रजातमपि घटज्ञानं न स्वविषयकमिति तत्र प्रामाण्याग्रहेन दोषइत्यतआह। अग्रहइति। ज्ञानस्याग्रहे इत्यर्थः। स्वप्रकाशतायाइति। यदि तत्र घटज्ञानं न स्वविषयकं तदा त्रिपुटी प्रत्यताव्याघात इत्यर्थः तुष्यतुदुर्ज्जन इतिन्यायेनाह। धर्म्मीति। इदं ज्ञानंप्रमा नवेतिसंशये घटज्ञानरूपधर्म्मिज्ञानाभावात्तद्धर्म्मिकप्रामाण्य संशयासम्भवादिति भावः ननु तद्धेतोरिति न्यायेन धर्म्मीन्द्रियसन्निकर्षस्यैव हेतुत्वं ननु धर्म्मिज्ञानस्येत्यतआह। समानेति। तत्कोटि साधारणधर्म्मवत्तया धार्म्मि ज्ञानस्य तत्कोटिसंशयहेतुत्वावधारणादित्यर्थः। अन्वयेति। तुरगादौ वेगेनगच्छतोऽनेकवृक्षेन्द्रिय सन्निकर्षेऽपि यस्यैवधर्म्मिणोज्ञानं तत्रैव पनसत्वादिसंशयो नान्यत्रेति संशयोधर्म्मिनियमार्थं धर्म्मिज्ञानहेतुत्वादितिभावः नच तत्रापि विषयमाहात्म्यादेरेवधर्म्मिज्ञानहेतुत्वमुपेयं तदेवसंशयहेतुरितिवाच्यम्। तथापि यत्कोट्यासह भूयस्सहचारी यस्मिन् धर्म्मे गृहीतः यत्कोटिसहचरितानेकधर्म्मोपलम्भो वा यत्र तद्धर्म्मवत्तया धर्म्मिज्ञानस्योत्कटकोटिकसंशयम्प्रति हेतुतया यद्विशेषयोरिति न्यायेन संशयसामान्ये धर्म्मिज्ञानस्य हेतुत्वात्प्रामाण्यांशेभयकोटिकसंशयम्प्रति धर्म्मिज्ञानस्यहेतुत्वावश्यकत्वाच्चेति तथाच धर्म्मिज्ञानस्य संशयहेतुतया संशयपूर्व्वं ज्ञानग्रह आवश्यकस्तेनच प्रामाण्यस्य विषयीकरणे संशयायोगः अविषयीकरणेतु तदप्रामाण्याग्राहक यावद्ज्ञानग्राहकसामग्री-

त्वभूतं ज्ञानं कथञ्चाऽनुव्यवसाये विषयभानं घटत्वमपि व्यवसायोपनीतमतस्तत्प्रकारताविषये तावत्सुग्रहेत्युभयस्यैकत्रग्रहेण गृहीतप्रामाण्यमिति तदपि न एवंहि तद्वद्विशेष्यकत्वं तत्प्रकारकत्वञ्च गृहीतं नचैतावदेवप्रामाण्यं किन्तु तद्वद्विशेष्यकत्वविशिष्ट तत्प्रकारकत्वम् नच तद्वद्विशेष्यकत्ववैशि-

---

ग्राह्यत्वरूपंस्वतस्त्वं न प्रामाण्यस्येति भाव: तच्च तद्वद्विशेष्यकत्वेसति तत्प्रकारकत्वरूपं प्रामाण्यञ्च । प्रथममिति । ग्राह्यप्रामाण्याश्रय विषयकेनघटमहंजानामीत्याकारकप्राथमिकज्ञानेनेत्यर्थ: विशेष्यकत्वप्रकारकत्वांशग्रहेऽविवादात् प्रामाण्यग्रहस्तद्वत्त्वग्रहपर्य्यवसन्न इति तद्ग्रहमेवादावुपपादयति । तथाहीति । व्यवसायेति व्यवसायएवात्र प्रत्यासत्तिरितिभाव: अत: घटत्ववत: प्रागुपस्थितेनेत्यर्थ: तद्वद्विशेष्यकताघटत्ववद्विशेष्यकता संसर्गतारूपाघटत्ववद्विशेष्यकतासम्बन्धेन ज्ञानोपरिभासते विशेषणस्यतद्वत: घटत्ववत: इदन्तु सामान्यतो विशिष्टबुद्धौ विशेषणधियो हेतुत्वादनुपस्थितयोर्विशेष्यत्वप्रकारकत्वयोर्भानानुपगमाभिप्रायेण वस्तुतो प्रतियोगित्वयोरिवानुपस्थितयोरपि तयो: प्रकारतया भाने वाधकाभाव इति ध्येयम् । नचेति । वह्नि:[illegible]पदार्थविषयक ज्ञानासामर्थ्यम् अन्यथोऽभयस्यापि विप्रकृष्टघटोपलब्ध्यापत्तेरिति भाव: अन्यथा उपनयसहकारेण वह्निर्विषयकज्ञानजननासामार्थ्ये । कथमिति । वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुतया मनसैव तच्च वाक्यार्थज्ञानादिति भाव: अनुव्यवसाये घटमहं जानामीत्याकारकानुव्यवसाये । विषयेति । घटादेर्भानमित्यर्थ: घटत्ववद्विशेष्यकत्वग्रहमुपपाद्य घटत्वप्रकारकत्वग्रहमुपपादयति घटत्वमपीति विषये विषयावच्छेदेन । सुग्रहेति । संसर्गरूपासुग्रहेत्यर्थ: उभयस्य घटत्ववद्विशेष्यकत्वस्य घटत्वप्रकारकत्वस्य च एकत्र ज्ञाने ग्रहेण ग्रहसम्भवेन एवंहि उक्तप्रकारेण हि एतावदेव तद्वद्विशेष्यकत्वं तत्प्रकारकत्वमेव । किन्त्विति । अन्यत्र घटत्ववद्विशेष्यकत्वस्यान्यत्र घटत्वप्रकारकत्वस्य च प्रामाण्यापत्ते: सामानाधिकरण्यसम्बन्धेन तद्वद्विशेष्यकत्व विशिष्टं तत्प्रकारकत्वमेव प्रामाण्यस्वरूपमितिभाव: । पूर्व्वमिति । विशिष्टबुद्धौ विशेषणधियो हेतुत्वादिति भाव: विशेष्यताप्रकारतयो: प्रकारतया भानस्यैव प्रामाण्यभानतया

ष्टमनुव्यवसायो गृहीतुमर्हति तद्वद्विशेष्यकत्वस्य पूर्व्वमनु-
पस्थितेः संसर्गविधया हि विशेष्यताप्रकारताच भासते कि-
ञ्चैतदपि न प्रामाण्यम् वह्निगुञ्जयोर्गुञ्जावह्नी इति भ्र-
मेऽतिव्याप्तेः आस्तांहि तत्र वह्निविशेष्यकत्ववह्नित्वप्रकारक-
त्वञ्च किन्तु तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमित्यु-
क्तम् नचावच्छेद्यावच्छेदकभावः प्रथमं गृहीतुं शक्यः त-
द्वद्विशेष्यकत्वस्य पूर्व्वमप्रतीतेः अत्रोच्यते आस्तां तावत् प्रथ-
मानुव्यवसायेन प्रामाण्यग्रहो द्वितीयेनतुस्यात्तद्वद्विशेष्यक-

---

संसर्गविधया तज्ज्ञानेऽपि न प्रामाण्यभानमितिभावः ननु प्रकारताविशेष्यत-
योः संसर्गतया भानमेव प्रामाण्यभानं वाच्यमतआह । किञ्चेति । एतदपि
तद्वद्विशेष्यकत्वविशिष्टं तत्प्रकारकत्वमपि । वन्हीति । यत्र वन्हौ गुञ्जात्वभ्रमः
गुञ्जायाञ्चवन्हित्वभ्रमस्तत्रातिव्याप्तिरित्यर्थः अतिव्याप्तिमुपपादयति । अ-
स्तिहीति । वन्हिविशेष्यकत्वं गुञ्जात्वप्रकारकत्वावच्छेदेन गुञ्जाविशेष्यकत्वा-
वच्छेदेनच वन्हित्वप्रकारकत्वम् । किन्त्विति । तत्प्रकारकत्वं प्रामाण्यमि-
त्यनुषज्यते वन्हिगुञ्जापुञ्जयोर्गुञ्जापुञ्जवन्हीतिभ्रमेच गुञ्जाविशेष्यकत्वावच्छे-
देन वन्हित्वप्रकारकत्व सत्त्वेऽपि वन्हित्ववद्विशेष्यकत्वावच्छेदेन वन्हित्वप्र-
कारकत्वाभावान्नातिव्याप्तिरितिभावः । तद्वदिति । प्रकारतया संसर्गतया
वा विशेष्यकत्वस्य प्रकारकत्वस्य चानुव्यवसाये भानेऽपि विशिष्टे वैशिष्ट्यमि-
ति न्यायेन विशिष्टवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारनिर्णयस्य हेतुत-
या तद्वद्विशेष्यकत्वप्रकारकनिर्णयं विना तद्वद्विशेष्यकत्वावच्छेदेन तत्प्र-
कारकत्वरूप प्रामाण्यभानं सम्भवतीतिभावः स्वमतेन प्रामाण्यग्रहमुपपा-
दयति अत्रोच्यतइति । द्वितीये नत्विति । अनुव्यवसायेनेत्यनुषज्यते प्रथ-
मं अयंघट इति ज्ञानं ततो ज्ञानज्ञानत्वे इति निर्व्विकल्पकं ततो घटमहं
जानामीत्यनुव्यवसायस्ततो व्यवसायस्य नष्टत्वाद्घटोऽयमिति व्यवसायस्त-
तश्च घटमहं जानामीत्यनुव्यवसायस्तेनप्रामाण्यंगृह्यत इत्यर्थः । उपस्थि-
तेरिति । तथाच तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वग्रहे बाधकाभाव
इति भावः अवच्छिन्नत्वञ्च स्वरूपसम्बन्धरूपं बोध्यम् । नचैवमिति । धर्म्मिज्ञा-

त्वस्य पूर्वं प्रथमानुव्यवसायेनोपस्थितेः नचैव प्रामाण्यस्यानुव्यवसायगम्यत्वे प्रामाण्यसंशयो न स्यादिति वाच्यम् दोषवशाद्यत्रप्रामाण्यं नानुव्यवसायेन गृहीतं तत्र संशयसम्भवात् अन्यथा पुरुषत्वसंशयोपि न स्यात्तस्य चक्षुर्जन्यत्वात् नचैवं प्रामाण्यस्य स्वतोग्राह्यत्वमागतं असति प्रतिबन्धके यावत्स्वाश्रयानुव्यवसायग्राह्यत्वं हि मिश्रमते स्वतोग्राह्यत्वं तच्च न प्रथमानुव्यवसायेनाग्रहात् एवञ्च साध्यप्रसिद्धावनुमान-

---

नस्य संशयहेतुतया ज्ञानग्रहे प्रामाण्यग्रहात् संशयो न स्यादित्यर्थः। दोषेति। अनभ्यासदशापन्नत्वरूपदोषेत्यर्थः । संशयेति। प्रामाण्यसंशयेत्यर्थः ननु सामग्रीसत्वे कुतोन निश्चय इत्यत आह । अन्यथेति। तद्योग्यस्य तेनावश्यं ग्रहे इत्यर्थः तस्य पुरुषत्वस्य चाक्षुषसामग्रीसत्वे पुरुषत्व चाक्षुषसामग्रीसत्वे पुरुषत्व चाक्षुषोत्पत्तौ पुरुषत्वसंशयो न स्यादित्यनायत्यासंशयजनकदोषस्य निश्चयविघटकत्वं वाच्यमितिभावः नचैवम् असतिदोषे अनुव्यवसायग्राह्यत्वे उत्तरयति असतीति। यावदिति। स्वाश्रयाः प्रामाण्याश्रयाः तदनुव्यवसायायावन्तस्तद्ग्राह्यत्वं मिश्रमते स्वतस्त्वमित्यर्थः द्वितीयानुव्यवसायेन प्रामाण्याग्रहान्नैयायिकमते सिद्धसाधनमतो यावदिति प्रामाण्याभाववत्तानिश्चयकाले प्रामाण्याग्रहाद्बाधवारणायासति प्रतिबन्धक इति इत्थञ्च प्रामाण्यग्रहप्रतिबन्धकाभाववत्कालीनयावत्स्वाश्रयानुव्यवसायग्राह्यत्वं मिश्रमते स्वतस्त्वं बोध्यम्। तच्च ईदृशं स्वतोग्राह्यत्वञ्च नास्मन्मते इतिविशेषः एवञ्च द्वितीयानुव्यवसायेन क्वचित्प्रामाण्यग्रहेच साध्यप्रसिद्धौ प्रामाण्यरूप साध्यप्रसिद्धौ तद्ग्राहकम् प्रामाण्यग्राहकम् । इदमिति। द्वितीयानुव्यवसायेनागृहीत प्रामाण्यकंपुरुषज्ञानमित्यर्थः प्रमापुरुषत्ववति पुरुषत्वप्रकारकम्। करादिमतीति। करादिमद्विशेष्यकत्वे सति पुरुषत्वप्रकारकज्ञानत्वादित्यर्थः स्थाणौ पुरुषत्वभ्रमे व्यभिचारवारणाय करादिमद्विशेष्यकत्वे सतीति पुरुषविशेष्यकद्रव्यत्वप्रकारकज्ञाने व्यभिचारवारणाय पुरुषत्वप्रकारकज्ञानत्वादिति विशिष्टहेत्वनुधावनम्। सम्प्रतिपन्नवत् द्वितीयानुव्यवसायेन गृहीतप्रामाण्यकपुरुषज्ञानवदित्यर्थः पुरुषज्ञानभिन्नस्य दृष्टान्तत्वे चान्वयदृष्टान्ताभावाद्व्यतिरेकीत्याह । यद्वेति।

अपि तद्ग्राहकम् तद्यथा इदं पुरुषज्ञानं प्रमाकरादिमिति- पुरुषत्वप्रकारकज्ञानत्वात्सम्प्रतिपन्नवत् यद्वायन्नैवं तन्नैवं यथा घट इति केवलव्यतिरेको अन्ये तु प्रथमसप्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणासाध्यं नच साध्याप्रसिद्धिः नहि व्यतिरेकिणासाध्यहेत्वोर्व्याप्तिगृह्यते किन्तु तयोरभाव हेत्वभावयोः किं तदप्रसिद्धया नच साध्याप्रसिद्धौ तदभावाप्र-

---

यन्नपुरुषत्ववति पुरुषत्व ज्ञानं तन्न करादिमतिपुरुषत्वज्ञानं यथा स्थाणौपुरुषत्वभ्रम इति व्यतिरेकीत्यर्थः। प्रथममिति। द्वितीयानुव्यवसायेन प्रामाण्यग्रहात्पूर्व्वं तदभाववतितत्प्रकारकत्वरूपभावरूपा प्रामाण्याभावएव व्यतिरेकिणासाध्यतइत्यर्थः तदप्रसिद्धया साध्याप्रसिद्धया तदभावाप्रसिद्धिः साध्याभावाज्ञानं तस्य साध्याभावस्य प्रतियोगिरूपत्वात् अप्रामाण्यरूपत्वात्। नचेति। नहीत्यर्थः तथाच तदभावत्वनैव ज्ञानेप्रतियोगिज्ञानंकारणमिति भावः नन्वेवं कथमप्रामाण्याभावानुमितिरत आह। एवञ्चेति। यद्व्यापकतया यस्यभावरूपा प्राभाण्यस्य व्यापकतया हेत्वभावो गृह्यते तेन हेतुनातस्याभावः अप्रामाण्यस्याभावसिध्यतीति अप्रामाण्याभावज्ञानं विनाप्यप्रामाण्याभावानुमितिरिति भावः। नचसाध्येति। विशिष्टबुद्धौ विशेषणधियो हेतुत्वादिति भावः। अप्रामाणेति। ज्ञानेऽप्रामाण्याभाव इत्याकारिकायामित्यर्थः साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेरनङ्गत्वादिति भावः। आस्तामिति। प्रथमसप्रामाण्याभावानुमितिरास्ताम् तद्वतीति। उक्तैवेति। द्वितीयानुव्यवसायेन प्रामाण्यग्रहानन्तरमन्वयिना प्रामाण्यानुमितिरेकगतिरित्यर्थः अयभावः निष्फलप्रवृत्तिम्प्रति गृहीतप्रामाण्यकनिश्चयत्वेन हेतुत्वेऽभावरूपप्रामाण्यनिवेशे गौरवात् भावरूपं तद्वति तत्प्रकारकत्वरूपं प्रामाण्यमेव निवेशनीयम्। तस्यच प्रथमं साध्याप्रसिद्ध्यादिना दुर्ग्रहत्वान्नानुमानेन प्रथमंप्रवृत्त्युपयोगिप्रामाण्यग्रह इति ननु ज्ञानं हि द्विविधं तदभाववति तत्प्रकारकं तद्वतितत्प्रकारकंच तच तदभाववतितत्प्रकारकत्वाभावरूपाप्रामाण्याभावस्सिध्यत्वइति तत्प्रकारकत्वमादायैवपर्य्यवस्यति। व्यापकतानवच्छेदकरूपेण भानानुपगमेतु तत्प्रकारके तदभाववति तत्प्रकारकत्वाभावस्य तदभाववद्विशे-

सिद्धि: प्रतियोगिज्ञानसाध्यत्वादभावज्ञानस्येति वाच्यम् तस्य प्रतियोगिरूपत्वात् नच प्रयियोगिज्ञानेऽप्यभावज्ञानं कारणं प्रमाणाभावात् एवंचज्ञानव्यापकतया हेत्वभावोगृहीतस्तेन हेतुना तदभावंसिध्यतीति नच साध्याज्ञाने कथं त-

---

थ्यकत्वाभावमाचपर्य्यवसायितया तदभाववद्विशेष्यकत्वेसति तद्विशेष्यकत्वेन हेतुना तद्वतितत्प्रकारकत्वं तद्वद्विशेष्यकत्वमाचं पर्य्यवसन्नं सिध्यतीति चेन्न तथापि तद्वद्विशेषकत्वरूप साध्याप्रसिद्धेः।प्राग्भावीयसंस्कारादट्टष्टविशेषोद्बोधकसहकृतात् स्मृत्युपगमेतु समर्थप्रवृत्तिजनकत्वरूपान्वयेनैवोपपत्तौ किमनयाकुसृष्ट्याअपूर्व्वंचैचत्वादिघटित प्रामाण्यग्रहे प्राग्भवीयसंस्कारासम्भवाच्च नकिञ्चिदेतत् किञ्चप्रामाण्याभावरूपमपि प्रामाण्यं प्रथमं हेत्वज्ञाने दुर्ग्रहमित्याह। किञ्चेति। करादिमद्विशेष्यकत्वेसति पुरुषत्वप्रकारकज्ञानत्वं हेतुः अप्रामाण्याभावग्रहे हेतुः केनग्राह्यं किंजन्यज्ञानविषयः। अनुव्यवसायेनेति। उक्तन्यायेन द्वितीयानुव्यवसायेनेत्यर्थः तत्प्रकारकत्वग्रहः पुरुषत्वप्रकारकत्वग्रहः। यत इति। करादिमतिपुरुषत्वज्ञानत्वग्राहकेणानुव्यवसायेन पुरुषत्ववतिपुरुषत्वप्रकारकत्वग्रहसम्भवादित्यर्थः तमपहाय हेतुग्राहकेण पुरुषत्ववतिपुरुषत्वप्रकारकत्वग्रहमपहाय। एषकुसृष्टीति। अनुव्यवसायेन करादिमद्विशेष्यकत्वेसति पुरुषत्वप्रकारकत्वग्रहेसति तेन प्रामाण्यानुमानमिति अनुमानकुसृष्ट्यादर इत्यर्थः सर्व्वज्ञानानां यथार्थत्वात्तत्प्रकारकज्ञानत्वमेव प्रमात्वमिति प्राभाकरमतं दर्शयति। अन्येत्विति । तत्प्रकारकज्ञानत्वमेवेत्येवकारेण तद्वतीत्यस्यव्युदासः। नचेति। शुक्ताविदंरजतमिति ज्ञानस्यापि रजतत्वप्रकारकत्वेन तदपि रजतत्वांशे प्रमास्यादित्यर्थः। तदसिद्धेरिति। रजतत्वप्रकारक शुक्तिज्ञानासिद्धेरित्यर्थः तदसिद्धिमेव विवृणोति। नहीति। शुक्तौ रजतत्वं नास्तीति कथं तत्ररजतत्वप्रकारकंज्ञानम् । विषयाभावेन लौकिकप्रत्यक्षाद्यभावादिति भावः मानमस्ति प्रमाणमस्ति व्यवहारानुपपत्तिरेव मानमिति शङ्कते। कथन्तर्हीति । रजतत्वप्रकारक शुक्तिज्ञानासिद्धावित्यर्थः व्यवहारः शब्दप्रयोगः तत्र व्यवहर्त्तव्यज्ञानस्य हेतुत्वादिति भावः। तन्नेति। व्यवहर्त्तव्यतावच्छेदकासंसर्गाग्रह एव व्यवहारेकारणं नतु व्यवहर्त्तव्यता वच्छेद-

द्विशिष्टज्ञानरूपानुमितिः अप्रामाण्याभावविशेष्यकायाएवानुमितेरभ्युपगमादित्याहुः आस्तां तत्तथापि तद्वतितत्प्रकारकत्वग्रहेऽप्रतिगतिः किञ्च करादिमतिपुरुषत्वज्ञानं केनग्राह्यं अनुव्यवसायेनेति चेत्तर्हि पुरुषवतितत्प्रकारकत्वग्रहः केनवार्यं तांयतस्तद्ग्रहमपहायैव कुसृष्ट्यादर इति अन्येतु तत्प्रकारकज्ञानत्वमेवप्रामाण्यम् । नच रजतत्वप्रकारकशुक्तिज्ञानमपिप्रमाणंस्यात्तदसिद्धेः नह्ययत्र यन्नास्ति तत्तत्प्रकारकज्ञाने मानमस्ति कथंतर्हि शुक्ताविदं रजतमिति व्यवहार इतिचेत् तत्र व्यवहर्तव्यताविच्छेदक रजतत्वासंसर्गाग्रहात् रजतत्वप्रकारकाशुक्तौ प्रवृत्तिरपि तत्रेष्टताव-

---

च्छेदकप्रकारकंज्ञानं कारणमितिभावः ननु प्रवृत्तिम्प्रति पुरोवर्त्तिनीष्टतावच्छेदकप्रकारकज्ञानस्य हेतुतया शुक्तिगोचररजतत्वज्ञानाभावे कथंतत्र रजतार्थिप्रवृत्तिरतआह । रजतत्वेति । तत्रेष्टतेति पुरोवर्त्तिनीष्टतावच्छेदकासंसर्गाग्रह एव प्रवृत्तिहेतुः नत्विष्टतावच्छेदकप्रकारकज्ञानं तद्धेतोरिति न्यायादिति भावः । अपीति । भ्रमप्रमासाधारणप्रवृत्तिसामान्ये रजतत्वप्रकारकज्ञानस्यसत्यरजतस्थले प्रवृत्तिहेतुत्वेनावधारणात्कथं तेनविनाभ्रान्तप्रवृत्तिरिति भावः तेन विनाशुक्तौ रजतत्वप्रकारकज्ञानेनविनाशुक्तौप्रवृत्तिः रजतार्थिप्रवृत्तिः । तत्रापीति । प्रामाण्यस्थलेऽपीत्यर्थः । रजतत्वेति । पुरोवर्त्तिनीष्टतावच्छेदकासंसर्गाग्रहस्यैव हेतुत्वादित्यर्थः नत्विष्टतावच्छेदकप्रकारकज्ञानस्येतिभावः । अविशेषादिति । कारणविशेषएवहि कार्यविशेषेनियामकः तथाच तदविशेषात्कथं प्रवृत्तेः सम्वादित्वविसम्वादित्वनिर्व्वाहः मन्मतेच प्रवृत्तिसामान्ये इष्टतावच्छेदकप्रकारकज्ञानत्वेन सम्वादिप्रवृत्तिम्प्रति इष्टतावच्छेदकप्रकारकप्रमात्वेनविसम्वादिप्रवृत्तिम्प्रतिच इष्टतावच्छेदकप्रकारकभ्रमत्वेन हेतुत्वमित्यन्यथाख्यातिसिद्धिरिति भावः सम्वादिनीविषयसम्वादिनीअवाधितविषयेति यावत् एवं विसम्वादिनी वाधितविषयेत्यर्थः । तद्वतीति । सत्यरजतस्थले रजतत्ववतिरजतत्वासंसर्गाग्रहस्य विद्यमानत्वात्सम्वादि प्रवृत्तिः शुक्तिरजतस्थलेतु रजतत्वाभाववतिरजतत्वासंसर्गाग्रहस्य विद्यमानत्वाद्विसम्वा-

च्छेदकरजतत्वस्यासंसर्ग्गाग्रहात् अथ रजतप्रकारकप्रवृत्तौ रजतत्वप्रकारकंज्ञानं प्रमास्थले कारणं क्लृप्तम् तथाच कथं तेनविनाशुक्तौप्रवृत्तिस्स्यादिति चेन्न तत्रापि रजतत्वासंसर्ग्गाग्रहस्यहेतुत्वात् अन्यथासंसर्ग्गाग्रहस्याविशेषात् क्वचित्संवादिनी प्रवृत्तिः क्वचिद्विसंवादिनीति कुतोनियम इति चेन्न तद्वति तत्संसर्ग्गाग्रहस्य तत्प्रकारकतत्सम्वादिन्यां तदभाववति तदसंसर्ग्गाग्रहस्य तत्प्रकारक विसम्वादिन्यां प्रवृत्तौ तुत्वात् अत्रोच्यते लाघवाद्रजतत्व संसर्ग्गग्रहो रजतत्वप्रकारकप्रवृत्तौ हेतुर्न्न तुरजतत्वासंसर्ग्गाग्रहो गौरवात् नच शुक्तौ तदसम्भवः विशेषणज्ञानं विशेष्येन्द्रिय

दिनीप्रवृत्तिः अतएव सम्वादिप्रवृत्तौ अविद्यमानासंसर्ग्गाग्रहः विसम्वादि प्रवृत्तौ तु विद्यमानासंसर्ग्गाग्रहो हेतुरितिगायन्ति अविद्यमानो योऽसंसर्ग्ग स्तदग्रहः विद्यमानोयोऽसंसर्ग्गस्तदग्रह इतिच तदर्थोऽवसेयः। लाघवादिति। इष्टतावच्छेदकासंसर्ग्गाग्रहत्वापेक्षया कारणतावच्छेदकलाघवात् इष्टतावच्छेदकप्रकारकज्ञानमेव रजतत्वप्रकारकप्रवृत्तत्वौ हेतुरित्यर्थः एतेन तद्वतो रितिन्यायोऽपि परास्तः अवच्छेदकलाघवेनतन्न्यायस्याप्रयोजकत्वात्। अनुमितौ परामर्शवदिति । तदसम्भवः रजतत्वसंसर्ग्गाग्रहासम्भवः समाधत्ते । विशेषणेति। अत्रापि भ्रमस्थलेऽपि तयोः शुक्तिरजतत्वयोः। असंसर्ग्गाग्रहश्चेति। सच दोषाधीनइति भावः। रजतत्वेन्द्रियेति । पुरोवर्त्तिनिरजतत्वाभावेन संयुक्त समवायरूपसन्निकर्षाभावादित्यर्थः। कथमिति। तत्प्रकारकम् रजतत्वप्रकारकन्तत्प्रकारकमितितु प्रकृताभिप्रायेण सन्निकर्षस्य सामान्यतः रजत्वप्रत्यक्षे एव हेतुत्वादित्यवधेयम् । सन्निहितमिति । प्रत्यक्षंहिद्विविधं लौकिकमलौकिकञ्च प्रकृतेसंयुक्तसमवायरूप लौकिकसन्निकर्षाभावाल्लौकिक प्रत्यक्षविरहेऽपि ज्ञानलक्षणारूपालौकिकसन्निकर्षसत्वादलौकिकप्रत्यक्षे वाधकाभाव इति भावः। रजतत्वेति । शुक्तौ रजतत्वप्रकारकं प्रत्यक्षमित्यर्थः तत्रैव शुक्तौ रजतत्व प्रकारकप्रत्यक्ष एव। तत्प्रकारिकेति । शुक्तौ रजतत्वपकारिकाप्रवृत्तिरित्यर्थः प्रवृत्तौतु इष्टतावच्छेदकप्रकारकज्ञानत्वेन हेतुता-

सन्निकर्षस्तयोरसंसर्गाग्रह इत्येवृत्तिविशिष्टज्ञाने हेतुः ।
अस्ति चात्रापि विशेषणस्य रजतत्वस्य ज्ञानं विशेष्यशुक्तीन्द्रि-
यसन्निकर्षस्तयोरसंसर्गाग्रहश्च अथ रजतत्वेन्द्रियसन्निक-
र्षाभावात्कथं तत्प्रकारकं प्रत्यक्षमितिचेत् सन्निहितं यत्र रजतं
तत्र संयुक्तसमवायस्यान्यत्र ज्ञानस्य सन्निकर्षस्य सत्त्वात् ज्ञान-
स्य सन्निकर्षत्वे किं मानमितिचेत् रजतत्वप्रकारकप्रत्यक्षमि-
त्यग्रे हि नचैव किंमानमितिचेत् तत्प्रकारक प्रवृत्तिरिति
सङ्क्षेपः ॥ इति श्रीतार्किक श्री जानकीनाथभट्टाचार्य्य विर-
चिता न्यायसिद्धान्तमञ्जरी समाप्ता ॥

याव्यवस्थापितत्वादिति भावः इदं रजततया जानामीत्यनुव्यवसायोऽपि
शुक्तिगोचररजतत्वप्रकारक प्रत्यक्षसाधकोऽवसेय इति ॥

अतिकर्कशतर्के यत्पद्यं स्फुरितंमम ।
सिद्धेश्वरीपदद्वन्द्व वरस्यैतद्विजृम्भणम् ॥ १ ॥
धीमताविश्वनाथेन काश्यांसमुदपादियः ।
तस्यश्रीकण्ठकृतिनः कृतिः कलयतां मुदम् ॥ २ ॥

इति विश्वनाथात्मजदीक्षित श्रीकण्ठ शर्म्म विरचिता
तर्कप्रकाशाभिधा सिद्धान्तमञ्जरी दीपिका
समाप्ता: ॥

—§—✿—§—

# विज्ञापन ।

---

निम्न लिखित पुस्तकें "अमर" यन्त्रालय में तथा
यहां की सुप्रसिद्ध समस्त दुकानों में मिलेंगी ॥

न्यायसिद्धान्तमञ्जरी ... ... ... ... ३)
एकाक्षरकोश ... ... ... ... ... ... )॥
मुक्तावली ... ... ... ... ... ... ... ॥)
मुफी-दुल-तालेबैन ... ... ... ... ≡)
स्केच-अब-दि-सिक्ख ... ... ... ... ॥)

श्री अम्बिकाचरण चट्टोपाध्याय ।
मनेजर
दशाश्वमेध, बनारस ।

